॥ श्रीः ॥

# पुरुषार्थचिंतामणिः ।

श्रीमद्रामकृष्णभट्टसूनुविष्णुभट्टविरचितः ।

अयं

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा

**वासुदेवशर्मणा**

पाठान्तरयोजनपूर्वं संस्कृतः ।

(द्वितीयावृत्तिः ।)

स च

मुम्बय्यां

निर्णयसागराधिपेन पाण्डुरङ्ग जावजी इत्यनेन स्वीयेऽङ्कनालये

मुद्रयित्वा प्राकाश्यं नीतः ।

शाके १८४९, सन १९२७.

मूल्यं २॥ सार्धरूप्यकद्वयम् ।

# प्रस्तावना।



इह खलु सर्वतो यावदालोकं दिग्विदिगंतरालायामबहुविस्तारविस्तीर्णे भूतधात्रीचक्रवाले जनुर्भाजामाग्रजन्मन आगोपालपामरमनवरतं दुःखपरंपराजालग्रथितानामपि तत्साधनजातजिहासापूर्वकं नित्यनिरतिशयसुखसाधनप्रतिपित्सूनां मानवानां कल्याणाध्वदिदर्शयिषया परमकारुणिकैः सहजविगलितकामक्रोधादिदेहामृद्धतकवर्गैः स्वाचारैकप्रवणीकृतनिजायुःक्षणलवकालावयवैर्महर्षिभिस्तत्रतत्राखिलश्रेयःसाधनं **धर्म** एवेति राद्धांतेनोद्घोषितमाकरेषु दरीदृश्यते सर्वत्र। धर्मप्रसारं निमित्तीकृत्यैव सुगृहीतनामा भगवान् **जैमिनि**र्ग्रंथारंभे **अथातो धर्मजिज्ञासा** इत्यारम्भसूत्रेण छात्रान्धर्मजिज्ञासायामभिमुखीकृत्य **चोदनालक्षणोऽर्थो धर्मः** इति धर्मलक्षणदर्शकं द्वितीयं सूत्रमसुसूत्रत्। तत्र चोदनेति प्रवर्तकशब्दनाम। लक्ष्यते ज्ञायतेऽनेनेति लक्षणम्। यथा धूमेन वह्निर्ज्ञायत इति वह्निज्ञाने लक्षणं धूमस्तद्वद्धर्मज्ञाने लक्षणं चोदना। उभयं चोदनया लक्ष्यते–अर्थः श्रेयःसाधनं ज्योतिष्टोमादि, अनर्थः प्रत्यवायसाधनं श्येनादि। तत्र वेदप्रमाणकं श्रेयःसाधनं ज्योतिष्टोमादि धर्म इति सूत्रार्थः। स्मृत्यादयोऽपि धर्मे प्रमाणम्। तदुक्तं **मनुना**—

> वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
> एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥ इति॥

अन्यत्रापि—

> वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणम्।
> वेदावेदपरिज्ञातो धर्म इत्यक्तवान्मनुः॥
> हृदयेनाभिमुख्येन ज्ञात इत्यादि निर्दिशन्।
> श्रेयःसाधनमित्याह तद्व्रहाति मुखं मनः (?)॥
> वेदप्रमाणकः श्रेयःसाधनं धर्म इत्यतः।
> मनूक्तमेव मुनयः प्रणिन्युर्धर्मलक्षणम्॥ इति॥

भविष्यपुराणेऽपि—

> धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
> स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः॥
> अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते।
> इहलोके सुखैश्वर्यमतुलं च खगाधिप॥ इति॥

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ इति ॥

श्रीभगवानपि गीतासु धर्ममेव कर्मशब्देनोपदिदेश—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ इति ॥

ईशावास्योपनिषदि—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

एतावता प्रमाणजातेन सिद्धा सर्वजनीना धर्मस्याभ्यर्हितताऽवश्यकता । स च धर्मः श्रौतस्मार्तोभयलक्षणोऽपि कालज्ञानमंतरा नैव सेत्स्यतीति युगवत्सरायनर्तुमासपक्षाहःक्षपानुसवनयाममुहूर्तकलाकाष्ठाक्षणलवनिमेषावयवविवेचनपूर्वकं तदीयकस्मिन्नवयवे किमाचरणीयमिति विवेचनार्थमेवास्य ग्रंथस्यारंभः ।

नच सर्वत्र प्रसिद्धेषु सविस्तरविवेचनगर्भेषु याज्ञवल्क्यहेमाद्रिकालमाधवमन्वादिप्रणीतमहानिबंधेषु जाग्रत्सु पिष्टपेषणायितः कुतः प्रकृतग्रंथनिर्बंधनप्रयास इति वाच्यम् । इममाक्षेपं मनसिकृत्य ग्रंथप्रणेत्रैव मंगलाचरणोत्तरं—

हेमाद्रिणा माधवस्य विरोधः कालनिर्णये ।
इति ज्ञात्वा कृतास्तेऽतः परस्परविरोधिनः ॥
नवीनविदुषां ग्रंथाः सुप्रसिद्धमिदं ह्यतः ।
सर्वेषामृषिवाक्यानां हेमाद्रेर्माधवस्य च ॥
विसंवादपरीहारपरिष्कारपुरःसरम् ।

**करोमि कालखंडं तु** इत्युक्तम् । एतावता ग्रंथः पुरातनाखिलमहानिबंधश्रेण्यर्ह एवेति तद्वदेवाखिलकार्यक्षमः स्यादतः सर्वैरादरणीय इति ।

संप्रति प्रक्रांतमुद्रणस्य दुरूहस्याप्यस्य प्राचीनहस्तलिखितत्रिचतुःपुस्तकसंयोजनेन यावद्बुद्धिबलं संस्करणमकरवम् । शोधने चांतरांतरा बाकेइत्युपाधिभिर्महादेवशास्त्रिभिरतीव साहाय्यमकारि । एवं कृतेऽपि प्रयासे दृष्टिमांद्यानवधानादिना 'भ्रांतेः पुरुषधर्मत्वात्' क्वचित्स्खलितं मार्जयंतु दयालवो विद्वांस इति विज्ञापयति—

**पणशीकरोपाह्वलक्ष्मणशर्मात्मजो**

**वासुदेवशर्मा ।**

श्रीः

# पुरुषार्थचिंतामणिस्थविषयानुक्रमः।


| विषयाः | पृष्ठं |
|---|---|
| मंगलाचरणम् ... ... | १ |
| कालद्वैविध्यम् ... ... | १ |
| काललक्षणम् ... ... | १ |
| लघ्वक्षरादिकाललक्षणम् ... | २ |
| अहोरात्रलक्षणम् ... ... | २ |
| मासश्चतुर्धा ... ... ... | ३ |
| चांद्रमासद्वैविध्यम् ... ... | ३ |
| चैत्रादिमासलक्षणम् ... | ३ |
| मासविशेषे कर्मविशेषः ... | ५ |
| मासकृत्यानि ... ... ... | ५ |
| चैत्रमासकृत्यम् ... ... | ५ |
| वैशाखमासकृत्यम् ... ... | ६ |
| ज्येष्ठमासकृत्यम् ... ... | ६ |
| आषाढकृत्यम् ... ... ... | ६ |
| श्रावणकृत्यम् ... ... | ६ |
| भाद्रपदकृत्यम् ... ... | ६ |
| आश्विनकृत्यम् ... ... | ६ |
| कार्तिककृत्यम् ... ... | ६ |
| मार्गशीर्षकृत्यम् ... ... | ७ |
| पौषकृत्यम् ... ... ... | ७ |
| माघकृत्यम् ... ... ... | ७ |
| फाल्गुनकृत्यम् ... ... | ७ |
| ऋतुनिर्णयः ... ... ... | ७ |
| अयननिर्णयः ... ... | ९ |
| संवत्सरनिर्णयः ... ... | ९ |
| चांद्रः संवत्सरः ... ... | ९ |
| सौरः संवत्सरः ... ... | १० |
| मलमासनिर्णयः ... ... | १२ |
| क्षयमासनिर्णयः ... ... | १३ |
| मलमासे कार्याकार्यनिर्णयः | १७ |
| मलमासे कर्माभ्यनुज्ञा ... | १८ |
| महादानानि ... ... ... | १९ |
| अधिमासे कर्तव्यम् ... ... | २० |
| अनन्यगतिककर्माभ्यनुज्ञा ... | २१ |
| मले महालयनिर्णयः ... | २१ |
| मले प्रथमाब्दिकनिर्णयः ... | २४ |
| मलमासकर्मविधानम् ... | २७ |
| अनन्यगतिकं मलेपि कार्यम् | २९ |
| वृषोत्सर्जनम् ... ... | ३० |
| मलमासे दानादि ... ... | ३१ |
| पक्षनिर्णयः ... ... ... | ३१ |
| तिथिनिर्णयः... ... ... | ३२ |
| तिथीनां कर्मांगता ... ... | ३२ |
| सखंडाऽखंडतिथिविचारः ... | ३२ |
| दिवसस्वरूपम् ... ... | ३२ |
| मुहूर्तनामानि तद्विभागश्च ... | ३४ |
| अह्नः पंचधा विभागः ... | ३४ |
| चतुर्धा विभागः ... ... | ३४ |
| त्रेधा विभागः ... ... | ३४ |
| द्वेधा विभागः ... ... | ३४ |
| रात्रिगतपंचदशमुहूर्तनामानि | ३४ |
| दिनद्वये तिथिसत्वे व्यवस्था | ३४ |
| तिथिसामान्यनिर्णयः ... | ३५ |
| कर्मांगतिथिनिर्णयः ... ... | ३६ |

| विषयाः | पृष्ठं |
|---|---|
| तिथिवेधनिर्णयः ... ... | ३८ |
| साकल्यापवादः ... ... | ४२ |
| एकभक्ते तिथिनिर्णयः ... | ४३ |
| नक्तव्रते तिथिनिर्णयः ... | ४५ |
| प्रदोषपरिमाणम् ... ... | ४६ |
| नक्तभोजिनियमाः ... ... | ४८ |
| अयाचिते तिथिनिर्णयः ... | ४८ |
| अयाचिते ग्राससंख्या ... | ४९ |
| उपवासे तिथिनिर्णयः ... | ५० |
| नक्षत्रनिर्णयः... ... ... | ५० |
| योगनिर्णयः ... ... ... | ५२ |
| करणनिर्णयः... ... ... | ५२ |
| एकभक्तादिसंकल्पः... ... | ५३ |
| पारणाकालः ... ... ... | ५४ |
| **प्रतिपन्निर्णयः** | |
| चैत्रशुक्लप्रतिपदि चांद्रवत्सरारंभः ... ... ... | ५६ |
| वत्सराधिपपूजा ... ... | ५६ |
| तैलाभ्यंगः ... ... ... | ५६ |
| शकसंवत्सरादिश्रवणम् ... | ५६ |
| अत्र महाशांतिः ... ... | ५७ |
| प्रपादानम् ... ... ... | ५७ |
| धर्मघटदानम् ... ... | ५७ |
| दशहरानिर्णयः ... ... | ५८ |
| दौहित्रश्राद्धम् ... ... | ५८ |
| नवरात्रारंभः ... ... | ५८ |
| लोहाभिसारिकं कर्म ... | ५९ |
| अशक्तौ त्रिदिनम् ... ... | ६० |
| ततोऽप्यशक्तौ अष्टम्यां ... | ६० |
| नवरात्रे प्रतिपन्निर्णयः ... | ६१ |
| प्रतिपन्निर्णये देवीपूजा ... | ६५ |
| कलशस्थापनम् ... ... | ६५ |
| नवरात्रसंकल्पः पूजा च ... | ६६ |
| सप्तशत्यादिजपप्रकारः ... | ६७ |
| कुमारीपूजनम् ... ... | ६८ |
| अश्वपूजनं साश्वस्य ... | ६९ |
| राज्ञो लोहाभिसारिकम् ... | ७० |
| शस्त्रास्त्रपूजामंत्राः ... ... | ७० |
| षष्ठ्यां बिल्वशाखायां देवीप्रबोधः ... ... ... | ७३ |
| मूले सरस्वत्यावाहनम् ... | ७३ |
| अष्टम्यामुपवासः ... ... | ७४ |
| नवम्यां पूजा ... ... | ७४ |
| बलिदानम् ... ... ... | ७४ |
| पशुबलौ इतिकर्तव्यता ... | ७५ |
| कूष्मांडादिबलिप्रतिनिधयः | ७६ |
| सप्तशतीहोमनिर्णयः ... | ७६ |
| नवरात्रपारणानिर्णयः ... | ७७ |
| कार्तिकशुक्लप्रतिपदि बलिपूजा | ८० |
| मार्गशुक्लप्रतिपद्बृहत्तपा ... | ८० |
| कृष्णप्रतिपदि गंगास्नानम् | ८० |
| श्वपचस्पर्शः वर्धापनम् ... | ८१ |
| गोमहिष्यादिभूषा ... | ८१ |
| फाल्गुनकृष्णप्रतिपद्धूलिवंदनम् ... ... ... | ८१ |
| आम्रकुसुमप्राशनम् ... | ८१ |
| द्विजसूतवंदिभ्यो दानम् ... | ८१ |
| **द्वितीयानिर्णयः** | |
| चै० शु० २ उमापूजा ... | ८३ |
| अशून्यव्रतम् ... ... | ८३ |
| यमद्वितीया ... ... | ८४ |
| यमपूजनम् ... ... | ८४ |
| बृहस्पतौ द्वितीयायां ब्रह्मपूजनम् ... ... ... | ८४ |

| विषयाः | पृष्ठं |
|---|---|
| **तृतीयानिर्णयः** | |
| रंभाव्रते | ८५ |
| चै० शु० ३ गौरीशंकरपूजनम् | ८५ |
| देव्या आंदोलनम् | ८५ |
| वै० शु० ३ अक्षय्यतृतीया | ८५ |
| लक्ष्मीनारायणपूजनम् | ८५ |
| अत्र गंगास्नानं महाफलम् | ८५ |
| अस्यां उदकुंभदानम् | ८६ |
| अत्र समुद्रस्नानं महाफलम् | ८६ |
| युगादिनिर्णयः ... | ८६ |
| अत्र श्राद्धं महाफलम् ... | ८७ |
| श्राद्धे शुक्ला पौर्वाह्णिकी ... | ८७ |
| कृष्णे आपराह्णिकी ... | ८७ |
| पूर्वाह्णापराह्णादिनिर्णयः ... | ८७ |
| युगादिकृत्यं मलमासेपि कार्यम् ... | ८८ |
| परशुरामजयंती ... | ८९ |
| ज्ये० शु० ३ रंभाव्रतम् ... | ८९ |
| आषाढयुत्तरतृतीयायां गोविंदपूजा ... | ८९ |
| हरितालिकाव्रतम् ... | ८९ |
| मार्ग० शु० ३ रंभाव्रतम् ... | ८९ |
| माघ० शु० ३ कल्याणिनीव्रतम् ... | ८९ |
| फा० शु० ३ सौभाग्यतृतीया | ८९ |
| **चतुर्थीनिर्णयः** | |
| गणेशपूजा ... | ९१ |
| संकटगणेशपूजा ... | ९१ |
| भाद्रपदशुक्लचतुर्थी ... | ९२ |
| सिद्धिविनायकव्रतपूजा ... | ९३ |
| गणेशपूजाविधिः ... | ९४ |
| चन्द्रदर्शननिषेधः ... | ९४ |

| विषयाः | पृष्ठं |
|---|---|
| दशरथचतुर्थी ... | ९४ |
| नागचतुर्थी ... | ९५ |
| वरदचतुर्थीव्रतम् ... | ९५ |
| अत्र गौरीपूजनम् ... | ९५ |
| पंचम्यां श्रीपूजनम् ... | ९५ |
| अत्र ढुंढिराजपूजोक्ता ... | ९५ |
| अंगारिका संकष्टी ... | ९५ |
| चतुर्थ्यां भरणीशनियोगे यमपूजा ... | ९५ |
| **पंचमीनिर्णयः** | |
| स्कंदोपवासः ... | ९६ |
| श्रीपंचमी ... | ९८ |
| नागपंचमी ... | ९८ |
| ऋषिपंचमी ... | ९८ |
| इंद्राण्यासहनागपूजनम् ... | ९९ |
| उपांगललिताव्रतम् ... | ९९ |
| मार्ग० शु० ५ स्नानदानैर्नागलोकः ... | १०० |
| माघशु० ५ कुंदेलक्ष्मीपूजनम् ... | १०० |
| माघशु० वसंतोत्सवः ... | १०० |
| **षष्ठीनिर्णयः** | |
| चै० शु० ६ स्कंदपूजा ... | १०१ |
| आषा० शु० कौमारिकी ... | १०१ |
| भा० शु० ६ कार्तिकेयदर्शनम् ... | १०२ |
| भा० शु० ६ स्नानं भास्करपूजनं च ... | १०२ |
| भा० द० ६ कपिलाषष्ठी ... | १०२ |
| इयमेव चंद्रषष्ठी ... | १०२ |
| का० शु० ६ वह्निषष्ठी ... | १०२ |
| मार्ग० शु० ६ गुहषष्ठी ... | १०२ |

| विषयाः | पृष्ठं |
|---|---|
| **सप्तमीनिर्णयः** | |
| चै० शु० ७ दमनकैः सूर्यपूजा ... ... ... | १०४ |
| श्रा० शु० ७ अपराजिता ... | १०४ |
| मार्ग० शु० ७ नंदासप्तमी... | १०४ |
| इयमेव मित्रसप्तमी ... | १०४ |
| मा० शु० ७ रथसप्तमी ... | १०४ |
| इयमेव रवियोगे विजया ... | १०५ |
| हस्तर्क्षयोगे भद्राख्या ... | १०५ |
| अस्यां रविसंक्रमे महाजया | १०५ |
| अस्यां हस्तरवियोगे अशोकैर्दुर्गापूजा अशोककलिकाप्राशनं च ... ... | १०५ |
| पद्मकयोगः ... ... | १०५ |
| सर्वसप्तमीषु रविपूजा ... | १०५ |
| **अष्टमीनिर्णयः** | |
| चै० शु० ८ अशोककलिकाप्राशनम् ... ... | १०९ |
| अस्यां भवानीयात्रा... ... | १०९ |
| अन्नपूर्णायात्रा ... ... | १०९ |
| वै० शु० ८ आम्ररसेन देवीस्नपनम् ... ... | १०९ |
| ज्ये० कृ० ८ त्रिलोचनार्चा | १०९ |
| आषा० शु० ८ हरिद्रोदकेन देवीस्नपनं ... ... | १०९ |
| जन्माष्टमीनिर्णयः ... ... | ११० |
| जयंतीनिर्णयः ... ... | ११० |
| जन्माष्टमीव्रतप्रकारः ... | ११० |
| जन्माष्टमीपूजाप्रकारः ... | १११ |
| अकरणे पापम् ... ... | ११२ |
| अत्र भोजने महादोषः ... | ११४ |
| जयंतीजन्माष्टम्योरैक्यम् ... | ११६ |
| व्रतस्वरूपम् ... ... | ११७ |
| ग्राह्याष्टमी द्विविधा ... | ११८ |
| बुधवारादियोगे प्राशस्त्यम् | १२१ |
| निर्णीतार्थसंग्रहः ... ... | १२२ |
| पारणानिर्णयः ... ... | १२३ |
| रात्रावपि पारणम् ... ... | १२४ |
| भा० शु० ८ दूर्वाष्टमी ... | १२६ |
| महालक्ष्म्यष्टमीव्रतम् ... | १२९ |
| ज्येष्ठापूजा ... ... ... | १३२ |
| आश्वि० शु० ८ दुर्गाष्टमी ... | १३४ |
| का० कृ० ८ भैरवाष्टमी ... | १३८ |
| पौ० शु० ८ महाभद्राष्टमी | १३८ |
| मा० शु० ८ भीष्माष्टमी ... | १३९ |
| **नवमीनिर्णयः** | |
| चै० शु० ९ रामनवमी ... | १३९ |
| अस्यां भद्रकालीपूजा ... | १४० |
| वै० शु० ९ उमापूजा ... | १४० |
| ज्येष्ठोभयनवम्यां कुमारीपूजा | १४० |
| आषा० शु० ९ ऐंद्रीपूजनम् | १४० |
| श्रा० शु० ९ कौमारीपूजनम् | १४१ |
| भा० शु० ९ पापनाशिनी | १४१ |
| भा० कृष्णनवम्यां देवीप्रबोधः | १४१ |
| आश्वि० शु० ९ दुर्गानवमी | १४१ |
| इयं दानेऽतिप्रशस्ता ... | १४२ |
| बलिदानमुत्तरदिने ... | १४२ |
| का० शु० ९ पितॄणामुत्सवः | १४२ |
| मार्ग० शु० ९ महानंदा ... | १४२ |
| **दशमीनिर्णयः** | |
| ज्ये० शु० १० संवत्सरमुखी | १४४ |
| दशहरानिर्णयः ... ... | १४४ |
| अस्यां गंगावतारः ... ... | १४४ |
| अत्र दशयोगाः ... ... | १४४ |

| विषयाः | पृष्ठं |
|---|---|
| बुधहस्तयोगे आनंदयोगः ... | १४४ |
| अत्र प्रतिपदादिदशाश्वमेधे स्नानम् ... ... ... | १४५ |
| दशाश्वमेधेशपूजनम् ... | १४५ |
| विजयादशमी ... ... | १४५ |
| सीमोल्लंघनम् ... ... | १४५ |
| अपराजितापूजा ... ... | १४५ |
| शमीपूजा ... ... ... | १४६ |
| अश्मंतकपूजा ... ... | १४७ |
| **एकादशीनिर्णयः** | |
| शुद्धाविद्धाभेदाः ... ... | १४८ |
| वैष्णवलक्षणम् ... ... | १५३ |
| वैष्णवैकादशीनिर्णयः ... | १५४ |
| स्मार्तानां सूर्योदयोत्तरमेव... | १५५ |
| एकादशी द्विविधा... ... | १५८ |
| उन्मीलिन्याद्यष्टभेदाः ... | १६० |
| स्मार्तैकादशीनिर्णयः ... | १६१ |
| एकादश्या अष्टादशभेदाः ... | १६१ |
| समन्यूनद्वादशिकायां व्यवस्था | १६५ |
| न्यूनद्वादशिकायां विशेषः ... | १६७ |
| पुत्रवद्गृहिणामुपवासनिषेधः | १७३ |
| विद्धाधिकासमद्वादशिकायां परैव ... ... ... | १७४ |
| विद्धाधिकायां तु ... ... | १७६ |
| गृहस्थविषये विचारः ... | १८२ |
| एकादशीनिर्णयसंग्रहः ... | १८३ |
| एकादशीमहिमा ... ... | १८५ |
| विधवायत्योर्दोषविशेषः ... | १८६ |
| एकादश्यामुपाहारविचारः... | १८६ |
| एकादशी नित्या काम्या च... | १९१ |
| संक्रांत्यादिनिमित्तकोपवासनिर्णयः ... ... ... | १९३ |
| गृहस्थब्रह्मचारिणोर्विशेषः ... | १९५ |
| एकादशीव्रतं काम्यमपि ... | १९७ |
| अस्मिन्व्रते सर्वोऽप्यधिकारी | १९७ |
| उपवासस्वरूपम् ... ... | १९८ |
| उपवासे वर्जनीयानि ... | १९८ |
| असामर्थ्ये एकभक्तादिकम्... | १९९ |
| हविष्यनिर्णयः ... ... | १९९ |
| प्रतिनिधिद्वारोपवासः ... | २०० |
| पतिमत्या उपवासे पुष्पादिधारणम् ... ... | २०१ |
| सूतकादिप्राप्तौ कर्तव्यम् ... | २०१ |
| स्त्रीणां रजोदर्शने ... ... | २०१ |
| दशमीकृत्यम् ... ... | २०२ |
| एकादशीकृत्यम् ... ... | २०२ |
| प्रातःकृत्यानंतरं संकल्पः ... | २०२ |
| नित्यव्रते विशेषः ... ... | २०३ |
| प्रतिनिधिष्वपि समंत्रक एव संकल्पः ... ... | २०४ |
| एकादश्यां देवोपरि मंडपिका | २०४ |
| अत्र पाषंड्यादिदर्शने प्रायश्चित्तम् ... ... ... | २०५ |
| द्वादशीकृत्यम् ... ... | २०६ |
| नित्योपवासप्रकारः ... ... | २०७ |
| समर्थस्य भोजने प्रायश्चित्तम् | २०७ |
| तद्विचारः ... ... ... | २०७ |
| पारणानिर्णयः ... ... | २०९ |
| द्वादश्यां होमादिकं रात्रिशेषे अनुदितहोमिनाम् ... | २११ |
| उदितहोमिनां तु द्वादश्यतिक्रमः ... ... ... | २११ |
| तच्च द्वादशीप्रथमपादमतिक्रम्य कर्तव्यम् ... ... | २१२ |

| विषयाः | पृष्ठं |
|---|---|
| संदेहे ग्राह्यवचनाः ... | २१३ |
| **द्वादशीनिर्णयः** | |
| अनूराधादिषु संगवे न भोक्तव्यं | २१५ |
| श्रवणद्वादशी ... ... | २१५ |
| अस्यां बुधयोगे महाफलम् | २१६ |
| विष्णुशृंखलयोगः ... ... | २१७ |
| द्वादशीव्रतसंकल्पः ... ... | २१७ |
| पारणमुभयांते मुख्यम् ... | २२२ |
| **त्रयोदशीनिर्णयः** | |
| अनंगत्रयोदशी ... ... | २२२ |
| प्रदोषनिर्णयः ... ... | २२३ |
| शनिप्रदोषव्रतम् ... ... | २२५ |
| त्रयोदश्यां कश्चिद्विशेषः ... | २२५ |
| प्रदोषद्वयासत्वे उत्तरैव ... | २२९ |
| अत्र त्रिलोचनपूजा ... | २३० |
| त्रिलोचयात्रा ... ... | २३० |
| अत्र कामकुंडे स्नानं कामेश-दर्शनं च ... ... | २३० |
| वारुणीमहावारुणीयोगौ ... | २३० |
| आ० कृ० १३ यमदीपदानम् | २३१ |
| क्षत्रविट्शूद्रस्त्रीणां स्नाननिषेधः | २३१ |
| गंगातिरिक्ते रात्रौ स्नाननिषेधः | २३२ |
| **चतुर्दशीनिर्णयः** | |
| चै० शु० १४ दमनकारोपणम् ... ... ... | २३६ |
| दमनकपूजाविधिः ... ... | २३७ |
| अंगारके गंगास्नानम् ... | २३७ |
| वै० शु० १४ गंगास्नानम् ... | २३७ |
| आषा० शु० १४ शिवपूजा | २३८ |
| पवित्रारोपणम् ... ... | २३८ |
| अन्यदेवपवित्रारोपणम् ... | २३८ |
| पवित्रनिर्माणप्रकारः ... | २३८ |
| शिवपवित्रप्रकारः ... ... | २३९ |
| भा० शु० १४ अनंतव्रतम् | २३९ |
| आ० कृ० १४ दीपावलिः | २४१ |
| दिनत्रयं तैलाभ्यंगः ... | २४१ |
| अपामार्गभ्रामणम् ... ... | २४२ |
| कार्तिकस्नानोत्तरं यमतर्पणं... | २४२ |
| नरकोत्तारणार्थं यमदीपः ... | २४२ |
| दिनत्रयं बलिराज्ये दीपदानम् | २४२ |
| महारात्रिपूजा ... ... | २४२ |
| शैवविप्रभोजनम् ... ... | २४२ |
| माषपत्रशाकभोजनम् ... | २४२ |
| सौमयोगे शिवाराधनम् ... | २४३ |
| उल्कादानम् ... ... | २४३ |
| अमायां रात्रौ भोजनम् ... | २४३ |
| प्रदोषे इंदिरापूजा ... ... | २४३ |
| अभ्यंगे नित्यत्वं तत्कालश्च... | २४३ |
| बलेशलेखनं पंचरंगकैः ... | २४३ |
| बलिपूजा ... ... ... | २४३ |
| गोक्रीडनम् ... ... ... | २४३ |
| लक्ष्मीपूजननिर्णयः ... ... | २४४ |
| का० शु० १४ विश्वेश्वरोत्पत्तिः | २४६ |
| मार्ग० शु० १४ पिशाचमोचनयात्रा ... ... | २४६ |
| माघकृ० १४ शिवरात्रिनिर्णयः ... ... ... | २४८ |
| शिवरात्रिव्रतेऽधिकारिणः ... | २५४ |
| व्रतविधिः ... ... ... | २५५ |
| व्रतसंकल्पः ... ... ... | २५५ |
| पूजाप्रकारः ... ... ... | २५५ |
| पूजापदार्थाः... ... ... | २५६ |
| यामचतुष्टयपूजा ... ... | २५६ |
| शिवस्य स्तोत्रम् ... ... | २५६ |

| विषयाः | पृष्ठं |
|---|---|
| तिथ्यंते पारणम् ... ... | २५७ |
| उत्तरदिने कर्तव्यम्... ... | २५७ |
| उद्यापनम् ... ... ... | २५८ |
| पारणानिर्णयः ... ... | २५९ |
| यामत्रयोर्ध्वगामिन्याम् ... | २६० |
| मासशिवरात्रिः ... ... | २६१ |
| शिवरात्रिव्रतप्रयोगः ... | २६२ |
| बिल्वपत्रपुष्पादिसंपादनम्... | २६३ |
| शिवपूजायां प्रशस्तपुष्पाणि | २६३ |
| पर्युषितविचारः पुष्पपत्राणां | २६५ |
| निषिद्धपुष्पाणि ... ... | २६५ |
| मासविशेषात्पुष्पार्पणे विशेषः | २६५ |
| पुष्पार्पणमुद्रा ... ... | २६६ |
| पुष्पपत्राद्यर्पणप्रकारः ... | २६६ |
| बिल्वप्रशंसा... ... ... | २६६ |
| धूपदीपनैवेद्याः ... ... | २६६ |
| फलार्पणम् ... ... ... | २६६ |
| प्रदक्षिणाप्रकारः ... ... | २६६ |
| नमस्कारप्रकारः ... ... | २६७ |
| लिंगार्चनं महाफलम् ... | २६७ |
| पंचसूत्रीनिर्णयः ... ... | २६८ |
| पीठलक्षणम्... ... ... | २६८ |
| पार्थिवलिंगे पञ्चसूत्री नैव... | २६९ |
| ज्योतिर्लिंगादौ शूद्रादिस्पृष्टे न दोषः... ... ... | २६९ |
| स्थापितलिंगे स्त्रीशूद्रयोर्न स्पर्शः | २६९ |
| शूद्रस्थापितलिंगं न नमेत्... | २६९ |
| चरलिंगपूजने फलतारतम्यम् | २७० |
| बाणलिंगपरीक्षा ... ... | २७० |
| युगभेदाल्लिंगभेदः ... ... | २७० |
| पार्थिवलिंगप्राशस्त्यम् ... | २७० |
| पार्थिवलिंगनिर्माणप्रकारः ... | २७० |

| विषयाः | पृष्ठं |
|---|---|
| प्राणप्रतिष्ठाध्याने ... ... | २७० |
| पार्थिवपूजाविधिः ... ... | २७१ |
| स्त्रीशूद्राणामशक्तस्य च विधिः | २७१ |
| शिवपंचाक्षरन्यासादिपूजाप्रयोगः ... ... ... | २७३ |
| यामपूजा प्रहरभेदेन ... | २७४ |
| शिवप्रसादग्रहणनिर्णयः ... | २७६ |
| निषेधः क्वचित् ... ... | २७७ |
| निषिद्धनिर्माल्यभक्षणं चांद्रं | २७८ |
| देवताभेदेन प्रसादग्रहणेऽधिकारिणः ... ... ... | २७८ |
| निर्माल्यं षड्विधम् ... ... | २७९ |
| तीर्थं सर्वत्र ग्राह्यम्... ... | २८१ |


## पूर्णिमानिर्णयः


| विषयाः | पृष्ठं |
|---|---|
| चैत्र्यां दमनकपूजा ... ... | २८४ |
| ज्यैष्ठ्यां वटसावित्री ... | २८४ |
| आषाढ्यां भारभूतेश्वरयात्रा | २८४ |
| अस्यां यतिपूजनम्... ... | २८४ |
| व्यासपूजा ... ... ... | २८४ |
| श्रावण्यां रक्षाबंधनम् ... | २८५ |
| पवित्रारोपणम् ... ... | २८५ |
| श्रावण्यां श्रवणाकर्म ... | २८६ |
| उपाकर्मनिर्णयः ... ... | २८६ |
| एतन्निर्णयसंग्रहः ... ... | २९१ |
| आपस्तंबादिसूत्रभेदाद्विशेषः | २९५ |
| प्रथमोपाकर्मणि अस्तादिनिषेधः ... ... ... | २९६ |
| उत्सर्जनकालः ... ... | २९७ |
| भाद्रपद्यां नांदीमुखपितृश्राद्धं | २९९ |
| नांदीमुखनिर्णयः ... ... | २९९ |
| भाद्रपद्यां कुशस्तंबयात्रा ... | ३०२ |
| आश्विन्यामक्षैर्जागरणम् ... | ३०२ |

| विषयाः | पृष्ठं |
|---|---|
| कोजागरव्रतम् ... ... | ३०३ |
| अत्र निकुंभागमनान्मार्गपरिष्कारादि ... ... | ३०४ |
| कार्तिकस्नानारंभः ... ... | ३०५ |
| अस्यां दामोदरपूजा ... | ३०५ |
| क्षीरसागरदानम् ... ... | ३०५ |
| कार्तिक्यां वृषोत्सर्गः ... | ३०५ |
| त्रिपुरोत्सवः ... ... | ३०६ |
| कृत्तिकायोगे महती ... | ३०६ |
| महाकार्तिकी ... ... | ३०६ |
| मार्गशीर्ष्यां विधुपूजनं लवणदानं च ... ... ... | ३०६ |
| पौष्यां पुष्ययोगे गौरसर्षपकल्कस्नानम् ... ... | ३०७ |
| सर्वौषध्यः ... ... ... | ३०७ |
| अत्र मूलकभक्षणे चांद्रम् ... | ३०७ |
| माघ्यां तिलकार्पासधेनुकंबलरत्नकंचुकोपानद्दानानि | ३०७ |
| अत्र शिवपूजा ... ... | ३०७ |
| मघायुतायां तिलैः श्राद्धम् | ३०८ |
| माघ्यां स्नानम् ... ... | ३०८ |
| फाल्गुन्यां शय्यादानम् ... | ३०८ |
| दोलास्थगोविंददर्शनम् ... | ३०८ |
| होलिकोत्सवः ... ... | ३०८ |
| होलिकामंत्रः ... ... | ३०९ |
| भद्रानिषेधः ... ... | ३०९ |
| भद्रामुखादिनिर्णयः ... | ३१० |
| चित्रादिमासर्क्षयुतपूर्णिमासु स्नानादि ... ... | ३१३ |
| पूर्णेंदुजीवयोगे महाफलम् ... | ३१३ |
| महाज्येष्ठी गुर्वादियोगे ... | ३१३ |
| महामाघी मेषगे सूर्ये ... | ३१४ |

| विषयाः | पृष्ठं |
|---|---|
| महाचैत्री शालग्रामे ... | ३१४ |
| महावैशाखी गंगायां ... | ३१४ |
| ज्येष्ठी पुरुषोत्तमे ... ... | ३१४ |
| आषाढी कनखले ... ... | ३१४ |
| श्रावणी केदारे ... ... | ३१४ |
| महाभाद्री बदर्याम् ... | ३१४ |
| आश्विनी कुब्जायाम् ... | ३१४ |
| कार्तिकी पुष्करे ... ... | ३१४ |
| मार्गशिरी कान्यकुब्जे ... | ३१४ |
| महापौषी अयोध्यायाम् ... | ३१४ |
| महामाघी प्रयागे ... | ३१४ |

अमावास्यानिर्णयः

| विषयाः | पृष्ठं |
|---|---|
| ज्येष्ठामायां सावित्रीव्रतम् | ३१४ |
| श्रावणामायां दर्भसंग्रहः ... | ३१४ |
| अस्यां कुशस्तंभयात्रा ... | ३१५ |
| ऋणमोचनस्नानम् ... | ३१५ |
| लिंगत्रयदर्शनम् ... ... | ३१५ |
| वैतरणीस्नानम् ... ... | ३१५ |
| गजच्छाया ... ... | ३१५ |
| माघ्यां नवनीतधेनुदानम् ... | ३१५ |
| अस्यां शततारकायोगे पितृदुर्लभा ... ... | ३१५ |
| अर्धोदययोगः ... ... | ३१५ |
| आर्द्रासप्तम्यमाश्राद्धे शस्ता | ३१६ |
| भौमयुक्तामायां जाह्नवीस्नानम् | ३१७ |
| सोमादियुतामासूर्यपर्वशताधिका ... ... | ३१७ |
| सूर्यग्रहसमास्तिथयः ... | ३१७ |
| इष्ट्युपयोगिपर्वनिर्णयः ... | ३१७ |
| आपस्तंबानां पर्वनिर्णयः ... | ३२६ |
| अन्वाधानकालः ... ... | ३२० |
| निर्णीतपर्वसंग्रहः ... ... | ३२२ |
| विकृतिकालः ... ... | ३२२ |

| विषयाः | पृष्ठं |
|---|---|
| आग्रयणेष्टौ कालविशेषः ... | ३३५ |
| पिंडपितृयज्ञकालः ... ... | ३३५ |
| श्राद्धेऽमावास्यानिर्णयः ... | ३३७ |
| अमावास्यानिर्णयसंग्रहः ... | ३४४ |
| ग्रहणनिर्णयः ... ... | ३४५ |
| रवौ सूर्यग्रहश्चूडामणिसंज्ञः... | ३४७ |
| देवपितृमनुष्याः स्पर्शादिषु क्रमेण ... ... | ३४७ |
| स्नानहोमदानादिकालः ... | ३४८ |
| सर्ववर्णानां सूतकम् ... | ३४८ |
| नित्यं चेदं स्नानम् ... | ३४८ |
| अयनादिषूपवासः ... | ३४८ |
| पुत्रवद्गृहिण उपवासनिषेधः | ३४८ |
| ग्रहणे सर्वमुदकं गंगासमम् | ३४८ |
| ग्रहे दानं पृथ्वीदानसमम् | ३४९ |
| ग्रहणे प्रशस्ता नद्यः ... | ३४९ |
| असंभवे वाप्यादौ स्नानम्... | ३४९ |
| आतुरे उष्णोदकस्नानम् ... | ३४९ |
| ग्रहे मासविशेषेण नदीविशेषः | ३४९ |
| अत्र श्राद्धं सर्वस्वेनापि ... | ३५० |
| श्राद्धं चामेन हेम्ना वा ... | ३५० |
| सूतकादौ ग्रहणे स्नानादि ... | ३५१ |
| दाने पात्रापात्रविचारः ... | ३५१ |
| स्वापनिषेधः ... ... | ३५१ |
| भोजननिषेधः ... ... | ३५१ |
| बालादिविषये ... ... | ३५२ |
| समर्थस्य भोजने प्रायश्चित्तम् | ३५२ |
| तत्कालपक्वं त्याज्यम् ... | ३५३ |
| केषुचित्पर्युषितदोषो नास्ति | ३५३ |
| चंद्रग्रस्तास्ते विशेषः ... | ३५३ |
| नक्षत्रविशेषप्रयुक्तो विशेषः | ३५३ |
| मंडलविशेषेण शांतिविशेषः | ३५४ |
| जन्मराश्यादिषु ग्रहणे ... | ३५४ |
| ग्रहणे दानादि ... ... | ३५४ |
| राज्यनक्षत्रे ग्रहे शांतयः ... | ३५४ |
| सौवर्णं नागं राजतं बिंबं च दद्यात् ... ... | ३५४ |
| ग्रहणशांतिः ... ... | ३५५ |
| मंत्रदीक्षाग्रहणम् ... ... | ३५६ |
| पुरश्चरणप्रकारः ... ... | ३५६ |
| निर्णीतसंग्रहः ... ... | ३५६ |
| संक्रांतिनिर्णयः ... ... | ३५७ |
| वारनक्षत्रादिप्रयुक्तो विशेषः | ३५७ |
| ध्रुवमृद्वादिनक्षत्रसंज्ञाः ... | ३५७ |
| त्र्यादिघटिकाः पुण्याः ... | ३५८ |
| मंदादीनां वर्णविशेषे शुभमनिष्टं च ... ... | ३५८ |
| संक्रांतिनिरुक्तिः ... ... | ३५८ |
| अस्नाने दोषः ... ... | ३५८ |
| संक्रांत्यां दानप्रशंसा ... | ३५८ |
| अपुत्रिणामुपवासः ... | ३५९ |
| शुक्लसप्तम्यां संक्रमे विशेषः | ३५९ |
| पुण्यकालव्यवस्था ... ... | ३६० |
| विष्णुपद्यां पूर्वा ... ... | ३६० |
| षडशीतिमुखे उत्तरा ... | ३६० |
| रात्रिसंक्रमे निर्णयः ... | ३६१ |
| अभिन्नतिथौ विशेषः ... | ३६१ |
| रात्रौ स्नानं प्रशस्तं क्वचित्... | ३६१ |
| अयनादिप्रयुक्तानध्यायाः ... | ३६५ |
| ग्रहांतरसंक्रांतौ पुण्यकालः... | ३६५ |
| निर्णीतसंग्रहः ... ... | ३६६ |
| श्राद्धकालनिर्णयः ... ... | ३६६ |
| सामान्यतः श्राद्धतिथिः ... | ३६७ |
| एकोद्दिष्टे मध्याह्नगा ... | ३६७ |
| पार्वणेऽपराह्णगा ... ... | ३६८ |

| विषयाः | पृष्ठं |
| --- | --- |
| आमश्राद्धं पूर्वाह्णेपि ... | ३६८ |
| वृद्धिश्राद्धं प्रातः ... ... | ३६८ |
| सांवत्सरिकश्राद्धे तिथिः ... | ३६८ |
| अकरणे दोषः ... ... | ३६८ |
| मातृश्राद्धे विशेषः ... ... | ३६८ |
| मासश्राद्धः ... ... | ३६९ |
| पित्रोरुपासने पार्वणमेव ... | ३६९ |
| यतेरपि पार्वणम् ... ... | ३६९ |
| दत्तको द्विविधः ... ... | ३७० |
| द्व्यामुष्यायणानामेकोद्दिष्टम् | ३७१ |
| श्राद्धे निषिद्धकालः ... | ३७३ |
| सायंकालस्यापि क्वचिदभ्यनुज्ञा ... ... | ३७३ |
| अष्टमो मुहूर्तः कुतुपः ... | ३७३ |
| दिनद्वयव्याप्तिविचारः ... | ३७४ |
| सामान्यतः श्राद्धकालाः ... | ३७६ |
| वृद्धिश्राद्धकालः ... | ३७७ |
| वृद्धिश्राद्धाधिकारिणः ... | ३७७ |
| पित्रभावे ज्येष्ठभ्रात्रादिः ... | ३७८ |
| जीवत्पितृकस्य सुतसंस्कारे विशेषः ... ... | ३७८ |
| कर्मांगमपि श्राद्धम् ... | ३८० |
| कृष्णपक्षे श्राद्धनिर्णयः ... | ३८१ |
| पंचम्यादिः सर्वासु तिथिषु | ३८१ |
| आमश्राद्धात्पृथक् इदं ... | ३८१ |
| मघायुक्तत्रयोदश्याम् ... | ३८१ |
| शुक्लप्रतिपदासह षोडश ... | ३८२ |
| कन्यासंक्रमः सर्वः श्रेष्ठः ... | ३८२ |
| सर्वत्र नंदादिनिषेधो न ... | ३८२ |
| एकदिने नंदादिनिषेधः ... | ३८३ |
| अस्यापवादः ... ... | ३८३ |
| गौणकालः ... ... | ३८३ |
| अकरणे प्रत्यवायः ... ... | ३८३ |
| श्राद्धं पार्वणेनैव ... ... | ३८४ |
| विवाहप्रयुक्तपिंडनिषेधस्तत्र न | ३८४ |
| संन्यासिनां पार्वणं द्वादश्याम् | ३८४ |
| श्राद्धं पक्वेनैव ... ... | ३८४ |
| महालयश्राद्धे देवताः ... | ३८४ |
| विधवाकर्तृकश्राद्धे विशेषः | ३८५ |
| महालयांगतर्पणं परेहनि ... | ३८५ |
| सकृन्महालये तद्दिन एव ... | ३८५ |
| भरणीश्राद्धं पिंडरहितम् ... | ३८५ |
| अष्टम्यां श्राद्धम् ... ... | ३८५ |
| मघात्रयोदशीश्राद्धम् ... | ३८५ |
| इदं श्राद्धं नित्यम् ... | ३८५ |
| त्रयोदश्यां श्राद्धनिषेधः ... | ३८६ |
| असंतानेन कर्तव्यम् ... | ३८६ |
| श्राद्धं विना मधुपायसादि देयम् ... ... ... | ३८६ |
| द्वादश्यादौ श्राद्धे फलम् ... | ३८६ |
| इदं दर्शवदेव कार्यम् ... | ३८७ |
| चतुर्दशीश्राद्धनिर्णयः ... | ३८८ |
| तत्तु शस्त्रहतानामेव ... | ३८८ |
| अत्र पितुरप्येकोद्दिष्टम् ... | ३८९ |
| त्रयाणां शस्त्रमरणे पार्वणम् | ३८९ |
| एकोद्दिष्टकालः ... ... | ३९० |
| युद्धहतादौ सद्यःशौचेप्येकोद्दिष्टम् ... ... ... | ३९१ |
| एकादशेह्नि वृषोत्सर्गः ... | ३९२ |
| सुवासिन्याः पयस्विनी दानम् | ३९२ |
| अत्र द्विजा एकादश ... | ३९२ |
| इदमेव महैकोद्दिष्टम् ... | ३९२ |
| नवमिश्रसंज्ञकषोडशश्राद्धकालः ... ... ... | ३९२ |
| मासिकानां कालः ... ... | ३९३ |
| सपिंड्यनंतरंपार्वणवदर्वागेकोद्दिष्टम् ... ... ... | ३९३ |

| विषयाः | पृष्ठं |
|---|---|
| द्वित्र्यादिदिनन्यूनपक्षे नंदादिनिषेधः ... ... | ३९४ |
| आहिताग्नेःप्रेतश्राद्धकालः ... | ३९४ |
| असामर्थ्ये ... ... | ३९४ |
| नवश्राद्धभोजने प्रायश्चित्तम् | ३९४ |
| निरग्नेः सपिंडीकालः ... | ३९४ |
| षोडशश्राद्धानि कृत्वा सपिंडनम् ... ... ... | ३९५ |
| अपकृष्टानां स्वकाले पुनरावृत्तिः ... ... ... | ३९५ |
| वृद्धिंविनापकर्षे दोषः ... | ३९६ |
| साग्निकसपिंडनकालः ... | ३९६ |
| गौणकालस्त्रिपक्षादिः ... | ३९६ |
| वत्सरांतेपि सपिंडनम् ... | ३९७ |
| पितामहे जीवति विचारः ... | ३९७ |
| पितृसपिंडनोत्तरं पितामहे मृते ... ... ... | ३९८ |
| अत्र वृद्ध्यादिनिमित्ते ... | ३९८ |
| सपिंडनं पुत्रएव कुर्यात् ... | ३९८ |
| मातुर्व्युत्क्रममरणे ... ... | ३९८ |
| पत्न्याः पत्या ... ... | ३९९ |
| पुत्राभावे पतिरेव ... ... | ३९९ |
| आसुरादिविवाहे मातामहादिभिः ... ... ... | ३९९ |
| पुत्राभावे पत्नी सपिंडनं कुर्यात् ... ... ... | ४०० |
| षोडशश्राद्धानि ज्येष्ठ एव कुर्यात् ... ... ... | ४०० |
| सपिंडनमपि ज्येष्ठ एव ... | ४०० |
| कनिष्ठो ऋद्धिकामश्चेत्पृथक् | ४०१ |
| सूतकांते सर्ववर्णानां सपिंडी | ४०१ |
| शूद्राणामपि द्वादशाहे ... | ४०१ |
| संन्यासिनामेकादशे पार्वणम् | ४०१ |
| अस्थिक्षेपादि प्रथमेऽब्दे ... | ४०२ |

| विषयाः | पृष्ठं |
|---|---|
| अतीतक्रियाकालः ... ... | ४०२ |
| तत्र नक्षत्रादिनिषेधः ... | ४०२ |
| युगादयः ... ... ... | ४०३ |
| एकत्रश्राद्धे निर्वाहः ... | ४०३ |
| युगादिश्राद्धं मलेऽपि ... | ४०४ |
| युगांताः ... ... ... | ४०४ |
| मन्वादयः ... ... | ४०४ |
| कल्पादयः ... ... | ४०४ |
| काम्यास्तिथयः ... ... | ४०५ |
| काम्यनक्षत्राणि ... ... | ४०६ |
| काम्यवाराः ... ... | ४०७ |
| तिथिवारादियोगाः ... | ४०७ |
| आमश्राद्धकालः ... ... | ४०७ |
| भार्यायां रजस्वलायाम् ... | ४१४ |
| श्राद्धकर्त्र्यां रजस्वलायाम् ... | ४१७ |
| पाकारंभाद्युत्तरं रजसि ... | ४१७ |
| मासिकविषये उत्तरमासे ... | ४१७ |
| अमावास्यादि लुप्यत एव | ४१८ |
| आमश्राद्धेतिकर्तव्यता ... | ४१८ |
| आमं तंडुलादिकम् ... | ४१८ |
| पुत्रजन्मनि हेमश्राद्धम् ... | ४१९ |
| आमे गृहपाकात्पिंडदानम् | ४१९ |
| विप्राभावे निर्णयः ... ... | ४१९ |
| गृहीतस्य प्रतिपत्तिः ... | ४१९ |
| अशक्तस्य तु ... ... | ४१९ |
| ततोप्यशक्तौ तिलांजलिः ... | ४२० |
| ततोप्यशक्तावरण्ये रोदनं... | ४२० |
| निर्णीतसंग्रहः ... ... | ४२० |
| क्षयाहाज्ञाने निर्णयः ... | ४२० |
| तिथिमात्रज्ञाने ... ... | ४२१ |
| तदभावे प्रस्थानदिनमासौ | ४२१ |
| तदभावे वार्ताश्रवणदिनम् | ४२१ |

| विषयाः | पृष्ठं |
|---|---|
| तस्याप्यभावे मार्गमावामावास्या ... ... | ४२१ |
| यस्य वार्ता न श्रूयते ... | ४२१ |
| पालाशविध्युत्तरमागते विधिः | ४२१ |
| श्राद्धे क्वचिदाशौचापवादः | ४२१ |
| श्राद्धसन्निपाते निर्णयः ... | ४२२ |
| पार्वणैकोद्दिष्टयोर्युगपत्प्राप्तौ | ४२४ |
| श्राद्धांगतिलतर्पणकालः ... | ४२४ |
| श्राद्धाहे वैश्वदेवकालः ... | ४२५ |
| निरग्नेर्वैश्वदेवकालः ... | ४२६ |
| दाने प्रशस्तकालः ... ... | ४२७ |
| व्यतीपातोत्पत्तिः ... ... | ४२८ |
| नदीनां रजोदोषः ... ... | ४२९ |
| गर्भाधानकालः ... ... | ४३१ |
| पुंसवनम् ... ... ... | ४३२ |
| अनवलोभनम् ... ... | ४३२ |
| सीमंतोन्नयनम् ... ... | ४३२ |
| विष्णुपूजाकालः ... ... | ४३३ |
| जातकर्मकालः ... ... | ४३३ |
| नामकरणकालः ... ... | ४३३ |
| पर्यंकारोहणम् ... ... | ४३४ |
| दुग्धपानम् ... ... | ४३४ |
| निष्क्रमणम् ... ... | ४३४ |
| भूम्युपवेशनम् ... ... | ४३५ |
| कर्णवेधः ... ... ... | ४३५ |
| अन्नप्राशनम् ... ... | ४३५ |
| चूडाकर्मकालः ... ... | ४३६ |
| अक्षरारंभः ... ... | ४३७ |
| उपनयनम् ... ... | ४३७ |
| वेदारंभकालः ... ... | ४४० |
| ब्रह्मचारिव्रतारंभः ... ... | ४४० |

| विषयाः | पृष्ठं |
|---|---|
| गोदानकर्म ... ... | ४४४ |
| प्रतिवेदं ब्रह्मचर्यकालः ... | ४४४ |
| समावर्तनकालः ... ... | ४४४ |
| छुरिकाबंधनम् ... ... | ४४५ |
| विवाहकालः ... ... | ४४५ |
| विवाहाद्युपयोगिनिर्णयः ... | ४४७ |
| एकोदरयोः संस्कारनिर्णयः | ४४९ |
| प्रतिकूलविचारः ... ... | ४५१ |
| रजोदोषे विचारः ... ... | ४५२ |
| दिनचतुष्टयं श्राद्धनिषेधः ... | ४५२ |
| मासिकादिनिर्णयः ... ... | ४५२ |
| धर्मार्थविवाहकरणे ... | ४५३ |
| कन्यागृहे भोजने ... ... | ४५३ |
| वध्वा सह भोजने ... ... | ४५३ |
| अनिष्टनक्षत्रादौ दानम् ... | ४५३ |
| वाग्दानोत्तरं वरमरणे ... | ४५३ |
| परिवेत्तृत्वदोषः ... ... | ४५४ |
| गृहप्रवेशनीयहोमकालः ... | ४५४ |
| देवकोत्थापनकालः ... | ४५४ |
| देवकोत्थापनपर्यंतं सपिंडानां वर्ज्यानि ... ... | ४५४ |
| अस्पृश्यस्पर्शे न दोषः ... | ४५४ |
| स्नाननिषेधः ... ... | ४५५ |
| मुंडननिषेधः ... ... | ४५५ |
| गोपीचंदननिषेधः ... ... | ४५५ |
| नववधूप्रवेशकालः ... | ४५५ |
| द्विरागमनकालः ... ... | ४५५ |
| आवसथ्याधानम् ... ... | ४५५ |
| असंभवे पितृमरणोत्तरं ... | ४५५ |
| पितरि ज्येष्ठे भ्रातरि वा न दोषः ... ... ... | ४५५ |
| श्मश्रुकर्मकालः ... ... | ४५६ |

| विषयाः | पृष्ठं |
|---|---|
| राजकार्यनियुक्तानां न दोषः | ४५६ |
| पुनः सुदिने क्षौरम् ... | ४५६ |
| अभ्यंगकालः ... ... | ४५६ |
| बहुनिषेधवारो बलवान् ... | ४५७ |
| सार्पपे वासिते च न दोषः | ४५७ |
| आमलकस्नानकालः ... | ४५७ |
| दंतधावननिषेधः ... ... | ४५७ |
| संध्याकालः ... ... | ४५८ |
| संध्याकाले वर्ज्यानि ... | ४५८ |
| कालविशेषे वर्ज्यानि ... | ४५८ |
| देवप्रतिष्ठाकालः ... ... | ४६० |
| शिवप्रतिष्ठायाम् ... ... | ४६१ |
| विष्णुप्रतिष्ठाकालः ... | ४६१ |
| देवीप्रतिष्ठाकालः ... ... | ४६१ |
| मातृभैरवादिप्रतिष्ठायाम् ... | ४६२ |
| चतुःषष्टिप्रतिष्ठायाम् ... | ४६२ |
| वपीकूपादिप्रतिष्ठाकालः ... | ४६२ |
| तिथिविशेषे देवताविशेषपूजा | ४६२ |
| कामनाविशेषे पूजाकालः ... | ४६३ |
| कृषिलवनसंग्रहादौ मुहूर्तः | ४६४ |
| वस्त्रधारणम् ... ... | ४६४ |
| अलंकारधारणम् ... ... | ४६४ |
| सूचीकर्मणि ... ... | ४६५ |
| शय्यायाम् ... ... | ४६५ |
| शस्त्रधारणम् ... ... | ४६५ |
| स्वामिसेवायाम् ... ... | ४६५ |
| दास्यादिसंग्रहे ... ... | ४६५ |
| गजाश्वदोलाद्यारोहणे ... | ४६५ |
| नृत्यमुहूर्तः ... ... ... | ४६५ |
| राजदर्शने ... ... ... | ४६५ |
| क्रयविक्रयादौ ... ... | ४६५ |
| सेतुबंधने ... ... ... | ४६५ |
| पशुकृत्ये ... ... ... | ४६५ |
| गजदंतच्छेदे ... ... | ४६५ |
| निक्षेपे मुहूर्तः ... ... | ४६५ |
| ऋणमोक्षे ... ... ... | ४६६ |
| राजमुद्रायाम् ... ... | ४६६ |
| नौकायाम् ... ... ... | ४६६ |
| भोगे मुहूर्तः ... ... | ४६६ |
| इंधनसंग्रहे ... ... | ४६६ |
| नवान्नभक्षणे ... ... | ४६६ |
| नवभोजनपात्रे ... ... | ४६६ |
| नवफलादिभक्षणे ... ... | ४६६ |
| ज्वराद्युत्पत्तौ ... ... | ४६६ |
| ज्वरे मरणयोगः ... ... | ४६६ |
| तत्र शांतिः ... ... | ४६६ |
| भेषजग्रहणे ... ... | ४६६ |
| आरोग्यस्नाने ... ... | ४६७ |
| काम्यहोमाहुतौ ... ... | ४६७ |
| अथ युगधर्माः ... ... | ४६७ |
| युगभेदेन देवताराधनम् ... | ४६८ |
| युगभेदेन तीर्थसेवा ... | ४६८ |
| युगभेदात्स्मृतिप्राबल्यम् ... | ४६८ |
| युगभेदाद्बहिष्कारभेदः ... | ४६८ |
| भाषणस्पर्शान्नकर्मभिः पातित्यम् ... ... ... | ४६८ |
| षडक्षरेण शिवपूजा ... | ४६८ |
| युगक्रमेण ध्यानयागार्चनस्मृतयः ... ... | ४६८ |
| कलौ हरिसंकीर्तनम् ... | ४६८ |
| कलिवर्ज्यानि ... ... | ४६८ |
| अस्थिसंचयनोत्तरं स्पर्शो न | ४६९ |
| जारिणीपरिग्रहनिषेधः ... | ४६९ |
| कलेश्चत्वारिंशच्छतवर्षोत्तरनिषेधः ... ... ... | ४६९ |
| यावद्वर्णविभागं संन्यासादि | ४६९ |
| ग्रंथप्रशस्तिः ... ... | ४६९ |

श्रीः ।

# पुरुषार्थचिंतामणिः ।

श्रीगणेशाय नमः ।

ब्रह्मविष्णुमहेशानां सर्वेषां जगतां प्रभुः । ईश्वरो नित्यकालात्मा विभुर्विजयतेतराम् ॥ १ ॥ अत्रेः समुद्भवाद्रामकृष्णसूरिरभूत्कुलात् । आठवले इति ख्यातात्तन्नेत्राच्चंद्रमा इव ॥ २ ॥ तदात्मजो विष्णुभट्टः पुरुषार्थप्रभासके । ग्रंथे चिंतामणौ कालः सम्यग्ज्ञानप्रसिद्धये ॥ ३ ॥ हेमाद्रिणा माधवस्य विरोधः कालनिर्णये । इति ज्ञात्वा कृतास्तेऽतः परस्परविरोधिनः ॥ ४ ॥ नवीनविदुषां ग्रंथः सुप्रसिद्धमिदं ह्यतः । सर्वेषामृषिवाक्यानां हेमाद्रेर्माधवस्य च ॥५॥ संविवादपरीहारपरिष्कारपुरस्सरम् । करोति कालखंडं तु नत्वा विश्वेश्वरं प्रभुम् ॥ ६ ॥

**कालद्वैविध्यम्** ॥ तत्र कालो द्विविधः । नित्योऽजन्यश्च ।

काललक्षणम् । नित्यस्वरूपमुक्तं कूर्मपुराणे—अनादिरेष भगवान्कालोऽनंतोऽजरोऽमरः।सर्वगत्वात्स्वतंत्रत्वात्सर्वात्मत्वान्महेश्वरः । ब्रह्माणो बहवोरुद्रा ह्यन्ये नारायणादयः। एको हि भगवानीशः कालः कविरिति स्मृतः । ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लयः । प्रोच्यते कालयोगेन पुनरेव च संभवः । परं ब्रह्म च भूतानि वासुदेवोऽपि शंकरः। कालेनैव च सृज्यंते स एव ग्रसते पुनः । तस्मात्कालात्मकं विश्वं स एव परमेश्वरः । इति । विष्णुधर्मोत्तरेऽपि—अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः। कलनात्सर्वभूतानां स कालः परिकीर्तितः । अनादिनिधनत्वेन स महान्परमेश्वरः। निमेषादपि सूक्ष्मत्वात्सूक्ष्मात्सूक्ष्मतरो ह्यति। तस्य सूक्ष्मातिसूक्ष्मस्य कालस्य परमेष्ठिनः । दुर्विभाव्या महाभाग योगिनामपि सूक्ष्मता । पद्मपत्रसहस्रं तु सूच्या वै भिद्यते यथा। समकालं तु तद्भिन्नमबुधो मन्यते जनः । कालक्रमेण तद्भिन्नं

सा तस्य द्विज सूक्ष्मता। यद्यप्येवंविधस्यानादिनिधनस्यापरिच्छिन्नतैवोचिता तथाप्यंतवतीभिः सूर्यादिग्रहक्रियाभिः परिच्छिन्नतोपपद्यते। तासां क्रियाणां संतानस्य बीजांकुरादिसंतानवदनाद्यंतत्वादनादिनिधनस्यापि कालस्य परिच्छेदः संभवतीत्युक्तं तत्रैव—तस्य सूक्ष्मातिसूक्ष्मस्य तथातिमहतो द्विजाः। मानं संख्या बुधैर्ज्ञेया ग्रहगत्यनुसारतः। इति। तथास्मदादिप्रत्यक्षनिमेषादिक्रियाद्वारेण परिच्छेदस्तत्रैवोक्तः। लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः। अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम। नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः। द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दश त्रुटिः स्मृतः। विनाडिका तु षट् प्राणास्तत्षष्ट्या नाडिका स्मृता। अहोरात्रं तु तत्षष्ट्या नित्यमेव प्रकीर्तितम्। त्रिंशन्मुहूर्ताश्च तथा अहोरात्रेण कीर्तिताः। तेऽत्र पंचदश प्रोक्ता राम नित्यं दिवाचराः। उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः। तथा तथा भवेद्वृद्धिर्दिवसस्य महाभुज। दिवसश्च यथा राम वृद्धिं समधिगच्छति। तदाश्रितमुहूर्तानां तथा वृद्धिः प्रकीर्तिता। दिनवृद्धिर्यथा राम दोषाहानिस्तथा तथा। तदाश्रितमुहूर्तानां हानिर्ज्ञेया तथा तथा। दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः। दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु। क्षीयंते तस्य हानौ तु तन्मुहूर्तास्तथैव च। राज्याश्रिताश्च वर्धंते रात्रिवृद्धिस्तथा तथा। तदा मेषं सहस्रांशुस्तुलां चैव प्रपद्यते। समरात्रिंदिवः कालो विषुवच्छब्दवाचकः। इति। एवंच निमेषरूपक्रियाकालेनावच्छिन्ना या सूर्यस्य क्रिया तद्द्वयावच्छिन्नः कालस्त्रुटिरिति व्यवहारस्य विषयः। एवं प्राणनाडिकादिव्यवहारा ज्ञेयाः। षष्टिनाडिकापरिमितस्याहोरात्रस्य त्रैविध्यमुक्तं हेमाद्रौ ब्रह्मसिद्धांते—सावनं स्यादहोरात्रमुदयादोदयाद्रवेः। रवेस्त्रिंशस्तु राश्यंशास्तिथिसंभोग ऐंदवः। इति। विष्णुधर्मोत्तरे त्वहोरात्रस्य चातुर्विध्यमुक्तं—तिथिनैकेन दिवसश्चांद्रमाने[१] प्रकीर्तितः। अहोरात्रेण चैकेन सावनो दिवसः स्मृतः। (आदित्यभागभोगेन सौरो दिवस उच्यते। चंद्रनक्षत्रभोगेन नाक्षत्रो दिवसः स्मृतः।) तिथिभागयोर्लक्षणं तत्रैव-चंद्रार्कगत्या कालस्य परिच्छेदो

लघ्वक्षरादिकालावयवलक्षणम्।

अहोरात्रलक्षणम्।

---

१ 'मानेन कीर्तितः'

यदा भवेत् । तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयं । भगणेन समग्रेण ज्ञेया द्वादश राशयः । त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते । आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा । चंद्रमाः स्यात्तदा राम तिथिरित्यभिधीयते । इति ॥

**मासश्चतुर्धा ।** दिवसस्य चातुर्विध्यात्तन्निष्पाद्यो मासोऽपि चतुर्विधः । तदुक्तं हेमाद्रौ ज्योतिस्सिद्धांते—प्रथमः सावनो मासो द्वितीयश्चांद्र उच्यते । नाक्षत्रस्तु तृतीयः स्यात्सौरो मासश्चतुर्थकः । इति । विष्णुधर्मोत्तरेऽपि—चंद्रमाः पौर्णमास्यंते भास्करादतिरिच्यते । राशिषट्कं तथा राम मासार्धेन न संशयः । भागद्वादशकेनैव तिथ्यां तिथ्यां क्रमेण तु । चंद्रमाः कृष्णपक्षांते सूर्येण सह युज्यते । संनिकर्षादथारभ्य संनिकर्षस्तथापरः । चंद्रार्कयोर्बुधैर्मासश्चांद्र इत्यभिधीयते । सावने तु तथा मासि त्रिंशत्सूर्योदयाः स्मृताः । आदित्यराशिभोगेन सौरो मासः प्रकीर्तितः। सर्वर्क्षपरिवर्तैस्तु नाक्षत्रो मास उच्यते । हेमाद्रौ त्रिकांडमंडनेन देशव्यवस्थया चांद्रमासस्य द्वैविध्यमुक्तम् । चांद्रोऽपि शुक्लपक्षादिः कृष्णपक्षादिरेवेति च द्विधा । कृष्णपक्षादिकं मासं नांगीकुर्वंति केचन । येऽपीच्छंति न तेषामपीष्टो विंध्यस्य दक्षिणे । तथाच तैत्तिरीयके—अमावास्यया मासान्त्संपाद्याहरुत्सृजंत्यमावास्यया हि मासान्त्संपश्यंति।पौर्णमास्या मासान्त्संपाद्याहरुत्सृजंति पौर्णमास्या मासान्त्संपश्यंतीति । अयमर्थः गवामयनस्य विकृतिरुत्सर्गिणामयनं नाम सत्रम् । तत्र प्रकृतौ प्रतिमासं त्रिंशत्स्वप्यहःसु त्रिंशतां सोमयागानामनुष्ठेयत्वान्न कस्याप्यह्नस्त्यागस्तथा विकृतौ प्राप्ते द्वितीयादिमासस्य प्रथममहस्त्याज्यमिति विधीयते । तत्र मासो दर्शांतः पौर्णमास्यंतो वा ग्राह्य इति पूर्णमासादण् वक्तव्य इति वार्तिके पूर्णो मासोऽस्यामितिशाब्दिकैरुक्तत्वाच्च । अश्वयुक्कृष्णपक्षेतु श्राद्धं कुर्याद्दिनेदिने । इति व्यवहाराच्च ।विष्णुधर्मोत्तरे—माने मासस्तु नाक्षत्रे सप्तविंशतिभिर्दिनैः । परिशेषेषु मानेषु मासस्त्रिंशद्दिनः स्मृतः । इति माधवे हेमाद्रौच ब्रह्मसिद्धान्ते—अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रांतिपौर्णमासीभ्यां तथैव नृपवैश्ययोः।इति।एवं सत्यपि पक्षौ पूर्वापरौ शुक्ल-

[Margin notes: चांद्रमासद्वैविध्यम् । — चैत्रादिमासलक्षणम् ।]

---

१ 'प्रकृतौ'. २ 'आश्वयुक्'. ३ 'श्राद्धं कार्यं'. ४ कार्यं.

कृष्णौ मासस्तु तावुभाविति कोशात् पूर्णिमांतत्वे मलमासादेरसंभवात् शुक्लप्रतिपदादिदर्शांत एव मुख्यश्चांद्रो मासः।चैत्रादिशब्दश्चांद्रचैत्रादावेव पंकजादिशब्दवद्योगरूढः। अतएव नक्षत्रेण युक्तः काल इत्यधिकारे सास्मिन्पौर्णमासीति संज्ञायामिति सूत्रयता पाणिनिना सास्मिन्पौर्णमासीत्यनेन प्रवृत्तिनिमित्तं चित्रादिनक्षत्रयुक्तपौर्णमासीयोगं प्रदर्श्य तस्याव्याप्त्यतिव्याप्तिवारणार्थं संज्ञायामित्यनेन रूढिः स्वीकृता। तत्र रूढ्याः प्रवृत्तिनिमित्तमुक्तं ज्योतिर्ग्रंथे। मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चांद्रः। चैत्रादिर्विज्ञेयः[1] पूर्तिद्वित्वेऽधिमासोंऽत्यः। इति। तथाच मेषादिस्थसूर्याधिकरणदर्शांतत्वं सति चित्रादिनक्षत्रयोगयोग्यपौर्णमासीयुक्तत्वं चैत्रत्वादिकं चांद्रचैत्रादिलक्षणं पर्यवसन्नम्। नन्वेवमपि मेषार्काधिकरणदर्शांतत्वस्याधिकवैशाखे सत्वाच्चैत्रलक्षणस्य तत्रातिव्याप्तिरिति संभाव्यते तर्हि मेषार्काधिकरणप्रथमदर्शांतत्वे सतीति वाच्यमिति न काप्यनुपपत्तिः।नन्वेवं—अंत्योपांत्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः। शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया। द्वे द्वे चित्रादितारणां परिपूर्णेंदुसंगमे। मासाश्चैत्राद्यो ज्ञेयास्त्रिकैः षष्ठांत्यसप्तमाः। इत्यादीनां हेमाद्रिमाधवोदाहृतवचनानां यस्मिन्मासे पूर्णिमा चित्रानक्षत्रेण युज्यते स चैत्रः। एवं वैशाखादिषूह्येयं। चित्राविशाखादियोगस्योपलक्षणात् चित्रादिप्रत्यासन्नस्वात्यनुराधादियोगे चैत्रवैशाखादिसंज्ञा न विरुध्यते। चैत्रादिश्रावणांतानां पंचानां मासानां चित्रादिनक्षत्रद्वंद्वं प्रयोजकं भाद्रपदाश्वयुजोस्तु शतभिषक्रेवत्यादिकं त्रिकं कार्तिकादिमाघांतानां कृत्तिकादिद्वंद्वं फाल्गुनस्य पूर्वाफाल्गुन्यादित्रयमिति विवेक इति। माधवस्य विशाखाद्यन्यतरेण नक्षत्रेण युक्ता पौर्णमासी वैशाख्यादिव्यपदेशभाक्। नक्षत्रयोगश्चैकदेशेनापि व्यपदेशहेतुः। तथाच शांकरगीता। आदिपादार्धमात्रेण नक्षत्रस्यान्वये ह्यसौ। तिथिरर्धेऽपि संयुक्ता विपरीता न सा पुनः। इत्यादिहेमाद्रेश्च निर्विषयत्वमितिचेन्न। यौगिकार्थबोधकत्वेनैव सार्थकत्वात् संज्ञायामितिसूत्रयन्पाणिनिः रूढिशब्दतां पुरस्करोति। यत्तु वृत्तिकारेण पुष्ययोगात्पौषीत्याद्युदाहृतं तच्छिष्याणां सुखबोधार्थं। नायमश्वकर्णादिशब्दवत्सर्वथा लुप्तावय-

---

1 'स विज्ञेयः'.

चार्थः किंतूद्भिदादिशब्दवद्यथाकथंचिदवाप्तप्रवृत्तिनिमित्त इति तस्याभिप्राय इति वदतो हेमाद्रेरुक्तार्थ एव तात्पर्यात् । एवंच चांद्रमासे एव चैत्रादिशब्दा मुख्याः सौरादिषु तूक्तप्रवृत्तिनिमित्ताभावात् प्रसिद्धिप्राचुर्याभावाच्च चैत्रादिशब्दा गौणाः ।

**मासविशेषस्य कर्मविशेषे प्राशस्त्यं** । तदाह **हेमाद्रौ ज्योतिर्गार्ग्यः**—सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चांद्रो मासः प्रशस्यते । आब्दिके सांवत्सरिकमृताहश्राद्धे । पितृकार्ये मासिकषाण्मासिकादौ । चशब्दाद्दैवकार्येऽपि । तथाच **पितामहः**—दैवे कर्मणि पित्र्ये च मासश्चांद्रमसः स्मृतः। इति । **बृहस्पतिः**—रवेरभ्युदये मानं चंद्रस्य पितृकर्मणि । यज्ञे सावनमित्याहुरार्क्षं सर्वव्रतादिषु । **ज्योतिर्गार्ग्यः**—आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा । सावनेनैव कर्तव्या शत्रूणां चाप्युपासना । यथा पांडवैः कौरवाणां । अत्र सौरो मासो विवाहादावित्यादीनां [1]प्राशस्त्यपरत्वमेव नतु विवाहादौ सौर एवेति नियमपरत्वं । उद्वाहयज्ञोपनयप्रतिष्ठातिथिव्रतक्षौरमहोत्सवाद्यं । पर्वक्रिया वास्तुगृहप्रवेशः सर्वंहि चांद्रेण विगृह्यते तत् । इति **विवाहवृंदावने** वसिष्ठवचनविरोधात् । यज्ञादौ सावन इत्यत्र । विवाहव्रतयज्ञेषु सौरं मानं प्रशस्यते । पार्वणे त्वष्टकाश्राद्धे चांद्रमिष्टं तथाब्दिके । इति **हेमाद्रावृष्यशृंगवचनविरोधात्** । आब्दिके पितृकार्ये चांद्र एवेत्यत्र । यस्मिन् राशौ गते सूर्ये विपत्तिं यांति मानवाः । तेषां तत्रैव कर्तव्याः पिंडदानादिकाः क्रियाः । इति व्याघ्रपादवचनविरोधात् । अतएव । प्रेतमासस्य यः पक्षस्तत्तिथौ प्रतिवत्सरं । यावत्स्मरति पौत्रोऽपि तेषां तत्रैव दापयेत्। इति **हेमाद्रौ प्रचेतसा** तत्पक्षांतर्गतमृततिथावेव श्राद्धविधानात् । महालयपक्षांतर्गतमृततिथौ निषिद्धवारादियुक्तायामपि शिष्टानां सकृन्महालयश्राद्धानुष्ठानमपि संगच्छते । तस्मात् सौरो मासो विवाहादावित्यादीनि प्राशस्त्यमात्रबोधकानीति सिद्धं । इति मासनिर्णयः ।

**अथ मासकृत्यानि** । तत्र **चैत्रकृत्यं मत्स्यपुराणे**—वर्जयित्वा मधौ यस्तु दधिक्षीरघृतैक्षवं । दद्याद्वस्त्राणि सूक्ष्माणि सर्ववर्णयुतानि च । संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति ।

---

१ 'एव प्राशस्त्यादेव'.

एतद्गौरीव्रतं नाम भवानीलोकदायकं । इति । भविष्योत्तरे—चैत्रे त्रिरात्रं नक्ताशी नद्यां स्नात्वा ददाति यः । अजाः पंच पयस्विन्यो दरिद्राय कुटुंबिने । न जायते पुनरसौ जीवलोके कदाचन । इति । वामनपुराणे—चैत्रे मासि विचित्राणि शयनान्यासनानि च । विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ । इति ।

वैशाखमासकृत्यम्।

**वैशाखकृत्यं महाभारते**—निश्चरेदेकभक्तेन वैशाखे यो जितेंद्रियः । प्रातःस्नायी नरः स्त्री वा ज्ञातीनां श्रेष्ठतां व्रजेत् । इति । वामनपुराणे—गंधमाल्यानि च तथा वैशाखे सुरभीणि च । देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये । इति ।

ज्येष्ठमासकृत्यम्।

**ज्येष्ठकृत्यं भविष्योत्तरे** । पिष्टेन कंजजं कृत्वा ज्येष्ठे मासि सवेदिकं । पुष्पैः संपूज्य गंधाद्यैर्नानावस्त्रविभूषणैः । वर्षकोटिशतं साग्रं सूर्यलोके महीयते । कंजजो ब्रह्मा । वामनपुराणे—उदकुंभोऽवु धेनुं च तालवृंतं सचंदनं । त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि च । इति ।

आषाढकृत्यम्।

**आषाढकृत्यं महाभारते**—आषाढमेकभक्तेन स्थित्वा मासमतंद्रितः । बहुधान्यो बहुधनो बहुपुत्रश्च जायते । वामनपुराणे—उपानद्युगुलं छत्रं लवणामलकानि च । आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः । इति ।

श्रावणकृत्यम्।

**श्रावणकृत्यं महाभारते**—श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् । तत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्धनः । वामनपुराणे—घृतं च क्षीरकुंभांश्च घृतधेनुं फलानि च । श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिता । इति ।

भाद्रपदकृत्यम्।

**भाद्रपदकृत्यं महाभारते**—प्रौष्ठपद्ये तु यो मासि एकाहारो भवेन्नरः । धनाढ्यं स्फीतमतुलमैश्वर्यं प्रतिपद्यते । वामनपुराणे—मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषा । हृषीकेशप्रीणनार्थं लवणं सगुडौदनम् । इति ।

आश्विनकृत्यम्।

**आश्विनकृत्यमाह यमः**—घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये । प्रीणयित्वा द्विजान्देवान् रूपभाग्भिजायते । वामनपुराणे—तिलांस्तुरंगवृषभदधिताम्रवशादिकं । प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः । इति । वशा धेनुः ।

कार्तिककृत्यम्।

**कार्तिककृत्यं पुष्करपुराणे**—तुलायां तिलतैलेन सायंकालसमागमे । आकाशदीपं यो दद्यान्मासमेकं दिनं प्रति । महतीं श्रियमाप्नोति रूपसौभाग्यसंपदं । विष्णुः—कार्तिकं

सकलं मासं प्रातःस्नायी जितेंद्रियः । जपन् हविष्यभुग्दांतः सर्वपापैः प्रमुच्यते । **वामनपुराणे**—रजतं कनकं दीपान्मणिमुक्ताफलादिकं । दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः । इति । **मार्गशीर्षकृत्यं भारते**—मार्गशीर्षं तु यो मासमेकभक्तेन

मार्गशीर्षकृत्यम् ।

संक्षिपेत् । भोजयेत्तु द्विजान्भक्त्या सर्वपापैः प्रमुच्यते । कृषिभागी बहुधनो बहुधान्यश्च जायते । **वामनपुराणे**—खरोष्ट्राश्वगजा गावः शकटादि अजाविकं[1] । दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः । इति । **पौषकृत्यं महाभा-**

पौषकृत्यम् ।

**रते**—पौषमासं तु कौंतेय एकभक्तेन यः क्षिपेत् । सुभगो दर्शनीयश्च यशोभागी च जायते । **वामनपुराणे**—प्रासादनगरादीनि गृहप्रावरणानि च । नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः । इति । **माघकृत्यमाह विष्णुः**—माघे मास्यग्निं

माघमासकृत्यम् ।

प्रत्यहं तिलैर्हुत्वा सघृतं कृसरान्नं ब्राह्मणान्भोजयित्वा दीप्ताग्निर्भवति । **भविष्योत्तरे**—पौर्णमास्याममायां वा प्रारभ्य स्नानमाचरेत् । त्रिंशद्दिनानि पुण्यानि मकरस्थे दिवाकरे । **वामनपुराणे**—अप्रावृतशरीरस्तु यः कुर्यात् स्नानमाचरेत् । पदेपदेऽश्वमेधस्य फलमाप्नोति[2] मानवः । एवं स्नानस्यावसाने भोज्यं देयमवारितं । भोजयेद्द्विजदांपत्यं भूषयेद्वस्त्रभूषणैः । **वामनपुराणे**—माघे मासि तिलाः शस्तास्तिलधेनुश्च दानतः । एधेंधनादयश्चान्ये माधवप्रीणनाय च । **फाल्गुन-**

फाल्गुनकृत्यम् ।

**कृत्यं । स्कंदपुराणे**—एकभक्तं तु कुर्वाणः फाल्गुने मासि नित्यशः । स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रियाः । **वामनपुराणे**—फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितं । गोविंदप्रीणनार्थाय दातव्यं पुरुषर्षभ । इति । इति चैत्रादिद्वादशमासकृत्यानि ।

**अथ ऋतुः** ॥ स च चांद्रसौरमानेन मासद्वयात्मकः । तथाग्निचयने ऋतव्येष्टकोपधानब्राह्मणे श्रूयते—द्वंद्वमुपदधाति । तस्माद्द्वंद्वं ऋतवः इति । ननु अधिकमासे सति कश्चन ऋतुर्मासत्रयात्मको भवति तत्कथं मासद्वयात्मकत्वनियम इति चेत् क्वचित्त्रयोदशमासात्मकत्वेऽपि द्वादश मासाः संवत्सरः इत्यत्र षष्ट्या तु दिवसैर्मासः कथितो बादरायणैरित्यनेनाधिकमासस्य

---

१ 'अजादिकं'. २ 'फलं प्राप्नोति'.

पष्टिदिनात्मकमासावयवत्वप्रतिपादनात्संवत्सरस्य द्वादशमासात्मकत्ववदृतोर्मासद्वयात्मकत्वात्। स च द्विविधः सौरचांद्रभेदात्। तत्र सौरो **विष्णुधर्मोत्तरे** दर्शितः—सौरं मासद्वयं राम ऋतुरित्यभिधीयते। इति। चांद्रस्तु **बह्वृचश्रुतौ** दर्शितः—पूर्वापरं चरतो माययैतौ शिशू क्रीळंतौ परियातो अध्वरं। विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः। इति। अत्र **त्रिकांडमंडनः**—ऋतौ चंद्रनिमित्तत्वं मंत्रवर्णात्प्रतीयते। ऋतूँरन्यो विदधज्जायते पुनरित्यतः। पुनः पुनर्यो जायते स एव विदधदृतून्। चंद्रः पुनःपुनर्जन्मा तस्माच्चंद्रवशादृतुः। इति। **तैत्तिरीयेऽपि**—चंद्रमाः षड्ढोता। स ऋतून् कल्पयाति इति। अनयोर्विनियोग उक्तस्त्रिकांडमंडनेन[1]—श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चांद्रमसर्तुषु। तदलाभे तु सौरर्तुष्विति ज्योतिर्विदां मतं। इति। सच द्विविधोऽपि प्रत्येकं षड्विधः। षड्वा ऋतवः इति श्रुतेः। यत्तु द्वादश मासाः पंचर्तवः इति श्रूयते तत्प्रयाजानुमंत्रणोपयोगितया हेमंतशिशिरयोरेकीकरणाभिप्रायेण। पंचर्तवो हेमंतशिशिरयोः समासेनेति **बह्वृचब्राह्मणात्**। ते च वसंतोपक्रमाः। मुखं वा एतदृतूनां यद्वसंतः। इति श्रुतेः। तत्र चांद्रा वसंतादयश्चैत्रादिमासद्वयात्मकाः। तथाच श्रुतिः। मधुश्च माधवश्च वासंतिकावृतू। शुक्रश्च शुचिश्च ग्रैष्मावृतू। नभश्च नभस्यश्च वार्षिक्यावृतू। इषश्चोर्जश्च शारदावृतू। सहश्च सहस्यश्च हैमंतिकावृतू। तपश्च तपस्यश्च शैशिरावृतू। इति। अत्र सर्वत्र ऋतू इति द्विवचनं ऋत्ववयवमासद्वित्वाभिप्रायं। अन्यथा षड्वा ऋतव इति षट्संख्यानियमबाधापत्तेः। मध्वादिशब्दाश्चैत्रादिमासवचनाः। तथाच **हेमाद्रौ**—चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेत्। ज्येष्ठमासश्च शुक्रः स्यादाषाढः शुचिरुच्यते। नभोमासः श्रावणः स्यान्नभस्यो भाद्र इष्यते। इषश्चाश्वयुजो मासः कार्तिकश्चोर्जसंज्ञकः। सहोमासो मार्गशिरः सहस्यः पौषनामकः[2]। माघमासस्तपः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः। इति। सौरस्तु वसंतादिः। मीनमेषयोर्मेषवृषभयोर्वा वसंत इति बौधायनोक्तेर्मीनादिसौरमासद्वयात्मको मेषादिसौरमासद्वयात्मको वा वसंत इति। एवं ग्रीष्मादीनामपि द्वैविध्यं बोध्यं। ऋतूनां विनियोग उक्तः श्रुतौ—वसंते

---

1 'योग उक्तस्त्रिकाण्डमण्डनेन'. 2 'पुष्यनामकः'.

ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः । इति । इति ऋतुनिर्णयः ॥

**अथायनम्** । तच्च तस्मादादित्यः षण्मासान्दक्षिणेनैति षडुत्तरेण इति श्रुतौ आदित्यगतिमुपजीव्य प्रवृत्तत्वात्सौरमेव । सौरमानमधिकृत्य **विष्णुधर्मोत्तरे**–ऋतुत्रयं चायनं स्यादिति । **भास्कराचार्यः**–कर्किमृगादिषट्कैनैवायने दक्षिणसौम्यके स्तः इति । तत्रोत्तरायणस्य कर्मांगत्वं श्रूयते–उदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपवसेद्व्रतीभूत्वेति । **आश्वलायनश्च**–उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः । इति । **सत्यव्रतः**–देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ । दक्षिणाभिमुखे कुर्वन्न तत्फलमवाप्नुयात् । इति । उग्रदेवतानां प्रतिष्ठा दक्षिणायने कार्या । तथाच **वैखानससंहिता**–मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहंत्री च स्थाप्या वै दक्षिणायने । इति । **ज्योतिर्ग्रंथे**–गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबंधपूर्वं । सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे चेति । इत्ययननिर्णयः ॥

**अथ संवत्सरः** । स च । द्वादश मासाः संवत्सरः । इति श्रुतेः सम्यक् वसंति मासादयोऽस्मिन्निति व्युत्पत्त्या संवत्सरशब्देन रूढ्याभिधीयमानो द्वादशमासात्मकः कालविशेषः । स च चांद्रसावनसौराख्यत्रिविधमासनिष्पाद्यत्वेन त्रिविधः । तदुक्तं **ब्रह्मसिद्धांते**–चांद्रसावनसौराणां मासानां तु प्रभेदतः । चांद्रसावनसौरास्तु त्रयः संवत्सरा अपीति । तत्र चांद्रः संवत्सरश्चैत्रशुक्लप्रतिपदादिः फाल्गुनदर्शांतः । यं कंचन मासमारभ्य तत्प्राक्तनमासांतः षष्ठ्यधिकशतत्रयतिथिनिष्पन्नत्वात् । यां कांचन तिथिमारभ्य तत्प्राक्तनतिथिपर्यंतोऽपि चांद्रः संवत्सर इति बोध्यम् । सावनः षष्ट्युत्तरशतत्रयाहोरात्रात्मकः । सौरस्तु मेषादिर्मीनांतः । तत्र चांद्रसंवत्सरस्य तिलकव्रतादावुपयोगः । **तिलकव्रतं भविष्योत्तरे** उक्तं–वसंते किंशुकाशोकशोभिते प्रतिपत्तिथिः । तिलैस्तस्यां प्रकुर्वीत स्नानं नियममास्थितः । ललाटपट्टे तिलकं कुर्याच्चंदनपंकजं । ततः प्रभृत्यनुदिनं तिलकालंकृतं मुखं । धार्यं संवत्सरं यावच्छशिनेव नभस्तलमिति । अत्र चांद्र एव संवत्सरः । शुक्लपक्षप्रतिपत्तिथ्योश्चांद्रमान एव

संभवात् । सावनस्योपयोगो विष्णुधर्मोत्तरे उक्तः । सत्राण्युपास्यान्यथ सावनेन लोक्यं च यत्स्याद्व्यवहारकर्मेति । गोसत्रं वै संवत्सरो य एवं विद्वांꣳसः संवत्सरमुपयंति ऋध्नुवंत्येवेति श्रुतौ गवामयनसत्रस्य संवत्सरशब्देन व्यवहारात्संवत्सरशब्दस्य तदंगत्वं प्रतीयते । तत्राहोरात्रसाध्य एकः सोमयागो वेदेऽहःशब्देनोच्यते । तादृशानामहर्विशेषाणां गणः षडहः । स द्विविधः । अभिप्लवः पृष्ठ्यश्च । तत्र चत्वारोऽभिप्लवाः षडहा एकः पृष्ठ्यः षडह इति । षडहपंचकेनैको मासः संपद्यते । तादृशैर्द्वादशभिर्मासैः साध्यं संवत्सरसत्रं । तत्र षष्ठ्यधिकशतत्रयाहोरात्रात्मकसावनसंवत्सरेणैव सिद्धिर्नतु चांद्रसंवत्सरेण तस्य षडहोभिर्न्यूनत्वात् । सौरस्य पंचभिरहोरात्रैरधिकत्वात्सौरसंवत्सरस्य सुजन्मावाप्तिव्रतादावुपयोगः । तच्च व्रतं विष्णुधर्मोत्तरे—मेषसंक्रमणे भानोः सोपवासो नरोत्तमः । पूजयेद्भार्गवं देवं [1]रामं भक्त्या यथाविधि । इत्यारभ्य । मीनसंक्रमणे मत्स्यं वासुदेवं च पूजयेदित्यादिना व्रतमुक्त्वा । कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु [2]न याति जन्मेत्युपसंहृतं । अत्र सौर एव संवत्सरः । क्वचित्संवत्सरस्य पंचविधत्वं परिमाणं चोक्तम् । तथाच माधवादौ वचनं—सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः । मातुलपातालातुलविमलवरांगाश्च वत्सराः पंचेति । अस्यार्थः—गणकप्रसिद्ध्या कटपयाः वर्गाः । तत्र वर्गाक्षरसंख्यया अंकसंग्रहः । तेन मातुलेत्यत्र पकारात्पंचमेन मकारेण पंचसंख्या लभ्यते । टकारात्षष्ठेन तकारेण षट् संख्या । यवर्गतृतीयेन लकारेण त्रित्वसंख्या । तत्रांकानां वामतो गतिरिति पूर्वोक्तप्रकारेण मेलने पंचषष्ठ्यधिकशतत्रयसंख्या संपद्यते । तावदहोरात्रपरिमितः सौरः संवत्सरः । एवं पूर्वोक्तप्रकारेण पातालशब्द एकषष्ठ्यधिकशतत्रयसंख्यामाह । तावदहोरात्रपरिमितो बार्हस्पत्यः संवत्सरः । एवं गणकप्रसिद्ध्या अकारः शून्यवचनः । तेनातलशब्दः षष्ठ्यधिकशतत्रयसंख्यामाह । तेनैतावदहोरात्रपरिमितः सावनसंवत्सरः । उक्तप्रकारेण विमलशब्दः चतुःपंचाशदधिकशतत्रयसंख्यामाह । तावदहोरात्रात्मकश्चांद्रः संवत्सरः । एवं वरांग-

१ 'रामं शक्त्या'.　२ 'नचापि जन्म'.

शब्दश्चतुर्विंशत्यधिकशतत्रयसंख्यामाह । तावदहोरात्रपरिमितो नाक्षत्रः संवत्सर इति । तत्र नाक्षत्रसंवत्सरस्य ज्योतिःशास्त्रप्रसिद्धे आयुर्दायादावुपयोग इति माधवः । बार्हस्पत्यस्य तु सिंहादिस्थबृहस्पतिनिमित्तके । आद्या सा गौतमी गंगा द्वितीया जाह्नवी स्मृता । सर्वतीर्थफलं स्नानाद्गौतम्यां सिंहगे गुराविस्यादिविहितगोदावर्यादिस्नानादावुपयोगो द्रष्टव्यः । अनेन बार्हस्पत्यमानेन कदाचिदधिवत्सरो जायते । तदुक्तं **माधवे उत्तरसौरे**—गुरोर्मध्यमसंक्रांतिहीनो यश्चांद्रवत्सरः । अधिसंवत्सरस्तस्मिन्कारयेन्न सवत्रयं । वर्जनीया प्रयत्नेन प्रतिष्ठा सर्वनाकिनां । स्फुटसंक्रांतिहीनश्चेत्केऽप्याहुरधिमासवदिति । यस्मिंश्चांद्रसंवत्सरे मध्यममानेन गुरोः संक्रांतिर्नास्ति सोऽधिवत्सर इति । तत्र बृहस्पतिसवादिकं न कार्यं । स्फुटमानेन गुरुसंक्रांतिशून्यश्चेत्तस्मिन्नधिमासवत्काम्यादिकं वर्ज्यमिति केचिदृषय आहुः । चांद्रसंवत्सरस्य चैत्रशुक्लप्रतिपद्यारंभः । तदुक्तं **हेमाद्रौ ब्रह्मपुराणे**—चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि । शुक्लपक्षे समग्रं तु तदा सूर्योदये सति । प्रवर्तयामास तदा कालस्य गणनामपि । ग्रहान्नागानृतून्मासान्वत्सरान्वत्सराधिपान् । इति । **ब्रह्मसिद्धांते**—चैत्रसितादेरुदयाद्भानोर्दिनमासवर्षयुगकल्पाः सृष्ट्यादौ लंकायां समं प्रवृत्ता दिनेऽर्कस्येति । सौरसंवत्सरस्यारंभस्तु—शिशिरो मकरे कुंभे वसंतो मीनमेषयोरिति वचनात् मीनमेषयोर्मेषवृषयोर्वा वसंत इति वचनाद्वसंतस्य मीनादित्वमेषादित्वयोर्विकल्पाद्वसंतस्यर्तुमुखत्वाद्वत्सरमुखस्यैवर्तुमुखत्वोपपत्तेरिति **हेमाद्युक्तेः** मीनसंक्रमे मेषसंक्रमे वा ज्ञेयः । यत्तु **विष्णुधर्मोत्तरे**—माघशुक्लसमारंभे चंद्रार्कौ वासवर्क्षगौ । जीवयुक्तौ यदा स्यातां षष्ट्यब्दादिस्तदा स्मृत इति । माघशुक्लप्रतिपदुपक्रमत्वं वत्सराणामुक्तं तज्ज्योतिःशास्त्रप्रसिद्धशुभाशुभफलप्रतिपादनार्थं नतु धर्मानुष्ठानार्थमिति **हेमाद्रिः** । प्रभवादिषष्टिसंख्यानां वत्सराणां आदितः पंचानां पंचानां युगसंज्ञकानां यथासंख्यं संवत्सर-परिवत्सर-इदावत्सर-अनुवत्सर-इद्वत्सर इति पंच संज्ञाः । तदुक्तं **हेमाद्रौ ब्रह्मवैवर्ते**—संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः । इदावत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः । इद्वत्सरः पंचमस्तु तत्संघो युगसंज्ञकः । इति । संव-

त्सरादीनामुपयोग उक्तो विष्णुधर्मोत्तरे माधवे—संवत्सरे तु दातृणां तिलदानं महाफलं । परिपूर्वे तथा दानं यवानां द्विजसत्तम । इदापूर्वे तु वस्त्राणां धान्यानां चानुपूर्वके । इत्पूर्वे रजतस्यापि दानं प्रोक्तं महाफलमिति । तथा तदधिष्ठातृदेवतापूजादिरूपव्रतमुक्तं । संवत्सरः स्मृतो वह्निस्तथार्कः परिवत्सरः । इदापूर्वस्तथा सोमो ह्यनुपूर्वः प्रजापतिः । इत्पूर्वश्च तथा प्रोक्तो देवदेवो महेश्वरः । तेषां मंडलविन्यासः प्राग्वदेव विधीयते । प्राग्वत्स्यात्पूजनं कार्यं होमः कार्यो यथाविधीति । इति संवत्सरनिर्णयः ।

**मलमासनिर्णयः** । द्वादश मासाः संवत्सरः । अस्ति त्रयोदशो मास इति श्रुतौ त्रयोदशमास उक्तस्तस्य मलमासं विनाऽसंभवान्मलमासो निर्णीयते । तत्स्वरूपमाह हेमाद्रौ लघुहारीतः—इंद्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समासौ पितृसोमकौ । तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन । आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः । इति । अत्र प्रथमयोः पूर्णसवर्ण इत्यत्रेव कव्यवाहनगुणविशिष्टाग्न्यभिप्रायेण पितृसोमकाविति द्विवचनं बोध्यं । शुक्लप्रतिपदादिदर्शांतमासमतिक्रम्य सूर्यो राश्यंतरं गच्छति तदा पूर्वो मलिम्लुचः द्वितीयः संक्रांतियुक्तः प्राकृत इत्यर्थः । शातातपः—वत्सरांतर्गतः पापो यज्ञानां फलनाशकृत् । नैर्ऋतो यातुधानाद्यैः समाक्रांतो विनाशकैः । मलिम्लुचैः समाक्रांतं सूर्यसंक्रांतिवर्जितम् । मलिम्लुचं विजानीयात्सर्वकर्मसु गर्हितमिति । ब्रह्मसिद्धांते—चांद्रो मासो ह्यसंक्रांतो मलमासः प्रकीर्तितः । इति । मलत्वं च कालाधिक्यात् । तदुक्तं गृह्यपरिशिष्टे—मलं वदंति कालस्य मासं कालविदोऽधिकमिति । कालाधिक्यं च विष्णुधर्मोत्तरे दर्शितम् । सौरेणाब्दस्तु मानेन यदा भवति भार्गव । सावने तु तदा माने दिनषट्कं न पूर्यते । ऊनरात्राश्च ते राम प्रोक्ताः संवत्सरेण षट् । सौरसंवत्सरस्यांते मानेन शशिजेन तु । एकादशातिरिच्यंते दिनानि भृगुनंदन । समाद्वये साग्रमासे तस्मान्मासोऽतिरिच्यते । स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः । इति । नंदिपुराणे—अमावास्यामहोरात्रे यदा संक्रमते रविः । स तु मासः पवित्रः स्यादतीते ह्यधिको भवेत् ।

अमावास्यां प्राप्येति शेषः। तत्रैव ज्योतिःशास्त्रे—अमावास्याद्वयं यत्र रविसंक्रांतिवर्जितं। मलिम्लुचः स विज्ञेय उत्तरस्तूत्तमाभिधः। रविणा लंघितो मासश्चांद्रः स्यात्तु मलिम्लुचः। वरुणः सूर्यो भानुस्तपनश्चंडो रविर्गभस्तिश्च। अर्यमा हिरण्यरेता दिवाकरो मित्रविष्णू च। एते द्वादश सूर्या माघाद्येषूदयंति मासेषु। निःसूर्योऽधिकमासो मलिम्लुचाख्यस्ततः पापः। मासेषु द्वादशादित्यास्तपंति हि यथाक्रमं। नपुंसकेऽधिके मासि मंडलं तपते रवेः। असंक्रांतो हि यो मासः कदाचित्तिथिवृद्धितः। कालांतरात्समायाति स नपुंसक उच्यते। इति। कालांतरेयत्तोक्ता हेमाद्रौ वसिष्ठसिद्धांते—द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा। घटिकानां चतुष्केण पतत्यधिकमासकः। इति। नन्वियं मलमासयोर्व्यवधायककालेयत्ता वचनांतरेण विरुध्यते। तथाच काठकगृह्ये—यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा। मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत्। इति। अत्रोत्तरार्धेन द्विसंक्रांतस्य न परामर्शः। अयोग्यत्वात्। महाभारतेऽपि—पंचमे पंचमे वर्षे द्वौ मासावधिमासकौ। तेषां कालातिरेकेण ग्रहाणामतिचारतः। इति चेन्न। वसिष्ठवचनस्य ज्योतिःशास्त्रप्रसिद्धमध्यममानलभ्यश्रौतस्मार्तकर्मानुपयोग्यधिमासविषयत्वेन काठकवचनस्य श्रौतस्मार्तकर्मानुष्ठानोपयोगिस्फुटमानलभ्याधिकमासविषयत्वेन विरोधाभावात्। तत्रापि मासे त्रिंशत्तमे भवेदित्यादीनि वचनानि संभवाभिप्रायाणि नतु नियमपराणि। कदाचित्पूर्वाधिकमासादारभ्य त्रिंशस्यैवैकोनत्रिंशस्य कदाचिदेकत्रिंशमारभ्य पंचत्रिंशत्पर्यंतस्याधिकस्य दर्शनेन व्यभिचारापत्तेः। नच मेषादिस्थे सवितरीत्यनेन बोधितस्य मीनार्काधिकरणदर्शांतत्वरूपफाल्गुनलक्षणस्याधिकचैत्रेऽतिव्याप्तिरिति शंक्यं। पूर्तिद्वित्वेऽधिमासोऽस्य इत्यनेनाधिकस्य प्राकृतमासवैलक्षण्याभिधानात्तदनुगुणतया मीनार्काधिकरणदर्शस्य प्राथम्येन विशेषणादधिकचैत्रस्य तदंतत्वाभावेनातिव्याप्त्यभावात्। नचैवं मेषार्काधिकरणदर्शांतत्वाभावेन तस्य चैत्रत्वं न स्यादिति वाच्यं। षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वार्धं तु परित्यज्य कर्तव्या चोत्तरे क्रिया। इत्यादिवचनैर्मेषार्काधिकरणदर्शांतषष्टिदिनात्मकचैत्रपूर्वार्धत्वप्र-

तिपादनेन तस्य चैत्रत्वात्। तत्सिद्धं असंक्रांतमलमासमारभ्याष्टा-विंशान्मासादूर्ध्वं षट्त्रिंशान्मासात्पूर्वं कश्चन द्वितीयोऽसंक्रांतो मलमासः। दशानां फाल्गुनादीनां प्रायो माघस्य च कचित्। नपुंसकत्वं भवतीत्येष शास्त्रस्य निश्चयः। इति वचनात्पौषातिरिक्तेषु मासेषु मध्येऽन्यतमो मलमासो भवतीति। अतएव त्रिंशत्षट्त्रिंशमासस्य बाह्याभ्यंतरयोर्द्वयोः। अधिमासो विकल्पेन बादरायणकीर्तितः। इति निर्णयामृते ज्योतिःशास्त्रवचनं संगच्छते। यस्तु द्विसंक्रांतो मलमासः क्षयाख्यः स कार्तिकादिषु त्रिष्वेवान्यतमो भवति नान्यः। तदुक्तं सिद्धांतशिरोमणौ—असंक्रांतमासोऽधिमासः स्फुटः स्याद्विसंक्रांतमासः क्षयाख्यः कदाचित्। क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च। इति। तथाच कार्तिकमार्गशीर्षपौषेष्वेवान्यतमः क्षयमासो भवति नान्य इत्यर्थः। तदा क्षयमासाव्यवहितपूर्वमासत्रये कश्चनैको मासोऽसंक्रांतो भवति। क्षयमासाव्यवहितोत्तरमासत्रयेऽपि कश्चनैको मासोऽसंक्रांतो भवतीति। एकस्मात्क्षयमासाद्द्वितीयक्षयमासस्य कियता कालेन संभव इत्याकांक्षायामुक्तं सिद्धान्तशिरोमणौ—गतोऽब्ध्यद्रिनंदैर्मिते शाककाले तिथीशैर्भविष्यत्यथांगाक्षसूर्यैः। गजाद्र्यग्निभूभिस्तथा प्रायशोऽयं कुवेदेंदुवर्षैः कचिद्गोकुभिश्च। इति। अस्यार्थः चतुःसप्तत्यधिकनवशतसंख्याकैर्वर्षैः परिमितेन शाकस्य कालेन कश्चिदुक्तलक्षणः क्षयमासो गतः। अब्धयश्चत्वारः अद्रयः सप्त नंदा नवेति अब्ध्यद्रिनंदैरित्यनेनोक्तसंख्या लभ्यते। तिथयः पंचदश ईशा एकादश। तथाच तिथीशैरित्यनेन पंचदशयुक्तशताधिकसहस्रवर्षपरिमितशाकवर्षे द्वितीयः क्षयमासो भविष्यति। अंग ६ अक्ष ५ सूर्याः १२। तथाच षट्पंचाशदधिकशतद्वययुक्तसहस्रवर्षपरिमितशाककाले उक्तलक्षणः क्षयमासो भविष्यति। गजा अष्टौ अद्रयः सप्त अग्नयः त्रयः भूरेका। तथा चाष्टसप्तत्यधिकशतत्रययुक्तसहस्रपरिमिते शाकवर्षे कश्चित्क्षयमासो भविष्यति इति क्षयमासचतुष्टयमुदाहृत्य तद्यवधायककालेयत्तामाह-कुवेदेंदुवर्षैरिति। कुर्भूमिरेका वेदाश्चत्वारः इंदुरेकः। तथाच एकचत्वारिंशदधिकशतवर्षैः पूर्वस्मात्क्षयमासाद्द्वितीयः क्षयमासो भवति बहुधा। कचिद्गोकुभिरिति एकोनविंशतिसंख्य-

वर्षे द्वितीयः क्षयमासो भवतीत्यर्थः । सिद्धांतशिरोमणिकृतापि मिताक्षरायां कुवेदेंदुवर्षैरित्यादिस्ववाक्यं कालावधिद्वयपरतयैव व्याख्यातं । तद्दृष्ट्वा माधवमदनरत्नादिभिः पूर्वस्मात्क्षयमासात्कुवेदेंदुपरिमितैर्वर्षैर्द्वितीयः क्षयमासो भवति । कचिद्गोकुभिः एकोनविंशतिपरिमितैर्वर्षैर्भवतीत्युक्तं तथापि शिरोमण्युदाहृतचतुर्थक्षयमासस्य तृतीयात्क्षयमासाद्द्वाविंशत्यधिकशतवर्षैर्जातत्वेन नियमद्वयस्यापि व्यभिचारात् । अतएव मणिमरीच्याख्यशिरोमणिटीकायां गोकुभिर्न्यूनैः कुवेदेंदुवर्षैश्चतुर्थः क्षयमास इति तृतीयावधिस्वीकारेण समाहितं । किंच वर्षत्रयाधिकषोडशशतवर्षपरिमितशककालेऽस्मदादिभिः स्मर्यमाणः क्षयमासः शिरोमण्युदाहृतचतुर्थक्षयमासात्सपादशतद्वयवर्षैर्जातः । तत्र पूर्वोक्तनियमस्य कथमप्युक्तिसंभवाभावात् । तस्माद्ग्रहगतिविशेषाद्यदा यस्मिन्दर्शांतचांद्रमासे संक्रांतिद्वयं भवति तदा स क्षयमास इत्येव वक्तव्यमिति बोध्यं । यदपि क्षयः कार्तिकादित्रये नान्यत इति नियम उक्तः सोऽप्ययुक्तः । संक्रांतिद्वयसंयुक्तः स मासोऽहस्पतिः स्मृतः । चैत्रादिसप्तमासेषु न कदाचिद्भवेदयं । ऊर्जादिपंचमासेषु कदाचन भवेद्यदा । तदा द्वावधिकौ स्यातां तस्मिन्नूर्जादिपंचके । इति हेमाद्र्युदाहृतज्योतिर्ग्रंथवचनविरोधात् । कन्यादिस्थे सवितरि सर्वदाऽधिकमासनिषेधपरत्वे—मासः कन्यागते भानावसंक्रांतो भवेद्यदा । दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयम् । इत्यादिज्योतिःपितामहादिवचनविरोधात् । क्षयमासात्पूर्वभाविनोऽसंक्रांतस्याधिकमासत्वनिषेधक—घटकन्यागते सूर्ये वृश्चिके वाथ धन्वनि । मकरे वाथ कुंभे वा नाधिमासो विधीयते । इति ज्योतिःसिद्धांतवचनविरोधाच्च । तस्माद्भास्कराचार्यैः संप्रति काले मासांतरस्य क्षयत्वे उपपत्तिर्न लब्धेति स्वोपज्ञाभिप्रायेणैव नान्यतः स्यादित्युक्तमित्यभिप्रायेण विरोधः परिहर्तव्यः । यत्र मासि रविसंक्रमद्वयं तत्र मासयुगलं क्षयाह्वयं । दर्शांतयोर्द्वयोर्मध्येऽधिमासश्चेन्न संक्रमः । द्वे संक्रांती क्षयः स्यात्स एकोऽपि द्व्यात्मको भवेदिति रत्नमालादिष्वपि संक्रांतिद्वययुक्तस्य क्षयमासत्वमुक्तं । तद्यथा । त्र्यधिकषोडश-

१ 'द्भविष्यति'.

शतपरिमितशकवर्षे भाद्रपदांत्यभागे कन्यासंक्रांतिः । ततोऽसंक्रांत एको मासः । तत आश्विनशुक्लप्रतिपदि तुलासंक्रांतिः । कार्तिकशुक्लप्रतिपदि वृश्चिकसंक्रांतिः । ततः कार्तिकदर्शोत्तरप्रतिपदि धनुःसंक्रांतिः । उत्तरदर्शे मकरसंक्रांतिः । ततो माघांत्यभागे कुंभसंक्रांतिः फाल्गुनांत्यदर्शे मीनसंक्रांतिः । तत एको मासोऽसंक्रांतः । ततश्चैत्रशुक्लप्रतिपदि मेषसंक्रांतिर्जातेति । तथाच पूर्वासंक्रांतमासमारभ्य चांद्रद्वादशमासात्मकवर्षमध्ये एको द्विसंक्रांतः द्वौ मासावसंक्रांताविति मासत्रयं जातं । तत्र मेषादिस्थे सवितरीति वचनात् मेषार्काधिकरणदर्शांतश्चैत्र इत्यादिक्रमेण वृश्चिकार्काधिकरणदर्शांतकार्तिकानंतरं मकरार्काधिकरणदर्शांतस्य पौषत्वमेव संपन्नमिति धनुःस्थार्काधिकरणदर्शांतरूपमार्गशीर्षस्याभावान्मार्गशीर्षस्य क्षयः संपद्यत इति बोध्यं । यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा । संसर्पांहस्पती मासावधिमासश्च निंदिताः । इति । बार्हस्पत्यज्योतिर्ग्रंथे व्यवहारात् पूर्वासंक्रांतस्य संसर्प इति द्विसंक्रांतस्यांहस्पतिरिति संज्ञा ज्ञेया । संसर्पांहस्पत्योर्निंदितत्वं विवाहादिशुभकार्यविषयं । यस्मिन्वर्षे द्विसंक्रांतोऽधिकमासद्वयं तथा । तद्धि मासत्रयं दुष्टं सर्वेषु शुभकर्मसु । यद्वर्षमध्येऽधिकमासयुग्मं तत्कार्तिकादित्रितये क्षयाख्यः । मासत्रयं त्याज्यमिदं प्रयत्नाद्विवाहयज्ञोत्सवमंगलेषु । इति हेमाद्र्युदाहृतज्योतिर्ग्रंथवचनात् । तथा रविणा लंघितो मासो ह्यनर्हः सर्वकर्मस्वित्यादिवचनानि क्षयमासात्प्राचीनसंसर्पाख्ये असंक्रांते न प्रवर्तंते किंतूत्तरासंक्रांतमासे एव प्रवर्तंते । तथाच हेमाद्रौ जाबालिः—एकस्मिन्नपि वर्षे च द्वौ मासावधिमासकौ । पूर्वो मासः प्रशस्तः स्यादपरस्त्वधिमासकः । मासद्वयेऽब्दमध्ये तु संक्रांतिर्न यदा भवेत् । प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः । इति । यत्तु षष्ट्या तु दिवसैर्मास इत्यस्यापवादः मासद्वयेऽब्दमध्ये त्विति वचनं । तथाच एकस्मिन्वर्षे यदा द्वौ मासावसंक्रांतौ तदा षष्टिदिनात्मकस्य मासस्य पूर्वो भागः प्राकृतः शुद्धः । उत्तरो भागो मलिम्लुचः । एकाब्दमध्यवर्तिनौ द्वावधिमासौ पूर्वमासोत्तरार्धत्वात्पूर्वमाससंज्ञाविति विश्वप्रकाशकृद्वर्णितमपवादकत्वं तत्तु पूर्वोत्तरशब्दाभ्यामुपात्त-

मासपरित्यागेनानुपात्तभागग्रहणस्यायुक्तत्वादित्यादिना हेमाद्रिणा दूषितत्वादयुक्तमेव । तस्माद्विवाहाद्यतिरिक्तश्रौतस्मार्तादिकर्मसु संसर्पो योग्य एव । यस्तु तस्मिन्नधिकशब्दप्रयोगः सोऽसंक्रांतत्वाभिप्रायेण नतु कर्मानर्हत्वाभिप्रायेण । अतएव । चैत्रादर्वाङ् नाधिमासः परतस्त्वधिको भवेत् । दृष्टा हि सर्वशास्त्रेषु तस्मिन्मूर्तिस्त्रयोदशीति ब्रह्मसिद्धांतवचने तस्मिन्नुत्तरस्मिन्नेव मासे त्रयोदशी मूर्तिर्न तु पूर्वस्मिन्नपि विरोधादिति हेमाद्र्यादयः संगच्छंते । वचनार्थस्तु । चैत्रादर्वाक् क्षयमासात्पूर्वो योऽसंक्रांतः स नाधिमासः किंतु क्षयमासात्परतो योऽसंक्रांतः स एवाधिमास इति । अन्यथा चैत्रात्प्राक्तनानां क्षयमासोत्तरभाविनामप्यसंक्रांतानामधिमासत्वनिषेधापत्तौ प्राक्तस्तत्र पूर्वः स्यादधिमासस्तथोत्तर इत्यादिवचनविरोधापत्तेः । नन्वेवं ससंक्रांतिकमासानामेकादशत्वापत्तौ ससंक्रांतिकद्वादशमासात्मकत्वबोधक—द्वादश मासाः संवत्सर इति श्रुतिविरोध इति चेन्न । तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः । मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ । इति हेमाद्र्याद्युदाहृतवचनेन क्षयमासस्य संक्रांतिद्वययुक्तस्य मासद्वयत्वप्रतिपादनेन द्वादशत्वोपपत्तेः । इति मलमासस्वरूपनिरूपणम् ।

**अथ मलमासे कार्याकार्यनिर्णयः** । तत्र **हेमाद्रौ पैठीनसिः**—श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः । त्रयोदशे तु ताः सर्वा निष्फला इति कीर्तिताः । तस्मात्त्रयोदशे मासि कुर्यात्ता न कथंचन । कुर्वन्ननर्थमेवाशु कुर्यादात्मविनाशनं । इति । **सुमंतुः**—न कुर्यादधिके मासि काम्यं कर्म कदाचन । इति **गृह्यपरिशिष्टे**—मलिम्लुचस्तु मासो वै मलिनः पापसंभवः । गर्हितः पितृदेवेभ्यः सर्वकर्मसु तं त्यजेत् । तत्रैव **ब्रह्मसिद्धांते**—यदा शशी याति गभस्तिमंडलं दिवाकरः संक्रमणं करोत्युत । तदाधिमासः कथितो विरिंचिना विवाहयात्रोत्सवयज्ञदोषकृत् । **ज्योतिःशास्त्रांतरे**—सवितृमंडलमेति यदा शशी तदनु संक्रमणं कुरुते रविः । मखमहोत्सवनाशकरस्तदा मुनिवरैः कथितोऽधिकमासकः । सिनीवालीमतिक्रम्य यदा संक्रमते रविः । भानुना लंघितो मासो ह्यनर्हः सर्वकर्मसु ।

मले कर्माभ्यनुज्ञा। माद्रौ शंखः—न कुर्यादधिके मासि कर्माकर्म कथंचन। मुक्त्वा नैमित्तिकं कर्म तद्धि तत्रैव कीर्तितं। कर्माकर्मेति शब्देन काम्यकर्मोच्यते। तद्धि फलकामैः क्रियमाणत्वात्कर्म अफलकामैरक्रियमाणत्वादकर्म कर्म च तदकर्म चेति कर्मधारय इति हेमाद्रिः। तथाच प्रजापतिः—न कुर्यादधिके मासि काम्यं कर्म कथंचन। मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्तितं। इति। अयं काम्यनिषेधः काम्यारंभसमाप्तिविषयो नतु मलमासात्प्राक् प्रारब्धासमाप्तकाम्यकर्मविषयः। तथाच ब्रह्मसिद्धांते—प्रारब्धं कर्म यत्किंचित्तत्तु कार्यं मलिम्लुचे। असूर्या नाम ये मासा न तेषु मम संमताः। व्रतानां चैव यज्ञानां प्रारंभाश्च समाप्तयः। इति। यत्तु काठकगृह्यपरिशिष्टे—प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितं। आगते मलमासेऽपि तत्समाप्यमसंशयम्। इति वचनं तत्सावनमासमानप्रवृत्तकृच्छ्रचांद्रायणाहीनसत्रादिविषयं[1]। अतएव। एकादश्यां तु गृह्णीयात्संक्रांतौ कर्कटस्य वा। आषाढादौ नरो भक्त्या चातुर्मास्यव्रतक्रियां। कार्तिके शुक्लपक्षस्य एकादश्यां समापयेत्। अधिमासे च पतिते एष एव विधिक्रमः। इति मध्यपातिमलमासेऽनुष्ठानं संगच्छते। नचैवं पंचसु मासेषु व्रतानुष्ठाने चातुर्मास्यव्रतमिति समाख्याविरोधः। मैत्रादिपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्तते[2] च। पौष्णावसाने च सुरारिहंता प्रबुध्यते मासचतुष्टयेन। इति वचनविरोधश्चेति शंक्यं। षष्ट्या तु दिवसैर्मास इतिवचनान्मासचतुष्टयोपपत्तेः। यत्तु काम्यं संप्रति काले एव क्रियमाणं प्रकृतफलस्य साधकं यथा तीव्रज्वराभिभूतस्य ज्वरनिवृत्तये विहितं श्रीरुद्रजपादिकं तन्मलमासेऽप्यारभ्य कार्यं। तदाह मरीचिः—रोगे चालभ्ययोगे च सीमंते पुंसवेऽपि च। यद्दानादि समुद्दिष्टं कुर्वन्नत्र न दुष्यति। इति। एवं अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्य रक्षाꣳसि सचेरन्। अग्निमेव रक्षोहणꣳस्वेन भागधेयेनोपधावति स एवास्माद्रक्षाꣳस्यपहंतीति। सचेरन् समवेयुः गृह्णीयुरिति यावत्। स्वेन भागधेयेनोपधावति प्रियेण हविर्भागेन तोषयति। तृप्तः सोऽस्माद्रक्षोगृहीताद्रक्षांसि दूरीकरोतीतीष्टिः।

---

१ 'सावनमानप्रवृत्त'. २ 'परिवर्तमेति'.

यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याᳪशतकृष्णलान्निर्वपेत्प्रजापतिमेव स्वेन भागधेयेनोपधावति स एवास्मिन्नायुर्दधाति सर्वमायुरेतीति । एवं कारीर्या वृष्टिकामो यजेतेत्यादीष्टयोऽपि यदि मलमासे प्रसक्तास्तर्हि तत्रापि कर्तव्याः । कालांतरप्रतीक्षायां ज्वर्यादीनां मरणमेव स्यादित्यत्यावश्यकत्वात् । हेमाद्रौ **वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः**—अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च । वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः । मांगल्यमभिषेकं च मलमासे विवर्जयेत् । ग्रहणादिनिमित्तकं दानं तु मलमासेऽपि कार्यं । चंद्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् । इति वचनात् । मलमासे निषिद्धानां शुक्रास्तादावपि निषेधः । बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते । मलमास इवैतानि वर्जयेद्देवदर्शनम् । इति वचनात् । अग्न्याधेयं वसंते ब्राह्मणोऽग्नीनादधीतेत्यादिकमेव निषिध्यते । तेनाग्न्यनुगमनिमित्तकं प्रायश्चित्तभूतमग्न्याधेयं मलमासेऽपि कार्यम् । एवं प्रतिमासंस्कारनाशे पुनःप्रतिष्ठापि न निषिध्यते । यज्ञास्तु वसंतादौ विहिता उत्तरमासे क्रियमाणा ये स्वकाले एव कृता भवंति ते मले निषिद्धाः । दानानि कालांतरे शक्यानुष्ठानानि । तेन नित्यदानादीनां न निषेधः । वृषोत्सर्गस्य नैकादशाहिकस्य निषेधः षोडशश्राद्धवत्तस्यापि प्रेतोपकारकत्वात् । वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च । न कुर्यान्मलमासेऽपि महादानव्रतानि च ।

महादानानि । **महादानानि**—मात्स्ये—आद्यं तु सर्वदानानां तुलापुरुषसंज्ञितं । हिरण्यगर्भदानं च ब्रह्मांडं तदनंतरम् । कल्पपादपदानं च गोसहस्रं तु पंचमम् । हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च । हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा । पंचलांगलकं तद्वद्धारादानं तथैव च । द्वादशं विश्वचक्रं च ततः कल्पलतात्मकम् । सप्तसागरदानं च रत्नधेनुस्तथैव च । महाभूतघटस्तद्वत्षोडशः परिकीर्तितः । इति **कौथुमिः**—अधिमासे न कर्तव्यं श्राद्धं सांवत्सरादिकम् । वर्षवृद्ध्यभिषेकादि कर्तव्यमधिके न तु । **काठकगृह्ये**—चूडा मौंजीबंधनं च अग्न्याधेयं महालयम् । राजाभिषेकं काम्यं च न कुर्याद्भानुलंघिते । **ज्योतिःशास्त्रे**—तत्र दत्तमदत्तं

स्याद्भुतं चाद्भुतमेव च । सुजतमप्यजतं स्यान्नोपवासः कृतो भवे-
त् । न यात्रा न विवाहं च न च वास्तुनिवेशनं । न प्रतिष्ठां च देवानां
प्रासादग्रामभूरुहां । न हिरण्यं सुवासांसि कारयेदिति निश्चयः ।
हिरण्यं तद्धारणमित्यर्थः । **व्यासः**—रविणा लंघितो मास-
श्चांद्रः ख्यातो मलिम्लुचः । तत्र यद्विहितं कर्म उत्तरे मासि
कारयेत् । **प्रजापतिः**—उपाकर्म च हव्यं च कव्यं पर्वोत्सवं
तथा । उत्तरे नियतः कुर्यात्पूर्वं तन्निष्फलं भवेत् । **पराशरः**—
एवं षष्टिदिनो मासस्तदर्धे च मलिम्लुचः । त्यक्त्वा तदुत्तरे
कार्याः पितृदेवादिकाः क्रियाः । **सत्यव्रतः**—मासि संवत्सरे
चैव तिथिद्वैधं यदा भवेत् । तत्रोत्तरोत्तमा ज्ञेया पूर्वा तु स्यान्म-
आधिमासे कर्तव्यं । लिम्लुचा । अधिमासे कर्तव्यमाह
**हेमाद्रौ शातातपः**—एकसंज्ञौ यदा मासौ स्यातां संवत्सरे
क्वचित् । तत्राद्ये पितृकार्याणि देवकार्याणि चोत्तरे । **अंगिराः**—
द्वौ मासावेकनामानावेकस्मिन्वत्सरे यदि । पूर्वस्मिन्पितृ-
कार्याणि देवकार्याणि चोत्तरे । **ज्योतिःशास्त्रे**—षष्टिभिर्दि-
वसैर्मासः कथितो बादरायणैः । पूर्वस्मिन्देवकार्याणि पितृ-
कार्याणि चोभयोः । एवमादीनि मलमासेऽपि देवकार्यपितृका-
र्यप्रतिपादकवचनान्यस्यावश्यकदेवकार्यपितृकार्यविषयाणि । **बृ-
हस्पतिः**—नित्यनैमित्तिके कुर्यात्प्रयतः स मलिम्लुचे । तीर्थश्राद्धं
गजच्छायां प्रेतश्राद्धं तथैव च इति । अत्रापि यस्य नित्यादेर्मलमासे-
ऽननुष्ठाने कालातिक्रमनिमित्तं प्रायश्चित्तं विहितं । यथा तदा-
हुर्य आहिताग्निरमावास्यां पौर्णमासीं वातीयात्का तत्र प्राय-
श्चित्तिरिति सोऽग्नये पथिकृतेऽष्टाकपालं पुरोळाशं निर्वपेदि-
त्यादि । तस्यैव नित्यस्य मलमासेऽनुष्ठानं नतु सोमयागादेः ।
तस्योत्तरमासेऽनुष्ठानेऽपि तदंगभूतवसंतादिकालस्यातिक्रमाभा-
वात् । तेन दर्शपूर्णमासाग्निहोत्रपंचमहायज्ञादेर्मलमासेऽनुष्ठानं नतु
सोमादेः । एवं यस्य नैमित्तिकस्य दाहेष्ट्यादेर्निमित्तकालानंतर-
काले एव कर्तव्यत्वेन मासांतरे विहितकालासंभवस्तस्यैव मल-
मासेऽनुष्ठानं नतु नैमित्तिकस्यापि जातेष्ट्यादेः । निमित्तानंतर-
काले नालच्छेदनात्पूर्वं शिशुसंरक्षणार्थमननुष्ठितस्य नाल-
च्छेदानंतरं सूतकेनानधिकारादननुष्ठान इव मलमासेऽननुष्ठा-
नेऽपि प्रायश्चित्ताभावात् । ततश्च जातेष्ट्यादेः शुद्धमासे एवानु-

ष्ठानं । एवंच नित्यत्वं नैमित्तिकत्वं चाविवक्षितम् । किंतु यस्योत्तरमासेऽनुष्ठाने कालातिक्रमनिमित्तप्रायश्चित्तापत्तिः विहितकालसंभवेन लोपप्रसक्तिर्वा तन्मलमासे कर्तव्यमित्यत्रैव तात्पर्यं । अनन्यगति यन्नित्यं कुर्यान्नैमित्तिकं तथा इति हेमाद्र्युदाहृतवचनात् ।

आनन्यगतिकाभ्यनुज्ञा । **अनन्यगतिकानि** कानिचिद्गृह्यपरिशिष्टे दर्शितानि । अवषट्कारहोमाश्च पर्व चाग्रयणं तथा । मलमासे तु कर्तव्यं काम्या इष्टीश्च वर्जयेत् । अवषट्कारहोमाः अग्निहोत्रोपासनवैश्वदेवादयः । पर्व दर्शपौर्णमासौ पार्वणस्थालीपाकश्च । आग्रयणमाग्रयणेष्टिः । संक्रांतिरहिते मासि कुर्याद्वाग्रयणं नवा इति **हेमाद्रौ पैठीनसिना** विकल्प उक्तः । तेन दुर्भिक्षादिना जीर्णधान्याभावे आग्रयणं विना नवान्नभक्षणे 'तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्' इति प्रायश्चित्ताम्नानान्मलमासे कार्यं । धान्यसत्वे तूत्तरमास एवेति व्यवस्थितविकल्प एव । **काठकगृह्यपरिशिष्टे**—मलेऽनन्यगतिं नित्यां कुर्यान्नैमित्तिकीं क्रियां । सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे । पुष्ट्याख्याग्रयणाधानचातुर्मास्यादिकान्यपि । महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमास-

मलेमहालयनि० विशेषाख्याविहितं वर्जयेन्मले । इति । महालयो भाद्रपदापरपक्षः । प्रेतमाल्यादिमारभ्य श्राद्धपिंडोदकाः क्रियाः । सपिंडीकरणांताश्च यथाकालमुपस्थिताः । यवव्रीहितिलैर्होमो जातकर्मादिकाः क्रियाः । मघात्रयोदशीश्राद्धं प्रत्युपस्थितिहेतुकं । अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे । **भृगुस्मृतिः**—वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयं । राजाभिषेकं काम्यं च न कुर्याद्भानुलंघिते । **ज्योतिःपराशरः**—यातुधानप्रियो मासः कन्यार्के जायते यदा । दैवं पित्र्यं तदा कर्म उत्तरे मासि कारयेत् । **देवलः**—अर्के नभस्यकन्यास्थे श्राद्धपक्षः प्रकीर्तितः । सिनीवालीमतिक्रम्य यदा कन्यां व्रजेद्रविः । तदा कालस्य वृद्धत्वादतीतैव पितृक्रिया । अतीता पंचमं पक्षमतिक्रांतेत्यर्थः । एतेन महालयश्राद्धस्य कन्यार्कनिमित्तत्वात् नैमित्तिकश्राद्धस्य मलमासेऽपि विधानान्महालयश्राद्धं मलमासे कार्यमिति केषांचिदुक्तिरयुक्तैव उदाहृतवचनविरोधात् । अत-

१ 'मासि युज्यते'.

एव—अब्दोदकुंभमन्वादिमहालययुगादिषु । इति कालादर्शकारिकायामपि मलमासकार्येषु मध्ये महालयग्रहणं उक्तोदाहरिष्यमाणवचनविरोधादयुक्तमेव । हेमाद्रौ नागरखंडे—आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे । यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे । तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवं । नभो वाथ नभस्यो वा मलमासे भवेद्यदि । सप्तमः पितृपक्षः स्यादन्यथैव तु पंचमः । अत्र कन्यार्कः प्राशस्त्यसंपादको नतु निमित्तं । अन्यथा चतुर्दश्याममायां वा यदा कन्यासंक्रांतिस्तदा ततः पूर्वं श्राद्धाकरणापत्तौ एकस्मिन्नपि वासरे इति सामान्येनाभिधानानुपपत्तेः । तथाच कार्ष्णाजिनिः—अंते वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् । पक्षस्तु पंचमः पूज्यः श्राद्धषोडशकं प्रति । बृहन्मनुरपि—मध्ये वा यदि वाप्यंते यत्र कन्यां रविर्व्रजेत् । स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते । इति । यत्तु जातूकर्ण्यवचनं—आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पंचमः । श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छतु वा नवा इति । तदुदाहृतवचनैकवाक्यत्वार्थं पक्षोपक्रमकाले कन्यार्काभावेऽपि तत्र श्राद्धं कर्तव्यमित्यभिप्रायकं । अत एव कन्यागते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयं । इति वचनमपि पक्षमध्ये यस्मिन्कस्मिन्नहनि कन्यासंक्रमेऽपि ततः प्राचीनान्यप्युपादेयानीत्यभिप्रायं । यत्तु—श्राद्धीयेऽहनि संप्राप्ते मलमासो भवेद्यदि । श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति । इति वृद्धवसिष्ठवचनं तन्मासिकविषयं । संवत्सरमध्ये यद्यपि मलमासो भवेन्मासिकार्थं दिनमेकं वृद्धिं नयेदिति । अब्दमंबुघटं दद्यादन्नं दद्यात्सुसंचितं । संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकं । इति वसिष्ठकौथुमिवाक्यैकवाक्यत्वात् । विष्णुरपि—मासिकाब्दे चेदधिमासपातो मासिकार्थं दिनमेकं वर्धयेदिति । अतएव हेमाद्रौ—संवत्सरातिरेकी वै मासश्चैव त्रयोदशः । असुराणां तु मासोऽसौ तस्मादेव विगर्हितः । तस्मात्त्रयोदशे श्राद्धं न कुर्यान्नोपतिष्ठति । इति ऋष्यशृंगोक्तः श्राद्धनिषेधः संगच्छते । यानि तु—उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः । मासवृद्धौ परः कार्या वर्जयित्वा न पैतृकं । इति ।

नाधिमासं विवर्जयेदिति । मलमासेऽपि कर्तव्यं श्राद्धं यत्प्रतिवत्सरं । सांवत्सरं न वर्धेत श्राद्धं तत्र मृताहनि । जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च । प्रतिसंवत्सरं यच्च पूर्वभागे प्रकीर्तितं । पूर्वभागे मलमासे इत्यर्थः । इति ज्योतिः- **पराशरशातातपपैठीनसि**वचनानि तानि मलमासमृतानां कदाचित्स एवाधिकस्तदा मलमासे प्राप्ताब्दिकविषयाणि शुद्धमासमृतानां प्रथमाब्दिकविषयाणि च । पैठीनस्यादिवाक्यैकवाक्यत्वात् । तथाहि **पैठीनसिः**–मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरं । मलमासेऽपि कर्तव्यं नान्येषां तु कदाचन । इति । **माधवे मत्यतपाः**-वर्षे वर्षे च यच्छ्राद्धं मृताहे तन्मलिम्लुचे । कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु। इति। **भृगुः**–मलमासमृतानां तु यच्छ्राद्धं प्रतिवत्सरं । मलमासे तु कर्तव्यं नान्येषां तु कदाचन । **व्यासः**–मलिम्लुचे तु संप्राप्ते ब्राह्मणो म्रियते यदि । ऊनाभिधेयो मासो तु कथं कुर्यादथाब्दिकं । यस्मिन्राशौ गते सूर्ये विपत्तिः स्याद्द्विजन्मनः । तस्मिन्नेव प्रकुर्वीत पिंडदानोदकक्रियाः । अधिमासमृतानां तु सौरं मानं समाश्रयेत् । स एव तस्य मासोऽपि श्राद्धपिंडक्रियादिषु । स एव दिवसस्तस्य श्राद्धपिंडोदकादिषु । इति । उत्तरार्धे **हेमाद्रौ** पाठांतरं । इत्यादिपैठीनस्यादिवचनैर्मृतमास एव यदा मलमासो भवति तदा मलमासमृतानामेव क्षयाहश्राद्धं मलमासे एव कार्यमिति विधीयते नान्येषां तु कदाचनेति नु अधिमासे न कर्तव्यं श्राद्धं सांवत्सरादिकमिति । वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि । मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथेत्यादिवाक्यविहितनिषेधानुवाद इत्यस्य निर्विवादत्वात् । एवं । गर्भे वार्धुषिके प्रेतश्राद्धे भृत्येऽनुमासिके । प्रथमे चाब्दिके चैव नाधिमासो विधीयते । असंक्रांतेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं श्राद्धं सपिंडीकरणं तथा । आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । त्रयोदशे तु संप्राप्ते कुर्वीत पुनराब्दिकं । अब्दे पूर्णे सति द्वितीयाब्दप्रवेशतिथौ क्रियमाणं प्रथमाब्दिकं । पुनराब्दिकं द्वितीयाब्दिकं तु त्रयोदशे मासि सम्यक्प्राप्ते अतीते सति चतुर्दशमासप्रवेशतिथौ कार्यमित्यर्थः । प्रत्यब्दं द्वादशे मासि कार्या पिंड-

द्वितीयाब्दाद्यतिथौ पिंडक्रिया सांवत्सरिकं श्राद्धं कार्यं । क-
चित्तृतीयचतुर्थाद्यब्दाद्यमासे मलमासे सति मलमासात्मके त-
स्मिन् त्रयोदशे पूर्णे सति चतुर्दशमासाद्यतिथौ स्यादित्यर्थः ।
अस्यापवादमाह—आद्यं मुक्त्वा त्विति । मृतमासमारभ्य त्रयोद-
शस्य द्वितीयाब्दाद्यमासस्य मलत्वे तु प्रथमाब्दे पूर्णे द्वितीया-
ब्दाद्यतिथौ क्रियमाणं प्रथमाब्दिकं मलमासगतद्वितीयाब्दाद्यति-
थावेव कार्यमित्यर्थः । आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलि-
म्लुचे । इति । असंक्रांतेऽपि कर्तव्यमाब्दिकं प्रथममित्याद्येकवाक्य-
त्वात् । यथा शुद्धकार्तिके मृतस्य मृतमासमारभ्य त्रयोदशे
द्वितीयकार्तिक एव मलमासस्तदा द्वितीयाब्दाद्यावयवे तस्मिन्म-
लमासे एव कार्यं नतु प्रथमवर्षान्तर्गतमासांतरेप्यधिके मृतमा-
समारभ्य त्रयोदशे आश्विने । तस्य प्रथमाब्दांतर्गतत्वेन द्विती-
याब्दाद्यतिथौ विहितस्य प्रथमाब्दिकस्य तत्रानुष्ठानस्याशास्त्री-
यत्वात् । मासपक्षतिथिस्पष्टे यो यस्मिन्म्रियतेऽहनि । प्रत्यब्दं
तु तथाभूतं क्षयाहं तस्य तं विदुः । इति व्यासवचनविरोधात् ।
सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतं । क्रियते यत्खगश्रेष्ठ
मृतेऽहनि बुधैः सदा । मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमाद-
रात् । मातुश्च खगशार्दूल वत्सरांते मृतेऽहनि । नाहं तस्य
खगश्रेष्ठ पूजां गृह्णामि नो हरिः । न ब्रह्मा न च वै रुद्रो न
चान्ये देवतागणाः । तस्माद्यत्नेन कर्तव्यं वर्षे वर्षे मृतेऽहनि ।
प्रथमाब्दिकनिर्णयः । नरेण खगशार्दूल भोजकेन विशेषतः । भोजको
यस्तु वै श्राद्धं न करोति खगाधिप । मातापितृभ्यां सततं वर्षे
वर्षे मृतेऽहनि । स याति नरकं घोरं तामिस्रं नाम नामतः ।
इत्यादिहेमाद्र्युदाहृतभविष्यपुराणादिवचनैः ससंक्रांतचांद्र-
द्वादशमासात्मकवत्सरांते पूर्णे सति द्वितीयवत्सराद्यतिथौ मृ-
ततिथिसजातीयायां श्राद्धस्यात्यावश्यकत्वबोधनात्तदकरणेन
प्रत्यवायापत्तेः, द्वितीयाब्दे श्राद्धसंबंधाभावेन प्रत्यब्दमिति श्रूय-
माणव्याप्तिबाधापत्तेश्च । अतएव वर्षे वर्षे तु यच्छ्राद्धं मातापित्रो-
र्मृतेऽहनि । मासद्वयेऽपि तत्कुर्याद्व्याघ्रस्य वचनं यथेति काला-
दर्शोदाहृतगालववचनमपि प्रथमाब्दिकं मले द्वितीयाद्याब्दिकं

शुद्धे इत्यभिप्रायकमेव । आब्दिकं प्रथमं यत्स्यादित्याद्युदाहृतवाक्यैकवाक्यत्वात् । नच मासद्वयेप्येकस्यैव श्राद्धस्य कर्तव्यतापरमिदमस्तु । एतदेकवाक्यतयोदाहृतवचनान्येव मासद्वयकर्तव्यतापराणि संत्विति शंक्यं । द्वितीयाद्याब्दिकस्य मलमासे कर्तव्यतास्वीकारे आब्दिकं प्रथमं यत्स्यादिति यमवाक्ये, असंक्रांतेऽपि कर्तव्यमाब्दिकं प्रथममिति वासिष्ठे, आद्यं मुक्त्वा तु वत्सरमिति हारीतीये च प्राथम्यविशेषणवैयर्थ्यापत्तेः । वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि । मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथा । इति, वर्षे वर्षे तु यच्छ्राद्धं मृताहे तन्मलिम्लुचे । कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु । इति, मलमासप्रमीतानां श्राद्धं यत्प्रतिवत्सरं । मलमासेऽपि तत्कार्यं नान्येषां तु कदाचन । इति मलमासमृतानां तु श्राद्धं इति सत्यव्रतसत्यतपःपैठीनसिभृगुवाक्यानां विरोधापत्तेश्च । गालवीयस्य प्रथमद्वितीयादिव्यवस्थया मासद्वयकर्तव्यतापरत्वे तु न कस्यापि वैयर्थ्यादिशंकेति तत्परत्वमेव युक्तमिति बोध्यं । अतएव हेमाद्रिमाधवादीनां गालववचनानुपन्यासेऽपि न न्यूनता । अतएव मलमासमृतानां प्रत्याब्दिकं श्राद्धं मलमासेऽपि कार्यं अन्येषामुत्तरमास्येवेति स्मृत्यर्थसारः । वर्षे वर्षे इति सत्यव्रतवचनं मलमासादन्यत्र मृतस्य प्रथमाब्दिकान्यश्राद्धविषयमिति हेमाद्रिः । शुद्धमासमृतानां प्रथमाब्दिकं मलमासे कर्तव्यं, द्वितीयाद्याब्दिकं शुद्धमासे इत्यनया विवक्षयोभयत्र कर्तव्यतेति माधवः । प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवत्सरं । मन्वादौ च युगादौ च । तन्मासोरुभयोरपि । इति मरीचिवचने प्रतिसंवत्सरं श्राद्धं प्रतिसंवत्सरं क्रियमाणं कल्पादिप्रभृति श्राद्धं नतु क्षयाहश्राद्धं तन्निषेधकवचनविरोधादिति मदनरत्नः । गालववचने मासद्वयेऽपीत्यनेन मासद्वयात्मकक्षयमासे श्राद्धं कार्यमित्यर्थः । मलमासादन्यत्र मृतानां शुद्धमासे एव कार्यं, प्रथमाब्दिकं मलमासे एव कार्यमिति निर्णयामृतश्च संगच्छते । यत्तु कालादर्शे भृगुसत्यतपोवचनाभ्यां नियमावगतेः मलमासमृतानां मलमास एव, अन्यमासमृतानामुत्तरत्रेति प्राचीनकृतव्यवस्थां पूर्वपक्षीकृत्य मलमासमृतानां मले एव अन्येषामुभयत्रेति निश्चयो गालवमरीचिवचनाभ्यामि-

त्युक्तं तद्गालवमरीचिवचनविरुद्धाब्दिकं प्रथमं इत्यादियमवसिष्ठहारीतसत्यव्रतवचनादर्शननिबंधनत्वात्, कालादर्शे पूर्वपक्षीकृतप्राचीनमतस्यैव यमादिवचनानुगुणस्य हेमाद्रिमाधवादिभिः पुरस्कृतत्वाच्चोपेक्ष्यमेव । एतेन मासद्वयेऽपि कार्यमित्यर्थका अर्वाचीनग्रंथा अप्युपेक्ष्या इति बोध्यं । तस्मान्मलमासमृतस्य यदा मृतमास एव मलमासस्तदा मलमासे एव । शुद्धमासमृतस्य यदा मृतमास एव मलमासस्तदा प्रथमाब्दिकं चेन्मलमासे एव । द्वितीयाद्याब्दिकं चेन्मलमासमतिक्रम्य शुद्धमासे एव कार्यमिति सिद्धं । मलमासमृतस्य प्रथमाद्याब्दिकं तु यन्नामको मलमासः द्वितीयाब्दाद्ये शुक्लपक्षादिके तन्नामके मासि मृतपक्षीयमृततिथौ कार्यं । उदाहृतसर्ववचनेन हेमाद्रिमाधवाद्यनुगतत्वात् । एतेन मलमासमृतस्य प्रथमाब्दिकं तद्राशिस्थे सूर्ये मृततिथौ कार्यं सत्यतपोव्यासवचनमूलत्वादिति नंदपंडितादिसकलनवीनोक्तिः सत्यतपोव्यासवचनार्थाज्ञाननिबंधनत्वात् उदाहृतानेकवचनहेमाद्रिमाधवविरोधाच्च साहसरूपैवेति चिंतनीयं । मासद्वयात्मकक्षयाख्यमलमासे तु मासद्वयनिमित्तकं श्राद्धं कार्यं । एक एव यदा मासः संक्रांतिद्वयसंयुतः । मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते । इति हेमाद्रिमाधवनिर्णयामृतमदनरत्नाद्युदाहृतसत्यव्रतवचनात् । हेमाद्रिणापि एक एव यदा मास इति वचनाच्छुद्धमासमृतस्यापि प्रतिसंवत्सरश्राद्धस्य क्षयमासे विधानात् क्षयमासाव्यवहितपूर्वभाव्यसंक्रांतश्राद्धं प्राकृतस्तत्र पूर्वः स्यादिति पूर्वासंक्रांते, एक एव यदा मास इति वचनात्क्षयमासे च कार्यं । तेन मलमासमृतस्य यदा मरणमासो मलमासो भवति तदा प्रतिसंवत्सरश्राद्धं मलमास एव कार्यं न शुद्धे नाप्युभयोः । शुद्धमासमृतस्य यदा मरणमासो मलमासो भवति तदा प्रथमाब्दिकं चेन्मलमासे एव कार्यं न शुद्धे नाप्युभयोः । द्वितीयाद्याब्दिकं चेत् शुद्धे एव कार्यं न मले नाप्युभयोः । तस्मिंस्तु प्राकृते मासे कुर्याच्छ्राद्धं यथोदितं । तथैवाभ्युदयं सर्वं नित्यमेकं तु सर्वदा । प्राकृते शुद्धे सर्वं श्राद्धं नित्यं नियमेनैकमेव कुर्यान्न द्वितीयं मलमासेऽपीत्यर्थः । तथा सांवत्सरं न वर्धेत श्राद्धं तत्र मृताहनि इति वचनादपि न सां-

वत्सरिकमुभयत्रानुष्ठेयमिति सिद्धांतयित्वा केचिदुभयत्रेति तदप्ययुक्तमेवेत्यादिनोभयत्रानुष्ठानं दूषितं । स्मृत्यर्थसारमाधवनिर्णयामृतमदनरत्नादीनामिदमेव संमतमिति बोध्यम् । पिंडवर्जमसंक्रांतौ संक्रांतौ पिंडसंयुतम् । प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेऽपि च । इत्यर्वाचीनग्रंथे क्वचित्पराशरनाम्ना लिखितं तद्यद्यार्षं तर्हि पूर्वासंक्रांते कृतस्य क्षयमासेऽप्यनुष्ठानमिति हेमाद्रिणोक्तत्वात्तद्विषयकमेवेति नैतद्बलादप्युभयत्रानुष्ठानमिति दिक् । मासद्वयसंबंधीन्यन्यान्यप्यावश्यककर्माणि क्षयमासेऽनुष्ठेयानि । मासद्वयोदितं कर्म तत्कुर्यादिति निर्णयः । एकस्मिन्मासि मासौ द्वौ यदि स्यातां तयोर्द्वयोः । तावेव पक्षौ ता एव तिथयस्त्रिंशदेव हि । इति मदनरत्नोदाहृतस्मृत्यंतरवचनात् । क्षयमासे तिथिपूर्वार्धे उत्पन्नस्य मृतस्य च वर्षांतरे वर्धापनोत्सवः क्षयाहश्राद्धं च क्षयमासांतर्गते पूर्वमासे कार्यं । तिथ्युत्तरार्धे जातस्य मृतस्य च क्षयमासांतर्गत उत्तरमासे । तिथ्यर्धे प्रथमे पूर्वो द्वितीयार्धे तदुत्तरः । मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ । इति हेमाद्रिमाधवाद्युदाहृतवचनात् । नच श्राद्धमपि पूर्वमासमृतस्य तिथिपूर्वार्धे उत्तरमासमृतस्योत्तरार्धे किं न स्यादिति शंक्यं । अपराह्णादिकालविधायकवचनविरोधापत्तेः । अतएवान्यान्यपि मासद्वयविहितानि कार्याणि स्वस्वकाले एव कर्तव्यानि । एवंच रविसंक्रांतिहीने यो वर्ज्यावर्ज्यविधिः स्मृतः । स एव तु द्विसंक्रांतौ मलमासेऽप्युदीरितः । इति वचनात्क्षयमासेऽपि सामान्यतो व्रतारंभनिषेधः प्रतीयते, तथापि प्रथमारंभविषय एव सः । मासद्वयोदितं कर्मेत्यनेनैकवाक्यात् । तेन मार्गशीर्षपौषयोः क्षयांतःपातेऽपि पूर्ववर्षपौषे आरब्धस्य माघमासव्रतस्नानादेर्द्वितीयारंभः क्षयेऽपि भवति । एवं कार्तिकस्य क्षयांतःपातेऽपि चातुर्मास्यव्रतसमाप्तिस्तत्रैव कर्तव्या । आरब्धस्य कर्मणोऽसमाप्तौ पुनरनारंभे च आरंभानियमे दोषश्चासमाप्तौ स्यादिति हेमाद्र्युदाहृतकात्यायनवचनविरोधापत्तेश्च । हेमाद्रौ यमः— गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके । सपिंडीकरणे नित्ये नाधिमासं विवर्जयेत् । तीर्थस्नानं जपो होमो व्रीहियवतिला-

मलमासकर्मविधानं ।

१ 'पर्वतिलादिभिः'.

दिभिः । जातकर्मांत्यकर्माणि नवश्राद्धं तथैव च । मघात्रयोदशी-श्राद्धं श्राद्धान्यपि च षोडश । चंद्रसूर्यग्रहे स्नानं श्राद्धदान-जपादिकं । कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा । इति । अत्र तीर्थस्नानं द्वितीयादिकं । प्रथमं तु न भवति । मलमासे-ऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् । इति निषेधात् । गर्भे गर्भमासप्र-युक्त्याविहितपुंसवनादौ । वार्धुषिके अशीतिभागो वृद्धिः स्या-दितिविहितवृद्धौ । भृत्ये मासिकभृतिदाने । श्राद्धेति प्रतिमासं क्रियमाणे अमावास्याश्राद्ध इत्यर्थः । मासिकस्य षोडशश्राद्धांत-र्गतत्वेनैव सिद्धेः । स्मृत्यंतरे—श्राद्धजातकनामानि ये च सं-स्कारसव्रताः । मलिम्लुचेऽपि कर्तव्याः काम्या इष्टीश्च वर्ज-येत् । संस्कारा अन्नप्राशननिष्क्रमणादयः इति हेमाद्र्यादयः । सव्रताः पूर्वसंकल्पितचातुर्मास्यव्रतविशेषाः । यस्तु—नामान्नप्रा-शनं चौलं विवाहं मौंजिबंधनं । निष्क्रमं जातकर्मादि काम्यं वृषविसर्जनं । अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उद्यापनमुपारंभं व्रतानां नैव कारयेत् । इति गार्ग्येण नामान्न-प्राशननिष्क्रमणजातकर्मणां निषेध उक्तः स जातकर्मादिविधा-यकोदाहृतवचनविरोधात् । नामकर्म च दर्शेष्टिं यथाकालं स-माचरेत् । अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे । इत्या-दिवचनैकवाक्यत्वाच्च स्वकालातिक्रांतनामकरणादिविषयः । **मत्स्यपुराणे**—आधानं यज्ञकर्मादि प्रायश्चित्तं व्रतानि च । न कुर्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे । इति बृहस्पतिः । नित्यनै-मित्तिके कुर्यात्प्रयतः स मलिम्लुचे । तीर्थश्राद्धं गजच्छायां प्रे-तश्राद्धं तथैव च । अत्र तीर्थश्राद्धं गजच्छायाश्राद्धं च न नित्यं । अकरणे प्रत्यवायाभावात् । नापि नैमित्तिकं । तीर्थगजच्छाया । संबंधरूपनिमित्तस्य पुरुषप्रयत्नसाध्यत्वेन निमित्तत्वाभावात् । अतस्तयोः पृथगुपादनं । गजच्छायात्वत्र—परमान्नं तु यो दद्या-त्पितृणां मधुना सह । छायायां कुंजरेंद्रस्य पूर्वस्यां दक्षिणामुखः । इति **विश्वामित्रो**क्ता गजस्यैव छाया ग्राह्या, नतु—यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः । याम्या तिथिर्भवेत्सापि गज-च्छाया प्रकीर्तिता । इति तेनैव परिभाषिता । अधिकभाद्रपदे हस्त-स्थसूर्यासंभवेन तस्या असंभवात् । **स्मृतिसंग्रहे**—यौगादिकं "सिकं च श्राद्धं चापरपक्षिकम् । मन्वादिकं तैर्थिकं च कुर्या-

न्मासद्वयेऽपि चेति । अत्रापरपक्षिकं प्रतिकृष्णपक्षविहितं श्राद्ध-मित्यर्थः । नतु महालयश्राद्धं, तस्याधिमासे निषेधस्योक्तत्वात् । एवं च क्षयाहश्राद्धस्य मासद्वये विधायकानि वर्षे वर्षेत्यादिगालवादिवचनानि प्रथमाब्दिकं मलमाससंभवे तत्रैव कार्यं द्वितीयाद्याब्दिकं तु शुद्धमास एवेत्येवं व्यवस्थया मासद्वयविधायकानि । प्रतिसंवत्सरे श्राद्धे नाधिमासं विवर्जयेदित्यादीनि मलमासमृद्धतप्रत्याब्दिकविषयाणि, श्राद्धीयाहनि संप्राप्ते इत्यादिश्राद्धद्वयविधायकानि मासिकश्राद्धपराणि, पितृकार्याणि चोभयोरित्यादीनि दर्शादिश्राद्धपराणीति । मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथेति, अन्येषामुत्तरत्र त्वित्यादीनि शुद्धमासमृतद्वितीयाद्याब्दिकविषयाणीति विषयभेदात् सिद्धः सर्वेषामविरोध इति । तथाच सर्ववाक्याविरोधेन कृतस्य मलमासे कार्याकार्यनिर्णयस्यायं संग्रहः । अनन्यगतिकानि स्नानं संध्या नित्यजप औपासनहोमः अग्निहोत्रहोमः देवपूजा पंचमहायज्ञाः अतिथिपूजा नित्यदानं पूर्वारब्धस्थालीपाकदर्शपौर्णमासेष्टयः जीर्णधान्याभावे आग्रयणेष्टिः अग्न्यनुगमादिनिमित्तानि पुनःसंधानादीनि मरणकाले शुद्ध्यापादकप्रायश्चित्तदानादिकं देवप्रतिमादिसंस्कारनाशे पुनःप्रतिष्ठा पुंसवनं सीमंतोन्नयनं यथाकालप्राप्तजातकर्मनामकरणनिष्क्रमणान्नप्राशनानि तदंगाभ्युदयिकश्राद्धं तन्निमित्तकदानं मलमासात्प्राक्प्रारब्धव्रताद्यनुष्ठानं ग्रहणनिमित्तकस्नानजपहोमश्राद्धदानानि ज्वरादिरोगनिवर्तकं जपशांत्यादिकं वृष्ट्यर्थविहितजपादिकं अलभ्ययोगे विहितदानादिकं पूर्वदृष्टानादिदेवदर्शनं पूर्वदृष्टतीर्थस्नानं एतानि मलमासेऽप्यनुष्ठेयानि । मरणकाले शुद्ध्यापादकप्रायश्चित्तदानादिकं प्रेतदाहमारभ्य दशाहांतविहितप्रेतक्रिया एकादशाहे विहितैकोद्दिष्टश्राद्धवृषोत्सर्गादिकं मासिकादिश्राद्धं सपिंडीकरणं अब्दोदकुंभश्राद्धं चैतानि मलमासे प्राप्तानि चेत्तत्रानुष्ठेयानि । युगादिमन्वादिकल्पादिनिमित्तकश्राद्धं मासिकश्राद्धं दर्शश्राद्धं अहरहःश्राद्धं चैतानि मासद्वये कर्तव्यानि । शुद्धमासमृतस्य मृतमास-

तद्द्वितीयाद्याब्दाद्यमासाद्यतिथौ कार्यं । यदाकदाचिन्मृतमास एव मलमासस्तदा मलमासे एव कार्यं न शुद्धमासे इति । एवमन्यदपि यदनन्यगतिकं नित्यं नैमित्तिकमन्यद्वा कालांतरेऽशक्यानुष्ठानं तदपि कार्यमिति । यत्तु नित्यादिकमपि कालांतरे कर्तुं शक्यते तन्मले न कुर्यात् । यथा—अग्न्याधानं, अग्निष्टोमादियागान्, प्राथमिकदर्शपूर्णमासपार्वणस्थालीपाकान्, अपूर्वतीर्थयात्रां, अनादिदेवप्रथमदर्शनं, देवतारामतडागवाप्यादिप्रतिष्ठां, अग्निहोत्रादिहोमारंभं । अथ वृषोत्सर्जनं । तच्च द्विविधं काम्यं नैमित्तिकं च । नैमित्तिकमेकादशाहादिकं । काम्यं कार्तिक्यां वैशाख्यां ग्रहणे संक्रमणे चेति बौधायनेनोक्तं । तत्र काम्यवृषोत्सर्गं, प्रथमराजाभिषेकं, अतिक्रान्तस्वकालजातकर्माद्यन्नप्राशनांतानि, चौलोपनयनवेदव्रतसमावर्तनविवाहान्, आश्रमस्वीकारं, गृहग्रामाद्यारंभप्रवेशौ, वसंतमहोत्सवादिरूपदेवमहोत्सवान्, व्रतारंभोद्यापने, पूर्वोक्तनिमित्तकातिरिक्ताभ्युदयिकश्राद्धं, देशांतरयात्रां, जातेष्ट्यादिकाम्येष्टीः, अनापत्कालिकाग्रयणं, चातुर्मास्यपशुबंधादीनि, सर्वपापप्रायश्चित्तं, उपाकर्मोत्सर्जनजन्मदिनोत्सवान्, पवित्रारोपणं, दमनकपूजां, अष्टकाश्राद्धं, विष्णुशयनपरिवर्तनोत्थानानि, दुर्गास्थापनशक्रध्वजोत्थापने, महादानातिदानं शुद्धमासमृतद्वितीयाद्याब्दिकं, महालयश्राद्धं, स्पष्टमासविशेषाख्याविहितानि श्रवणाकर्मादीनि दीपावल्यादीनि च मलमासे विवर्जयेत् । आधानादिसर्वप्रायश्चित्तांतानि महादानं च एतानि शुक्राद्यस्तादावपि वर्जयेत् । बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते । मलमास इवैतानि वर्जयेद्देवदर्शनम् । इति वचनात् । गयायां नायं निषेधः । गयायां सर्वकालेषु पिंडं दद्याद्विचक्षणः । अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः । न त्यक्तव्यं गयाश्राद्धं नीचस्थे च बृहस्पतौ । इति वायुपुराणात् । अत्र श्राद्धस्य यात्रापूर्वकत्वाद्यात्रायां न निषेध इत्यर्थः । मलमासविशेषस्य द्विराषाढ इति संज्ञा । तदाह माधवे वृद्धमिहिरः—माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा । द्विराषाढः स विज्ञेयः शेते कर्कटकेऽच्युतः । इति । अत्र विशेषमाह स एव—मेषादिमिथुनांतेषु यदा दर्शद्वयं भवेत् । अब्दांतरे तदावश्यं मिथुनार्के हरिः स्वपेत् । इति । अब्दांतरे उत्तर-

वर्षे । कर्कटादित्रिके वापि यदा दर्शद्वयं भवेत् । अब्दांतरे तदा-
मलमासे दानं । वश्यं कर्कटार्के हरिः स्वपेत् । इति ॥ **मलमास-कृत्यमुक्तं हेमाद्रौ पाद्मे**—विष्णुरूपं सहस्रांशुं मलमासे तु पूजयेत् । मलमासस्तु मासानां मलिनः पापसंभवः । तस्य पाप-विशुद्ध्यर्थं मलमासव्रतं चरेत् । दिनेदिने प्रदेयानि विविधा-न्नानि शक्तितः । दक्षिणाघृतयुक्तानि कांस्यपात्रयुतानि च । अधि-मासे तु संप्राप्ते गुडसर्पिःसमन्वितान् । दद्यादनेन मंत्रेण त्रय-स्त्रिंशदपूपकान् । विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः । अपूपान्नप्रदानेन मम पापं व्यपोहतु । चंद्रवह्निर्मलाः पूपाः शा-लितंडुलमिश्रिताः । आहारः सर्वदेवानां तन्मे कुर्वंतु मंगलं । यावंति तत्र छिद्राणि अपूपस्य च पार्थिव । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः । उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत् । अशक्तावुक्तं तत्रैव— अधिमासे यदा राजन् द्वादशी वाथ पूर्णिमा । व्यतीपातदिने वापि दद्यादन्नं हि शक्तितः । साज्यपात्रं च सगुडं त्रयस्त्रिंशद-पूपकान् । कांस्यपात्रे विनिक्षिप्य हिरण्येन समन्वितान् । उपा-नच्छत्रसंयुक्तान्विप्राय विनिवेदयेत् । मंत्रः । यस्य हस्ते गदा-चक्रे गरुडो यस्य वाहनम् । शंखः करतले यस्य स मे विष्णुः प्रसीदतु । कलाकाष्ठादिरूपेण निमेषघटिकादिना । यो वंचयति भूतानि तस्मै कालात्मने नमः । कुरुक्षेत्रमयं देशः कालः पर्व द्विजो हरिः । पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम । मलानां च विशुद्ध्यर्थं पापप्रशमनाय च । पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर । मंत्रेणानेन वै दद्यात्त्रयस्त्रिंशदपूपकान् । गृहे तस्य स्थिरा लक्ष्मीर्यो दद्यात्सूर्यसंनिधौ । दारिद्र्यं न भवेत्तस्य रोग-क्लेशविवर्जितः । इति मलमासे कार्याकार्यनिर्णयः ।

**अथ पक्षनिर्णयः**—सच द्वेधा विभक्तस्य चांद्रमासस्यैको भागः । स द्विविधः शुक्लपक्षः कृष्णपक्षश्च । तत्र चंद्रक-लावृद्ध्यधिकरणकालः शुक्लपक्षः । कलाक्षयाधिकरणकालः कृष्ण-पक्षः । अनयोर्विनियोगो ज्योतिःशास्त्र उक्तः—पक्षौ निरुक्तौ खलु शुक्लकृष्णौ शुभाशुभे कर्मणि तौ प्रशस्तौ । इति । **तैत्ति-रीये होतृब्राह्मणे**—यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेद्वसीयानेव भवति यं कामयेत पापीयान्स्यादिति तम-

परपक्षे याजयेत्पापीयानेव भवति तस्मात्पूर्वपक्षोऽपरपक्षात्कृष्णतरइति शुभाशुभहेतुत्वबोधनादाभ्युदयिकदेवकार्यादौ शुक्लपक्षः प्रशस्तः । आभिचारिके कर्मणि पित्र्ये कर्मणि च कृष्णपक्षः प्रशस्तः । इति पक्षनिर्णयः ।

**अथ तिथिर्निर्णीयते**—तत्स्वरूपमुक्तं **विष्णुधर्मोत्तरे**—चंद्रार्कगत्या कालस्य परिच्छेदो यदा भवेत् । तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम् । भगणेन समग्रेण ज्ञेया द्वादश राशयः । त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते । आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा । चंद्रमा स्यात्तदा राम तिथिरित्यभिधीयते । इति । **स्कांदेपि**—अमाषोडशभागेन देवि प्रोक्ता महाकला । संस्थिता परमा माया देहिनां देहधारिणी । अमादिपौर्णमास्यंता या एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैव वरानने । इति । अत्रामापौर्णमास्योर्भेदविवक्षया षोडशत्वं बोध्यम् । **सिद्धांतशिरोमणौ**—अर्काद्विनिसृतः प्राचीं यद्यात्यहरहः शशी । तच्चांद्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः । इति । अयमर्थः । ऊर्ध्वप्रदेशवर्तिमंदगामिसूर्यस्य अधःप्रदेशवर्ती शीघ्रगामी चंद्रः तयोर्गतिविशेषवशाद्दर्शे सूर्यमंडलस्याधोभाग एव चंद्रस्यावस्थितिर्भवति तदा सूर्यरश्मिभिरभिभूतत्वाच्चंद्रमंडलमीषदपि न प्रकाशते ततो दर्शोत्तरकाले शीघ्रगामित्वात् त्रिंशदंशोपेतराशौ सूर्याधिकरणराश्यंशं त्यक्त्वाग्रिमांशं गच्छति । एवं क्रमेण त्रयोदशांशप्रवेशक्षणे चंद्रस्य प्रथमा कला दर्शनयोग्या भवति । सूर्याधिकरणराश्यंशादग्रिमत्रयोदशांशप्रवेशस्तु अतिशीघ्रगतौ चतुःपंचाशता घटिकाभिर्भवति । अतिमंदगतौ पंचषष्ट्या घटिकाभिर्भवति । ततश्च प्रथमकलया स्वदर्शनयोग्यत्वसंपत्त्यर्थं यावान्कालोऽपेक्ष्यते स कालः प्रतिपच्छब्दाभिधेयः । एवं द्वितीयादिपौर्णमासीपर्यंतास्तिथयो बोध्याः । अतएवोक्तं **सिद्धांतशिरोमणौ**—तन्यंते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः । इति । तथाच सूर्येण सहातिसंनिकृष्टस्य चंद्रस्य यावता कालेन सूर्याद्द्वादशभिरंशैर्विप्रकर्षो भवति तावान्कालः शुक्लपक्षे प्रतिपच्छब्दवाच्यः । एवं द्वितीयादिपूर्णिमांताः । एवमादित्यादतिविप्रकृष्टस्य चंद्रस्य यावता कालेन द्वादशभिरंशैः संनिकर्षो भवति तावान्कालः कृ-

ष्णपक्षे प्रतिपत्तिथिः । एवं क्रमेणामावास्यांताः । पौर्णमास्यां विप्रकर्षतारतम्यविश्रांतिः संनिकर्षतारतम्यविश्रांतिरमावास्यायाम् । तदुक्तं **गोभिलेन**—यः परमो विप्रकर्षः सूर्याचंद्रमसोः सा पौर्णमासी यः परः संनिकर्षः सामावास्येति । एतावता तिथिस्वरूपे निर्णीतेऽपि कर्मांगतया निर्णयो वक्तव्यः । तत्र कर्मांग-

तिथीनां कर्मांगता । तामाह **गार्ग्यः**—तिथिनक्षत्रवारादि साधनं पुण्यपापयोः । प्रधानगुणभावेन स्वातंत्र्येण न ते क्षमाः । इति । **कालादर्शे व्यासः**—यत्तिथौ यच्च नक्षत्रे वारे वापि च यद्यथा । विहितं वा निषिद्धं वा पालयंस्त्रिदिवं व्रजेत् । अपालयन्पुनर्मोहादपवित्रं पदं व्रजेत् । इति । एवंच न कालो गुणो निमित्तं ह्येतदिति मीमांसाभाष्यं उपादेयो गुणो न भवतीत्यभिप्रायकं । अन्यथा गार्ग्यवचनविरोधादसंगतं स्यादिति बोध्यं ।

सखंडाखंडतिथिविचारः । सा तिथिः संपूर्णा खंडा चेति द्विप्रकारा । तत्राद्या—आदित्योदयवेलाया आरभ्य षष्टिनाडिका । तिथिस्तु या सा शुद्धा स्यात्सर्वतिथिष्वयं विधिः । सर्वा ह्येताश्च तिथिय उदयादोदयं स्थिताः । शुद्धा इति विनिश्चेयाः षष्टिनाड्यो हि वै तिथिः । इति **माधवे नारदीयपुराणसूर्यसिद्धांतवाक्याभ्यां** दर्शिता । सा च यदा सूर्योदयमारभ्य प्रवृत्ता तदा उपवासेऽयाचिते एकभक्ते नक्ते दाने व्रते च षड्विधे दैवे कर्मणि एकोद्दिष्टे पार्वणे द्विविधे पित्र्ये अभ्यंगादिनिषेधे च संदेहाभावान्न निर्णयापेक्षा । खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणं । धर्माधर्मवशादेव तिथिस्त्रेधा प्रवर्तते । इति **गर्गेण** तिथेर्वृद्धिक्षयावुक्तौ तद्वशादेका तिथिर्दिनद्वयसंबद्धा भवति । दिवसस्व-

दिवसस्वरूपं । रूपमुक्तं **विष्णुधर्मोत्तरे**—लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः । द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः । विनाडिका तु षट्प्राणास्तत्षष्टिर्नाडिका स्मृता । अहोरात्रस्तु तत्षष्ट्या नित्यमेतत्प्रकीर्तितं । त्रिंशन्मुहूर्ताश्च तथा अहोरात्रेण कीर्तिताः । तत्र पंचदश प्रोक्ता राम रात्रिस्तथा दिवा । उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः । तदा तदा भवेद्वृद्धिर्दिवसस्य महीभुज । दिवसश्च यदा राम वृद्धिं समधिगच्छति । तदाश्रितमुहूर्तानां वृद्धिर्ज्ञेया तथा तथा । रात्रिश्च क्षीयते तत्र दिनं यावत्प्रवर्धते । रात्र्याश्रितमुहूर्तानां हानिर्ज्ञेया तथा

तथा । दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः । दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु । क्षीयंते तस्य हानौ तु तन्मु

मुहूर्तनामानि। हूर्तास्तथैव चेति । **मुहूर्तनामानि**—तु । रौद्रश्चैत्रश्च मैत्रश्च तथा सारभटः स्मृतः । सावित्रश्च जयंतश्च गांधर्वः कुतपः स्मृतः । रौहिणश्च विरिंचश्च विजयो नैर्ऋतस्तपाः । माहेंद्रो वारुणश्चैव भेदाः पंचदश स्मृताः । इति । **शंखेन**—पंचदशमुहूर्तात्मकदिवसस्य पंच विभागा उक्ताः मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णश्च तादृशः । सायाह्नस्त्रिमुहूर्तः स्यात्सर्वकर्मसु गर्हितः इति । **व्यासेन**—रेखाप्रभृत्यथादित्यान्मुहूर्तास्त्रय एव तु । प्रातस्तु संस्मृतः कालो भागश्चाह्नः स पंचमः । संगवस्त्रिमुहूर्तोऽथ मध्याह्नस्तु समः स्मृतः । ततस्त्रयो मुहूर्ताश्च अपराह्णोऽभिधीयते । पंचमोऽथ दिनांशो यः स सायाह्न इति स्मृतः । यद्यदेतेषु विहितं तत्तत्कुर्याद्विचक्षणः । इति **वृद्धपराशरेण** च पंच विभागा उक्ताः । पूर्वाह्णः प्रहरं सार्धं मध्याह्नः प्रहरं तथा । आतृतीयाच्चापराह्णः सायाह्नश्च ततः परः । इति **गोभिलेन**—चत्वारो विभागा उक्ताः । ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः । इति सहस्रसंवत्सरब्राह्मणेन, पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणां इति श्रुत्यंतरेण च त्रयो विभागा उक्ताः । आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः । इति स्कांदेन विभागद्वयमुक्तं । एवंच पंचदशधा पंचधा चतुर्धा त्रिधा द्विधा चेति पंचप्रकारा अह्नो विभागा उक्ताः । तथा—शंकरश्चाजपादश्च तथाहिर्बुध्न्यमैत्रकौ । आश्विनो याम्यवाह्नेयौ वैधात्रश्चांद्र एव च । आदितेयोऽथ जैवश्च वैष्णवः सौर एव च । ब्राह्मो नाभस्वतश्चैव मुहूर्ताः क्रमशो निशि । इत्येतन्नामकपंचदशमुहूर्तात्मकरात्रेः प्रदोषादयो विभागा उक्ताः । तत्र प्रातरादिदिनादिभागविशेषावच्छिन्नायां तिथौ यत्कर्म विहितं दिनद्वये तत्काले तत्तिथिसत्त्वेऽपि तिथिरूपांगानुरोधेन प्रधानावृत्तेरन्याय्यत्वेन कर्मणः सकृत्कर्तव्यत्वेनाव्यवस्थया प्राप्तौ व्यवस्थामाह **गार्ग्यः**—निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः । विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ।

तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता । निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते । इति । अयमर्थः । निषेधवाक्येन कालविशेषे कर्मविशेषानुष्ठानस्यानर्थहेतुत्वबोधनाद्यदा कदापि तत्काले तत्कर्मानुष्ठानेऽनर्थप्रसंगात्सर्वदैव तत्काले तद्वर्जनीयमिति न तत्र निर्णयापेक्षा । विधिवाक्येन कालविशेषे विधेयानुष्ठानस्याभ्युदयहेतुत्वबोधनात्सकृदनुष्ठानादेवाभ्युदयसिद्धिः । साच पूज्यतिथावनुष्ठान एव भवति नापूज्यतिथाविति । ततश्च कर्मायोग्यतिथौ कृतेऽपि कर्मणि—अकाले यत्कृतं कर्म विधिशौचविवर्जितं । अकृतं तद्विजानीयात्पुनरिज्याश्रुतेर्बलात् । इति वचनेन तस्य वैयर्थ्यबोधनात्तिथिद्वैधे कस्मिन्कर्मणि का तिथिर्योग्येति निर्णयः कर्तव्य एव । ननु कालादर्शादिग्रंथेषु निर्णयः कृत एवेति किमिदानीं तद्यत्नेनेति चेत् । कानिचिदेव वचनान्युपन्यस्य केषुचिदेव कर्मसु कृतव्यवस्थायाः वचनांतरविरोधेऽपि निर्णयत्वस्वीकारे—सर्वैकवाक्यता यत्र तत्र तत्त्वविनिर्णयः । नान्यथा हि क्वचिद्ब्रह्मन्नूनं तत्त्वविनिश्चयः । तत्त्वे विप्रतिपन्नानां वाक्यानामितरेतरं । विरोधपरिहारस्तु निर्णयस्तत्त्वदर्शनम् । इत्यादिशिवरहस्यादिवचनविरोधापत्तेः । तत्कृतव्यवस्थाया हेमाद्रिणा तत्र तत्र दूषितत्वाच्च न तैर्निर्वाहः । नन्वेवं तर्हि हेमाद्रिकृतनिर्णयेनैव निर्वाहे कृतमिदानीं निर्णयेनेति चेत् । अनेककृतानेकव्यवस्थासंवलितहेमाद्रिग्रंथसिद्धांतज्ञानस्य प्रेक्षावतामपि सहसासंभवात् । नच तथापि यद्यपि कर्मांगतया हेमाद्रिप्रभृतिग्रंथेषु कालो निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र संग्रहार्थोऽयमुद्योग इति प्रतिज्ञाय कृतेन हेमाद्रिसिद्धांतसंग्रहरूपमाधवग्रंथेनैवान्यथासिद्धिरिति शंक्यम् । हेमाद्रिसिद्धांतविरुद्धार्थस्यापि तत्रतत्र वर्णितत्वात् । नच । स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इतिवचनात्स्मृतिविरुद्धहेमाद्रिकृतनिर्णयत्यागेन तद्विरुद्धस्मृत्यनुरूपान्यथानिर्णयेऽपि तस्यैव युक्तत्वान्न दोष इति शंक्यं । वचनविरुद्धहेमाद्रिग्रंथस्य त्याज्यत्वेऽपि वचनानुगुणहेमाद्रिग्रंथविरुद्धार्थस्य वर्णितत्वात् । अन्यथा तद्ग्रंथार्थसंग्राहकस्थलांतरस्थमाधवग्रंथस्यापि त्याज्यत्वापत्तेः । नच माधवाचार्याणामपि बहुदर्शित्वाद्धेमाद्र्युदाहृतवचनविरुद्धवच-

नांतरानुरोधेन तद्विरुद्धार्थवर्णने तस्यापि ग्राह्यत्वान्न दोष इति वाच्यं। वचनांतरानुपन्यासात्। अप्रतिज्ञातेऽर्थे तात्पर्यं नास्तीति **माधवाचार्यै**रप्यन्यत्र सिद्धांततत्वादप्रतिज्ञातहेमाद्रिग्रंथदूषणे आचार्यतात्पर्यासंभवाच्च। अतएव चिकीर्षितकालनिर्णयप्रतिज्ञावाक्ये उपजीव्याकरतया हेमाद्रिग्रंथोपादानं कृतं तस्येदमेव प्रयोजनं। वेदभाष्यादौ व्यासक्तांतःकरणतया युक्तायुक्तदर्शनेऽवसराभावेन **हेमाद्रि**सिद्धांतविरुद्धार्थस्यापि वर्णनं संभाव्येत तथापि प्रासंगिके तस्मिन्न तात्पर्यं, अपि तु वचनानुगुण**हेमाद्रि**निर्णीतकालसंग्रह एवेति। अतएव रजोयुक्तभार्यायां श्राद्धतिथावेव श्राद्धं कार्यमिति कालादर्शमतं, पंचमदिने कार्यमिति हेमाद्रिमतमुपन्यस्य, अत्र यद्युक्तं तद्ग्राह्यमिति **पराशरमाधवग्रंथे**नायमर्थ उक्तप्राय एव। तस्मान्माधवग्रंथेनापि नान्यथासिद्धिः। किंच **हेमाद्रा**वपि प्रदोषव्रतनवरात्रदीपावलिहुताशन्याद्यनेकानुष्ठेयेषु विशेष्यनिर्णयस्याकृतत्वाच्च तेनापि नान्यथासिद्धिः। हेमाद्युक्तं तुच्छं हेमाद्रिर्बभ्राम इति केचन। माधवोक्तं तुच्छं माधवो बभ्राम। अत्र हेमाद्रिमतमेव सम्यक् न माधवमतं। अत्र माधवमतमेव सम्यक् न हेमाद्रिमतं इति व्युत्पत्तिविरुद्धं वचनार्थं वर्णयद्भ्यो नमः प्राचीनेभ्यः। यत्र माधवहेमाद्री युयुधाते महागजौ। तत्र मां वारणं लोकस्तृतीयमभिधास्यति। इति वाक्यानां हेमाद्यर्थाज्ञानमाधवतात्पर्याज्ञानमूलकद्वेषनिबंधनत्वाद्यथासंभवमेतद्वाक्ययुक्ताः सद्धेमाद्रिदूषणोत्प्रेक्षोपक्रमयुक्तकालतत्वविवेचनादिसर्वे नवीनग्रंथा अपि हेमाद्यर्थाज्ञानादिमूलकाः परस्परं विरुद्धाश्चेति तैः कर्मांगतिथ्यादेर्निर्णयसंभावनापि नास्तीति। उपवासाद्यंगतिथ्यादेः सम्यग्ज्ञानाभावे—ज्ञात्वा तिथिं नरः सम्यक् संवत्सरमुदीरितं। स कुर्यादुपवासं तु अन्यथा नरकं व्रजेत्। इति

कर्मांगतिथिनिर्णयः। **नारदीयपुराणे** दोषाभिधानात्कर्मांगतिथिज्ञानार्थं निर्णयः क्रियते। तत्रेतरेतरं विरुद्धवचनानि—खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणं। खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी। इति **हेमाद्रौ पितामहव्याघ्रौशनसः**। खर्वः साम्यं अल्पक्षयोऽपि। दर्पो वृद्धिः। हिंसा क्षय इति हेमाद्रिमाधवौ। खर्वः साम्यं तद्योगात्तिथिरपि खर्वः। दर्पो

वृद्धिस्तद्योगात्तिथिरपि दर्पः । हिंसा क्षयः तद्योगात्तिथिरपि हिंसेति **कालादर्शः** । अत्र खर्वादियुक्तोत्तरा कार्या हिंसायुक्त-पूर्वा कार्येति विधानात् साम्यवृद्धिक्षयाः ग्राह्यतिथिगा एव । साम्यवृद्धिक्षयाः पूर्वतिथ्यपेक्षयेति वदतां **हेमाद्रिमाधवमद-नरत्नानामप्ययमेव सिद्धांतः** । **कालादर्शस्वरसोऽप्यत्रैव** । एवंच ग्राह्यतिथ्यपेक्षयोत्तरतिथेर्वेति **कालतत्त्वविवेचनादयो** नवीनग्रंथा उपेक्ष्याः । **हेमाद्याद्यदिविरोधादुत्तरतिथिगतसा-**म्यादीनां पूर्वतिथिव्यवस्थापकत्वस्यायुक्तत्वाच्च । क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तथोत्तरा । तिथेस्तस्यास्त्रिक्षणायाः क्षय-वृद्धी त्वकारणं । त्रिक्षणायास्त्रिमुहूर्ताया इत्यर्थः । इति **शिवर-हस्यसौरपुराणयोस्त्रिमुहूर्तायाः** क्षयवृद्ध्योरनिर्णायकत्वमुक्तं । **दक्षः**—त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी । द्विमुहू-र्तापि कर्तव्या या तिथिर्वृद्धिगामिनीति । **मार्कंडेयः**—वर्धमानेंदु-पक्षस्य उदये पूज्यते तिथिः । यदा चंद्रः क्षयं याति तदा स्या-दापराह्णिकी । शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृ-ष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः । इति । **निगमः**—युग्मा-ग्नियुगभूतानां षण्मुन्योर्वसुरंध्रयोः । रुद्रेण द्वादशी युक्ता च-तुर्दश्या च पूर्णिमा । प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलं । एतद्व्यस्तं महादोषं हंति पुण्यं पुराकृतं । इति । युग्मं द्वितीया, अग्निस्तृतीया, युगं चतुर्थी, भूतं पंचमी, षट् षष्ठी, मुनिः सप्तमी, वसुः अष्टमी, रंध्रं नवमी, रुद्र एकादशी । अत्र तिथ्योर्युग्म-मित्यभिधानाद्द्वितीयादिप्रतिपदांतासु क्रमेण द्वयोर्द्वयोस्तिथ्योः परस्परं युग्मं महाफलं तत्तत्तिथिनिमित्तकतत्तत्कर्मविधिबो-धिततत्तत्फलदात् । अनया स्तुत्या युग्मगता पूर्वा तिथिरुत्तर-विद्धा ग्राह्या, उत्तरा तिथिः पूर्वविद्धा ग्राह्येति विधिरुन्नेयः । व्यस्तं विपर्यस्तं । पूर्वा तिथिस्तत्पूर्वतिथ्या, उत्तरा तदुत्तर-तिथ्या युग्मीकृतेत्यर्थः । महादोषं कर्मवैगुण्यापादकमित्यर्थः । पुराकृतं पुण्यं हंतीति निंदा नहि निंदान्यायेन पूर्वविधिस्तु-त्यर्था । अस्य पूर्ववाक्यैः सह तत्र तत्र विरोधः । **हेमाद्रौ विष्णुधर्मोत्तरे**—एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । अन्याश्च ति-थयः सर्वा उपोष्याः पूर्वसंयुताः । इति । तृतीयापौर्णमास्यौ

युग्मवाक्ये पूर्वे इत्युक्तं, अत्र परे इति विरोधः । हेमाद्रौ वृद्धवसिष्ठः—द्वितीया पंचमी वेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वापरे तिथी । इत्यस्य युग्मादिभिर्विरोधः । वेधश्च पैठीनसिना दर्शितः—पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तिथिवेधः। तथोत्तरां । त्रिभिर्मुहूर्तैर्विध्यंति सामान्योऽयं विधिः स्मृतः। इति । अयमर्थः । उदयोत्तरविद्यमानया त्रिमुहूर्तावस्या पूर्वतिथ्या उत्तरा तिथिर्विध्यते । अस्तात्पूर्वं विद्यमानया त्रिमुहूर्तावस्योत्तरतिथ्या पूर्वा तिथिर्विध्यते इति । त्रिभिर्मुहूर्तैरित्युक्तेः मुहूर्तत्रयान्न्यूनाया वेधकत्वं वेध्यत्वं वा नास्तीति । तथा दिवैव वेध्यवेधकभावो न रात्रावपीति बोध्यं । जन्माष्टमीशिवरात्र्योस्तु । अष्टमी शिवरात्रिश्च अर्धरात्राद्धो यदि । दृश्यते घटिकैका सा पूर्वविद्धा प्रकीर्तिता। इति माधवोदाहृतवचनाद्रात्रावपि । अतएवोदयास्तमययोरेव वेध इति द्वितीयाप्रकरणे माधवः । पूर्वापरवेधोऽप्युदयास्तमयकालीन एवेत्यवसीयत इति उदाहरणप्रकरणे निर्णयामृतश्च संगच्छते । तस्मात्खर्वो दर्प इत्यादिवाक्यानां परस्परविरोधस्य दुष्परिहार्यत्वात् । तत्वे विप्रतिपन्नानां वाक्यानामितरेतरं । विरोधपरिहारस्तु निर्णयस्तत्त्वदर्शनम्। इत्यादिवाक्यलक्षितो निर्णयः कर्तुमशक्य एवेति प्राप्तेऽभिधीयते—यस्मिन्काले तु यत्कर्म तत्कालव्यापिनी तिथिः । इति हेमाद्रौ स्कांदे । यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः । इति गार्ग्यः । कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । इति वृद्धयाज्ञवल्क्यः । एषामुत्तरार्धं तु—तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् । इति कर्मकालव्याप्तिशास्त्रं । तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन न स्वातंत्र्येण ते क्षमाः । इत्यनेन तिथेरंगत्वस्य कर्मणः शेषित्वस्य प्रतिपादनात्, अंगरूपतिथिधर्मक्षयादिविषयखर्वादिवाक्येभ्यः प्रधानविध्याकांक्षिततिथिविषयकर्मकालव्याप्तिवाक्यस्य प्राबल्यादेतदनुरोधेनैव खर्वादिवाक्यानां तस्मिंस्तस्मिन्विषये यथासंभवं प्रवृत्तिरिति तत्र तत्र व्यक्तीभविष्यति । आपाततः प्रतीयमानः परस्परविरोधस्त्वकिंचित्करः । अतएव व्यासनिगमः—द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना। इति नियमादिष्वित्या-

दिशब्देन पितृकर्मव्यतिरिक्तव्रतोपवासादिसकलकर्मणो ग्रहणं। एकोद्दिष्टादीत्यादिशब्देन विवाहादिमङ्गलाङ्गभूतवृद्धिश्राद्धव्यतिरिक्तपार्वणश्राद्धादेः, वृद्ध्यादावित्यतद्गुणसंज्ञानबहुव्रीहिणा वृद्धिः वृद्धिश्राद्धमादिः प्रकृतिर्यस्येत्यर्थात्, देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते। तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः। इति विहितदैविकश्राद्धं ग्राह्यं। मुख्यवृद्धिश्राद्धस्य तिथिनिमित्तत्वाभावेन तत्रोपयोगाभावादिति। यत्तु तिथितत्त्वे एकोद्दिष्टादिनिमित्तभूततिथेर्वृद्धिक्षयसाम्येषु तत्प्रयुक्ते संशये आपराह्णिकेतरपितृकृत्ये चंद्रवृद्धिह्रासोपलक्षितशुक्लकृष्णपक्षचोदना नियामिका। आपराह्णिके तु तत्र ययास्तमिति चोदनेति खर्पदर्पवाक्यमाचार्यचूडामणिना दर्शश्राद्धविषयं व्याख्यातमित्याद्युक्तं तदेकोद्दिष्टादीत्यस्य कुसृष्ट्या व्याख्यानस्य, खर्वादिवाक्यस्य दर्शमात्रविषयतयातिसंकोचेन व्याख्यानस्यायुक्तत्वादुपेक्ष्यं। शुक्लपक्षे तिथिरिति मार्कंडेयवचनं तु एकैव तिथिरेकेन वचनेन पूर्वा ग्राह्येत्युच्यते द्वितीयवचनेन परयुता ग्राह्येति विरोधे व्यवस्थापकं। वर्धमानेंदुपक्षस्य उदये पूज्यते तिथिः। यदा चंद्रः क्षयं याति तदा स्यादापराह्णिकी। इति विष्णुधर्मोत्तरादिवचनानि मार्कंडेयसमानार्थानीति। सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः। वर्धमानस्य पक्षस्य हानौ त्वस्तमयं प्रति। वर्धमानस्य पक्षस्य उदये पूज्यते तिथिः। यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी। इति बौधायनवृद्धवसिष्ठवचने अपि पक्षनिर्वाहकश्चंद्रः क्षयं यातीत्यर्थान्मार्कंडेयसमानार्थे। यत्तु यदा पक्षो वर्धते षोडशदिनात्मको भवति, क्षयं याति चतुर्दशदिनात्मको भवति तदा तु पूर्वेति कालदर्शकृतं व्याख्यानं तत् उभयथावाक्यस्योपपत्तौ वचनांतरसंवादिन्यर्थे तात्पर्यकल्पनाया युक्तत्वादन्यथा मूलश्रुत्यंतरकल्पनापत्तेरयुक्तमिति हेमाद्रिणा दूषितं। त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी। द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी। इति दक्षवचने पूर्वार्धेऽप्यपिशब्दान्वयात् न तस्य प्रतिषेधे तात्पर्यं किंतूत्तरार्धगतानुकल्पविधावेव। क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तथोत्तरा। तिथेस्तस्यास्त्रिक्षणायाः क्षयवृद्धी त्वकारणे। इति शिवरहस्यसौरपुराणयोः। स्कांदे तूत्तरार्धमेवं पठ्यते। तस्यास्तु त्रिमुहूर्ताया ह्रास-

वृद्धौ त्वकारणम् । इत्येतदेकवाक्यत्वात् । अनयैव दिशा अन्येषामप्येवंजातीयकवचनानां विरोधः परिहर्तव्यः । ननु तिथिविशेषविषयकयुग्मादिवाक्येभ्यः तिथिसामान्यविषयक-यस्मिन्काले तु यत्कर्म तत्कालव्यापिनी तिथिः इत्यस्य प्राबल्यसिद्धावेवेयं व्यवस्था युज्यते तत्रैव मानं न पश्यामः । नच प्रातिस्विकप्रतिपदाद्यवस्थितपूर्वाह्णादिकालस्य कर्मणामावश्यकत्वाद्युग्मानादरेण कर्मकालव्यापिनी तिथिर्ग्राह्येति हेमाद्रिसिद्धांतः, कर्मकालव्याप्तौ सर्वस्मृतीनामत्यंतनिर्बंधदर्शनात्कर्मकालव्याप्तिशास्त्रमितरेभ्यः प्रबलमिति निश्चीयते । तदनुसारेण द्वितीयाद्यास्तिथय उपवासादौ दैवे, एकोद्दिष्टादौ पित्र्ये च कर्मकालव्याप्तियुक्ताः स्वीकर्तव्या इति माधवसिद्धांतश्च मानमिति युक्तं । बाधे दृढेऽन्यदपि बाध्यतामिति न्यायेन तत्रापि पर्यनुयोगस्य दुर्वारत्वात् । अतएव कालतत्त्वविवेचनादिनवीनग्रन्थेषु गौरीतृतीयादौ कर्मकालव्याप्तिशास्त्रस्यापि बलवता वचनेनापवादो वक्ष्यत इति प्रतिज्ञायाग्रे तत्रतत्र कर्मकालव्याप्तिशास्त्रस्य बाध इत्युद्घोषः संगच्छत इति चेन्न । यत्तच्छब्दयोर्विशेषरूपेणैवोपस्थापकत्वमिति सिद्धांतात् । यस्मिन्काले—अत्रत्ययच्छब्देन दिनार्धानंतरकालप्रदोषादिकालानां, यत्कर्म अत्रत्ययच्छब्देन एकभक्तनक्तादिकर्मणां, तथा कर्माणि अत्रत्यतच्छब्देन प्रतिपदादितिथीनां च विशेषरूपेणैवोपस्थापनात् । तिथ्यपेक्षया कर्मणः प्राधान्यात्, तिथिविशेषविषययुग्मादिशास्त्रात्कर्मविशेषविषयकयस्मिन्काले तु यत्कर्मेति वाक्यप्राबल्यस्य युक्ततरत्वादेतदभिप्रायकहेमाद्रिमाधवग्रंथयोर्युक्तत्वात् । नवीनग्रंथास्तु हेमाद्रिमाधवसिद्धांताज्ञाननिबंधना इति बोध्यं । नच संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि । उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः । इत्यादीनां यस्मिन्काले तु यत्कर्मेत्येतद्बाधकत्वमावश्यकमिति शंक्यं । विधिः पूज्यतिथौ तत्रेत्येतदेकवाक्यतया वचनांतरप्रतिपादितपूज्यताया एव तिथेः साकल्यवचनापादितमपि सत्वमादाय प्रवृत्तिसंभवे तत्संकोचे प्रमाणाभावात् । संपूर्णैकादशीत्यादीनां तिथिपूज्यत्वबोधकत्वेनोपपत्तौ वचनबाधकत्वकल्पनस्यात्यंतायुक्तत्वात् । अतएव पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते । इति वचने यदि सा

तिथिर्दिनांतेऽस्ति तदा सा कुतुपापराह्णयोरस्तीति मत्वा तदुपलक्षित एव दिवसे कुतुपकालिकं श्राद्धं कर्तव्यमिति **हेमाद्रिः**। यदापराह्णमारभ्य प्रवृत्ता संगवांता प्रतिपद्भवति तदा पूर्वेद्युर्गौणकाले सत्त्वमादायैकभक्तेऽनुष्ठेये तस्य मध्याह्नेऽवश्यानुष्ठेयत्वात्तत्र स्वाभाविकप्रतिपदसत्त्वेऽपि साकल्यवचनापादितप्रतिपद्व्याप्तिः स्वीकृता भवतीति **माधवश्च** संगच्छते । अतएव साकल्यप्रतिपादकवचनानि सार्थकानि । तथाच **हेमाद्रौ स्कांदे**—यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्ता च या भवेत् । **शिवरहस्यसौरपुराणयोः**—यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तिका । धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः । **वृद्धवसिष्ठः**—यस्यां तिथावस्तमियात्सूर्यस्तु त्रिमुहूर्तके । यागदानजपादिभ्यस्तामेवोपक्रमेत्तिथिं । **विष्णुधर्मोत्तरसौरपुराणयोः**—उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः । भानावुदिते सत्युपरितनं मुहूर्तद्वयं दैवं देवदेवताकं । अस्तमितेत्यत्र वर्तमाने क्तः । अह्न इत्युपादानात् । तथाचास्तं गच्छति सति अस्तात्प्राचीनं मुहूर्तत्रयं पितृदेवताकं । अतस्तत्कालव्यापिनी या तिथिर्भवति सा क्रमाद्धव्यकव्ययोर्ग्राह्येत्यर्थः । एतैर्वचनैः सायंतन्यास्तिथेरस्तात्प्राक् त्रिमुहूर्तसत्वमेव साकल्यप्रयोजकं नतु तन्न्यूनसत्वमिति प्रतिपाद्यते । तथा औदयिकतिथेः साकल्ये मुहूर्तत्रयमपेक्षितमिति वचनांतरं नास्ति । अनेन तु मुहूर्तद्वयसत्वमेव साकल्यप्रयोजकमुच्यते । तथापि द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी । इत्यत्रापिशब्देन द्विमुहूर्तसत्वस्यानुकल्पत्वं सूच्यते । अत्र सायंतनतिथेः संपूर्णत्वाभिधानं पूर्वविद्धोपादेयतिथिविषयं । औदयिक्याः संपूर्णत्वाभिधानं च परविद्धोपादेयतिथिविषयं ज्ञेयमिति **हेमाद्रिः** । यानि तु **हेमाद्रौ देवलः**—यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु । यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।

दानाध्ययनकर्मसु । पाद्मे-व्रतोपवासिनियमो घटिकै
भवेत् । उदये सा तिथिस्तत्र विपरीता तु पैतृके ।
मोंत्तरे—व्रतोपवासस्नानादौ घटिकैका यदा भवेत
सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी । इत्यादीनि घटिक
अपि तिथेः साकल्यप्रतिपादकानि तानि वैश्वानराधिक
येनावयुत्यानुवादरूपतया द्विमुहूर्तत्रिमुहूर्तव्याप्तिप्रशंसा
अन्यथा उदाहृतस्कांदादिवाक्यविरोधापत्तेः । आदि
लायां या स्तोकापि तिथिर्भवेत् । पूर्णा सा त्ववगंतव्य
नोदयं विना । इत्यादि बौधायनादिवचनान्येकादशीवि

साकल्यापवादः । **साकल्यापवादो हेमाद्रौ स्कांदे**—
चोदधिस्नाने दंतधावनमैथुने । जाते च निधने चैव
व्यापिनी तिथिः । **नारदीये वसिष्ठः**—पारणे म
तिथिस्तात्कालिकी स्मृता । पित्र्येऽस्तमयवेलायां स्पृ
निगद्यते । अत्र तात्कालिक्येव तिथिर्न साकल्यवचन
त्यर्थः । मन्वादौ च युगादौ च ग्रहणे चंद्रसूर्ययोः ।
च वैधृत्यां तत्कालव्यापिनी क्रिया । मन्वादौ या स्नान
द्धादिका क्रिया सा मन्वादिकालव्यापिनी ग्राह्या न
इत्यर्थः । **हेमाद्रौ स्कांदे**—नक्तव्रते च संप्राप्ते तत्
पिनी तिथिः । इति । तस्य नक्तव्रतस्य यः कालः प्रदो
त्कालव्यापिनी तिथिर्ग्राह्येत्यर्थः । यदा पूर्वदिने कर्मस
लसंबंधिनी द्वितीयदिने कर्मोपक्रमकालसंबंधिनी
ग्राह्या । तदाह **हेमाद्रौ बौधायनः**—यो यस्य विहित
कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रम
इति । यदापि स्वपूर्वतिथ्या युग्मीभूतापि पूर्वविद्धा
तीयास्तमयसंबंधिनी भवति, तदोत्तरैव । त्रिसंध्यव्या
सैव पूज्या सदा तिथिः इति वचनात् । या तु पूर्वा
मुहूर्तत्रयान्न्यूना द्वितीयास्तात्पूर्वमेव समाप्ता साप्
अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा । नक्तादिव्र
रात्रियोगो विशिष्यते । इति **जाबालिवृद्धगौतमव**
दिवारात्रिसाध्यं व्रतमुभययोगिन्यामेव कार्यं । तदु
**याज्ञवल्क्यप्रोक्तपद्मपुराणयोः**—दिवारात्रौ व्रतं य
मेकतिथौ गतं । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती ।

ासां तिथीनां वारनक्षत्रयोगेन पुण्यत्वं तत्र युग्मादरो नास्ति ।
दाह गोभिलः—या तिथिर्ऋक्षसंयुक्ता या च योगेन नारद ।
ुहूर्तद्वयमात्रापि सा सर्वापि प्रशस्यते । सर्वापि दुष्टयुग्मस्था-
ेत्यर्थः । इति तिथिसामान्यनिर्णयः ।

अथ एकभक्ते तिथिर्निर्णीयते । तत्र एकभक्तस्वरूपं
त्कालश्चोक्तौ हेमाद्रौ स्कांदे—दिनार्धसमयेऽतीते भुज्यते
ंयमेन यत् । एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि । देवलः—
िनार्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं
ूनं ग्रासत्रयेण तु । इति । अत्र दिनार्धस्योपरि सार्धमुहूर्तपरि-
ितः कालः । पंचधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य
ुख्यः कालः दिनार्धेऽतीते समनंतरभावित्वात् । ततोऽस्तम-
ावधिकः गौणः दिवैव हीत्यभ्यनुज्ञानात् । उदये तूपवासस्य
क्तस्यास्तमये तिथिः । मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते
ाथिः । इति बौधायनपद्मपुराणवचनयोर्मध्याह्नशब्दो मध्या-
ुत्तरार्धपरः । अत्र निर्णेतव्या तिथिः षोढा भिद्यते । पूर्वदिने
त्र मध्याह्नोत्तरार्धव्यापिनी, द्वितीयदिने एव तद्व्यापिनी,
भयत्र तद्व्यापिनी, उभयत्रापि तदस्पर्शिनी, उभयत्र साम्ये-
कदेशव्यापिनी, वैषम्येणैकदेशव्यापिनी चेति । तत्र प्रथम-
ृतीययोर्यैव मध्याह्नव्यापिनी सैव ग्राह्या । तृतीये पूर्वैव ।
णकालव्याप्तेराधिक्यात् । चतुर्थेऽपि पूर्वैव ग्राह्या गौणकाले
त्वात् । अतएव पंचमेऽपि पूर्वैव । षष्ठे यदा पूर्वाधिकं कर्म-
ालैकदेशं व्याप्नोति तदाधिक्यात् गौणकाले सत्वाच्च पूर्वैव ।
दा तूत्तराधिकं मुख्यकालैकदेशं व्याप्नोति तदा पूर्वत्र गौण-
ाले सत्वेऽप्युत्तरैव । अधिककालव्याप्तेः, यो यस्य विहितः
ालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण
। इति वचनाच्च । तदहोरात्रावयवांतराधिकरणभोजनाभावे
ते अष्टममुहूर्तोत्तरार्धादिसार्धमुहूर्तात्मकावयवाधिकरणं भो-
नमेकभक्तं । तत्र ज्योतिःशास्त्रप्रसिद्ध्या ग्राह्यतिथ्यसत्वेऽपि
थ्यादिषु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि । तावान्ग्राह्यस्तु
ैधुरदृष्टोऽपि स्वकर्मणि । इति वचनेन पूर्वतिथेरपि तावद्ध्रासक-

काले कार्यमिति मतं दूषयित्वा हेमाद्रिणा माधवेन च ज्योतिःशास्त्रप्रसिद्धतिथ्यभावेऽपि मुख्यकाले एव कार्यमिति सिद्धांतितत्वाच्च । अयं कालः—प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः—इत्यादि ब्रह्मपुराणादिभिर्विहितस्वतंत्रैकभक्तस्य । यत्तु मध्याह्ने पूजयेन्नृपेत्यादिभिः सिद्धिविनायकपूजाद्युत्तरं विहितं तदन्यांगं । तच्च प्रधानेन पूजादिना मुख्यकालावरोधे अंगगुणविरोधे च तादर्थ्यादिति न्यायेन गौणकालेऽपि कर्तव्यं । यत्तु एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् । इत्युपवासप्रतिनिधिरूपमेकभक्तं तदुपवासदिने मध्याह्ने तत्तिथिसत्वेऽसत्वेऽपि तत्रैव कार्यं । तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तथा । इति माधवे सुमंतुवचनात् । नागो द्वादशनाडीभिर्दिक्पंचदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् । इति । इदमपि वचनमुत्तरदिने मुख्यकाले ग्राह्यतिथिसत्वे एव प्रवर्तते नान्यथा । यस्मिन्काले तु यत्कर्मेति विरोधादिति हेमाद्रिः । यद्यपि पूर्वाह्णे देवा अशनमभिहरंति मध्यंदिने मनुष्या अपराह्णे पितर इति श्रुतेः त्रिधाविभक्तस्य द्वितीयभागे मध्याह्नशब्दो वर्तते ततश्च दिनार्धादुपरितनो मध्याह्नो मुख्यः कालः, तदूर्ध्वमस्तमानावधिर्गौणः । दिनार्धसमयेऽतीते इति वचनात् दिवैवेत्यभिधानाच्च । मध्याह्नव्यापित्वं च कर्मणो यस्य यः काल इत्यादिपर्यालोचनयैकदेशलक्षणया दिनार्धादुपरितनमध्याह्नव्यापित्वं विवक्षितमिति हेमाद्रिग्रंथात्सार्धमुहूर्तद्वयपरिमितोऽपि मुख्यः काल इति प्रतीयते । तथाप्ययं दिनार्धसमयेऽतीते इति वचनविषये भोजने एव । एकभक्ते सदा ग्राह्या मध्याह्नव्यापिनी तिथिः । इति तिथिनिर्णायकवाक्येऽपि तत्स्वीकारे—यदा अष्टादशघटिकानंतरं प्रवृत्ता तिथिर्द्वितीयदिने षोडशघटिका तदाधिककर्मकालव्याप्त्या पूर्वस्या ग्रहणे मुहूर्तत्रयात्मको मध्याह्न इति व्यासपराशरवाक्ययोर्बाधापत्तेः । न चेष्टापत्तिः । उभयथा वाक्यस्योपपत्तौ वचनांतरसंवादिन्यर्थे एव तात्पर्यकल्पनाया युक्तत्वादिति वचनविरोधपरिहारप्रकरणगतहेमाद्रिग्रंथोऽसंगतः स्यात् । एवं एकोद्दिष्टं तु मध्याह्ने इति वाक्येऽपि पंचमुहूर्तात्मकस्य ग्रहणे तावत्परिमितवृद्ध्यसंभवेन एकोद्दिष्टादिकर्मकालव्यापिन्यास्तिथेः दिनद्वये संभवेऽसंभवे वा ह्रासवृद्ध्यादि-

वाक्यं नियामकमिति ग्रंथोऽप्यसंगतः स्यात् । मध्याह्नव्यापिनीति वाक्ये त्रिमुहूर्तात्मकमध्याह्नग्रहणे । तदुत्तरतिथिग्रहणे तु सर्ववाक्यानां संवाद एव भवति । तस्माद्ग्रंथद्वयप्रामाण्यसंरक्षणानुरोधादत्रत्यग्रंथे मध्याह्नव्यापित्वं चेत्यत्र मध्याह्नो मुहूर्तत्रयात्मक एवाभिप्रेतो हेमाद्रेः । तस्मात् कर्मणो यस्य यः काल इत्यादि तिथिनिर्णायकवाक्ये दिनार्धादुपरितनसार्धमुहूर्तात्मकमध्याह्ने एव हेमाद्रेस्तात्पर्यमिति पूर्वोक्त एकभक्ततिथिनिर्णयो हेमाद्रेरपि संमत एवेति सिद्धम् । अतएव मध्याह्नात्यदले त्रिभागदिवसे स्यादेकभक्तमिति **दीपिका** चिंत्या । हेमाद्रितात्पर्यार्थाज्ञाननिबंधनत्वात् । एतेन पंचमुहूर्तात्मक एव मध्याह्नो ग्राह्य इति हेमाद्रिः । तदयुक्तं । सर्वेष्वेव मध्याह्नसंज्ञशब्दनेषु अनेन न्यायेन त्रेधाविभक्तस्यैव ग्रहणप्रसंगे विधांतरदिनभागतत्संज्ञाकरणस्यानर्थक्यप्रसंगादिति **कालतत्त्वविवेचनं** वचनविरोधपरिहारप्रकरणगतहेमाद्रिग्रंथार्थाज्ञाननिबंधनं । यदपि दिनद्वये मुख्यकालव्याप्तौ युग्मवाक्यान्निर्णयाभिधानं हेमाद्रेरयुक्तमित्युक्तं तदेवायुक्तं । युग्मादिवाक्यबोधितपूज्यत्वं तिथिमादायैव, विधिः पूज्यतिथौ तत्रेत्येकवाक्यतयैव कर्मणो यस्येत्यस्य प्रवृत्तेर्युक्ततरत्वात् । यदपि केन विशेषेणात्रैव युग्मवाक्यान्निर्णयकरणं । अस्पर्शैकदेशसमव्याप्त्योस्तु गौणकालव्याप्त्या तदिति न जानीम इतीदमज्ञानं तु एकदेशव्याप्त्या युग्मवाक्यमेव प्रवर्तते न खर्ववाक्यमिति **हेमाद्रिग्रंथस्य** मुख्यासंभवे गौणकालस्य ग्रहणमिति सिद्धांतस्य चाज्ञाननिबंधनमिति बोध्यम् । मध्याह्नश्चात्र त्रेधा पंचधा वा विभक्तस्याह्नो मध्यमभाग इति **मदनरत्नेऽ**प्याद्यः पक्षस्तथैव । अतएव पंचधाविभागे मध्याह्नस्यापरभागः सार्धमुहूर्तपरिमित एकभक्तस्य मुख्यः काल इति **माधवः निर्णयामृतश्च** संगच्छते । इत्येकभक्ततिथिनिर्णयः ।

**अथ नक्तव्रते तिथिर्निर्णीयते ।** नक्तस्वरूपं तु प्रदोषात्प्राक् तद्दिनाधिकरणकभोजनाभावे सति तदहोरात्रावयवप्रदोषाधिकरणकं भोजनं । तत्र प्रदोषव्यापिनी तिथिर्ग्राह्या । तदाह **वत्सः**—प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा । एकादशीं विना सर्वाः शुक्ले कृष्णे समाः स्मृताः । इति । एकादशी तु नक्ते

१ 'तद्गौणत्वावयवप्रदोष' इति पाठः.

न प्रदोषव्यापिनी ग्राह्या किंतूपवासयोग्यैवेत्यर्थः । अतएव तत्रोपवासासामर्थ्येन नक्तविधानात् उपवासदिने एव तत्कार्यमित्यर्थ इति **हेमाद्रिः** । एकादश्यां तु यन्नक्तं तत्रोदयव्यापिनी ग्राह्या । तदुक्तं **स्कांदे**—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः । इति **माधवश्च** संगच्छते । प्रदोषपरिमाणमुक्तं **व्यासेन**—त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तं गते सति । नक्तं तु तत्र कुर्वीत इति शास्त्रस्य[1] निश्चयः । इति । प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमिष्यते । इति **हेमाद्रिमाधवयो**र्वचनांतरं तत्प्राशस्त्यपरं । अत्र । उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते । सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः । इति घटिकात्रयस्य संध्याकालत्वात् । तत्र । चत्वारीमानि कर्माणि[2] संध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् । इति भोजननिषेधात्तदुत्तरं भोजनं कार्यमिति कैश्चिदुक्तं तत्—नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितं । तत्परा रजनी ज्ञेया तत्र धर्मान्विवर्जयेत् । इति वचनान्नक्षत्रदर्शनात्प्राचीनस्यैव मुख्यसंध्याकालत्वेन तत्रैव भोजननिषेधादयुक्तम् । अस्तु वा घटिकात्रयं संध्याशब्दार्थस्तथापि न तत्र निषेधस्तस्य रागप्राप्तभोजनविषयत्वादिति **हेमाद्रिः** । युक्ततरं चैतत् । अन्यथा आद्यघटिकात्रयप्राशस्त्यबोधकवचनवैयर्थ्यापत्तेः । घटिकात्रयसंध्याकालस्तु संध्यागर्जितनिमित्तकानध्याये द्रष्टव्यः । अतएव रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः घटिकाषट्कं मध्यम इति **माधवः** संगच्छते । अतः त्रिदंडोत्तरं कार्यमिति निर्णयसिंध्वादय उपेक्ष्याः । तस्मादस्तानंतरं[3] मुहूर्तत्रयपर्यंतो नक्तस्य मुख्यः कालः । अतस्तद्व्यापिनी तिथिर्ग्राह्या । तत्र या पूर्वदिने एव परदिने एव वा तद्व्यापिनी सैव ग्राह्या प्रदोषव्यापिनीति वचनात् । उभयत्र तद्व्याप्तावुत्तरैव । सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः । तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः । इति **जाबालिवचनात्** । उभयत्र दिवारात्रावित्यर्थः । अतएव पूर्वप्रदोषेऽधिकव्याप्तौ उत्तरप्रदोषे न्यूनव्याप्तावप्युत्तरैव । दिवारात्रौ व्रतं यच्चेति वचनाच्च उभयप्रदोषास्पर्शिन्यप्युत्तरैव । अतथात्वे परत्र

---

१ 'शास्त्रविनिश्चयः'. २ 'कार्याणि'. ३ 'तस्मान्नक्षत्रदर्शनानंतरं'.

स्यादस्तादर्वाग्यतो हि सा इति जाबालिवचनात्। उभयप्रदोषाव्याप्तावपि यतोऽस्तात्पूर्वं विद्यमानत्वात्तस्या अपि गौणकालत्वात्। अतएव **कौर्मे**—प्रदोषव्यापिनी यत्र त्रिमुहूर्ता यदा दिवा। तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत्। इति। यद्यप्यत्र सायंकालव्याप्तिः प्रयोजिकेति प्रतीयते तथाप्यनुकल्पः सेति अतथात्वे इति जाबालिवचनाद्गम्यते। तत्र प्रदोषव्याप्त्यभावे एव सायंकालव्याप्तेर्हेतुत्वेनोपन्यासात्। मुहूर्तोनं दिनं नक्तं प्रवदंति मनीषिणः। नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप। इति **भविष्यत्पुराणा**त्तस्य गौणत्वनिश्चयात्। तत्रापि साकल्यवचनापादिततिथेर्मुख्यप्रदोषेऽपि सत्वादेकभक्तवत्तत्रैव नक्तं कार्यमिति प्रसक्तौ–प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते। आत्मनो द्विगुणच्छायामतिक्रामति भास्करे। तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनं। एवं ज्ञात्वा ततो विद्वान्सायाह्ने तु भुजिक्रियां। कुर्यान्नक्तव्रती नक्तं फलं भवति निश्चितम्। इति **स्कांदेन** तिथिमध्ये एव दिवानक्तविधानात् अभ्यंगे चोदधिस्नान इति प्रकरणे–नक्तव्रते च संप्राप्ते तत्कालव्यापिनी तिथिरिति **हेमाद्युदाहृतस्कांदेन** ज्योतिःशास्त्रप्रसिद्धतिथेरेव पूज्यत्वाभिधानात् कर्मकालव्याप्तिशास्त्रस्य तत्रैव प्रवृत्तेः। यत्यादिभिस्तु मुख्यप्रदोषे तिथिसत्वेऽपि गौणप्रदोषे एव कार्यं। तदाह **माधवे देवलः**–नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतं। यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते। इति। नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः। यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरं। सदिवाकरं तु तत्प्रोक्तमंतिमे घटिकाद्वये। निशानक्तं तु विज्ञेयं यामार्धे प्रथमे सदा। इति। यदपि सप्तमीरविवारादिनिमित्तकं तदपि दिने सायंकाले एव कार्यं। तदाह **माधवे सुमंतुः**–त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः। तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम्। इति। **भविष्यत्पुराणे**–ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वंति मानवाः। दिनांते तेऽपि भुंजीरन्निषेधाद्रात्रिभोजने। इति। **मदनरत्ने कालादर्शे च कौर्मे**–नरस्य द्विगुणां छायामतिक्रामेद्यदा रविः। तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम्। इति। सूर्यप्रीत्युद्देशेन क्रियमाणरविवारादिनिमित्तकनक्तस्यैव रात्रौ निषेधो नत्वन्यतिथ्यादिनिमित्तकस्य रविवारादौ

प्राप्तस्य । एकादश्युपवासस्येव वैधत्वेन निषेधासंभवात्
एव प्रदोषव्याप्त्यभाव इव रविवारादावपि रात्रिभोजनी
त्तत्रापि दिवैव कार्यमिति केषांचिदुक्तिर्निषेधस्य रागप्रा
नविषयत्वात् विधिप्राप्ते निषेधासंभवादिति हेमाद्रिण
षिता । कालादर्शनिर्णयामृतमदनरत्नेष्वप्येवमेव
वमपि भानुवारसंक्रांत्यादिना गृहस्थस्यापि यदा रात्रिभो
षेधस्तदापि दिवैव कुर्यादिति माधवविरोध इति चेत्
द्रिनिर्णीतकालसंग्रहस्यैव प्रतिज्ञातत्वेन अप्रतिज्ञाते वैध
विषयकोऽपि रविवारादौ रात्रिभोजननिषेध इत्यभ्युच्चयव
स्वग्रंथप्रतिपाद्यरात्रिनक्तनिषेधे माधवतात्पर्याभावेन तद्वि
दोषत्वात् । यत्तु । अयं च नक्तव्रतनिर्णयो न्यायाविशेषात्
दशीप्रदोषव्रतेऽपि योजयितव्य इति कालतत्त्वविवेचनं
तायुक्तमिति प्रदोषव्रतनिर्णये व्यक्तीभविष्यति । यदा
तिथिप्रयुक्तमेकभक्तं उत्तरतिथिप्रयुक्तं नक्तं चैकस्मिन्दिने
तदा पूर्वप्राप्तैकभक्तस्यानुपसंजातविरोधित्वान्मुख्यकल्पेन
नक्तस्य त्वनुकल्पेन । तत्रोत्तरतिथेः परदिने सायाह्नकाले
गौणकालसत्त्वात् स्वयमेवोत्तरदिने तत्प्रयुक्तं नक्तं कर्त
कालस्यात्यंतबाधाभावे कर्त्रनुरोधस्यापि न्याय्यत्वात् ।
दिने गौणकालेऽप्यसत्त्वे तस्मिन्नेव दिने भार्यादिकर्त्रंतरे
णीयं । अनुपादेयकालानुरोधेन उपादेयकर्तृप्रतिनिध्युपाद

नक्तभोजिनियमाः । चितत्वादिति । नक्तभोजिनो नि

नाह व्यासः—हविष्यभोजनं स्नानं सत्यमाहारलाघवं
कार्यमधःशय्यां नक्तभोजी षडाचरेत् । इति । स्नानं व
मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् । तस्यां नक्तं
रात्रौ विष्णुं च पूजयेत् । होमं च तत्र कुर्वीतेति वाराहे
तनक्तांगपूजाहोमौ पूर्वकाले कार्यौ । आहारलाघवं एक
ष्टत्वात् ग्रासत्रयन्यूनता । अग्निकार्यं होमः । सच लौकि
वाज्येन व्याहृतिभिः सकृत् । इति नक्ते तिथिनिर्णयः ।

अथायाचिततिथिर्निर्णीयते । तत्स्वरूपं तु—अया
मितभुक् परां सिद्धिमवाप्नुयात् । इत्यत्र उपपदसमासरूपय
शिशब्देन नञ्समासे विशिष्टे विधिनिषेधौ विशेषणमुपसं
सति विशेष्ये बाधे इति नियमाद्याचिताशननिषेधप्रती

याचितमयाचितमिति नञ्समासं कृत्वोपपदसमासेऽपि संत्येकपदान्यप्यवधारणानि यथा अब्भक्षो वायुभक्षो वेति महाभाष्यकारोक्तेः। तत्र अर्थापत्तिप्रमितभोजने उदकाद्यतिरिक्तसाधनत्वाभावे तात्पर्यवत्प्राङ्मुखोऽन्नं भुंजीतेत्यस्य दिगंतराभिमुखत्वव्यावृत्ताविव च प्रकृते स्वयत्नसाध्यान्नाशनस्य याच्ञांविनान्यदत्तान्नाशनस्य च रागतः प्राप्तौ अयाचितमेवाश्नातीत्यनेन स्वयत्नसाध्यान्नानशनरूपविशिष्टाभावबोधनात्। तस्य च याच्ञां विना लब्धस्याशनेऽनशनेऽपि सत्वात्। तथाच संकल्पोत्तरं याच्ञां विना लब्धस्य दिने रात्रौ वा भोजनयोग्यकाले सकृद्भोजनं अयाचितालाभे उपवास एतदन्यतरदयाचितव्रतस्वरूपं। तच्च अथापरं त्र्यहं न कंचन याचेतेति प्राजापत्यकृच्छ्रप्रकरणे गौतमोक्तप्रतिषेधपक्षे। त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितं। त्र्यहं परं तु नाश्नीयात्प्राजापत्यं चरन्द्विजः। इति बृहस्पत्युक्तपर्युदासपक्षेऽपि समानमेवेति पर्युदासोऽपि संगत एव। अतएव संकल्पोऽपि अस्मिन्नहोरात्रे याचितमन्नं न भोक्ष्ये इत्येव कर्तव्यः। अथवा याचितादन्यदयाचितमित्यप्रयत्नलभ्यस्य परदत्तस्य भोजनं विवक्ष्यत इति माधवोऽपि संगच्छते। एतेन केचित्तु त्र्यहमद्यादयाचितमिति दृष्ट्वा याचनं विनान्येन दत्तस्य भोजनमयाचितमित्याहुः। अत्र कदाचिदयाचितान्नालाभेनोपवासे व्रतभंगापत्तिरिति मदनरत्नोद्भावितं माधवदूषणं निरस्तं। माधवतात्पर्यार्थाज्ञाननिबंधनत्वात्। अयाचिते ग्राससंख्या तु—

ग्राससंख्या।

प्रातस्तु द्वादश ग्रासा नक्तं पंचदशैव तु। अयाचिते तु द्वौ चाष्टौ प्राजापत्यो विधिः स्मृतः। इति। चतुर्विंशतिमते तु दश ग्रासा उक्ताः। सायं तु द्वादश ग्रासाः प्रातः पंचदश स्मृताः। चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः। इति पराशरेण। सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः। चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः इत्यापस्तंबेन चतुर्विंशतिग्रासा उक्ताः शक्ताशक्ताऽधिकारिभेदेन बोध्याः। अस्यायाचितस्याहोरात्रसाध्यत्वाद्दिवा रात्रौ व्रतं यच्चेति वचनादहोरात्रव्यापिनी तिथिर्मुख्या। यदा पूर्वदिने रात्रिमात्रव्यापिनी उत्तरदिने दिनमात्रव्यापिनी तदा—अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा। नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते। इति जाबालिवचनादु-

त्तरा। यदा तु पूर्वमध्याह्नादौ प्रवृत्ता द्वितीयमध्याह्नादौ
प्रतिपदादिः तदा अयाचितस्य नियमरूपत्वात्–द्वितीय
युग्मानां पूज्यता नियमादिषु। इति वचनाद्युग्मादिवाक्यबो
तिथिः पूज्या । पूज्यतिथावेव कर्मणो यस्य यः काल
प्रवृत्तेः युग्मा दिनगतैव ग्राह्या । अतएव प्रतिपद्याचिते
विद्धा ग्राह्या । अयाचितस्य नियमरूपत्वात् द्वितीयादिक
नामिति वचनादिति **माधवः** । इत्ययाचिततिथिनिर्णयः

**अथोपवासे तिथिर्निर्णीयते** । उपवासश्च सर्व
पूक्तो **माधवे नारदीये**–शुक्लान्वा यदि वा कृष्णान्प्रति
भृतींस्तिथीन् । उपोष्यैव वलिं दत्वा विधिना त्वपरेऽह
ब्राह्मणान्भोजयित्वा तु सर्वपापैः प्रमुच्यते । इति उपवास
रात्रसाध्यत्वात्खंडा तिथिः का कीदृशी ग्राह्येत्याकांक्षायां
उक्तो **हेमाद्रौ विष्णुधर्मोत्तरे**–एकादश्यष्टमी षष्ठी
मासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः
न्विताः । अन्याश्च तिथयः सर्वा उपोष्याः पूर्वसंयुताः ।
विशेषस्तु तत्तत्तिथिनिर्णये वक्ष्यते । या उदयगा तिथिर्मध्य
व्याप्नोति सा खंडा । तस्यां व्रतारंभं समापनं च न कुर्यात्
दाह **निर्णयामृते सत्यव्रतः**–उदयस्था तिथिर्या हि न
द्दिनमध्यगा । सा खंडा न व्रतानां स्यात्तत्रारंभसमापनं ।
दिनार्धानंतरसमाप्तायामारंभसमाप्ती कार्ये । तदाह **वृद्धव**
**ष्ठः**–अखंडवर्तिमार्तंडे यद्यखंडा भवेत्तिथिः । व्रतप्रारंभणं
मनष्टगुरुशुक्रयुक् । इति । यद्यनष्टगुरुशुक्रयुक् स्यात्तर्हि
मारंभं समाप्तिं च कुर्यादित्यर्थः । इत्युपवासतिथिनिर्णयः

**अथात्रैव नक्षत्रं निर्णीयते** । तन्निर्णय उक्तो वि
**धर्मोत्तरे**–उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः । यु
यत्र वा राम निशीथः शशिना सह । इति । येन वा युज्यते
हेमाद्रौ पाठांतरं । यत्र वा अर्धरात्रौ नक्षत्रेण शशिना च
ज्यते तन्नक्षत्रमुपोषितव्यं । अत्रार्धरात्रशब्देन तत्पूर्वकालो ग्रा
तथाच **सुमंतुः**–यत्रार्धरात्रादर्वाक् तु नक्षत्रं प्राप्यते ति
तन्नक्षत्रे व्रतं कुर्यादतीते पारणं भवेत् । इति । प्राप्यते प्रा
इत्यर्थः । अत्रास्तकालयोगो मुख्यः । अर्धरात्रपूर्वकालयोगो
कल्पः । तेन पूर्वप्रदोषानंतरं प्रवृत्तं द्वितीयदिनेऽस्तानंत

मासमुत्तरमेव दिनद्वयेऽस्तमयव्याप्तावप्युत्तरमेव । उदयास्तमययोगित्वात्, संकल्पकालसत्वात्, अतीते पारणं भवेदित्यस्यानुगुण्याच्च । यदा दिनद्वयेऽप्यस्तमययोगाभावस्तदा निशीथपूर्वकालयोगसत्वात् सुमंतुवचनात्पूर्वमेव, एकभक्तनक्ते अपि उपवासयोग्यनक्षत्रे एव कार्ये । तदुक्तं **माधवादौ स्कांदे**—तत्र चोपवसेदृक्षे यन्निशीथादधो भवेत् । उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः । इति । **माधवे मार्कंडेयः**—तन्नाक्षत्रमहोरात्रं यस्मिन्नस्तमियाद्रविः । यस्मिन्नुदेति सविता तन्नाक्षत्रं भवेद्दिनं । इति । अयमर्थः । नक्षत्रनिमित्तकोपवासनक्तैकभक्तानामहोरात्रसाध्यत्वात् खंडस्यापि नक्षत्रस्यास्तमययोगिन अहोरात्रसत्वमापाद्यते । तेनास्तमयसंबंधि नक्षत्रं तत्र ग्राह्यं । तदभावे तु निशीथप्राक्कालसंबंध्यपि दानव्रतश्राद्धानां दिनमात्रसाध्यत्वात् । औदयिकस्य नक्षत्रस्य संपूर्णदिनसत्वमापद्यते । इति कर्मकालव्यापिनक्षत्रलाभे तु तदेव ग्राह्यं । तदाह **माधवे स्मृतिः**—नक्षत्रे खंडिते येन व्याप्तः कालस्तु कर्मणः । नक्षत्रकर्माण्यत्रैव तिथिकर्म तथैव तु । इति । तथा च कर्मकालव्यापिनक्षत्रालाभे दानव्रतयोरौदयिकं श्राद्धेऽस्तमयसंयोगि नक्षत्रं ग्राह्यमिति भावः । नन्वेवमेकभक्ते मध्याह्नव्यापिनक्षत्रस्य ग्रहणे उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोरिति विरोध इति चेन्न । तस्योपवासप्रतिनिधिनक्तादिविषयत्वात् । कर्मकालव्याप्त्यभावे सावकाशत्वलाभाच्च । अन्यथा नक्षत्रे खंडित इत्यस्य विरोधापत्तेः । यत्तु **विष्णुधर्मोत्तरं**—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् । इति तन्नक्षत्रांशे उपवासाद्यतिरिक्तव्रतादिविषयं । यच्च **बौधायनं**—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । वर्धमानस्य पक्षस्य हानौ त्वस्तमयं प्रति । इति । तत्तु पितृकार्यविषयमिति **हेमाद्रिमाधवौ** । यदपि **माधवे स्मृतिवचनं**—तिथीनामंतिमो भागस्तिथिकर्मसु पूजितः । ऋक्षाणां पूर्वभागस्तु ऋक्षकर्मसु पूजितः । इति । तत्र तिथ्यंतपूज्यत्वं दानव्रतादिविषयम् । नक्षत्रपूर्वभागपूज्यत्वं उपवासादिविषयं । अन्यथोदाहृतवचनांतरविरोधापत्तेः । इति नक्षत्रनिर्णयः ।

---

१ 'विषयत्वमेव । अन्यथा'. २ 'वचनविरोधा'.

**अथ योगनिर्णयः**—योगनिर्णायकविशेषवचनाभावेऽपि[1] पारणं व्यतिपातांते कुर्यात्संप्राश्य गोमयं । अथैकस्मिन्नेव दि व्यतीपातो भवेद्यदि । तत्रैवाह्नि तदा दत्वा उपवासं समाचरेत् इति व्यतीपातव्रतप्रकरणे द्वितीयदिने व्यतीपातांते पारणावि धानेन व्यतीपातस्य पूर्वविद्धस्योपोष्यत्वनिश्चयात् । योगांत स्यापि पूर्वविद्धस्योपोष्यत्वकल्पनादुपवासे योगः पूर्वविद्धो ग्राह्य एकभक्तनक्तायाचितव्रतदानेषु दिनद्वये कर्मकाले सत्वे असत्वे वा—यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवे दंगमिति वचनादुत्तर एव । श्राद्धे तु तिथिवन्निर्णयः । इति योगनिर्णयः ।

**अथ करणनिर्णयः**—उपवासे भद्राकरणनिर्णयो माधवे **भविष्योत्तरे भद्राव्रते**—यस्मिन्दिने भवेद्भद्रा तस्मिन्नह्नि भारत । उपवासस्य नियमं कुर्यान्नारी नरोऽपि वा । यदि रात्रौ भवेद्विष्टिरेकभक्तं दिनद्वये । कार्यं तेनोपवासः स्यादिति पौरा णिको विधिः । प्रहरस्योपरि यदा स्याद्विष्टिः प्रहरत्रयं । उपवा सस्तदा कार्य एकभक्तं ततोऽन्यथा । इति । यदोदयमारभ्य विष्टिः प्रवर्तते तदोपवासे संदेहो नास्ति । यदा तु पूर्वाह्णे एव भद्रा-समाप्तिः अपराह्णमारभ्य प्रवृत्तिः, उदयानंतरं प्रवृत्ता अस्तात्पू-र्वमेव समाप्ता वा तदा यस्मिन्दिने भवेद्भद्रेत्यनेनोपवासो वि-धीयते । यदा तु अस्तानंतरं प्रवृत्ता उदयात्प्राक् रात्रावेव समा-प्यते तदा दिनद्वये एकभक्तं कार्यं तेन उपवाससिद्धिरित्यर्थः । अग्रिमवाक्ये प्रहरत्रयशब्द एकदेशोपलक्षकः । ततोऽन्यथेत्यत्र एकदेशव्याप्त्यभावे इत्यर्थात्स एवार्थो मतांतरत्वेनोक्तः । अतएव एकदेशव्याप्तेः सद्भावादुपवासोऽनुष्ठेयः । ततोऽन्यथेत्यनेनैक-देशव्याप्त्यभावो विवक्षित इति माधवः संगच्छते । यस्तु भद्रा-व्रतं संकल्प्याहोरात्रमुपोषितुं न शक्नोति स भद्रायुक्तकाले भो-जनं त्यजेत् । तावतापि व्रतसिद्धिः । तदुक्तं **माधवे भविष्यो-त्तरे**—स्नातः संपूज्य तामेव ब्राह्मणं च स्वशक्तितः । ततो भुं-जीत राजेंद्र यावद्भद्रा न जायते । अथवांतेऽपि भद्रायाः का-मतो वाग्यतः शुचिः । न किंचिद्भक्षयेत्प्राज्ञो यावद्भद्रा प्रवर्तते । इति । यदा सायाह्ने भद्राप्रवृत्तिस्तदा एकदेशे भद्रायोगिनो दि-

१ 'निर्णायकवचना'. २ 'पूर्वदिनस्य'.

नस्य व्रतार्हत्वादशक्तस्य भोजनाभ्यनुज्ञाने पूजादेरनुक्तेनैवानुष्ठेयत्वात् भद्रारहितेऽपि काले पूजा कार्या । यदा तु भद्रांते भुंक्ते तदा भद्रायुक्तकाले एव पूजादिकं कार्यं । पक्षद्वयेऽपि भद्रायुक्तकाले न किंचिद्भक्षयेत् । तावतापि भद्रोपवासः पूर्यत इति भावः । एवं बवबालवादिकरणेष्वपि यत्र निर्णायकवचनविशेषाभावस्तत्रापि भद्रायां कृतस्य न्यायस्यातिक्रमे कारणाभावादयमेव निर्णयप्रकारः सर्वोऽपि द्रष्टव्यः । इति करणनिर्णयः ।

**एकभक्तादिनिर्णयः ।** एकभक्तादीनां संकल्पस्तु—प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकं । इतिवचनात् प्रातःकाले ज्योतिःशास्त्रप्रसिद्धग्राह्यतिथिसत्वाभावेऽपि यां तिथिं समनुप्राप्येत्यादिसाकल्यप्रतिपादकवचनापादिततिथिसत्वमादाय प्रातःकाले एव कर्तव्यः । तथा । प्रातरारभ्य मतिमान्कुर्यान्नक्तव्रतादिकं । इतिवचनान्नक्तादिव्रतसंकल्पोऽपि प्रातःकाले एव कार्यः । तत्र यदा अस्तोत्तरक्षणमारभ्य ग्राह्यतिथिप्रवृत्तिस्तदा प्रातःकाले साकल्यबोधकवचनापादिततिथिसत्त्वस्याभावेऽपि अंगकालस्य प्रधानकालानुरोधित्वात्प्रातःकाल एव कार्यः । उपवासोत्तरदिने च भोजनरूपं पारणमवश्यं कर्तव्यं । तदाह देवलः—उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् । अन्यथा तु फलस्यार्धं धर्ममेवोपसर्पति । इति । धर्मो यमः । पारणांतं व्रतं ज्ञेयं व्रतांते तद्धि भोजनं । असमाप्ते व्रते पूर्वं नैव कुर्याद्व्रतांतरं । इत्यादिभिस्तस्य व्रतांगत्वाभिधानात् । तच्चोपोष्य तिथ्याद्यंते कार्यं । तदुक्तं माधवे निगमे—पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना । उपोष्य विधिवत्कुर्यात्तत्तदंते च पारणं । इति । अनेन तिथ्याद्यंते पारणविधानात्पूर्वाह्णे पारणवचनमुत्तरविद्धोपोष्यतिथिविषयमिति न तद्विरोधः । माधवे स्कांदे—तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीं । इति । आदिशब्देनैकभक्तनक्तायाचितानि गृह्यंते । यस्यां तिथौ पूर्वविद्धायामेतान्यनुष्ठितानि उत्तरदिने तां तिथिमतिक्रम्य पारणं कुर्यादिति माधवः । नचैकभक्ताद्युत्तरदिने पारणमन्यत्र न दृष्टमिति शंक्यं । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन

दानेन न निर्द्वादशिको भवेत् । इत्यादौ प्रसिद्धत्वात् । यदा तु रात्रौ तिथ्यंतो भवति तदा दिवसे तिथिमध्येऽपि कार्यं । सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्यादृते धारणपारणात् । इति ब्रह्मवैवर्तात् । अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा । तामसे पारणं कुर्वंस्तामसीं गतिमश्नुते । इति गारुडाच्च । एवंच—तिथ्यंते चैव भांते च पारणं यत्र चोच्यते । यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणं । इति माधवोदाहृतवचनमनुकल्प इति बोध्यं । इति कालखंडे तिथिनक्षत्रयोगकरणसामान्यनिर्णयः ।

अथ प्रतिपन्निर्णीयते । सा च शुक्ला अमाविद्धा ग्राह्या । प्रतिपद्यप्यमावास्येति युग्मवाक्यात् । पंचमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः । इति पैठीनसिवचनाच्च । संमुखी नाम सायाह्नव्यापिनी दृश्यते यदा । प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी । इति स्कांदस्यासंजातविरोधात्तृतीयपादेन पूर्वार्धोक्तलक्षणलक्षितसंमुखीशब्दवाच्या पूर्वविद्धा विधीयते । चतुर्थपादेन तु यदा संमुखी गृह्यते तदा आपराह्णिकी ग्राह्येत्यत्र किं वक्तव्यमित्यापराह्णिकी स्तूयते । असंजातविरोधवाक्यं प्रबलमिति सिद्धांतात् । एतदनादरेण सांमुख्यानुवादेनापराह्णिकत्वविधौ तात्पर्यकल्पने । श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या । पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनं । इत्यत्राप्यस्तात्पूर्वं मुहूर्तषट्कव्यापिन्या एव बलिप्रतिपदोऽपि ग्रहणापत्तौ । त्रियामगा दर्शतिथिर्भवेच्चेत्सार्धत्रियामा प्रतिपद्विवृद्धौ । दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोऽन्यथा पूर्वयुते विधेये । वर्धमानतिथौ नंदा यदा सार्धत्रियामिकी । द्वितीया वृद्धिगामित्वादुत्तरा तत्र चोच्यते । इत्यनयोर्वैयर्थ्यापत्तेः यामत्रयानंतरं प्रवृत्तायाः मुहूर्तषट्कव्यापित्वाभावेन तत्प्रसक्तेरेवाभावात् । एवं पूर्वापराह्णमारभ्य प्रवृत्ताया द्वितीयदिने सार्धयामत्रयसत्वस्य बाधितत्वात् । एवं वृहत्तपानामकव्रते कार्तिकमासांतदर्शे पायसभोजनादिनियमं विधाय भविष्योत्तरे पठ्यते—ततो मासे मार्गशीर्षे प्रतिपद्यपरेऽहनि । स्पृष्ट्वा गुरुं चोपवसेन्महादेवं स्मरन्मुहुः । इत्यत्राप्यापराह्णिकीग्रहणापत्तौ । रुद्र-

१ 'दुर्गाष्टमी'.

व्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः इत्यस्य बाधापत्तेश्च । तस्य स्तावकत्वस्वीकारे उदाहृतवाक्यानां सार्थक्यात् वचनांतरविरोधाभावाच्च स्तावकत्वमेवोचितम् । उभयथा वाक्यस्योपपत्तौ वचनांतरसंवादिन्यर्थे तात्पर्यकल्पनाया एव युक्तत्वादिति वचनविरोधपरिहारप्रघट्टकगतहेमाद्रिग्रंथस्याप्यत्रैव स्वारस्याच्छुक्लप्रतिपत्पूर्वा ग्राह्या । यद्यापराह्णिकीति हेमाद्रिग्रंथस्य पूर्वविद्धाव्यावृत्तौ तात्पर्ये उदाहृतग्रंथविरोधापत्तेः तस्यापि चतुर्थपादस्य प्राशस्त्यपरत्वकल्पनाया एव युक्तत्वात् । एतेन—शुक्ला स्यात्प्रतिपत्तिथिः प्रथमतश्चेत्सापराह्णे भवेत् इति दीपिका उपेक्ष्या । उदाहृतवचनविरोधाद्धेमाद्रितात्पर्यार्थाज्ञाननिबंधनत्वाच्चेति । अतएव यदा सायाह्नव्यापिन्यपि गृह्यते तदापराह्णव्यापिन्या ग्रहणे किं वक्तव्यमिति नांतरीयकसिद्धया सायाह्नव्याप्त्या अपराह्णव्याप्तिः प्रशस्यत इति माधवः । यदा विनैवापराह्णव्याप्तिं सायाह्नमात्रं व्याप्यते तदापि पूर्वविद्धायाः पूज्यत्वादिति । यदा शुक्लपक्षे सायाह्नमात्रं व्याप्नोति नत्वपराह्णं तदानीमुत्तरा प्रसज्येतेति चेत् । मैवं । संमुखी नाम सायाह्नव्यापिनीति वचनेन तादृशे विषये पूर्वतिथेर्विधानादिति द्वितीयापंचमीवेधादिति द्वितीयायुक्तोपवासनिषेधस्तु पूर्वेद्युः प्रतिपद्स्त्रिमुहूर्तवेधे सति द्रष्टव्य इति च माधवः संगच्छते । तत्सिद्धं या भवेदापराह्णिकीत्यस्य स्तावकत्वात् प्रतिपत्संमुखी कार्येत्यादिभिर्विहितत्वात् शुक्ला प्रतिपत्पूर्वविद्धा ग्राह्येति । एतेन यदा पंचधा विभक्तस्याह्नश्चतुर्थभागव्यापिनी तदैव पूर्वविद्धा ग्राह्या या भवेदापराह्णिकीति स्कांदादिति मदनरत्न उपेक्ष्यः । उदाहृतवचनविरोधात् वचनविरोधपरिहारप्रकरणगतहेमाद्रिप्रतिपत्प्रकरणस्थमाधवकालादर्शनिर्णयामृतविरोधाच्च । अतएव यद्यपि सायाह्नमात्रव्याप्त्यापि पूर्वविद्धा भवति तथापि तत्पूर्वत्रिमुहूर्तात्मकापराह्णेऽपि यदि वर्तते तदैव पूर्वा ग्राह्यान्यथोत्तरैवेति कालतत्त्वविवेचनमुपेक्ष्यम् । यदपि आपराह्णिकवचनस्य पित्र्यविषयत्वं गौडैरुक्तं तदयुक्तमिति सायाह्नमा-

तीयं प्रतीतिरनुपसंजातविरोधिवाक्यं प्रबलमिति सिद्धांताप्रतिसंधानमूलकत्वादुपेक्ष्यैव। यद्यप्यविशेषेण पूर्वविद्धत्वमुक्तं तथाप्यपराह्णव्यापिन्येव ग्राह्येति **स्मृतिकौस्तुभः**। एवं **निर्णयसिंधुमयूखादयो** नवीनग्रंथा अप्युपेक्ष्या एवेति दिक्॥ **कृष्णाप्रतिपद्द्वितीयायुता** ग्राह्या। प्रतिपत्सद्द्वितीया स्याद्द्वितीया प्रतिपद्युता। इत्यापस्तंबवचनात्। उपवासे तु कृष्णापि पूर्वविद्धैव। प्रतिपत्पंचमी भूतं सावित्री वटपूर्णिमा। नवमी दशमी चैव नोपोष्याः परसंयुताः। इति **ब्रह्मवैवर्तात्**। प्रतिपत्पंचमी चैव उपोष्याः पूर्वसंयुता इति **मदनरत्ने** जाबालिवचनात्। द्वितीया पंचमीवेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी। इति **वृद्धवसिष्ठेन** प्रतिपन्मात्रस्य पूर्वविद्धस्योपोष्यत्वाभिधानादिति **हेमाद्र्युक्तेश्च** कृष्णप्रतिपत्परेद्युरुदयादूर्ध्वं त्रिमुहूर्ता ततोऽधिका वा स्यात् तदा सैवोपोष्येति **माधवस्तु**—प्रतिपत्पंचमी चैव उपोष्या पूर्वसंयुता। इति **जाबालिवचनं** यदि न स्यादिति कृत्वाचिंताभिप्रायेण प्रवृत्त इति न तद्विरोधो दोषावहः। इति प्रतिपत्सामान्यनिर्णयः।

**चैत्रशुक्लप्रतिपदि चांद्रवत्सराद्यारंभः**। तदुक्तं **माधवे ब्राह्मे**—चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि। शुक्लपक्षे समग्रं तु तदा सूर्योदये सति। प्रवर्तयामास तदा कालस्य गणनामपि। ग्रहान्नागानृतून्मासान्वत्सरान्वत्सराधिपान्। इति। अत्र प्रतिपदौदयिकी ग्राह्या। दिनद्वये उदयकाले सत्वे असत्वे च पूर्वैव। वत्सरादौ वसंतादौ बलिराज्ये तथैव च। पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः। इति **वृद्धवसिष्ठवचनात्**।

वत्सराधिपपूजा। अस्यां **वत्सराधिपपूजोक्ता ज्योतिर्निबंधे**—यश्चैत्रशुक्लप्रतिपद्दिनवारो नृपो हि सः। तस्य पूजा विधातव्या पताकातोरणादिभिः। प्रतिगृहं ध्वजाः कार्याः शक्त्या ब्राह्मणतर्पणं। निरीक्षणं च कर्तव्यं शकुनानां फलेप्सुभिः। इति। **तैलाभ्यंग** उक्तो **वृद्धवसिष्ठेन**—वत्सरादौ वसंतादौ बलिराज्ये तथैव च। तैलाभ्यंगमकुर्वाणो नरकं प्रतिपद्यते इति। चैत्रे मासि महाबाहो पुण्या या प्रतिपत्परा। अस्यां वै निंबपत्राणि प्राश्य संशृणुयात्तिथिं। शकवत्सरभूपमंत्रिणां रसधान्ये-

श्वरमेधपतीनां। श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया। इति वचनात् शकादिश्रवणं कार्यं। ब्राह्मे–तत्र कार्या महाशांतिः सर्वकल्मषनाशिनी । तस्यामादौ तु संपूज्यो ब्रह्मा कमलसंभवः। पाद्यार्घ्यधूपदीपैश्च वस्त्रालंकारभोजनैः। होमैर्बल्युपहारैश्च तथा ब्राह्मणतर्पणैः । ततः क्रमेण देवेभ्यः पूजा कार्या पृथक् पृथक्। ॐनमो ब्रह्मणे तुभ्यं कामाय च महात्मने। नमस्तेऽस्तु निमेषाय त्रुटये च महात्मने । नमस्ते बहुरूपाय विष्णवे परमात्मने । अथ किं बहुनोक्तेन मंत्रेणानेन पूजयेत्। प्राङ्मुखोदङ्मुखान्विप्रान्देवानुद्दिश्य पूर्ववत्। अनेनैव तु मंत्रेण स्वाहांतेन पृथक्पृथक्। यविष्ठायाग्नये होमः कर्तव्यः सर्वतृप्तये। शालाशोभां[1] ततः कुर्यान्मंगलालभनं तथा। भोजयित्वा द्विजान्सर्वान्सुहृत्संबंधिबांधवान्। विशेषेण च भोक्तव्यं कार्यश्चापि महोत्सवः। एवं संवत्सरारंभः सर्वसिद्धिप्रवर्तकः। इति। चैत्रस्य मलमासत्वेऽपि तदारभ्यैव संवत्सरप्रवृत्तेस्तद्दिनवारस्यैव वत्सराधिपत्वात्, तत्पूजादेर्वत्सरादिनिमित्तकस्याभ्यंगादेश्च–नित्यनैमित्तिके कुर्यात्प्रयतः स मलिम्लुच इति वचनात्तत्रैवानुष्ठानं युक्तं। मयूखादौ तु षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वार्धे तु परित्यज्य कर्तव्या चोत्तरे क्रिया। इति वचनादभ्यंगादिकमुत्तर एवेत्युक्तं तदुपेक्ष्यम्। यस्य कर्मणो मासद्वयेऽपि निमित्तलाभः समानस्तद्विषयत्वाद्वचनस्य अभ्यंगादिनिमित्तस्य वत्सरादेर्द्वितीये असंभवेन तत्रानुष्ठाने प्रमाणाभावात्, निमित्तकालेऽनुष्ठानाभावेन प्रत्यवायापत्तेश्च । अत्रैव

प्रपादानं। प्रपादानमुक्तं भविष्ये। अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे। पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत्। इति। तत्र मंत्रः। प्रपेयं सर्वसामान्यभूतेभ्यः प्रतिपादिता। अस्याः प्रदानात्पितरस्तृप्यंतु च पितामहाः। इति। अनिवार्यं ततो देयं जलं मासचतुष्टयं। इति। प्रपां दातुमशक्तेन विशेषाद्धर्मलिप्सुना। प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः। ब्राह्मणस्य

धर्मघटदानं। गृहे देयः शीतामलजलः शुचिः। तत्र मंत्रः। एष धर्मघटो[2] दत्तो ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात्सकला

---

१ 'शोभा ततः कार्या'. २ 'ब्रह्मघटो'.

मम संतु मनोरथाः । अनेन विधिना यस्तु धर्मकुंभं प्रयच्छति । प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः । इति ।

**दशहरानिर्णयः** । ज्येष्ठशुक्लप्रतिपत्प्रभृतिदशमीपर्यंततिथिषु दशाश्वमेधस्नानफलमुक्तं **काशीखंडे**—ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदां तिथिं । दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः । एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः । आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् । इति ।

**दौहित्रश्राद्धं** । अत्राश्विनशुक्लप्रतिपदि शिष्टाचाराद्दौहित्रो मातामहश्राद्धं कुर्यात् । जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले । कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते । इति । प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणं । श्राद्धं मातामहं कुर्यात्सपिता संगवे सति । जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले । प्रातःसंगवयोर्मध्ये याश्वयुक्प्रतिपद्भवेत् । इति शिष्टाचारानुगुणाभियुक्तवाक्येभ्यः । अत्र सपितेति विशेषणाज्जीवत्पितृक एवाधिकारी । अतएव पिंडरहितं संगवे कुर्यात् इदं पार्वणत्वात् । अपराह्णे सपिंडकं कुर्यादिति केषांचिदुक्तिरुदाहृतवाक्यविरुद्धेति दिक् ।

**नवरात्रारंभः** । अत्रैव नवरात्रव्रतारंभः । तदुक्तं **व्रतखंडे हेमाद्र्युदाहृतदेवीपुराणे**—आश्विने घातिते घोरे नवम्यां प्रतिवत्सरं । श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकं । घोरनामके दैत्ये मारिते सतीत्यर्थः । **ब्रह्मोवाच**—शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि । महासिद्धिप्रदं धन्यं सर्वशत्रुनिबर्हणं । सर्वलोकोपकारार्थं विशेषादतिवृष्टिषु । क्रत्वर्थं ब्राह्मणाद्यैश्च क्षत्रियैर्भूमिपालने । गोधनार्थं विशैर्वत्स शूद्रैः पुत्रसुखार्थिभिः । सौभाग्यार्थं स्त्रिया कार्यमन्यैश्च धनकांक्षिभिः । महाव्रतं महापुण्यं शंकराद्यैरनुष्ठितं । कर्तव्यं देवराजेंद्र देवीभक्तिसमन्वितैः । कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नंदिकां । नंदिका प्रतिपदिति **हेमाद्रिः** । अयाची अथ एकाशी नक्ताशी अथ वाग्वदः । प्रातःस्नायी जितद्वंद्वस्त्रिकालं शिवपूजकः । शिवायाः पूजक इति विग्रहे छांदसो ह्रस्वः । जपहोमसमासक्तः कन्यका भोजयेत्सदा । **मदनरत्ननिर्णयामृतयो**स्त्वेवं पाठः । भूमौ शयीत चामंत्र्य कुमारीर्भोजयेन्मुदा ।

वस्त्रालंकारदानैश्च सताप्याः प्रतिवासरं । बलिं च प्रत्यहं दद्यो-
दोदनं मांसमाषवत् । त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः ।
इति । जपो देवीमंत्रस्य । स्तोत्रं सप्तशतिकादि । हेमाद्रौ भवि-
ष्योत्तरे—आश्वयुक्शुक्लपक्षस्य अष्टमी मूलसंयुता । सा महान-
वमीनाम त्रैलोक्येऽपि सुदुर्लभा । कन्यागते सवितरि शुक्लपक्षे-
ऽष्टमी तु या । मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ।
अष्टम्यां च नवम्यां च जगन्मोक्षप्रदांबिकां । पूजयित्वाश्विने
मासि विशोको जायते नरः । सा पुण्या सा पवित्रा च सुधर्मसुख-
दायिनी । तस्यां सदा पूजनीया चामुंडा मुंडमालिनी । तस्यां ये ह्यु-
पहन्यंते[1] प्राणिनो महिषादयः । सर्वे ते स्वर्गतिं यांति घ्नतां पापं
न विद्यते । उद्दिश्य दुर्गां हन्यंते विविधा यत्र जंतवः । ते
यांति स्वर्गं कौंतेय घातयंतो यशस्विनः । एवं च विंध्यवासिन्यां
नवरात्रोपवासतः । एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा ।
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे । गृहे गृहे भक्तिपरै-
र्ग्रामे ग्रामे वने वने । स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ।
वैश्यैः शूद्रैर्भक्तियुतैर्म्लेंच्छैरन्यैश्च मानवैः । स्त्रीभिश्च कुरुशार्दूल
तद्विधानमिदं शृणु । इति प्रतिज्ञाय । प्रसंगात्—जयाभिलाषी
नृपतिः प्रतिपत्प्रभृति क्रमात् । लोहाभिसारिकं कर्म कारयेद्या-
लोहाभिसारिकं । वदष्टमीं । इत्यारभ्य—लोहाभिसारिकं कर्म कृत्वैवं
मंत्रपूर्वकं । फलनैवेद्यकुसुमैर्धूपदीपविलेपनैः । इत्यंतेन लोहाभि-
सारिकमुक्त्वा प्रतिज्ञातविधानमुक्तं । अष्टम्यां नियमं कृत्वा पूर्वाह्णे
स्नानमाचरेत् । दुर्गां कांचनमूर्तिस्थां रौप्यां वा मृन्मयीमपि ।
शैलीं वार्क्षीं तथा चैत्रीं[2] ताम्रीं वा विभवात्कृतां । दारुणि
चित्रतोरणे न्यस्तां स्थाने सुशोभने । पुरतो विन्यस्तमृगां विचित्र-
गृहमध्यगां देवीं । चंदनकुंकुमचंद्रैः समैः सरसभूरिकैः[3] शिलापिष्टैः ।
चर्चितगात्रां देवीं कुसुमैरभ्यर्चयेद्बहुभिः । कुमुदैः सपद्मगंधैः
सुदीपधूमैः सुनैवेद्यैः । मांसैर्बल्युपहारैर्मंगलशब्दैः समुच्छलितैः ।
विजयच्छत्रैर्यानैः स्यंदनसितशस्त्रधारिभिर्लोकैः । तुष्टैर्वरवस्त्रादि
सुनिवेद्यते सर्वमेव भगवत्यै । जयंती मंगला काली भद्रकाली
कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते ।
इति पूजामंत्रः । अमृतोद्भवं श्रीवृक्षं महादेवप्रियं सदा । बिल्व-

१ 'पपूज्यंते'; 'पजायंते'. २ 'वैत्रीं'. ३ 'सरभूरिकैः'.

खड्गं नमस्कृत्य शत्रूणां वधसिद्धये । इच्छेत विजयं राज्यं सुभिक्षं चात्मनो नृप । पुनः पुनः प्रणम्याथ संस्मरन् हृदये शिवां । महिषघ्नीं कुमारीं तु भुजगीं सिंहवाहिनीं । दानवांस्तर्जयंतीं च खड्गोद्यतकरां शुभां । घंटाब्जस्रग्धरां दुर्गां रणारंभे व्यवस्थितां । ततो जयजयालापैः स्तवं कुर्यादिमं मुदा । सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते । कुंकुमेन समालब्धे चंदनेन विलेपिते । बिल्वपत्रमहामाले दुर्गेऽहं शरणं गतः । इत्यंतेन अष्टमीं प्रकृत्यापि प्रतिपदादिसाधारणपूजाविधिमभिधाय । दत्वैवमथ कौरव्य अष्टम्यां जागरं निशि । नटनर्तकगीतैश्च कारयेत्सुमहोत्सवं । हृष्टैर्निशां ततो नीत्वा प्रभाते अरुणोदये । घातयेन्महिषान्मेषानित्यादिनाष्टम्यादौ जागरादिकमुक्तं । प्रतिपदादिनवसु तिथिषु पूजादिकरणासामर्थ्ये सप्तम्यादिषु त्रिषु कर्तव्यं । तदाह **हेमाद्रौ धौम्यः**—आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकं । प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् । त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमम् । इति । अत्राप्यशक्तौ अष्टम्यामेव कर्तव्यं । तदुक्तं **हेमाद्रौ ब्राह्मे** । तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी । प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह । अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः । उपोषितैर्वस्त्रधूपदीपैर्माल्यानुलेपनैः । आमिषैर्विविधैः शाकैर्होमैर्ब्राह्मणतर्पणैः । बिल्वपत्रैः श्रीफलैश्च चंदनेन घृतेन च । नवम्यां तु कृतस्नानैः सर्वैः पूज्यास्तु ब्राह्मणाः । इति । एतेन मूलाभावेऽपि केवलाष्टम्यामेव पूजादिकं कर्तव्यं । अतएव **लिंगपुराणे**—मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत् । तथा तिथ्यंतरेष्वेवमृक्षे वृत्ते फलोच्चयः । इति । **देवलोऽपि**—तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनं । योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि । इति । इदं च तस्यां सदा पूजनीयेत्युदाहृतभविष्ये सदाशब्दश्रवणान्नित्यं । फलश्रवणात्काम्यमपि । अत्र नवरात्रशब्दः । आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकं । श्रोतुमिच्छाम्यहं तात उपवासव्र-

१ 'येद्देवीं'.

तादिकं । महाव्रतं महापुण्यं शंकराद्यैरनुष्ठितं । इत्याद्युदाहृतवाक्येषु कर्तव्यादिपदसामानाधिकरण्यात्, उपवासाद्यन्यतमनियमयुक्तकर्तृकप्रतिपदादिनवम्यंतनवतिथ्यधिकरणकपूजारूपकर्मनामधेयं । नच रात्रिशब्दस्य तिथौ लक्षणैव दोष इति वाच्यम् । नवरात्रशब्दस्य गुणविधित्ववादिनापि तदंतर्गतरात्रिशब्दस्य अहर्गणनामधेयद्विरात्रत्रिरात्रादिष्विव सावनाहोरात्रपरत्वे तिथिह्रासे नवम्यंततिथिसमुदाये नवाहोरात्रस्यासंभवेन तिथिपरत्वस्यैव स्वीकारात् । अतएव—तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकं । इति केषांचिदुक्तिः संगच्छते । नचैवमपि कालपरत्वं विना सप्तमीनिर्देशानुपपत्तिरिति शंक्यं । कालपरतयैवोपपन्नस्य नवरात्रशब्दस्य द्विरात्रादिशब्दानां यागबोधकत्ववन्नवतिथ्यधिकरणपूजादिबोधकत्वेनानुपपत्त्यभावात् । नच—मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः । संपूज्य नवदुर्गां चेत्यादौ नवरात्रे इति सप्तमीनिर्देशानुपपत्तिरिति वाच्यं । पूर्वेद्युरमावास्यायां वेदिं करोतीत्यत्रेव तस्याप्युपपन्नत्वात् । अतएव—आश्विनस्य सिते पक्षे प्रारब्धे नवरात्रके । शावे सूते समुत्पन्ने क्रिया कार्या कथं बुधैः । सूतके वर्तमाने च तत्रोत्पन्नं यदा भवेत् । देवीपूजा प्रकर्तव्या जपयज्ञविधानतः । इति निर्णयामृतोदाहृतवचनमप्युपपन्नं । एतेन नवरात्रशब्दो गुणविधिरेव न कर्मनामधेयमिति कालतत्त्वविवेचनादिग्रंथा उपेक्ष्याः । अत्र **नवरात्रव्रतारंभे** प्रतिपन्निर्णीयते । तत्र त्रिकालं पूजयेद्देवीमिति कालत्रये पूजाविधानाद्यदा संध्यात्रयव्यापिनी प्रतिपत्तदा कर्मणो यस्य यः काल इति वचनात्सैव ग्राह्येति संदेहो नास्ति । यदा पूर्वदिने मुहूर्तत्रयानंतरं प्रवृत्ता द्वितीयदिने मुहूर्तत्रयादिपरिमिता तदा—अष्टम्यां नियमं कृत्वा पूर्वाह्णे स्नानमाचरेत् इति प्रक्रम्य । चर्चितगात्रां देवीं कुसुमैरभ्यर्चयेद्बहुभिः । इति पूर्वोक्ते हेमाद्रिनिर्णयामृतमदनरत्नाद्युताहृतभविष्योत्तरे पूर्वाह्णे पूजाविधानात्, यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण तु । उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः । इत्यादिवचनैरुत्तरैव ग्राह्या । अतएव—शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्योदयगामिन्यां न

नवरात्रे प्रतिपन्निर्णयः ।

तत्र तिथियुग्मता । प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् । प्रातः प्रातस्तु संपूज्य प्रातरेव विसर्जयेत् । भगवत्याः प्रवेशादिविसर्गांताश्च याः क्रियाः। तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः। इति तिथितत्त्वादिगौडनिबंधोदाहृतनंदिपुराणभविष्योत्तरदेवीपुराणवचनानि संगच्छंते। तथा। आश्विनस्य सिते पक्षे प्रतिपत्तु यथाक्रमं । सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवां । इति देवीपुराणनाम्ना, प्रत्यहं पूजनं कुर्यात्त्रिकालं भक्तितत्परः । अष्टम्यां जागरं चैव महापूजनपूर्वकमित्यादीनि रुद्रयामलादिनाम्ना, पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी । नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता । देशभंगो भवेत्तत्र दुर्भिक्षं चोपजायते । नंदायां दर्शयुक्तायां यत्र स्यात्पूजनं मम । अमायुक्ता न कर्तव्या प्रतिपत्पूजने मम । मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता । न दर्शकलया युक्ता प्रतिपच्चंडिकार्चने । उदये द्विमुहूर्तापि ग्राह्या सोदयगामिनी । इत्यादिमार्कंडेयदेवीपुराणनाम्ना द्वैतनिर्णयकालतत्त्वविवेचननिर्णयसिंध्वाद्यर्वाचीनग्रंथेषूदाहृतानि यदि सन्ति वचनानि तर्हि तान्यपि संगच्छंते । यदा पूर्वदिने मुहूर्तानंतरं प्रवृत्ता द्वितीयदिने किंचिन्न्यूनमुहूर्तत्रयपरिमिता तत्रापि—द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी । इति वचनादुत्तरैव। यदा पूर्वदिने मुहूर्तपंचकानंतरं प्रवृत्ता द्वितीयदिने मुहूर्तद्वयपरिमिता तदा—त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी। इति वचनेनोत्तरानिषेधात्पूर्वैव । यदा तु मुहूर्तानंतरं प्रवृत्ता द्वितीयदिने मुहूर्तद्वयान्न्यूना तदोत्तरत्र मध्याह्नादिपूजाकाले साकल्यवचनापादितायाः अपि तिथेरभावात्पूर्वैव । अतएव—अमायुक्तैव कर्तव्या प्रतिपच्चंडिकार्चने । न ग्राह्या परसंयुक्ता शुद्धसंतानकांक्षिभिः । द्वितीयाशेषसंयुक्ता प्रतिपच्चंडिकार्चने । मोहादथोपदेशाद्वा कृता पुत्रविनाशकृत् । आरंभे नवरात्रस्य द्वितीया त्रुटिसंमिता । न केवलं तिथिं हंति वेधात्सा पुत्रसंपदं । द्वितीयादिकलोपेता प्रतिपच्चंडिकार्चने । वर्जनीया प्रयत्नेन विषलेशो यथांभसि । प्रतिपच्छेषसंयुक्तद्वितीयायां ममार्चनं । कृतं धर्मं नाशयति संततिं पुत्रपौत्रिकीं । अमायुक्तैव सा ग्राह्या प्रतिपच्चंडिकार्चने । अन्यथा करणे तावद्राज्य-

षयाणि । यदा अमाविद्धा द्वितीयदिने नास्ति तदा कोट्यंतराभावात्सैवेति निर्विवादमेव । यदोदयमारभ्य प्रवृत्ता द्वितीयदिने किंचिन्न्यूनमुहूर्तत्रयपर्यंता तदा संपूर्णत्वात्पूर्वैव ग्राह्येति । आश्विने मासि मेघांते महिषासुरमर्दिनीं । निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमादित्याद्यर्वाचीनोदाहृतानि यद्यार्षाणि तर्हि तृतीयपूजायाः प्रदोषे एवानुष्ठानात्तद्विषयाणीति सर्ववाक्यैकवाक्यतयैव नवरात्रव्रतारंभे प्रतिपन्निर्णयः सिद्ध इति । नन्वेवं प्रदोषस्य कर्मकालत्वसूचकस्य नवरात्रस्य नक्तव्रतत्वादिति माधवस्यासंगतिरिति चेन्न । तस्य प्रदोषे भोजनप्रधानरूपनक्तव्रतपरत्वे—अयाची ह्यथवैकाशी नक्ताशी अथ वाय्वदः । त्रिकालं पूजयेद्देवीमित्यादीनां नक्तादीनामधिकारिविशेषणत्वस्य पूजाया एव प्राधान्यस्य बोधकवाक्यानां विरोधापत्तेः पाक्षिकं अन्यांगनक्तमेवाभिप्रेतं । तत्र—अन्यांगस्यैकभक्तस्य कालस्त्वंग्यनुसारतः । इत्येकभक्तप्रकरणेऽभिधाय नक्तप्रकरणे अत्राप्येकभक्तवदन्यांगनक्ते निर्णयो द्रष्टव्य इत्यभिदधतो माधवस्यापि पूर्वोक्तनिर्णयः संमत एवेति न तदसंगतिशंकापीति विभावनीयं । एतेन माधवस्य नेदृशं सिद्धवदभिधातुं युज्यते, अभिदधतो वा विश्वसितुं पदवाक्यप्रमाणपरैः, नतरां तत्रैवाभिनिवेष्टुं धर्मविनाशभीरुभिरित्यादि, तथा माधवोक्तं नक्तव्रतनिर्णयेन निर्णयत्वमसंबद्धमेवेति द्वैतनिर्णयो माधवार्थाज्ञानमूलकत्वादयुक्त एव । यत्तु यद्यपि रात्रिकर्मकालत्वबोधकानि पूर्वाह्णकर्मकालत्वबोधकानि वचनानि माधवादिभिर्न लिखितानि तथापि तदीयनक्तव्रतत्वोक्तिसंवादित्वाद्रात्रिकर्मकालवचनानि तैर्दृष्टानीति गम्यते । अत्यंतोपयोगाभावात्तु तेषामलेखनं देवीपूजाप्रकारविशेषकुमारीपूजाबलिदानवचनादिवत् । यद्यपि देवीपुराणे त्रिकालं पूजयेद्देवीमिति कालत्रये पूजोक्ता तथापि प्रातर्मध्याह्नयोः संक्षेपपूजनमंगं विस्तरपूजनं प्रधानभूतं रात्रावेव । पूर्वाह्णे पूजयेच्छिवामित्यादिवचनं तत्सर्वं प्रथमकालपूजार्थमुपपन्नमेव । तिथिनिर्णयस्तु प्रामाणिकोक्तनक्तव्रतत्वबलेन प्रधानपूजनस्य प्रदोषकालत्वमंगीकृत्यैव कर्तव्य इति मम मतिरिति कालतत्त्वविवेचने सिद्धांतितं तत् नवमीव्रतप्रकरणे हेमाद्रिणा, अष्टमीनि-

र्णयप्रकरणे निर्णयामृतमदनरत्नाभ्यां च सेतिकर्तव्यताकदेवीपूजाकुमारीपूजाबलिदानादिविधायकानां देवीपुराणभविष्योत्तरपुराणस्कंदपुराणानामुदाहृतत्वात् भवदुदाहृतरात्रिकर्मकालत्वबोधकवाक्यानां हेमाद्र्यादिभिरदृष्टत्वात्, तद्विरुद्धानां–त्रिकालं पूजयेद्देवीं पूर्वाह्णे स्नानमाचरेत्। इत्यादीनामुपन्यासात्, रात्रिकर्मकालत्ववचनान्येव तैर्दृष्टानि नतु पूर्वाह्णकर्मकालत्ववचनानीत्युक्तेरत्यंतानुचितत्वात्, माधवस्य स्वतंत्रनक्तपरत्वकल्पने त्याज्यत्वापत्तेरुक्तत्वान्न तद्बलेन प्रदोषस्य कर्मकालत्वसिद्धिरिति उपेक्ष्यमेव। यदपि रात्रेः कर्मकालत्वसाधकत्वेन–निशि भ्रमंति भूतानि शक्तयः शूलभृद्यतः। इति वचनमुदाहृतं तदप्ययुक्तं। अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत्। इत्युत्तरार्धे चतुर्दश्या एवोपादानेन तस्य तिथ्यंतरविषयत्वासंभवादन्यथा गौरीतृतीयायामपि तस्यापत्तेस्तृतीयपूजैव प्रधानमित्युक्तं, तदपि अथवैकाशीत्येकभक्तनियमपक्षे भोजनोत्तरं तत्कर्तव्यतापत्तेरयुक्तमेव। अतएव पूर्वदिने अमाविद्धा प्रतिपत्परदिने द्वितीयाविद्धा तत्र परस्परविरुद्धानि वचनानि दृश्यंते, तथापि रात्रिपूजाया एव प्राधान्यात् तस्या महानिबंधेषु नक्तव्रतत्वोक्तेः–प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः इतिवचनात् प्रदोषस्य कर्मकालमंगीकृत्यैव निर्णय इत्यादिस्मृतिकौस्तुभादयोऽर्वाचीनग्रंथा अप्युपेक्ष्याः। हेमाद्र्याद्युदाहृतपुराणविरुद्धत्वात्, माधवगतनक्तशब्दार्थाज्ञानमूलत्वाच्च। रात्रिपूजाया एव प्राधान्ये पूजात्रयप्राधान्यबोधक–त्रिकालं पूजयेद्देवीमित्यादिविरोधात् एकभक्तनियमपक्षे भोजनोत्तरं कर्तव्यतापत्तेश्चेति दिक्। तस्मात्–आदित्योदयमारभ्य यावत्तु दश नाडिकाः। प्रातःकाल इति ख्यातः स्थापनारोपणादिषु। इत्यादिवचनैः पूर्वाह्णस्यापि कर्मकालत्वात्तस्यैव प्राथम्याच्च पूर्वोक्त एव निर्णयो युक्त इति विभावनीयं। यत्तु–आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा। अपराह्णेऽपि कर्तव्यं शुद्धसंतानकांक्षिभिः। आद्याः षोडशनाडीस्तु लब्ध्वा यः कुरुते नरः। कलशस्थापनं तत्र अरिष्टं जायते ध्रुवम्। इत्यर्वाचीनोदाहृतं प्रतिपदाद्यनाडीत्यागवचनं तद्दशघटिकामध्ये तत्तत्परिहारेण पूजासंभवे द्रष्टव्यं। अन्यथा पूर्वाह्णपूजाविधायकवच-

नविरोधापत्तेः। एवं–प्रारभ्यं नवरात्रं स्याद्धित्वा चित्रां च वैधृतिं। त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चंडिकार्चने । तयोरंते विधातव्यं कलशस्थापनं गृह। प्रतिपदाश्विने मासि भवेद्वैधृतिचित्रया। आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकं। चित्रावैधृतिसंयुक्ता प्रतिपच्चेद्भवेन्नृप । त्याज्या ह्यंशास्त्रयस्त्वाद्यास्तुरीयांशे तु पूजनं । इमानि सतिसंभवाभिप्रायाणि । यत्तु–संपूर्णा प्रतिपदेव चित्रायुक्ता यदा भवेत्। वैधृत्या वापि युक्ता स्यात्तदा मध्यंदिने रवौ। अभिजित्तु मुहूर्ते यत्तत्र स्थापनमिष्यते। इत्यर्वाचीनोदाहृतं तदनाकरत्वादुपेक्ष्यं प्रतिबंधकवशेन दशघटिकातिक्रमविषयं वा । अन्यथा हेमाद्र्याद्युदाहृतपूर्वाह्णपूजाविधायकवचनविरोधापत्तेरिति।

एवं निर्णीतायां प्रतिपदि देवीपूजा कार्या । तत्रैविध्यमुक्तं भविष्ये–शारदी चंडिकापूजा त्रिविधा परिगीयते । सात्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः । माहात्म्यं भगवत्याश्च पुराणादिषु कीर्तितं । पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनास्तथा । राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा । सुरामांसाद्युपाहारैर्जपयज्ञैर्विना तु या। विना मंत्रैस्तामसी स्यात्किरातानां च संमता। ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः । एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः। इति। अत्र ब्राह्मणस्य सात्विकपूजैव। अतएव कालिकापुराणं। स्वगात्ररुधिरं दत्वा ब्रह्महत्यामवाप्नुयात्। मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते। इति। क्षत्रियवैश्ययोस्तु राजस्यपि। शूद्रस्य तु जपहोमयोर्ब्राह्मणद्वारैवाधिकारः । पूजायां तु स्वतोऽपि । यत्तु पराशरवचनं–दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः। ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु फलभाग्भवेत् । इति, तद्वैदिकमंत्रविषयं । म्लेच्छादीनां ब्राह्मणद्वारापि जपादौ नाधिकारः किंतु सुराद्युपहारसहिततत्तदुपचाराणां पश्वादिबलेश्च देवीमुद्दिश्य मनसोत्सर्गमात्रं तैः कर्तव्यं। अत्र ब्राह्मणादिभिः स्वाधिकारानुसारेण पूजा कार्या। कलशस्थापनं सर्वत्र देशे क्रियमाणं

कलशस्थापनं। हेमाद्र्याद्युदाहृतपुराणाविरुद्धत्वात्कर्तव्यं । तद्वि-

धिरुक्तो रुद्रयामलादौ—स्नानं मांगलिकं कृत्वा ततो देवीं प्रपूजयेत्। शुद्धाभिर्मृत्तिकाभिश्च पूर्वं कृत्वा तु वेदिकां। यवान्वै प्रक्षिपेत्तत्र गोधूमैश्चापि संयुतान्। तत्र संस्थापयेत्कुंभं विधिना मंत्रपूर्वकं। सौवर्णं राजतं वापि ताम्रं वा मृन्मयं तु वा। इति। ननु धर्मप्रमाणेष्वनंतर्भूतत्वात्कथं रुद्रयामलाद्युपन्यास इति चेत्। शिष्टाचारानुवादकत्वेनैव तदुपन्यासात् स्मृत्यादिविरुद्धार्थकरुद्रयामलडामरादिवचनानि तूपन्यासानर्हाण्येवेति बोध्यं। तत्र प्रतिपदि कृतनित्यक्रियो देशकालादिसंकीर्त्य अमुकफलकामो देवीप्रीतिकामो वा प्रतिपदादिनवमीपर्यंतं एकभक्तादिनियमयुक्तः प्रत्यहं देवीपूजनं करिष्ये तत्रादौ कलशस्थापनं करिष्ये इति संकल्प्य। महीद्यौः पृथिवीति मंत्रेण भूमिं स्पृष्ट्वा। ओषधयः समित्यनेन यवान्निक्षिप्य। आकलशेष्वित्यनेन कलशं तत्र संस्थाप्य। इमंमेगंगे इत्यनेन कलशं जलेनापूर्य। गंधद्वारामिति गंधं। या ओषधीरिति सर्वौषधीः। कांडात्कांडादिति दूर्वाः। अश्वत्थेव इति पंचपल्लवान्। स्योना पृथिवीति सप्त मृदः। याः फलिनीरिति फलं। सहिरत्नानीति पंचरत्नानि। हिरण्यरूप इति हिरण्यं च कलशे क्षिप्त्वा। युवासुवासा इत्यनेन वस्त्रेणावेष्ट्य। पूर्णादर्वीत्यनेन कलशे पूर्णपात्रं निधाय। तत्र वरुणं तत्त्वायामीत्यनेन संपूज्य। दुर्गागृहं प्रकर्तव्यं चतुरस्रं सुशोभनं। रहःस्थं स्वस्तिकाद्यैश्च चर्चितं वस्त्रमंडितं। गौरमृद्गोमयाभ्यां च लिप्तं शस्त्रसमन्वितं। तन्मध्ये वेदिका कार्या चतुर्हस्ता समा शुभा। तस्यां सिंहासनं क्षौमं कंबलाजिनसंयुतं। तत्र दुर्गां प्रतिष्ठाप्य सर्वलक्षणसंयुतां। सर्वदेवमयीं प्रौढयौवनोन्मादशालिनीं। भुजैश्चतुर्भी रुचिरैर्दशभिर्वा विभूषितां। तप्तहाटकवर्णांगीं त्रिनेत्रां कृतशेखरां। पीतांबरपरीधानां नीलकौशेयसंयुतां। ग्रैवेयहारकेयूरनूपुराभरणान्वितां। नानारत्नविचित्रेण मुकुटेन विराजितां। अनेककुसुमाकीर्णां कंदर्पेण सुशोभितां। नितंबबिंबसंबंधकिंकिणीक्काणनादिनीं। शूलचक्रदंडशक्तिवज्रचापासिधारिणीं। घंटाक्षमालाकरकपानपात्रलसत्करां। तदग्रे छिन्नशिरसं महिषं रुधिराप्लुतं। निःसृतार्धतनुं कंठमालाचर्मासिधारिणं। देवीकरधृतग्रीवं शूलेनोरसि ताडितं। दैत्यं करालदंष्ट्रास्यं विद्युत्कपि-

लमूर्धजं । नागपाशे विनिक्षिप्तं हर्यक्षेणापि विद्रुतं । वमद्रुधिरवक्त्रेण धुन्वंतं च सटा रुषा । ऊर्ध्वलांगूलदंडेन देव्यधिष्ठानशोभिना । सर्वतो मातृचक्रेण सेव्यमानं सुरैस्तथा । इति निर्णयामृतोदाहृतभविष्योत्तरोक्तवेदिमध्यस्थे आसने संस्थापितप्रतिमायां तदीशानदिग्भागस्थापितकुंभे वा वेदिमध्यस्थापितकुंभे एव वा यथोक्तलक्षणां हेमादिप्रतिमां संस्थाप्य उक्तदेवीस्वरूपं ध्यात्वा स्थापितप्रतिमायां प्राणप्रतिष्ठां कृत्वा । जयंती मंगला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते । इति पूर्वोक्तमंत्रेण । आगच्छ वरदे देवि दैत्यदर्पनिषूदनि । पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये । सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् । इमं घटं समागच्छ सर्वदेवगणैः सह । दुर्गे देवि समागच्छ सान्निध्यं चेह कल्पय । बलिपूजां गृहाण त्वमष्टाभिः शक्तिभिः सह । इत्यनेन चावाह्य जयंती मंगलेति मंत्रांते ॐ दुर्गायै नम इदमासनं । एवं पाद्याद्युपचारान्दद्यात् । पुष्पदाने जयंतीति मंत्रांते । अमृतोद्भवं श्रीवृक्षं शंकरस्य सदा प्रियं । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि । इति बिल्वपत्रं । ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियं । तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये । इति कुरवकपुष्पं दद्यात् । ततो धूपदीपाद्युपचारान्दत्वा पुष्पांजल्यंते छत्रचामरादिराजोपचारान्समर्प्य । सर्वमंगलमांगल्ये इति पूर्वोक्तेन— महिषघ्नि महामाये चामुंडे मुंडमालिनि । द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोस्तु ते । कुंकुमेन समालब्धे चंदनेन विलेपिते । बिल्वपत्रमहामाले दुर्गेऽहं शरणं गतः । इति मंत्रैर्बद्धांजलिः प्रार्थयेत् । ततो माषभक्तबलिं कूष्मांडादिबलिं वा यथाधिकारं दद्यात् । देवीगृहेऽहोरात्रं दीपः संस्थाप्यः । अखंडं दीपकं देव्याः प्रीतये नवरात्रके । प्रज्वालयेदहोरात्रमेकचित्तो धृतव्रतः । इति वचनात् ।

**सप्तशत्यादिजपप्रकार** उक्तो मत्स्यसूक्ते । प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां पठेत् । अंते च प्रणवं दद्यादित्युवाचादिपूरुषः । आधारे स्थापयित्वा तु पुस्तकं वाच-

खितं तच्चापि विफलं भवेत् । शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः । न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनं । ऋषिछंदादि विन्यस्य पठेत्स्तोत्रं विचक्षणः । स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत् । संकल्पितस्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः । अध्यायं प्राप्य विरमेन्न तु मध्ये कथंचन । कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः । इत्यादि ज्ञात्वा पठेत् । शरत्काले महापूजा क्रियते या च वार्षिकी । तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः । सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः । मनुष्यो मत्प्रसादेन भविष्यति न संशयः । इति श्रवणमुक्तं तत्तु ब्राह्मणादेव कर्तव्यं । वाचकं ब्राह्मणं विद्यान्नान्यवर्णजमादरात् । इति भविष्यत्पुराणात् ।

कुमारीपूजनमुक्तं हेमाद्रौ स्कांदे । एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च । द्विगुणं त्रिगुणं वापि पूजयेन्नवकं वरं । नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन च । एकवृद्ध्या लभेत्क्षेत्रमेकैकेन श्रियं लभेत् । एकवर्षा तु या कन्या पूजार्थं तां विवर्जयेत् । गंधपुष्पफलादीनां प्रीतिस्तस्या न विद्यते । द्विवर्षकन्यामारभ्य दशवर्षावधि क्रमात् । पूजयेत्सर्वकार्येषु यथाविध्युक्तमार्गतः । कुमारिका द्विवर्षा तु त्रिवर्षा च त्रिमूर्तिनी । चतुर्वर्षा तु कल्याणी पंचवर्षा तु रोहिणी । षड्वर्षा तु भवेत्काली सप्तवर्षा तु चंडिका । अष्टवर्षा शांभवी तु दुर्गा तु नवमी स्मृता । दशवर्षा सुभद्रेति नामभिः परिकीर्तिताः । अतऊर्ध्वं तु याः कन्याः सर्वकार्येषु वर्जिताः । दुःखदारिद्र्यनाशाय शत्रूणां नाशनाय च । आयुष्यबलवृद्ध्यर्थं कुमारीं पूजयेन्नरः । आयुष्कामस्त्रिमूर्तिं तु त्रिवर्गस्य फलाप्तये । अपमृत्युव्याधिपीडादुःखानामपनुत्तये । कल्याणीं पूजयेद्धीमान्नित्यं कल्याणवृद्धये । आरोग्यसुखकामी च जयकामी तथैव च । यशस्कामी नरो नित्यं रोहिणीं परिपूजयेत् । विद्यार्थी च जयार्थी च राज्यार्थी च विशेषतः । शत्रूणां च विनाशार्थी कालिकां पूजयेन्नरः । संग्रामे जयकामी च चंडिकां परिपूजयेत् । दुःखदारिद्र्यनाशाय नृपसंमोहनाय च । महापापविनाशाय शांभवीं च प्रपूजयेत् । सबलोत्कटशत्रूणामुग्रसाधनकर्मणि । दुर्गां दुर्गविनाशाय पूजयेत्प्रयतो बुधः । सौभाग्यधन-

धान्यादिवांछितार्थफलाप्तये । सुभद्रां पूजयेन्मर्त्यो दासीदासविवृद्धये । प्रातःकाले विशेषेण कृताभ्यंगो विशेषतः । आवाहयेत्ततः कन्यां मंत्रेणानेन भार्गव । मंत्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीं । नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहं । ततः संपूजयेद्धीमानेभिर्मंत्रैः पृथक्पृथक् । जगत्पूज्ये जगद्वंद्ये सर्वशक्तिस्वरूपिणि । पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते । त्रिपुरां त्रिपुराधारां त्रिवर्गां ज्ञानरूपिणीं । त्रैलोक्यवंदितां देवीं त्रिमूर्तिं पूजयाम्यहं । कलात्मिकां कलातीतां कारुण्यहृदयां शिवां । कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहं । अणिमादिगुणाधारामकाराद्यक्षरात्मिकां । अनंतशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहं । कामचारीं शुभां कांतां कालचक्रस्वरूपिणीं । कामदां करुणोदारां कालीं संपूजयाम्यहं । चंडवीरां चंडमायां चंडमुंडप्रभंजनीं । पूजयामि सदा देवीं चंडिकां चंडविक्रमां । सदानंदकरीं शांतां सर्वदेवनमस्कृतां । सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहं । दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीं । पूजयामि सदा भक्त्या दुर्गां दुर्गतिनाशिनीं[1] । सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीं । सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहं । एवमभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः । कंचुकैश्चैव वस्त्रैश्च गंधपुष्पाक्षतादिभिः । नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः । हीनाधिकांगीं कुष्ठादिविकारां कुनखां तथा । ग्रंथिस्फुटितगर्भांगीं रक्तपूयव्रणांकितां । जात्यंधां केकरीं काणीं कुरूपां तनुरोमशां । संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवां । अरोगिणीं सुपुष्टांगीं सुरूपां व्रणवर्जितां । एकवंशसमुद्भूतां कन्यां सम्यक्प्रपूजयेत् । ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजां । लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजां । दारुणे चांत्यजातीनां पूजयेद्विधिनादरात् । इति कुमारीपूजा । एवं द्वितीयादिनवमीपर्यंतासु तिथिषु पूजादिकं कार्यं ।

साश्वस्य तु अश्वपूजनमुक्तं हेमाद्रौ देवीपुराणे—आश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने । पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमावहत् । तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया

---

[1] 'दुर्गार्तिनाशिनीं'.

सह । पूजनीयाश्च तुरगा नवमीं यावदेव हि । शांतिस्वस्त्ययनं कार्यं तदा तेषां दिने दिने । धान्यं भल्लातकं कुष्ठं वचा सिद्धार्थकांस्तथा । पंचवर्णेन सूत्रेण ग्रंथिं तेषां तु बंधयेत् । वायव्यैर्वारुणैः सौरैः शाक्तैर्मंत्रैः सवैष्णवैः । वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिनेदिने । तुरंगा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः । दारिद्यतः कश्चित्तत्र न च वाह्याः कथंचन । इत्यश्वपूजा ।

राज्ञो **लोहाभिसारिकमुक्तं हेमाद्रौ भविष्योत्तरे**–जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् । लोहाभिसारिकं कर्म कारयेद्यावदष्टमीं । प्रागुदक्प्रवणे देशे पताकाभिरलंकृते । मंडपं कारयेद्दिव्यं नवसप्तकरं शुभं । आग्नेय्यां कारयेत्कुंडं हस्तमात्रं सुशोभनं । मेखलात्रयसंयुक्तं योन्याश्वत्थदलाभया । राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च । आनीय मंडपे तानि सर्वाण्येवाधिवासयेत् । ततस्तु ब्राह्मणः स्नातः शुक्लांबरधरः शुचिः । ॐकारपूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्धृतं । लोहनामाभवत्पूर्वं दानवः सुमहाबलः । स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः । तदंगसंभवं सर्वं लोहं यद्दृश्यते क्षितौ । लोहाभिसारिकं कर्म तेनैतदृषिभिः स्मृतं । शस्त्रास्त्रमंत्रैर्होतव्यं पायसं घृतसंयुतं । केवलघृतहोमस्तु राजचिह्नमंत्रैरिति **हेमाद्रिः** । हुतशेषं तुरंगाणां राजान्नमुपहारयेत् । बद्धपल्ययनांस्तत्र गजाश्वान्समलंकृतान् । भ्रामयेन्नगरे नित्यं नंदिघोषपुरस्सरं । प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः । पूजयेद्राजचिह्नानि फलमाल्यानुलेपनैः । हुतशेषं प्रदातव्यमौपनायनिके गजे । तस्याभिसरणाद्राज्ञो विजयः समुदाहृतः ।

**शस्त्रास्त्रपूजामंत्राः** । पूजामंत्रान्प्रवक्ष्यामि पुराणोक्तानहं तव । यैः पूजिताः प्रयच्छंति कीर्तिमायुर्यशो बलं । यथा चंद्रश्छादयति शिवायेमां वसुंधरां । तथाच्छादय राजानं विजयारोग्यवृद्धये । इति छत्रमंत्रः । गंधर्वकुलजातस्त्वं मा भूयाः कुलदूषकः । ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च । प्रभावाच्च हुताशस्य वर्धयस्व तुरंगम । तेजसा चैव सूर्यस्य ऋषीणां तपसा तथा । रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च । स्मर त्वं राजपुत्रं च कौस्तुभं च मणिं स्मर ।

---

१ 'सूक्तैर्मंत्रैः सर्वैश्च वैष्णवैः'.

यां गतिं पितृहा गच्छेद्ब्रह्महा मातृहा तथा । भूमिहानृतवादी च क्षत्रियश्च पराङ्मुखः । सूर्याचंद्रमसौ वायुर्यावत्पश्यंति दुष्कृतिं । व्रज त्वं तां गतिं क्षिप्रं तव पापं भवेत्तदा । विकृतिं यदि वांछन्तो युद्धेऽध्वनि तुरंगम । रिपून्विजित्य समरे सह भर्त्रा सुखी भव । इति अश्वस्य । शक्रकेतो महावीर्य श्यामवर्णार्चयाम्यहं । पक्षिराज नमस्तेऽस्तु तथा नारायणध्वज । काश्यपेयामृतभ्रातर्नागारे विष्णुवाहन । अप्रमेय दुराधर्ष रणे देवारिसूदन । गरुत्मान्मारुतगतिस्त्वयि संनिहितो यतः । अस्त्रचर्मायुधान्यत्र रक्ष त्वं च रिपून्दह । इति ध्वजस्य । कुमुदैरावणः पद्मः पुष्पदंतोऽथ वामनः । सुप्रतीकोऽजनो नील एते वै देवयोनयः । तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः । भद्रो मंद्रो मृगश्चैव राजसंकीर्ण एव तु । वने वने प्रसूतास्ते स्मर योनिं महागज । पांतु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः । भर्तारं रक्ष नागेंद्र स्वामिवत्प्रतिपाल्यतां । अवाप्नुहि जयं युद्धे गमने स्वस्तितो व्रज । श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोऽनिलात् । स्थैर्यं मेरोर्जयं रुद्राद्वीर्यं देवात्पुरंदरात् । युद्धे रक्षंतु नागाश्च दिशाश्च सह देवतैः । अश्विनौ सह गंधर्वैः पांतु त्वां सर्वतः सदा । इति गजस्य । हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः । नागकिन्नरगंधर्वा यक्षभूतगणा ग्रहाः । प्रमत्तसुमहादेव्यो भूतेशो मातृभिः सह । शक्रः सेनापतिः स्कंदो वरुणः पार्श्वदास्त्विह । प्रदहंतु रिपून्सर्वान्राजा विजयमृच्छतु । यानि प्रयुक्तान्यरिभिर्दूषणानि समंततः । पतंतूपरि शत्रूणां हतानि तव तेजसा । कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने । हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा । शोभितासि तथैवाद्य शोभया समयं स्मर । नीलां श्वेतामिमां दृष्ट्वा नश्यंत्वाशु नृपारयः । व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः । सद्यः स्वस्था भवंत्वस्मात्त्वद्धातेनोपमार्जिताः । पूतना रेवती गौरी कालरात्रीति या स्मृता । दहस्वाशु रिपून्सर्वान्पताके त्वं स्मृता मया । इति पताकामंत्रः । असिर्विशसनः खड्गो विकर्मा च दुरासदः । श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च । इत्यष्टौ

देवो महेश्वरः । हिरण्यं च शरीरं ते धाता देवो जनार्दनः । पिता पितामहो देवस्तन्मां पालय सर्वदा । इयं येन धृता क्षोणी हतश्च महिषासुरः । तीक्ष्णधाराय खड्गाय तस्मै शुद्धाय ते नमः । इति खड्गमंत्रः । शर्मप्रदस्त्वं समरे वर्म सर्वायसो हृदि । रक्ष मां रक्षणीयोऽहं न हंतव्यो नमोऽस्तु ते । वर्ममंत्रः । दुंदुभे त्वं सपत्नानां घोषाद्धृदयकंपनः । भव भूमिपसैन्यानां तथा विजयवर्धनः । यथा जीमूतघोषेण प्रहृष्यंति सुबर्हिणः । तथास्तु तव शब्देन हर्षोऽस्माकं सुखावहः । यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते । तथाच तव शब्देन त्रस्यंत्वस्मद्द्विषो रणे । इति दुंदुभिमंत्रः । सर्वायुध महामात्र सर्वदेवारिसूदन । शिवभूमासि सैन्यानां तथा विजयवर्धनः । चाप मां सर्वदा रक्ष साकं सायकसत्तमैः । धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च । त्रयीमूर्तिगतं देवं धनुरस्त्रं नमाम्यहं । इति चापस्य । पुण्यस्त्वं सर्वपुण्यानां मंगलानां च मंगलं । विष्णुना विधृतो नित्यमतः शांतिप्रदो भव । इति शंखमंत्रः । शशांककरसंकाश हिमडिंडीरपांडुर । प्रोत्सारयाशु दुरितं चामरामरवल्लभ । इति चामरमंत्रः । सर्वायुधानां प्रथमा निर्मितासि पिनाकिना । शूलायुधाग्रान्निष्कृष्य कृत्वा मुष्टिग्रहं शुभं । चंडिकायाः प्रदत्तासि सर्वदुष्टनिवर्हिणी । तया विस्तारिता चासि देवानां प्रतिपादिता । सर्वसत्वांगभूतासि शुंभासुरनिवर्हिणी । छुरिके रक्ष मां नित्यं शांतिं यच्छ नमोऽस्तु ते । इति छुरिकामंत्रः । प्रोत्सारणाय दुष्टानां साधुसंहग्रणाय च । ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये । यशो देहि सुखं देहि जयदो भव भूपतेः । ताडयाशु रिपून्सर्वान्हेमदंड नमोऽस्तु ते । इति कनकदंडमंत्रः । विजयो जयदो नाम रिपुघ्नोऽतिप्रियंकरः । दुःखहा धर्मदः शांतः सर्वारिष्टविनाशनः । एतेऽष्टौ सन्निधौ प्रोक्तास्तव सिंहा महाबलाः । तेन सिंहासनेति त्वं विप्रैर्वेदेषु गीयते । त्वयि स्थितः शिवः शांतस्त्वयि शक्रः सुरेश्वरः । त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः । नमस्ते सर्वतोभद्र सर्वदो भव भूपतेः । त्रैलोक्यजयसर्वस्व सिंहासन नमोऽस्तु ते । इति सिंहासनमंत्रः । लोहाभिसारिकं कर्म कृत्वैवं विधिपूर्वकं ।

फलनैवेद्यकुसुमैर्धूपदीपविलेपनैः। इति लोहाभिसारिकं कर्म।

नवरात्रगतषष्ठ्यां बिल्वशाखायां देवीप्रबोधः कर्तव्यः। तदुक्तं हेमाद्रौ लैंगे। रावणस्य वधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा। अहमप्याश्रितः षष्ठ्यां सायाह्ने बोधयाम्यतः। श्रीशैलशिखरे जात श्रीफल श्रीनिकेतन। नेतव्योऽसि मया गच्छ पूज्यो दुर्गास्वरूपतः। इति। सप्तम्यां प्रातस्तां शाखां गृहं प्रवेशयेत्। तदपि तत्रैव। मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत्। उभाभ्यां नवबिल्वस्य फलाभ्यां शाखिकां तथा। इति। तां शाखां देव्युत्तरभागे स्थापयित्वा तत्रापि देवीमावाह्य पूजयेत्।

नवरात्रगतमूलनक्षत्रे सरस्वतीस्थापनमुक्तं रुद्रयामले—मूलर्क्षे च सुराधीश पूजनीया सरस्वती। पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम्। नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन। पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः। इति। संग्रहेऽपि—आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम्। मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्। इति। प्रतिपदादौ एकभक्तादिनियमपक्षेऽप्यष्टम्यां पूर्ववत्पूजां कृत्वा उपवास एव कर्तव्यः। पुष्पैश्च द्रोणबिल्वाम्रजातीपुन्नागचंपकैः। द्रोणः कुरवकः। विचित्रां रचयेत्पूजामष्टम्यामुपवासयेत्। दुर्गाग्रतो जपेन्मंत्रमेकचित्तः सुभावितः। तदर्धयामिनीशेषे विजयार्थं नृपोत्तमः। पंचाब्दं लक्षणोपेतं महिषासुरपूजितं। विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत्। ॐकालि कालि वज्रेश्वरि लोहदंडायै नमः। इति मंत्रः। तस्योत्थं रुधिरं मांसं गृहीत्वा पूतनादिषु। नैर्ऋताय प्रदातव्यं महाकौशिकमंत्रितं। इति हेमाद्र्युदाहृतदेवीपुराणात्। मंत्रो वक्ष्यते। तत्राष्टम्यां भद्रकाली दक्षयज्ञविघातिनी। प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह। अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः। उपोषितैर्वस्त्रधूपदीपमाल्यानुलेपनैः। आमिषैर्विविधैः शाकैर्होमैर्ब्राह्मणतर्पणैः। बिल्वपत्रैः श्रीफलैश्च चंदनेन घृतेन च। नवम्यां तु कृतस्नानैः सर्वैः पूज्यास्तु ब्राह्मणाः। इति हेमाद्र्युदाहृतब्रह्मपुराणात्। अत्र रात्रौ जागरणं पूजा च कर्तव्या। दत्त्वैवमथ

कौरव्य अष्टम्यां जागरं निशि । नटनर्तकगीतैश्च कारयेत्सुमहोत्सवं । इति हेमाद्र्युदाहृतभविष्योत्तरात् । कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा । नवम्यां पूजयेद्देवीं गीतवादित्रनिःस्वनैः । शुक्लपक्षे चतुर्थ्यां तु देवीकेशविशोधनं । प्रातरेव तु पंचम्यां स्नापयेत्सलिलैः शुभैः । सप्तम्यां पत्रिकापूजा अष्टम्यामप्युपोषणम् । पूजनं जागरश्चैव नवम्यां विधिवद्बलिः । संप्रेषणं दशम्यां तु रथमारोप्य वै पुरे । इति कालादर्शोदाहृतदेवीपुराणात् । कन्यासंस्थे रवावीशां शुक्लाष्टम्यां प्रपूजयेत् । सोपवासो निशार्धे तु महाविभवविस्तरैः । इति तिथितत्त्वोदाहृतदेवीपुराणाच्च । अष्टम्युपवासफलमुक्तं तिथितत्त्वे देवीपुराणे—एकादशीकोटिसहस्रतुल्या सिताष्टमी पर्वतराजपुत्र्याः । ततोऽपि शुक्ला गुणिता शतेन पराशरव्यासवसिष्ठमुख्यैः । इति । अत्र पूजादौ तिथिनिर्णयोऽष्टमीनिर्णयप्रकरणे वक्ष्यते । नवम्यामपि पूजोक्ता हेमाद्रौ भविष्योत्तरे—अष्टम्यां च नवम्यां च जगन्मोक्षप्रदांबिकां । पूजयित्वाश्विने मासि विशोको जायते नरः । संतर्जयंती हुंकारैर्विघ्नाद्युच्छेदकृत्परा । नवम्यां पूजिता देवी दद्यात्यनवमं फलम् । सा पुण्या सा पवित्रा च सुधर्मसुखदायिनी । तस्यां सदा पूजनीया चामुंडा मुंडमालिनी । तस्यां ये ह्युपयुज्यंते प्राणिनो महिषादयः । सर्वे ते स्वर्गतिं यांति घ्नतां पापं न विद्यते । न तथा बलिदानेन पुष्पधूपविलेपनैः । यथा संतुष्यते मेषैर्महिषैर्विंध्यवासिनी । इत्याद्युपक्रम्य । अष्टम्यां पूजाजागरणे उक्त्वोक्तं—हृष्टैर्निशां ततो नीत्वा प्रभाते अरुणोदये । घातयेन्महिषान्मेषानग्रतो नतकंधरान् । शतमर्धशतं वापि तदर्धं वा यथेच्छया । सुरासवभृतैः कुंभैस्तर्पयेत्परमेश्वरीम् । कापालिकेभ्यस्तद्देयं तथा चेष्टजनेष्वपि । विभज्य सर्वं कौंतेय सुहृत्संबंधिबंधुषु । ततोऽपराह्णसमये नवम्यां स्यंदने स्थिताम् । भवानीं भ्रामयेद्राष्ट्रे स्वयं राजा स्वसैन्यवान् । सुविदग्धैः पुरुषैर्वा रथयुक्तैः सुपूजितैः । शनैः शनैरंबिकाया ज्वलद्भिर्दीपवृक्षकैः । आकृष्टखड्गैर्योधैश्च धानुष्कैः सुप्रवल्गितैः । नदद्भिः शंखपटहैर्नृत्यद्भिर्बहुचारकैः । कश्चिच्चोपोषितो वीरो विधृतोऽन्येन खड्गिना । भूतेभ्यस्तु

अष्टम्युपवासफलं ।

नवम्यां विशेषः ।

---

बलिं दद्यान्मंत्रेणानेन सामिषम्। सरक्तं सजलं चान्नं गंधपुष्पाक्षतैर्युतम्। त्रींस्त्रीन्वारांस्त्रिशूलेन दिग्विदिक्षु क्षिपेद्बलिम्। बलिं गृह्णंत्विमं देवा आदित्या वसवस्तथा। मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः। असुरा यातुधानाश्च पिशाचोरगराक्षसाः। डाकिन्यो यक्षवेताला योगिन्यः पूतनास्तथा। जृंभकाः सिद्धगंधर्वा माला विद्याधराः पराः। दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः। जगतां शांतिकर्तारो ब्रह्माद्याश्च महर्षयः। मा विघ्नं मा च मे पापं मा संतु परिपंथिनः। सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाः। इत्येवं भ्रामयेद्राष्ट्रे दुर्गां देवीं रथस्थिताम्। नरयानेन वा पार्थ ततोऽविघ्नं समापयेत्। एवं ये कुर्वते यात्रां राजानोऽन्येऽपि मानवाः। महानवम्यां नंदायाः पुत्रिकाहृष्टमानसाः। ते सर्वे पापनिर्मुक्ता यांति भागवतीं पुरीम्। नीरुजाः सुखिनो भोगान्भोक्तारो रोगवर्जिताः। भवंति पुरुषा भक्ता भगवत्याः किमुच्यते। इति बलिदानादिकमुक्तम्। तत्र **पशुरूपबलिदाने** इतिकर्तव्यतोक्ता कालिकापुराणे—उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा। निरीक्ष्य साधकः पश्चादिमं मंत्रमुदीरयेत्। पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः। प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्। चंडिकाप्रीतिदानेन दातुरापद्विनाशनम्। चामुंडाबलिरूपाय बले तुभ्यं नमोस्तु ते। यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयंभुवा। अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः। ऐंह्रींश्रीमिति मंत्रेण तं बलिं मत्स्वरूपिणम्। चिंतयित्वा न्यसेत्पुष्पं मूर्ध्नि तस्य तु भैरव। अभिषिच्य बलिं पश्चात्करवालं तु पूजयेत्। रसना त्वं चंडिकायाः सुरलोकप्रसाधक। ह्रीं ह्रीं खड्गेति मंत्रेण ध्यात्वा खड्गं च पूजयेत्। पूजयित्वा ततः खड्गं आंह्रीं फडिति मंत्रकैः। गृहीत्वा विमलं खड्गं छेदयेद्बलिमुत्तमं। ॐ ह्रीं ऐं ह्रीं कौशिकीति रुधिरेणाप्यायतामिति। स्थाने नियोजयेद्रक्तं शिरश्च संप्रदीपकम्। एवं दत्वा बलिं पूर्णं फलं प्राप्नोति साधकः। बलिदाने तु दुर्गायाः सर्वत्रैष विधिः स्मृतः इति। इदं बलिदानं अग्नीषोमीयपशुवद्वैधमपि। तदर्धयामिनीशेषे

(margin: पशुबलावितिकर्तव्यता।)

---

१ 'पिशाचा मातरो गणाः'; 'मातरोरगाः'.

विजयार्थं नृपोत्तमः। पंचाब्दं लक्षणोपेतं गंधपुष्पस्रगर्चितमित्यादौ क्षत्रियादेरेवाधिकार इत्युक्तत्वात्। तस्यापि काम्यमेव। विजयार्थमित्युक्तेः। ब्राह्मणस्य तु न भवत्येव। तस्य सात्त्विकपूजायामेवाधिकार इत्युक्तत्वात्। तत्र मांसादेर्निषेधात्। लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च। तस्मात्सा तत्र संपूज्या नवम्यां चंडिका बुधैः। इति तिथितत्त्वे भविष्याच्च पूजैव कार्या। ब्राह्मणेनापि बलिदानं कर्तव्यं चेन्माषभक्तादिना कार्यम्। माषकुल्माषमांसाद्यैर्देयो दिक्षु बलिर्निशि। कूष्मांडमिक्षुदंडश्च मद्यमासव एव च। एते बलिसमा ज्ञेयास्तृप्तौ छागसमाः स्मृताः। इति कालिकापुराणात्। छागाभावे तु कूष्मांडं श्रीफलं वा मनोहरं। वस्त्रसंवेष्टितं कृत्वा छेदयेच्छुरिकादिना। इति रुद्रयामलात्। होमैर्ब्राह्मणतर्पणैरिति पूर्वोदाहृतब्रह्मपुराणेन। पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणमित्यनेन चाष्टम्यां, नवम्यां बलिदानं च कर्तव्यं वै यथाविधि। जपं होमं च विधिवत्कुर्यात्तत्र विभूतये। इति नवम्यां च होमविधानात् अष्टम्यामारभ्य नवम्यां समापनीयः। शिष्टसमाचारात् नवम्यामेव वा कार्यः। होमद्रव्यं च तिलाज्यादिकम्। पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः। इति देवीपुराणात्। मंत्रश्च जयंतीत्यादिः। अनेनैव तु मंत्रेण पूजाहोमादि कारयेत्। इति देवीपुराणात्। प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा। इति रहस्येऽभिधानान्मार्कंडेयपुराणगतसप्तशत्याः प्रतिश्लोकेन स्वाहांतेन तिलसर्पिर्युतपायसेन वा कार्यः। अत्र पूजाहोमादौ नवमी पूर्वविद्धा, बलिदाने तूत्तरेति नवमीनिर्णयप्रकरणे वक्ष्यते। एवंच नवम्यां पूजाहोमबलिदाने कृते हेमाद्र्युदाहृतपुराणेषु नवम्यां उपवासविधानाभावात्। विभज्य सर्वं कौंतेय सुहृत्संबंधिबंधुषु। इत्यनेन बलिदानोत्तरं पूर्वाह्ण एव सुरासवादिदानविधानात्। अपराह्णे विहितयात्राकाले। कश्चिच्चोपोषितो वीरो विधृतोऽन्येन खड्गिना। भूतेभ्यस्तु बलिं दद्यान्मंत्रेणानेन सामिषं। इत्यनेन बलिदानकर्तुरेव तावत्पर्यंतमुपोष्यत्वाभिधानात्। ततोऽविघ्नं समापयेदिति अग्रे समाप्तिश्रवणाच्च। नवम्यां पूर्ववत्पूजा कर्तव्या भूतिमिच्छता। दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत्। इति तिथि-

तत्त्वोदाहृतमत्स्यसूक्तेन नवम्यामेव दक्षिणाविधानात् । वर्हिंषि पूर्णपात्रं निनयेदेषोऽवभृथः पाकयज्ञानामेतत्तंत्रं हविरुच्छिष्टं दक्षिणेति । ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता । कर्मांतेऽनुच्यमानायां पूर्णपात्रादिका भवेत् । इत्याश्वलायनछंदोगपरिशिष्टादिभिर्दक्षिणायाः कर्मसमाप्तिसमानकालत्वप्रतिपादनात् । प्रकृते नवम्यां दक्षिणाविधानेन नवम्यामेव नवरात्रव्रतसमाप्तिनिश्चयात् । पारणांतं व्रतं ज्ञेयं व्रतांते

नवरात्रपारणानिर्णयः । तद्धि भोजनं । इति व्रतांते विहितं पारणमपि नवम्यामेव कार्यं । अष्टम्यां समुपोष्यैवं नवम्यामपरेऽहनि । मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमं । तेनैव विधिनान्नं तु स्वयं भुंजीत नान्यथा । इति तिथितत्त्वोदाहृतदेवीपुराणेपि नवम्यामेव पारणविधानाच्च । नचात्र मांसश्रवणात्सात्विकपूजाधिकारिब्राह्मणविषयमिदं कथमिति शंक्यं । मत्स्यमांसोपहारेणेति तृतीयया तस्योपसर्जनत्वबोधनात् । नैवेद्यस्यैव प्राधान्यात् तत्रच ब्राह्मणाधिकारस्य निर्विवादत्वात् । एवंच विंध्यवासिन्यां नवरात्रोपवासतः । एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा । पूजनीया जनैर्देवी इति भविष्योत्तरेण उपवासाद्यन्यतमनियमयुक्तैर्नवरात्रे देवी पूजनीयेति विधीयत इति निर्विवादम् ॥ तत्र एकभक्तेनेत्यादितृतीयांतपाठात् उपवासत इत्यत्र आद्यादित्वात्तृतीयांतात्तसिः । नवरात्रे इति पृथगेव पदसंधिस्तु तद्दिनैकादशीव्रतमित्यादाविव छांदसत्वात् । समासस्तु न शंकनीय एव । उपवासत इत्यस्य कर्तृविशेषणत्वेन नवरात्रे इत्यस्य पूजनक्रियाविशेषणत्वेन परस्परमन्वयासंभवात् । शारदीया महापूजा चतुःकर्ममयी शुभा । तां तिथित्रयमासाद्य कुर्याद्भक्त्या विधानतः । इति लिंगपुराणेनापि सप्तम्यष्टमीनवमीषु स्नपनपूजनबलिदानहोमरूपचतुःकर्मात्मकपूजैव विधीयते सातु नवम्यामपि संपन्नैव । तथाच तेनैव विधिनान्नं तु स्वयं भुंजीतेति देवीपुराणेन नवम्यां विधीयमाना पारणा हेमाद्रिनिर्णयामृतमदनरत्नाद्युदाहृतदेवीस्कंदपुराणभविष्यत्पुराणसंमतैवेति सिद्धम् । यत्तु द्वैतनिर्णये शंकरभट्टैः—वासंते नवरात्रे तु पूज्या स्याद्रक्तदंतिकेति प्रक्रम्योक्तं रुद्रयामले—नवम्यां वा विशालाक्ष कार्या

होमादिकाः क्रियाः । पारणं च प्रकुर्वीत देवीपूजनपूर्वकं । इति । नारदीयपुराणे—हविर्द्रव्याणि जुहुयाद्दुर्गाष्टम्यां विशेषतः । रात्रौ जागरणं कुर्याद्गीतवाद्यपुरःसरम् । ततः प्रभाते विमले स्नानं कृत्वा यथाविधि । इत्यादिनाष्टम्युत्तरदिनकृत्यं विधायांतेऽभिहितं—स्वयं च पारणं कुर्यादिष्टबंधुजनैः सह । अहःशेषं समासीत शिष्टैरिष्टैः शिवाप्रियैः । इति नवम्यां पारणा गम्यते । रुद्रयामलेपि—प्रत्यहं पूजनं कुर्यात्त्रिकालं भक्तितत्परः । अष्टम्यां जागरं चैव महापूजनपूर्वकम् । होमं कुर्यान्महारात्रे बलिदानं च माधव । प्रातर्वै पारयेद्देवीं ब्राह्मणान् भोजयेत्तथा । कुमारीणां च नवकं संभोज्य विविधान्नकैः । स्वयं च पारणं कुर्याद्रात्रौ जागरणं तथा । दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत् । इति । अत्राष्टमीकृत्यानंतरं दशमीकृत्याभिषेकादेः पूर्वं पारणा गम्यते । रुद्रयामलेऽष्टमेऽध्याये —आश्विने मासि संप्राप्ते शुक्लपक्षे विधेस्तिथिं । प्रारभ्य नवरात्रं स्याद्दुर्गापूजा च तत्र वै । उपोषणेन नक्तेन एकभक्तेन वा पुनः । हविष्यान्नेन वा देव प्रत्यहं पूजयेच्छिवाम् । व्रतोपवासपूजादौ दिनहानिं च कारयेत् । न देव दिवसस्यात्र वृद्धिः कार्या विजानता । तिथिवृद्धिं च यः कुर्यादज्ञानाज्ज्ञानतोऽपि वा । परलोके भवेत्पीडा प्रेतत्वजनिता स्थिरा । भगवत्यांश्च पीडा स्यादुपवासेन केशव । तस्मान्न वर्धयेद्देव दिवसं दुर्गपूजने । प्रत्यहं पूजने प्रोक्तो विधिर्देव महर्षिभिः । तिथिवृद्धौ न कार्यः स्यात्तस्मान्नो वर्धयेद्दिनम् । अत्रोपवासाधिक्यनिषेधादष्टावेवोपवासाः नतु नवरात्रसमाख्यामात्रेण नवस्युपवासः कर्तव्य इति वदंति । तदेतद्बालसंमोहनमात्रं देवानांप्रिया आद्रियंते । नवम्युपवासविध्यभावे ह्येतदेवं स्यादस्ति त्वसौ— आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव । देविकापूजने प्रोक्ताः सर्वकामफलप्रदाः । इति देवीपुराणम् । अत्र देवीपूजायामिव फलिसंस्कारकोपवासेऽपि नवसंख्या प्राप्नोति । किंच एवंच विंध्यवासिन्यां नवरात्रोपवासितः । इत्यत्रोपवासे कालतत्संख्ययोरपेक्षितत्वात् । नवरात्रे नवसु तिथिषु उपवासितः कृतोपवास इति विग्रहान्नवसंख्यापूरकनवमीरूपकालविधिरुपवासे सिद्ध इत्युक्तं । इदमेव बालसंमोहनम् । तथाहि ।

तेनैव विधिनान्नं तु स्वयं भुंजीत नान्यथेति देवीपुराणवचनांतरेण नवम्यां पारणाविधानात् । प्रथमवाक्ये नवम्युपवासकल्पनाया बाधितत्वात् । नवसु तिथिषु कृतोपवास इत्यर्थाकल्पनात् । उपवासत इत्यस्य—एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा । पूजनीया जनैर्देवीत्यग्रिमेणैवान्वयात्तत्र पूजनीयेति कर्मण्यनीयर्प्रत्ययांतोपस्थापितपूजनक्रियायां प्रथमांतोपस्थितार्थस्य अन्वयासंभवाज्ञानमूलत्वात् । हेमाद्रिनिर्णयामृतमदनरत्नादिषु उपवासत इत्येव पाठेनोपवासित इति पाठस्य प्रामादिकत्वाच्चायुक्तैव । तस्मादयुक्तो द्वैतनिर्णयस्तदनुयायी मयूखादिरपि । अतएव लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च । तस्मात्सा तत्र संपूज्या नवम्यां चंडिका बुधैरिति । नवम्यां पूजा आवश्यकीति । अर्थाद्दशम्यां देवीविसर्जनं नियमत्यागश्चेति । एवं सति यत्केषांचिद्भ्रांतानां नवमीपारणाचरणं तन्मूलभूतवचनकल्पनं च तत्सर्वं शिष्टैः कदाचिदष्टमीयुक्तनवम्यां नवमीकृत्ये जाते द्वितीयनवम्यां क्रियमाणां पारणामुपलभ्य तत्र नवमीप्रयुक्तत्वभ्रांत्या प्रवृत्तमित्युपेक्षणीयमिति कालतत्वविवेचनमपि नवम्यां पारणविधायकदेवीपुराणादिवचनविरोधादुपेक्ष्यं । अतएवैतन्मूलककालनिर्णयकृत्यरत्नावल्यौ अपि । यत्तु कृत्यरत्नावल्यां—तस्मादियं महापुण्या नवमी पापनाशिनी । उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः । इति श्लोको लिखितः सोऽपि पूर्वोदाहृतवचनविरुद्धत्वादाकरालेखनाच्च निर्मूल एव । समूलश्चेत्तर्हि स्वातंत्र्येणोपवासविषयको नतु नवरात्रसंबंधित्वेन । अतएव यानि तु कैश्चिल्लिखितानि नवम्यां पारणविधायकानि वचनानि तानि हेमाद्र्यादिविरुद्धत्वान्निर्मूलानीति निर्णयसिंधुः हेमाद्र्युदाहृतसर्ववचनाविरुद्धमत्स्यसूक्तदेवीपुराणवचनदर्शनाभावप्रयुक्तत्वादुपेक्ष्य एव । अतएव पूर्वोदाहृतवचनद्वैधाद्दाक्षिणात्यानां नवम्यां पारणाचारदर्शनात्, प्राच्यानां तु दशम्यामेव तद्दर्शनात्, यथाचारमेव व्यवस्थोचितेति स्मृतिकौस्तुभः । एवं च दशम्यां पारणबोधका अन्ये अर्वाचीनग्रंथा अपीति विभावनीयम् । तस्मादष्टम्यां समुपोष्यैव नवम्यामपरेऽहनि । मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमं । तेनैव विधिनान्नं तु स्वयं

भुंजीत नान्यथा। इति तिथितत्वोदाहृतदेवीपुराणेन अष्टम्युपवासोत्तरदिने विधीयमानं पारणं। अष्टम्युपवासनवमीसमाप्तिसूचकानां अष्टम्यामुपवासयेदिति। नवम्यां तु कृतस्नानैः सर्वैः पूज्यास्तु ब्राह्मणा इति। ततोऽविघ्नं समापयेदिति हेमाद्र्युदाहृतदेवीब्रह्मभविष्योत्तरपुराणवचनानां—नवम्यां पूर्ववत्पूजा कर्तव्या भूतिमिच्छता। दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत्। इति मत्स्यसूक्तस्य चाविरोधेनैव विधीयत इति नवम्यामेव पारणं युक्तमिति सिद्धं। अतएव—स्वयं च पारणं कुर्यादिष्टबंधुजनैः सह। इति नवम्यां पारणाविधायकद्वैतनिर्णये नारदीयं संगच्छते। यानि तु—अष्टम्या सह कार्या स्यान्नवमी पारणादिने। इति, नवम्यां पारणं कुर्याद्दशमीमिश्रिता न चेत्। इत्यादिवचनानि तानि पूर्वत्रैवोपवासयोग्या शुद्धाधिका विद्धाधिका चाष्टमी तृतीयदिने दशम्यां नवमी च तद्विषयाणि उदाहृतवचनविरोधात्। अतएव—अष्टम्यां जागरं कुर्यान्नवम्यां पारणं तथा। दशम्यां च विसर्गः स्यादभिषेकश्च माधव। नवम्यां च विशालाक्ष कार्या होमादिकाः क्रियाः। पारणं च प्रकुर्वीत देवीपूजनपूर्वकम्। यो मोहात्पारणं कुर्याद्दशमे दिवसे विभो। तद्राष्ट्रं नाशमायाति दुर्भिक्षादिभयं भवेत्। नृपहीनं भवेद्राष्ट्रं दशम्यां पारणे कृते। तस्मात्तु पारयेद्देवीं नवम्यां भक्तितत्परः। नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति। दशम्यां पारिता देवी कुलनाशं करोति वै। तस्मात्तु पारणं कुर्यान्नवम्यां विबुधाधिप। इति नवमीपारणसाधकतया भट्टोजीदीक्षितलिखितडामररुद्रयामलवचनानां स्वातंत्र्येण प्रामाण्याभावेऽपि उदाहृतपुराणवचनोपबृंहिततया[1] प्रामाण्यं संगच्छते। इति नवरात्रपूजाविधिः नवरात्रपारणनिर्णयश्च। विजयादशमीकृत्यं तन्निर्णयश्च दशमीनिर्णयप्रकरणे वक्ष्यते। इत्याश्विनशुक्लप्रतिपन्निर्णयः।

कार्तिकशुक्लप्रतिपदि बल्युत्सवः। तत्र प्रतिपन्निर्णयश्च चतुर्दशीप्रकरणे दीपावलीनिर्णये वक्ष्यते। मार्गशीर्षशुक्लप्रतिपत् बृहत्तपाभिधेति सामान्यनिर्णये उक्तं। रोहिणीप्रतिपद्युक्ता मार्गे मासि सितेतरा। गंगायां यदि लभ्येत सूर्यग्रह-

---

१ 'नोपबृंहणतया'.

शतैः समा । इति तिथितत्त्वे भविष्यं । हुताशन्युत्तरायां फाल्गुनकृष्णप्रतिपदि कर्तव्यमुक्तं हेमाद्रौ पद्मपुराणे–चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा । तस्यां यः श्वपचं दृष्ट्वा स्नानं कुर्यान्नरोत्तमः । निर्णयामृते भविष्योत्तरे स्पृष्ट्वेति पाठः । न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप । भवंति कुरुशार्दूल तस्यां स्नानं समाचरेत् । दिव्यं नीराजनं कुर्यात्सर्वरोगविनाशकं । गोमहिष्यादि यत्किंचित्तत्सर्वं भूषयेन्नृपः । चूर्णवस्त्रा-
धूलिवंदनं । दिभिः सर्वैस्तोरणाधस्ततो नयेत् । ब्राह्मणानां तथा भोज्यं कुर्यात्कुरुकुलोद्भव । इति । भविष्योत्तरे–प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ । कृत्वावश्यककर्माणि संतर्प्य पितृदेवताः । वंदयेद्धोलिकाभूतिं सर्वदुष्टोपशांतये । मंत्रश्च । वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च । अतस्त्वं पाहि नो देवि विभूते भूतिदा भव । इति । मंडिते चर्चिते चैव उपलिप्ते गृहाजिरे । चतुष्कं कारयेच्छ्रेष्ठं वर्णकैश्चाक्षतैः शुभैः । तन्मध्ये स्थापयेत्पीठं शुक्लवस्त्रोत्तरच्छदं । अग्रतः पूर्णकलशं स्थापयेत्पल्लवैर्युतं । साक्षतं सहिरण्यं च सितचंदनचर्चितं । आसने चोपविष्टस्य ब्रह्मघोषेण भारत । चर्चयेच्चंदनैर्नारी अव्यंगांगा सुशोभना । पद्मरागोत्तरपटा श्रेष्ठांशुकविभूषिता । वसुधाद्यं शिरोंतं च दधिदूर्वाक्षतान्वितं । वर्धापयित्वा श्रीखंडमायुरारोग्यवृद्धये । वसुधाद्यमिति चरणद्वयमारभ्य जानुद्वयांसद्वयादिस्पर्शक्रमेण दधिदूर्वाक्षतसहितं श्रीखंडं सुवासिन्यादिनोक्त-
आम्रकुसुमप्राशनं । क्रमेण शिरस्यारोपणरूपं वर्धापनं कृत्वेत्यर्थः । पश्चाच्च प्राशयेद्विद्वांश्चूतपुष्पं सचंदनं । मनोभवस्य सा पूजा ऋषिभिः संप्रकीर्तिता । चूतमग्र्यं वसंतस्य माकंद कुसुमं तव । सचंदनं पिबाम्यद्य सर्वकामसमृद्धये । इति प्राशनमंत्रः । अनंतरं द्विजेंद्राणां सूतमागधवंदिनां । दद्याद्दानं यथाशक्त्या कामो मे प्रीयतामिति । ततो भोजनवेलायां शृतं पाकेन तेन हि । प्राशयेत्प्रथमं चान्नं ततो भुंजीत कामतः । एवं यः कुरुते पार्थ शास्त्रोक्तं फाल्गुनोत्सवं । अनायासेन सिध्यंति तस्य सर्वे मनोरथाः । इति । पुराणसमुच्चयेपि–वृत्ते तुषारसमये सितपंचदश्यां प्रातर्वसंतसमये समुपस्थिते च । संप्राश्य चूतकु-

१ 'तर्हिसर्वे'. २ 'कारयेच्छुक्लं'.

इति । अत्र पूर्वाह्णस्य कर्मकालत्वात्कर्मणो यस्य यः काल इति वचनात् प्रतिपत्सद्वितीया स्यादिति वचनाच्चौदयिकी प्रतिपद्ग्राह्या । दिनद्वये तथात्वे पूर्वैव । वसंतादावेव तद्विधानात् । निर्णयामृते तु पूर्वविद्धा इत्युक्तं । तच्च प्रातः पूर्णिमाकालेऽनुष्ठाने प्रवृत्ते मधुमासे इति, प्रातर्वसंतसमये इत्यादिवचनविरोधात् । अपराह्णेऽनुष्ठाने प्रातर्वसंतसमये इत्यत्र प्रातर्ग्रहणस्य प्राशनानंतरकृत्यविधायक—ततो भोजनवेलायामित्यादिविरोधाच्चिंत्यं । इति पुरुषार्थचिंतामणौ प्रतिपन्निर्णयः ।

**अथ द्वितीया निर्णीयते** । तत्र शुक्लद्वितीया तृतीयायुतैव ग्राह्या । युग्माग्नीति निगमवाक्यात् । ननु युग्मेत्यनेन द्वितीयासामान्यस्यैव प्रतीतेः कथं शुक्लद्वितीयामात्रपरत्वमस्येति चेत् । प्रतिपद्यप्यमावास्येत्यत्र कृष्णप्रतिपदोऽमावास्यायुक्तत्वासंभवात्, तिथ्योर्युग्मं महाफलमित्यनेन शुक्लप्रतिपदमावास्यायुग्मस्यैव प्राशस्त्यबोधनात्, शुक्लप्रतिपद्द्वितीययोर्व्यस्तत्वेन एतद्व्यस्तं महाघोरमित्यनेनानिष्टत्वबोधनात् युग्माग्नीति शुक्लद्वितीयातृतीययोरेव युग्मत्वेन प्राशस्त्यबोधनाच्च, द्वितीया प्रतिपद्युतेत्यापस्तंबवचनस्य निरवकाशत्वापत्तेश्च, तृतीयया युता कार्या द्वितीया नतु पूर्वयेति **माधवोदाहृतव्यासवचनं,** एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । इति **भृगुस्मृति**वचनमपि शुक्लद्वितीयाविषयमेव । कृष्णद्वितीया तु पूर्वयुतैव ग्राह्या । द्वितीया प्रतिपद्युतेत्यापस्तंबवचनाच्च । एतस्य शुक्लद्वितीयाविषयत्वे निगमवाक्यविरोधापत्तेः कृष्णाविषयकमेवेदं । तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः । वेदादधस्ताद्व्युन्युस्ता उपवासे तिथीस्त्विमाः । इति **नारदीयपुराण**वचनमपि । कृष्णद्वितीयापि मुहूर्तत्रयात्मकपूर्वाह्णस्पर्शिन्येव पूर्वा । पूर्वाह्णानंतरं प्रवृत्ता तु कृष्णाप्युत्तरैव । प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी । पौर्वाह्णिकी प्रकर्तव्या द्वितीया तादृशी विभो । इति **हेमाद्रिमाधवाद्युदाहृतस्कंदपुराण**वचनात् । तादृशी संमुखी । तथाच पूर्वाह्णस्पर्शिन्येव पूर्वविद्धेत्यर्थः । एतस्यापि शुक्लद्वितीयाविषयत्वे अप्राप्तस्य पूर्वविद्धत्वस्य पौर्वाह्णिकत्वस्य च

विधातव्यत्वेन गौरवापत्तेः । कृष्णद्वितीयाविषयत्वे तु तस्याः पूर्वविद्धात्वस्य वचनांतरेण प्राप्तत्वात्, अप्राप्तपौर्वाह्णिकत्वमात्रविधाने लाघवात् । तस्मात्पूर्वदिने उदयानंतरं प्रवृत्ता शुक्लद्वितीया पूर्वाह्णानंतरं प्रवृत्ता कृष्णाप्युत्तरैव । शुद्धाधिका द्वितीयदिने मुहूर्तत्रयान्न्यूनत्वे पूर्वैवेति सिद्धं । द्वितीया सर्वाप्युत्तरा, पूर्वविद्धाविधायकवचनानि यमद्वितीया अशून्यशयनद्वितीयाविषयाणीति **निर्णयामृते** उक्तं, तत्सामान्यविषयकपूर्वविद्धाविधायकवचनानां विशेषमात्रपरत्वेन संकोचे प्रमाणाभावाद्धेमाद्रिमाधवमदनरत्नादिविरोधाच्चोपेक्ष्यं । इति द्वितीयासामान्यनिर्णयः ।

चैत्रशुक्लद्वितीयायां उमादिपूजोक्ता **निर्णयामृते भविष्योत्तरे**—चैत्रशुक्लद्वितीयायामुमापूजा फलार्थिभिः । शिवपूजाग्निपूजा च कर्तव्या मुनिसत्तम । इति । **हेमाद्रौ देवीपुराणे**—उमां शिवं हुताशं च द्वितीयायां प्रपूजयेत् । हविष्यमन्नं नैवेद्यं देयं गंधार्चनान्वितं । प्रकरणाद्दमनमित्यर्थः । फलमाप्नोति विप्रेंद्र सर्वक्रतुसमुद्भवं । इति । अत्र दैविकत्वात्पौर्वाह्णिकी

अशून्यव्रतं । द्वितीया ग्राह्या । चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु । अशून्याख्यं व्रतं कुर्याज्जयया तु फलाधिकं । इति श्रावणादिकृष्णद्वितीयासु अशून्यव्रतमुक्तं । तत्र चंद्राय चार्घ्यो दातव्यो दध्यक्षतफलादिभिः । इति चंद्रार्घ्यविधानात् । एकभक्ते दिवानक्ते निशि चंद्रोदयव्रते । तिथिस्तात्कालिकी ग्राह्या पारणे त्वपरा तिथिः । इति **मदनरत्ना**द्युदाहृतस्मृतिसंग्रहे चंद्रोदयव्यापिनी ग्राह्येत्युक्तत्वात् । पूर्वदिने एव तद्व्याप्तौ पूर्वा । उभयत्र तद्व्याप्तावव्याप्तौ च जयया च फलाधिकमित्युक्तत्वा-

यमद्वितीया । त्परैवेति । ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमं । स्नानं कृत्वा भानुजायां यमलोकं न पश्यति । इति **स्कांदे** । तथा—कार्तिके शुक्लपक्षस्य द्वितीयायां तु नारद । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः । अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता । अस्यां निजगृहे विप्र न भोक्तव्यं ततो बुधैः । स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनं । दानानि च प्रदेयानि भगिनीभ्यो विधानतः । सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नका । इति । प्रतिपन्नका भगिनीत्वेन कल्पिता इत्यर्थः । इयं

मध्याह्नस्य भोजनकालत्वाद्भोजने मध्याह्नव्यापिनी यमपूजने त्वपराह्णव्यापिनी ग्राह्या। दिनद्वये तद्व्याप्तावव्याप्तौ च युग्माग्नीतिवचनादुत्तरैव। हेमाद्रौ ब्रह्मपुराणे–बृहस्पतौ द्वितीयायां विधिवद्विधिपूजनं। कृत्वा नक्तं समश्नीयाल्लभते भूतिमीप्सितां। विधिर्ब्रह्मा तत्पूजनं च गायत्र्या अन्येन वा वैदिकेन नाममंत्रेण वा कुर्यात्। इति कालखंडे द्वितीयानिर्णयः।

**अथ तृतीया निर्णीयते।** सा च रंभाव्रत एव पूर्वविद्धा तदरिक्तव्रतादिषूत्तरैव। तदुक्तं **हेमाद्रौ ब्रह्मवैवर्ते**–रंभाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम। अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते। गणश्चतुर्थी। द्वितीययानुविद्धा च तृतीया न कदाचन। कर्तव्या व्रतिभिस्तात धर्मकामार्थतत्परैः। विहायैकां तु रंभाख्यां तृतीयां पुण्यवर्धिनीं। तच्चात्र ऋषिभिः प्रोक्तं वचनं कृत्तिकासुत। बृहत्तपा तथा रंभा सावित्री वटपैतृकी। कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः। नान्येषु संमुखी कार्या तृतीया चाष्टमी द्विज। इति। युग्माग्नीति युग्मवाक्यमपि रंभातृतीयाविषयमेव। **ब्रह्मवैवर्ते**–तृतीया तु न कर्तव्या द्वितीयोपहिता विभो। द्वितीयया युतां तां तु यः करोति नराधमः। संवत्सरकृतेनेह नरो धर्मेण मुच्यते। द्वितीयाशेषसंयुक्तां तृतीयां कुरुते नृप। स याति नरकं घोरं कालसूत्रं भयंकरं। द्वितीयाशेषसंयुक्तां या करोति विमोहिता। सा वैधव्यमवाप्नोति प्रवदंति मनीषिणः। **आपस्तंबः**–चतुर्थीसंयुता या च सा तृतीया फलप्रदा। अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रवर्धिनी। **स्कांदे**–तृतीया तु न कर्तव्या द्वितीयासंयुता तिथिः। या करोति विमूढा स्त्री पुरुषो वा शिखिध्वज। द्वितीयासंयुतां तात पूर्वधर्माद्विलुप्यते। विधवात्वं दुर्भगात्वं भवेन्नैवात्र संशयः। कलाकाष्ठापि या चैव द्वितीया संप्रदृश्यते। सा तृतीया न कर्तव्या कर्तव्या गणसंयुता। यदीच्छेत्परमं पुण्यं व्रतकर्ता शिखिध्वजेति। **भविष्यत्पुराणे**–कार्या द्वितीयया सार्धं न तृतीया कदाचनेति। अत्र शेषसंयुक्तेति कलाकाष्ठेतिश्रवणात् दशमीवत् अल्पोऽपि द्वितीयया योगो गौरीव्रतेषु त्याज्यः। अतएव द्वितीयादिने मुहूर्तमात्रापि गौरीव्रते ग्राह्येति सूच्यते। अतएव–मुहूर्तमात्र-

सत्वेऽपि दिने गौरीव्रतं परे । शुद्धाधिकायामप्येवं गणयोगप्रशंसनादिति **माधवेनोक्तं** । व्रतांतरे तु त्रिमुहूर्तद्वितीयावेध एव निषिद्धः । द्वितीयदिने त्रिमुहूर्ततृतीयासत्वं मुहूर्तद्वयसत्वं वा आवश्यकं । तथाच द्वितीयदिने मुहूर्तसत्वाभावे गौरीव्रते मुहूर्तद्वयाभावे व्रतांतरेष्वपि पूर्वविद्धैव ग्राह्या । तदाह–**माधवे वसिष्ठः**–एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनीति । कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी । अनंगत्रयोदशी रंभा उपोष्याः पूर्वसंयुताः । इति निगमात् । एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । इति **बृहस्पतिवचनाच्च** । उपवासेऽपि रंभातृतीया पूर्वविद्धा अन्या तूत्तरेति सिद्धं । इति तृतीयासामान्यनिर्णयः ।

**चैत्रशुक्लतृतीया।** तृतीयायां यजेद्देवीं शंकरेण समन्वितां । कुंकुमागरुकर्पूरमणिवस्त्रसुगंधकैः। स्रग्गंधधूमदीपैश्च दमनेन वि-

देव्या आंदोलनं । शेषतः । आंदोलयेत्ततो वत्स शिवोमातुष्टये सदा । रात्रौ जागरणं कार्यं प्रातर्देया च दक्षिणा । इति **हेमाद्रिमदनरत्नोदाहृते स्कांदे । निर्णयामृते च देवीपुराणे**–सौवर्णी तु उमा कार्या राजतः शंकरस्तथा । चतुर्भुजस्तु देवेशो द्विभुजा च उमा भवेत् । इति देवीपूजाद्युक्तं तत्र गणयुक्ता प्रशस्यत इति वचनादुत्तरा ग्राह्या । चैत्रे भाद्रपदे माघे रूपसौभाग्यसौख्यदं । तृतीयात्रयमेतन्मे कृष्ण कस्मान्न कीर्तितमिति **भविष्योत्तरे ।** चैत्रभाद्रपदमाघशुक्लतृतीयासु गौरीव्रतं विहितं। तत्र मुहूर्तमात्राप्युत्तरैव । इति चैत्रतृतीया । अथ **वैशाखतृतीया** । सा अ-

अक्षय्यतृतीया । क्षय्यतृतीया युगादिश्च । तत्र–वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुं । नारायणं पूजयेथाः पुष्पधूपविलेपनैः । इति **निर्णयामृते भविष्योत्तरे** विष्णुपूजोक्ता । तथा । वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च । गंगातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः । तस्यां कार्यो यवैर्होमो यवैर्विष्णुं प्रपूजयेत् । यवान्दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद्यवान् । इति । तथा उदकुंभान्स[1]करकान्सान्नान्सर्वरसैः सह । यवगोधूमचणकान्सक्तून्दध्योदनं तथा । ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते ।

---

१ 'सकनकान्' इति पाठः ।

इति । देवीपुराणे--तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य च । प्रकरणाद्गौरीमित्यर्थः । उदकुंभप्रदानेन शिवलोके महीयते । इति । मंत्रस्तु । एष धर्मघटो[1] दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्सकला मम संतु मनोरथाः । इति । पित्रुद्देशेन दाने तु पूर्वार्धं तदेव । अस्य प्रदानात्तृप्यंतु पितरोऽथ पितामहाः । गंधोदकतिलैर्मिश्रं सान्नं कुंभं फलान्वितं । पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु । इति । यमः--कृतोपवासाः सलिलं ये युगादिदिनेषु तु । दास्यंत्यन्नादिसहितं तेषां लोका महोदयाः । इति । पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः । इति विष्णुपुराणं । अत्र समुद्रस्नानं महाफलं । तदुक्तं सौरपुराणे--युगादौ तु नरः स्नात्वा विधिवल्लवणोदधौ । गोसहस्रप्रदानस्य कुरुक्षेत्रे फलं च यत् । तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवं । इति । अत्र तृतीया पौर्वाह्णिकी ग्राह्या । तदुक्तं भविष्योत्तरे--द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः । शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके । नारदीयेपि--वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता । दुर्लभा बुधवारेण सोमेनापि युता तथा । रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता । भक्त्या कृतापि मांधातः पुण्यं हंति पुराकृतं । गौरी विनायकोपेता रोहिणीबुधसंयुता । विनापि रोहिणीयोगात्पुण्यकोटिप्रदा सदा । इति । गौरी तृतीया । विनायकश्चतुर्थी । इयं कस्मिंश्चित्कल्पे कृतयुगादिः । कस्मिं-

युगादिनिर्णयः । श्चित्त्रेतायुगादिः । तदुक्तं हेमाद्रौ स्कांदे भविष्योत्तरपुराणे च--नवम्यां शुक्लपक्षस्य कार्तिके निरगात्कृतं । राधे सिततृतीयायां त्रेता वै समपद्यत । दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगं । कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः । युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः । इति । नागरखंडे--अधुना शृणु राजेंद्र युगाद्याः पितृवल्लभाः । यासां संकीर्तनेनापि क्षीयते पापसंचयः । नवमी कार्तिके शुक्ला तृतीया माधवे सिता[2] । अमावास्या तपस्ये च नभस्ये च त्रयोदशी । त्रेता कृतकलीनां तु द्वापरस्यादयः क्रमात् । स्नाने दाने जपे होमे विशेषात्पितृतर्पणे । कृतस्याक्षयकारिण्यः सुक्ृ-

१ 'ब्रह्मघटो' इति पाठः । २ 'स्मृता' ।

विष्णुभविष्यत्पुराणयोः—वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे। नभस्यमासस्य तु कृष्णपक्षे त्रयोदशी पंचदशी तु माघे। एता युगाद्याः कथिताः पुराणा अनंतपुण्यास्तिथयश्चतस्रः। इति। ब्रह्मपुराणे—वैशाखे शुक्लपक्षस्य तृतीयायां कृतं युगं। कार्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि। अथ भाद्रपदे कृष्णत्रयोदश्यां तु द्वापरं। माघे तु पौर्णमास्यां च घोरं कलियुगं तथा। युगारंभास्तु तिथयो युगाद्यास्तेन कीर्तिताः। फलं दत्तहुतानां च अनंतं परिकीर्तितं। तत्रैव भविष्यत्पुराणे—वैशाखस्य तृतीया सा समा कृतयुगेन तु। नवमी कार्तिके या तु त्रेतायुगसमा तु सा। त्रयोदशी नभस्ये तु द्वापरेण समा तु सा। माघे पंचदशी राजन्कलिकालसमा स्मृता। उपवासस्तपो दानं श्राद्धं होमो जपस्तथा। यदासु क्रियते किंचित्सर्वं कोटिगुणं भवेत्। इति। कृतयुगेन समेति समग्रेपि कृतयुगे प्रत्यहं क्रियमाणेन कर्मणा यावत्पुण्यं भवति तावदस्यामेकस्यामेव तिथावित्यर्थः। अत्र कस्मिंश्चित्कल्पे माघस्य पौर्णमास्यां कलियुगप्रवृत्तिः, कस्मिंश्चिदमावास्यायामिति कल्पभेदेन व्यवस्था। तत्रापि। नभस्यमासस्य तु कृष्णपक्षे त्रयोदशी पंचदशी तु माघे इत्यत्र अमावास्यांतभाद्रपदकृष्णस्य ग्रहणात् माघस्यापि अमांतस्यैव कृष्णपक्षस्य ग्रहणात् माघ्युत्तरामावास्यैवेति बोध्यं। कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु। हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत्। इत्यादिमात्स्यादिवचनैः, एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिरित्यादिभिश्च युगादौ श्राद्धस्य नित्यत्वाद्वैशाखतृतीयायां श्राद्धं नित्यं। श्राद्धेपि। शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके इति भविष्योत्तरवचने पूर्वाह्णापराह्णयोर्द्वयोरेव श्रवणात्। शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः। कृष्णपक्षापराह्णे तु रौहिणं तु न लंघयेदिति वचनाच्च द्वेधाविभक्तस्याह्नः पूर्वो भागः पूर्वाह्णः। द्वितीयो भागोऽपराह्णः। तत्रापराह्णः पितॄणां तु यापराह्णानुयायिनीत्यादिनापराह्णिकत्वस्य कृष्णायामिव शुक्लायामपि प्रसक्तौ शुक्ले पौर्वाह्णिके इत्यनेन पूर्वाह्णगाया एव विधानात्, गांधर्वकुतपरौहिणेति मुहूर्तत्रयस्यैव युगादि-

श्राद्धकालत्वात् , गांधर्वादिकुतपपूर्वार्धांतसार्धमुहूर्तव्यापिनी शुक्ला कुतपोत्तरार्धादिसार्धमुहूर्तव्यापिनी कृष्णा ग्राह्या । तत्र उभयत्र व्याप्तावव्याप्तौ च शुक्लोत्तरा । यदोत्तरत्र गांधर्वात्पूर्वं समाप्ता पूर्वत्र तद्व्यापिनी तदा कर्मकाललभ्यशास्त्रस्य प्राबल्यात्पूर्वा ग्राह्या । अतएव शुक्लपक्षस्य पूर्वाह्णे श्राद्धमिति **मार्कंडेय**वचनं युगादिविषयमिति **हेमाद्रिः**, युगादिमन्वादिश्राद्धेषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या । कृष्णपक्षे अपराह्णव्यापिनीति **स्मृत्यर्थसारः**, वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै । हव्यं देवा न गृह्णंति कव्यं च पितरस्तथेति **दिवोदासीये गोभिलः**, पूर्वाह्णे तु सदा कार्या शुक्ला मनुयुगादयः । दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिके । इति अर्वाचीनोदाहृतपाद्मं च संगच्छते । श्राद्धे अमावास्यापराह्णिकी, एवं मन्वंतरादीनां युगादीनां विनिर्णयः इति **कालादर्शो निर्णयामृतश्च** कृष्णपक्षीयतद्विषयतया नेयः । अन्यथोदाहृतवचनादिविरोधापत्तेः । अतएव श्राद्धे युगादीनां शुक्लानामपि आपराह्णिकत्वबोधक**कालतत्त्वविवेचनकृत्यरत्नावल्या**द्यर्वाचीनग्रंथा उपेक्ष्याः । नचैवं कृष्णपक्षीया युगादिः पूर्वदिने दशममुहूर्तमारभ्य प्रवृत्ताप्यपराह्णव्याप्तेः पूर्वा स्यादिति वाच्यं । रौहिणं तु न लंघयेदित्यनेन कुतपोत्तरार्धमारभ्य रौहिणांतसार्धमुहूर्तात्मकापराह्णादिभागस्यैव कर्मकालत्वप्रतिपादनादुत्तरत्रैव[1] तद्व्याप्तिसत्वाद्द्वितीयैव ग्राह्या । अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च सर्वासु पिंडनिर्वपणादृते । इति वचनात्पिंडरहितं श्राद्धं कर्तव्यं । इदं युगादिकृत्यं युगादितिथिमध्य एव कार्यं । मन्वादौ च युगादौ च ग्रहणे चंद्रसूर्ययोः । व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया । इति **स्कांदात्** । तथा **मलमासे**ऽप्यवश्यं कार्यं । दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । इति **ऋष्यशृंगवचनात्** वैशाखादिशब्दाश्चांद्रमासवचना एव तथापि युगाद्युत्कर्षनिषेधपर्यालोचनया प्रसिद्ध्यानुगुण्यादनुष्ठानादरार्थं सौरमासगतैव युगादिर्ग्राह्येति **हेमाद्युक्तेश्च** । यौगादिकं मासिकं च श्राद्धं चापरपक्षिकं । मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च । इति **स्मृतिचंद्रिकावचनात्** शुद्धमासेऽप्यभ्युदय-

१ 'दुत्तरैव व्याप्तिसत्वात्'.

करमिति बोध्यं । अपरपक्षः कृष्णपक्षो नतु महालयः तस्य
परशुरामजयंती । तत्र निषेधात् । इयमेव तृतीया **परशुराम-जयंती** । सा प्रदोषव्यापिनी ग्राह्या । तदुक्तं **भार्गवार्चनदीपिकायां स्कांदे** । वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ । निशायाः प्रथमे यामे रामाख्यः समये प्रभुः । रेणुकायास्तु यो गर्भादवतीर्णो भुवि स्वयमिति । दिनद्वये प्रदोषे कार्त्स्न्येन साम्येन वैषम्येण वा एकदेशव्याप्तौ परैव । संकल्पकालमारभ्य सत्वाद्दिवारात्रियोगाच्च । इति वैशाखतृतीया ।

**ज्येष्ठशुक्लतृतीयायां** । भद्रे कुरुष्व यत्नेन रंभाख्यं व्रतमुत्तमं । ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा । इत्यादिना भविष्ये रंभाव्रतमुक्तं । तत्र बृहत्तपा तथा रंभेत्यादिपूर्वोदाहृतवचनात्पूर्वविद्धैव तृतीया ग्राह्या । आषाढ्युत्तरतृतीयायां, तृतीया श्रावणे कृष्णा या स्याच्छ्रवणसंयुता । तस्यां संपूज्य गोविंदं तुष्टिमग्र्यां च विंदतीति **विष्णुधर्मोत्तरे** विष्णुपूजोक्ता । तत्र दिनद्वये श्रवणयुक्ता चेद्रंभाख्यां वर्जयित्वेति पूर्वोदाहृतवचनादुत्तरा ग्राह्या । भाद्रशुक्लतृतीयायां
हरितालिका । **हरितालिकाव्रतं** लोकप्रसिद्धं । तत्रापि रंभाख्यां वर्जयित्वेत्यादिपूर्वोदाहृतवचनैः मुहूर्तमात्रसत्वेपि दिने गौरीव्रतं परे इति **माधवोक्तेश्च** मुहूर्तमात्राप्युत्तरैव ग्राह्या । मार्गशीर्षशुक्लतृतीयायामपि रंभाव्रतमुक्तं **भविष्योत्तरे**–रंभातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीं । मार्गशीर्षे शुभे मासि तृतीयायां नराधिप । शुक्लायां प्रातरुत्थाय दंतधावनपूर्वकं । उपवासस्य नियमं गृह्णीयादित्याद्युक्त्वोक्तं । सौभाग्यार्थं पुरा चीर्णं रंभया राजकन्यया । तेन रंभातृतीयेयं परसौभाग्यदायिनीति । इयं पूर्वविद्धा ग्राह्या । बृहत्तपा तथा रंभा इति वचनात् । माघमासे तु संप्राप्य तृतीयां शुक्लपक्षतः । प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् । स्नापयेन्मधुना देवीं तथैवेक्षुरसेन च । गंधोदकेन च पुनः पूजनं कुंकुमेन वै । इत्यादिना **मात्स्ये** रसकल्याणिनीव्रतमुक्तं तत्रापि रंभाख्यां वर्जयित्वेति वचनादुत्तरा । फाल्गुनशुक्लतृतीयायां **वराहपुराणादौ** (सोमा)सौभाग्यतृतीयाव्रतादीन्युक्तानि तत्रापि परविद्धैव । इति तृतीयानिर्णयः ।

अथ चतुर्थी निर्णीयते । तत्र विनायकं समभ्यर्च्य चतुर्थ्यां यदुनंदन । सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नु- यात् । निद्रां रतिं शिवां भद्रां कीर्तिं मेधां सरस्वतीं । प्रज्ञां तुष्टिं तथा कांतिं तत्रैवाहनि पूजयेत् । विद्याकामो विशेषेण पूजयेत सरस्वतीं । इति । माधवीये भविष्यत्पुराणे— चतुर्थ्यां तु गणेशस्य गौर्याश्चैव विधानतः । पूजां कृत्वा लभे- त्सिद्धिं सौभाग्यं च नरः क्रमादिति । तत्रैव लैंगे च विनायकव्रतं गौरीव्रतं च विहितं । तिथौ युग्माह्वयायां च समुपोष्य यथा- विधि । शंखपालादिनागानां शेषस्य च महात्मनः । पूजा कार्या पुष्पगंधक्षीराप्यायनपूर्वकं । विषाणि तेषां नश्यंति न च ता- न्घ्नंति पन्नगाः । इति माधवीये कौर्मे नागव्रतं विहितं । एतानि गणेशगौरीनागव्रतानि विहाय अन्यस्मिन्व्रते चतुर्थी युगभूतानामिति युग्मवाक्यात्पंचमीविद्धैव ग्राह्या । एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः । इति वृद्धवसिष्ठवचनाच्च । गणेशगौरीबहु- लाव्यतिरिक्ताः प्रकीर्तिताः । चतुर्थ्यः पंचमीविद्धा देवतांत- रयोगतः । इति मदनरत्नादौ ब्रह्मवैवर्ताच्च । विनायकनाग- व्रतयोस्तु मध्याह्नव्यापिनी ग्राह्या । तत्र मध्याह्नस्य कर्मकाल- त्वात् । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृपेति गणप- तिकल्पे । युगं मध्यंदिने यत्र तत्रोपोष्य फणीश्वरान् । क्षीरे- णाप्याय्य पंचम्यां पारयेत्प्रयतो नरः । इति वचने च मध्याह्ने एव पूजाविधानात् । चतुर्थीसंयुता कार्या तृतीया च चतु- र्थिका । तृतीयया युता नैव पंचम्या कारयेत्क्वचिदिति । चतुर्थी चैव कर्तव्या तृतीयासंयुता विभो । इति हेमाद्र्यु- दाहृतब्रह्मवैवर्तस्कांदवचने विनायकचतुर्थीविषये एव । अतएव हेमाद्रौ ब्रह्मवैवर्ते—चतुर्थीसंयुता या तु तृतीया सा फलप्रदा । चतुर्थी च तृतीयायां महापुण्यफलप्रदा । कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणीति । माधवीये स्कांदे— विनायकव्रते कार्या सर्वमासेषु षण्मुख । चतुर्थी तु जयायुक्ता गणनाथसुतोषिणीति । चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी सा तु परतश्चेत्परेऽहनीति बृहस्पतिवचनाच्च । अत्र परतश्चेत्परेह्नीत्यनेन पूर्वमध्याह्नव्याप्त्यपेक्षया द्वितीयम-

ध्याह्नेऽधिकव्याप्तावेव परविद्धाविधानात् इतरेषु पक्षेषु तृतीयायुतैव गणनाथव्रते ग्राह्या। अतएव—मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके। मध्याह्नात्परतश्चेत्स्यान्नागविद्धा प्रशस्यते। इति माधवे स्मृत्यंतरं। द्वितीया पंचमी वेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी। इति पंचम्या उपवासे चतुर्थीदूषकत्वमपि पूर्वविद्धोपोष्यचतुर्थीविषयमेव। नागव्रते तु पूर्वदिने एव मध्याह्नव्याप्तौ पूर्वा, कर्मकालव्याप्तिशास्त्रप्राबल्यात्। अन्येषु पक्षेषूत्तरैव, पंचम्या नागतिथित्वेन तद्योगस्य नागव्रते प्राशस्त्यात्। तृतीयायोगप्राशस्त्यस्य विनायकव्रतविषयत्वेनैव व्यवस्थापनात्। गौरीव्रते तु गौरीदैवत्यतृतीयायोगस्यैव प्रशस्तत्वात्। गणेशगौरीबहुलेति वचनात्। गौर्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्भरहोलिके च। वत्सस्य पूजा शिवरात्रिरेताः परा विनिघ्नंति नृपं सराष्ट्रं। इति निर्णयामृतमदनरत्नयोः पुराणसमुच्चयवचनाच्च पूर्वैव। जया च यदि संपूर्णा चतुर्थी ह्रसते पुनः। जया सैव हि कर्तव्या नागविद्धां न कारयेदिति वचनमपि कैमुतिकन्यायेन पूर्वाप्राशस्त्यबोधकं। अतएव हि यद्यपि जया संपूर्णा तथापि नागविद्धा हेया किमुत जयायुक्तचतुर्थ्यां संभवंत्यामिति माधवः। तस्माद्विनायकनागगौरीव्रतेषु चतुर्थी पूर्वविद्धा व्रतांतरे तूत्तरविद्धेति सिद्धं। इति चतुर्थीसामान्यनिर्णयः।

गणेशे कारयेत्पूजां लड्डुकादिभिरादरात्। चतुर्थ्यां विघ्ननाशाय सर्वकामसमृद्धये। इति। हेमाद्रौ निर्णयामृते च देवीपुराणे—चैत्रशुक्लचतुर्थ्यां गणेशपूजोक्ता। तत्रोत्तरैव मध्याह्नव्याप्तौ अधिकैकदेशव्याप्तौ च उत्तरा अन्यथा पूर्वेति। ज्येष्ठशुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती। तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये। उपहारैश्च विविधैर्गीतनृत्योत्सवादिभिः। होमैः पयोभिर्वस्त्रैश्च पत्रपुष्पैः सुगंधिभिः। इति ब्रह्मपुराणे। ज्येष्ठशुक्लचतुर्थ्यां गौरीपूजोक्ता। तत्र पूर्वविद्धाया अलाभे एवोत्तरा ग्राह्येति। श्रावणकृष्णचतुर्थ्यां गणेशपूजा। श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये। संकष्टगणेशपूजा। गणेशं पूजयित्वा तु चंद्रायार्घ्यं प्रदीयते।

संकष्टतरणं शुभं । कर्तव्यमिति संकल्प्य व्रतेऽस्मिन् गणपं स्मरेत् । निराहारोऽस्मि देवेश यावच्चंद्रोदयो भवेत् । भोक्ष्यामि पूजयित्वाहं संकष्टोत्तारणाय च । इत्यादिना पूजामभिधाय— पंचैव मोदकान् । भक्षयेन्निशि चंद्रस्य अर्घ्यं दत्वा विधानतः । क्षीरसागरसंभूत सुधारूप निशाकर । गृहाणार्घ्यं मया दत्तं गणेशप्रीतिवर्धन । एवं व्रतं तु कर्तव्यं प्रतिमासं त्वयाऽद्रिजेति **स्कांदे संकष्टचतुर्थीव्रतमुक्तं** । तत्र चंद्रोदयकालस्य कर्मकालत्वात्पूर्वदिने एव तद्व्याप्तौ पूर्वा । दिनद्वये तद्व्याप्तावव्याप्तौ च परैव । दिवा रात्रौ व्रतं यच्च एकमेकतिथौ गतं । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती । यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण त्वित्यादिवाक्यैरुत्तरस्या एव विधानात् । पूर्वचंद्रोदयानंतरं प्रवृत्ता द्वितीयचंद्रोदयादर्वाक् समाप्ता तत्र द्वितीयचंद्रोदयकाले ज्योतिःशास्त्रप्रसिद्धतिथ्यसत्वेऽपि साकल्यवचनापादिततिथिसत्वात्पूर्वचंद्रोदयकाले साकल्यवचनापादिततिथेरप्यभावादुत्तरदिने एव व्रतं कार्यं । एतेन दिनद्वये चंद्रोदयकाले सत्वे असत्वे वा पूर्वैव, चतुर्थी च तृतीयायां महापुण्यफलप्रदेत्यादिवचनैः, न च तृतीयाविद्धाविधायकवचनानि दिवा त्रिमुहूर्तवेधे सत्येव प्रवर्तंते नतु रात्रियोगमात्रे इति वाच्यं । रात्रिसाध्ये कर्मणि रात्रिवेधस्यापि जन्माष्टमीप्रकरणे **माधवादिभिर्दर्शितत्वादिति कृत्यरत्नावलीमयूखाद्यर्वाचीनग्रंथाः** उदाहृतवचनविरोधात्, उदयास्तमययोरेव वेध इति द्वितीयादिप्रकरणगत**माधवजाबालिविष्णुधर्मसुमंतु**वचनैरुदयास्तमयव्यापिनीनामेव सामस्त्येन प्राशस्त्याभिधानात्पूर्वपरवेधोऽप्युदयास्तमयकालीन एवेत्यवसीयत इति **निर्णयामृत**विरोधात्, जन्माष्टम्यादौ रात्रिवेधप्रतिपादक—अष्टमी शिवरात्रिश्च अर्धरात्रादधो यदि । दृश्यते घटिका या सा पूर्वविद्धा प्रकीर्तितेति **माधवो**दाहृतवचनादर्शनमूलत्वाच्चायुक्ता एव । इति संकष्टचतुर्थी ।

भाद्रपदशुक्लचतुर्थी । **भाद्रपदशुक्लचतुर्थ्यां**—शिवा शांता सुखा राजन् चतुर्थी त्रिविधा मता । मासि भाद्रपदे शुक्ला शिवलोके सुपूजिता । तस्यां स्नानं च दानं च उपवासो जपस्तथा । भवेत्सहस्रगुणितं प्रसादाद्दंतिनो नृपेति **हेमाद्रिनि-**

र्णयामृतयोर्भविष्यत्पुराणे स्नानादिकमुक्तं तत्र पौर्वाह्णिकी ग्राह्या । अस्यामेव सिद्धिविनायकव्रतमुक्तं । गजवक्त्रं तु शुक्लायां चतुर्थ्यां तु प्रपूजयेत् । यदा चोत्पद्यते भक्तिस्तदा पूज्यो गणाधिपः । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप । स्वशक्त्या गणनाथस्य स्वर्णरौप्यादिनिर्मितां । अथवा मृन्मयीं कुर्याद्वित्तशाठ्यं विवर्जयेत् । स्वरूपमुक्तं । एकदंतं शूर्पकर्णं गजवक्त्रं चतुर्भुजं । पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकमिति । कुर्यात्पूजां प्रयत्नेन स्नाप्य पंचामृतैः पृथक् । गणाध्यक्षेति नाम्ना वै गंधं दद्याच्च भक्तितः । विनायकेति पुष्पाणि धूपं चोमासुतेति च । दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने । वस्त्रं वस्त्रप्रदे रक्तं युग्मं दद्यात्सुभावितः । ततो दूर्वांकुरान् गृह्य विंशतिं चैकमेव च । पूजनीयः प्रयत्नेन एभिर्नामपदैः पृथक् । दूर्वायुग्मं गृहीत्वा तु गंधयुक्तं प्रपूजयेत् । एकैकेन च नाम्ना वै दत्वैवं सर्वनामभिः । तथैव विंशतिं गृह्य मोदकान् घृतपाचितान् । स्थापयित्वा गणाध्यक्षसमीपे कुरुनंदन । दश विप्राय दातव्याः स्वयं चाद्यात्तथा दश । एकं गणाधिपे दद्यात्स नैवेद्यं नृपोत्तम । विप्राय भोजनं दद्याद्भुंजीयात्तैलवर्जितं । इति स्कांदे सिद्धिविनायकपूजोक्ता । तत्र मध्याह्ने पूजयेदिति मध्याह्ने पूजाविधानात्—चतुर्थी गणनाथस्येत्यादिवचनैः परदिन एव संपूर्णमध्याह्नव्याप्तिः पूर्वापेक्षया अधिकमध्याह्नैकदेशव्याप्तिर्वा तदैव परा, अन्यदा तु पूर्वैव ग्राह्या । अतएव युग्मादिवाक्यस्यैव कर्मकालवाक्यविषयपरिहारेण प्रवृत्तिरिति हेमाद्यादयः । कर्मकालव्याप्तौ सर्वस्मृतीनामत्यंतनिर्बंधदर्शनात्कर्मकालवाक्यं सर्वेभ्यः प्रबलमिति निश्चीयते, तदनुसारेणैव द्वितीयादयो ग्राह्या इति माधवश्च संगच्छते । यत्तु अत्रोत्तरत्र महत्वेऽपि मातृविद्धा ग्राह्येति माधवेनोक्तं तदभ्युपेत्यवादः । अन्यथा मुहूर्तसप्तकानंतरं प्रवृत्ता द्वितीयदिने किंचिदधिकमुहूर्तनवकपरिमिता चतुर्थी तत्रापि पूर्वाग्रहणापत्तौ मध्याह्नात्परतश्चेत्स्यान्नागविद्धा प्रशस्यत इति माधवोदाहृतवचनविरोधापत्तेः । नच मध्याह्नानंतरं प्रवृत्तचतुर्थीविषयं वाक्यमिति न तद्विरोध इति वाच्यं । उभयत्र मध्याह्नस्पर्शेऽप्युत्तराग्रहणापत्तौ मातृविद्धेत्यादिवचनविरोधापत्तेः । एतेनोत्तरदिने एव

मध्याह्नव्याप्तौ उत्तरा अन्यथा पूर्वेति कालतत्त्वविवेचनस्मृतिकौस्तुभादयः सर्वेप्यर्वाचीनाग्रंथा उपेक्ष्याः कर्मकालवाक्य-

गणपूजाविधिः। विरोधात् इति बोध्यं । अत्र संक्षेपेण प्रयोगः । कृतनित्यक्रियः शुक्लतिलैः पूजांगं स्नानं कृत्वा देश-कालाद्युल्लिख्य अमुकफलसिद्धिद्वारा श्रीगणेशप्रीत्यर्थं सिद्धिविनायकव्रतं करिष्ये इति संकल्प्य प्रतिमायां प्राणप्रतिष्ठां कृत्वा । ॐ सिद्धिविनायकाय नमः इति मंत्रेणावाहनाद्याचमनांतं कृत्वा पंचामृतैः पृथक् स्नापयित्वा शुद्धोदकस्नानाचमने दत्वा । ॐ गणाध्यक्षाय नम इति गंधं । ॐ विनायकाय नम इति पुष्पाणि । उमासुताय नम इति धूपं । रुद्रप्रियाय नम इति दीपं । विघ्ननाशिने नम इति एकमोदकसहितनैवेद्यं । सर्वप्रदाय नम इति रक्तवस्त्रयुग्मं दद्यात् । ततः सगंधा एकविंशतिदूर्वा गृहीत्वा । ॐ गणाधिपाय नम इति दूर्वायुग्मं दद्यात् । एवं ॐ उमापुत्राय नमः। ॐ अघनाशनाय नमः। ॐविनायकाय नमः। ॐ ईशपुत्राय नमः। ॐसर्वसिद्धिप्रदाय नमः। ॐ एकदंताय नमः। ॐ इभवक्त्राय नमः। ॐ मूषकवाहनाय नमः । ॐ कुमारगुरवे नमः । ततोऽवशिष्टामेकां गणाधिपेत्यादि दशभिर्नामभिः समर्प्य विंशतिमोदकान् देवाग्रे संस्थाप्य तेभ्यः दश मोदकान्स-दक्षिणान्ब्राह्मणाय दत्वा अन्नेन ब्राह्मणं भोजयित्वा दशमोदक-

चंद्रदर्शननिषेधः। सहितं तैलपक्ववर्जं भुंजीतेति ॥ अस्यां चंद्र-दर्शनं न कार्यं । तथा च मार्कंडेयः—सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चंद्रदर्शनं ॥ मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥ पाराशरः—कन्यादित्ये चतुर्थ्यां तु शुक्ले चंद्रस्य दर्शनं । मिथ्या-भिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा । दोषस्य शांतये सिंहः प्रसेनमिति वै पठेत् । अत्र सिंहादित्य इत्येन कन्यादित्य इत्यनेन च चांद्रो भाद्रपद उपलक्ष्यते । श्लोकस्तु । सिंहः प्रसेनमवधी-त्सिंहो जांबवता हतः । सुकुमारक मारोदीस्तव ह्येष स्यमंतकः। इति भविष्यपुराणे पठितः। तिथितत्त्वे—पंचाननगते नाभौ पक्षयोरुभयोरपि । चतुर्थ्यामुदितश्चंद्रो नेक्षितव्यः कदाचनेति । निर्णयामृते वाराहे—भाद्रे शुक्लचतुर्थी या भौमेनार्केण वा युता । महती सात्र विघ्नेशमर्चित्वेष्टं लभेन्नरः। इति भाद्रपदशुक्ल-

दशरथचतुर्थी। चतुर्थी । कार्तिकशुक्लचतुर्थ्यां संवत्सर-

प्रदीपे । आश्विने कृष्णपक्षस्य चतुर्थ्यां रात्रियोगतः । मृन्मयेऽवस्थितः पूज्यो राजा दशरथः स्त्रिया । दुर्गा च तत्र संपूज्या सर्वसौख्यविवृद्धये । इयं प्रदोषव्यापिनी ग्राह्या । इयमेव चतुर्थी करकाभिधा । सा चंद्रोदयव्यापिनी ग्राह्या । उभयत्र तद्व्याप्ताव-व्याप्तौ च परेति । **कार्तिकशुक्लचतुर्थ्यां** तिथौ युगाह्वयायां नागचतुर्थी । तु इत्युदाहृतवचनैर्नागव्रतमुक्तं । तत्र युगं मध्यंदिने यत्रेति **स्कांदेन** मध्याह्ने पूजाविधानात् मध्याह्नव्यापिनी ग्राह्या । पूर्वत्रैव मध्याह्नव्याप्तौ पूर्वा अन्यथोत्तरेत्यनुपदमेवोक्तं ।

वरदचतुर्थी । **मार्गशीर्षशुक्लचतुर्थ्यामारभ्य** वरदचतुर्थी-व्रतमुक्तं **स्कांदे** । तत्र मातृविद्धा प्रशस्यत इति वचनात्पूर्व-विद्धा ग्राह्या । **माघशुक्लचतुर्थ्यां** तु कुंदपुष्पैः सदाशिवं । संपूज्य यो हि नक्ताशी संप्राप्नोति श्रियं नर इति **कौर्मे** कुंद-पुष्पैः शिवपूजोक्ता । तत्र नक्ते प्रदोषव्यापिनी ग्राह्या । **तिथि-तत्त्वे भविष्योत्तरे** । चतुर्थी वरदा नाम तस्यां गौरी सुपू-जिता । सौभाग्यं मंगलं कुर्यात्पंचम्यां श्रीरपि स्वयमिति गौरी-पूजोक्ता । तत्र पूर्वविद्धा ग्राह्या । अत्र ढुंढिराजपूजोक्ता **काशी-खंडे**–माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः । ये त्वां ढुंढेऽर्च-यिष्यंति तेऽर्च्याः स्युरसुरद्विषां । विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीं । शुक्लां शुक्लतिलान्बध्वा प्राश्नीयाल्लड्डुका-न्व्रती । तां यात्रां नात्र यः कुर्यान्नैवेद्यं तिललड्डुकैः । उपस-र्गसहस्रैस्तु स हंतव्यो ममाज्ञया । होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः । तस्यां चतुर्थ्यां मंत्रज्ञस्तस्य मंत्रः प्रसेत्स्य-तीति । इति माघशुक्लचतुर्थी । **हेमाद्रौ भविष्यत्पुराणे**–

अंगारिका । यदा शुक्लचतुर्थ्यां तु वारो भौमस्य वै भवेत् । तदा सा सुखदा ज्ञेया सुखा नामेति कीर्तिता । स्नानदानादिकं कर्म सर्वमक्षय्यमश्नुते इति । चतुर्थ्यां भरणीयोगः शनैश्चरदिने यदि । तदाभ्यर्च्य यमं देवं मुच्यते सर्वकिल्बिषैः इति । **शंखः**–अमावास्या तु सोमेन सप्तमी भानुना सह । चतुर्थी भूमि-पुत्रेण सोमपुत्रेण चाष्टमी । चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसं-निभाः इति । इति पुरुषार्थचिंतामणौ कालखंडे चतुर्थीनिर्णयः ।

**अथ पंचमी निर्णीयते** । सा च स्कंदोपवासातिरिक्तो-पवासे पूर्वविद्धा ग्राह्या । तदाह **हेमाद्रौ गार्ग्यः**–एकादशी

तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः । पराः पंचम्यादयः । तत्रैव **स्कांदे**–पंचमी तु तथा कार्या चतुर्थीसंयुता विभो । इति । **पाद्मद्वादशीकल्पयोः**–पंचमी सचतुर्थी च कार्या षष्ठ्या न संयुतेति । युगभूतानामिति निगमोऽपि । **पैठीनसिश्च**–पंचमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः । प्रतिपत्पंचमी चैव उपोष्याः पूर्वसंयुता इति । **मदनरत्ने जाबालिरपि**–प्रतिपत्पंचमी भूतसावित्री वटपूर्णिमा । नवमी चैव दशमी नोपोष्याः परसंयुताः । तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः । वेधादधस्ताद्धन्युक्ता उपवासे तिथीस्त्विमाः । इत्याभ्यामुत्तरानिषेधाच्च । स्कंदोपवासे तूत्तरा । तदुक्तं **कालादर्शे ब्रह्मवैवर्ते निर्णयामृते मदनरत्ने स्कांदे च**–स्कंदोपवासे स्वीकार्या पंचमी परसंयुता । त्रिमुहूर्ता तु षष्ठ्या स्यात्परा पूर्वयुतान्यथेति । पंचम्यामपि स्कंदोपवास उक्तो **निर्णयामृते वाराहे**–आषाढे शुक्लषष्ठी तु तिथिः कौमारिकी स्मृता । कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने इति । पंचमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारदेति हेमाद्रौ ब्रह्मवैवर्तमप्येतद्विषयं । स्कंदोपवासनागपूजाभिन्नदेवकार्ये तु दिनद्वये कर्मकाले तिथिसत्वे असत्वे वा पंचमी तु तथा कार्येत्यादिस्कांदादिवचनैः पूर्वविद्धैव । नागपूजायां तूत्तरविद्धैव । श्रावणे पंचमी शुक्ला संप्रोक्ता नागपंचमी । तां परित्यज्य पंचम्यश्चतुर्थीसहिता हिताः इति **निर्णयामृतमदनरत्नोदाहृतसंग्रहवा**क्यात् । एतच्च नागपंचमीमात्रोपलक्षणं तथैवाचारादिति **मदनरत्नोक्तेः** । पंचमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद । इति वचनाच्च । नन्वेवं शुक्लपंचमी परविद्धा कृष्णपंचमी तु पूर्वविद्धेति पंचमीप्रकरणस्थपंचमी चतुर्थीयुतोपोष्येति उपवासतिथिप्रकरणगतहेमाद्रिविरोधः । एवं युगभूतानामिति विरोधात्पंचमी पूर्वविद्धा ग्राह्येति प्रतिज्ञाय–प्रायः प्रातरुपोष्या हि तिथिर्दैवफलेप्सुभिरित्येतद्विरोधमाशंक्य–चतुर्थीसंयुता कार्या पंचमी परया न तु । दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते । इति हेमाद्रिणा अलिखितं हारीतवचनमुपन्यस्य अत्र पित्र्यग्रहणं दर्शार्थं यथा पित्र्ये परया न तथा दैवे सर्वमि-

ऽपि । तत्र पूर्वाह्ने ज्योतिःशास्त्रप्रसिद्धतिथ्यभावेपि साकल्यवचनप्रतिपादिततिथिसत्त्वात् । अतः स्कंदोपवासे एव पंचमी परविद्धा अन्यत्र पूर्वविद्धेति माधवविरोधोपि । किंच उपवासे सर्वापि पूर्वविद्धा तदतिरिक्ते दैवे शुक्लोत्तरा कृष्णा पूर्वेति हेमाद्रेः । स्कांदोपवासातिरिक्तसर्वदैवे शुक्लपक्षेपि पूर्वेति माधवस्य परस्परं विरोधोऽपि दुष्परिहर इति चेन्न । स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इति वचनात्स्मृतिविरुद्धं पुरुषवाक्यं न प्रमाणमिति हेमाद्रिमाधवाभ्यामप्यन्यत्र सिद्धांतितत्वात् । विशेषवचनविषयपरिहारेणैव सामान्यवाक्यप्रवृत्तेः परविद्धेति हेमाद्रिग्रंथे शुक्लपक्षगतपंचमीसामान्यग्रहणे श्रावणे पंचमी शुक्लेति स्मृतिसंग्रहविरोधात् । एवमुपवासे पंचम्याः सर्वस्याः पूर्वविद्धाया ग्रहणे हेमाद्यनुदाहृतकालादर्शाद्युदाहृतस्कंदोपवासे स्वीकार्येति विशेषवचनविरोधात्, शुक्ला परविद्धेति हेमाद्रिग्रंथस्यैव शुक्लपंचमीविशेष एव तात्पर्यस्य युक्ततरत्वेन हेमाद्रिविरोधाभावात् स्कंदोपवासे परविद्धा अन्यत्र पूर्वविद्धेति माधवस्य नागपंचमीविषयत्वे स्मृतिसंग्रहविरोधात् तदतिरिक्तपंचम्यामेव तात्पर्यस्य युक्तत्वेन न माधवविरोधोऽपि । नन्वेवमपि युग्मवाक्यस्यैव कर्मकालव्याप्तिशास्त्रविषयपरित्यागो युक्तः । संपूर्णत्वाभिधानेनारोपितकर्मकालीनतिथिग्रहणस्य मुख्यकर्मकालीनतिथिव्याप्तिसंभवे अन्याय्याश्रयणादिति हेमाद्रिणा सह हारीतवचनात्साकल्यवचनापादितपंचमीसत्त्वमादायैवानुष्ठानमिति माधवस्य विरोधो दुष्परिहर इति चेन्न । हारीतवचनस्य प्राबल्यमभ्युपेत्य तथोक्तत्वेपि अत्र तात्पर्याभावात् । अन्यथा कर्मकालव्याप्तिशास्त्रं सर्वेभ्यः प्रबलमिति निश्चीयते । तदनुसारेणैव तिथिर्ग्राह्येति द्वितीयाप्रकरणस्थस्य, नचैवं मंतव्यं परेऽहनि सत्यामपि मध्याह्नापराह्णव्याप्तौ तत्परित्यागाय पूर्वविद्धात्वविधानमिति मुख्यकर्मकालव्याप्तेः परित्यागायोगात्, अन्यथा मूषकभिया स्वगृहं दहतीति न्याय आपतेदिति षष्ठीप्रकरणस्थस्य च माधवस्य असंगत्यापत्तेरिति । एवंच हेमाद्रिमाधवयोस्तात्पर्यविषयीभूतार्थैक्यसिद्धौ न तयोः परस्परविरोधः । तत्सिद्धं दिनद्वये कर्मकाले पंचमीसत्त्वे असत्त्वे वा नागपू-

जायां स्कंदोपवासे च पंचमी परविद्धा अन्यत्र पूर्वविद्धेति । एतेन पंचमीविषयो हेमाद्युक्तो निर्णयो न सम्यक्, माधवोक्तदृष्टांतताप्ययुक्तेति द्वैतनिर्णयो हेमाद्रिमाधवतात्पर्यविषयीभूतार्थाज्ञाननिबंधनत्वादयुक्त एव । अतएव पंचमीविषयं विरुद्धं वचनद्वयं शुक्लकृष्णभेदेन व्यवस्थितमिति हेमाद्रिर्माधवोदाहृतहारीतवचनविरुद्ध इत्यादिकालतत्त्वविवेचनोक्तं दूषणं निरस्तं हेमाद्रितात्पर्यविषयार्थाज्ञाननिबंधनत्वात् । इति पंचमी-

श्रीपंचमी । सामान्यनिर्णयः । **हेमाद्रौ भविष्यत्पुराणे**—शुक्लायां माघपंचम्यां चैत्रे मासि शुभानना । श्रीर्विष्णुलोकान्मानुष्यं संप्राप्ता केशवाज्ञया । तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुंचति । एषा श्रीपंचमी कार्या विष्णुलोकगतिप्रदेति । **निर्णयामृते देवीपुराणे** चैत्रमासतिथिप्रक्रमे—पंचम्यां पूजयेन्नागाननंताद्यान्महोरगान् । क्षीरं सर्पिस्तु नैवेद्यं देयं सर्वसुखावह-

नागपंचमी । मिति॰ नागपूजोक्ता । **हेमाद्रौ भविष्यत्पुराणे**—श्रावणे मासि पंचम्यां शुक्लपक्षे नराधिप । द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः । पूजयेद्विधिवद्वीर दधिदूर्वांकुरैः कुशैः । गंधपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः । ये तस्यां पूजयंतीह नागान् भक्तिपुरःसराः । न तेषां सर्पतो वीर भयं भवति च क्वचित् । तथा भाद्रपदे मासि पंचम्यां श्रद्धयान्वितः । समालेख्य नरो नागान् शुक्लकृष्णादिवर्णकैः । पूजयेद्गंधपुष्पैश्च सर्पिर्गुग्गुलपायसैः । तस्य तुष्टिं प्रयांत्याशु पन्नगास्तक्षकादयः । आ सप्तमात्कुलात्तस्य न भयं सर्पतो भवेत् । पुण्या भाद्रपदे प्रोक्ता पंचमी नागपंचमी । इति नागपूजोक्ता । तत्र उत्तरविद्धाया अलाभे एव पूर्वा, तल्लाभे तूत्तरैव ॥

ऋषिपंचमी । **भाद्रशुक्लपंचमी ऋषिपंचमी** नाम । तत्र **ब्रह्मपुराणे**—नभस्ये शुक्लपक्षे तु यदा भवति पंचमी । नद्यादिके तदा स्नात्वा कृत्वा नियममेव च । ब्राह्मणी क्षत्रिया वैश्या शूद्रा वापि वरानने । कृत्वा नैमित्तिकं कर्म गत्वा निजगृहं पुनः । वेदिं सम्यक् प्रकुर्वीत गोमयेनोपलेपितां । रंगवल्लीसमायुक्तां नानापुष्पोपशोभितां । तत्र सप्तऋषीन्दिव्यान्भक्तियुक्ता प्रपूजयेत् । गंधैश्च विविधैः पुष्पैर्धूपदीपैः सुशोभनैः । ततो नैवेद्यं संपन्नमर्घ्यं दद्याच्छुभैः फलैः । **अर्घमंत्रः** । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ

गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। गृहीत्वार्घ्यं मया दत्तं तुष्टा भवत सर्वदा। इति। एवं पूजां विनिर्वर्त्य ऋषीन्ध्यात्वा समाहिता। अकृष्टपृथ्वीसंजातशाकाहारं प्रकल्पयेत्। आदौ मध्ये तथा चांते कुर्यादुद्यापनं बुधः। इत्यादिना ऋषिपंचमीव्रतमुक्तं। तत्र–पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति माधवोदाहृतवचनान्मनुष्यदैवत्यत्वाच्च मध्याह्नव्यापिनी पंचमी ग्राह्या। तत्र परदिने एव मध्याह्नव्याप्तौ परा। दिनद्वये तद्व्याप्तौ अव्याप्तौ च पूर्वैव। निर्णयामृते भविष्योत्तरे–तथा चाश्वयुजे मासि पंचम्यां कुरुनंदन। कृत्वा कुशमयं नागमिंद्राण्या सह पूजयेत्। घृतोदकाभ्यां पयसा स्नापयित्वा विशांपते। गोधूमैः पयसा सिक्तैर्भक्ष्यैश्च विविधैस्तथा। पूजयेत्कुरुशार्दूल तस्य शेषादयो नृप। नागाः प्रीता भवंतीह शांतिमाप्नोति वै विभो। इति। अत्र परविद्धाया अलाभे एव पूर्वा। तल्लाभे तूत्तरैव। आश्विनशुक्लपंचम्यामुपांगललिताव्रतमुक्तं

उपांगललिताव्रतं। स्कांदे। शुक्लपक्षस्य पंचम्यामिषे मासि चरेद्व्रतं। गर्जिते संध्ययोस्त्याज्यं दिनवृद्धौ क्षये तथा। निर्वर्त्यावश्यकं कर्म शुची रागविवर्जितः। चत्वारिंशत्तथा चाष्टौ कल्पितानि विधानतः। दंतकाष्ठान्युपादाय तडागं वा नदीं व्रजेत्। दंतधावनपूर्वाणि मज्जनानि समाचरेत्। आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते। मुखदुर्गंधिनाशाय दंतानां च[1] विशुद्धये। ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनं। इति दंतधावनमंत्रः। ततो यथाविधि स्नात्वा शुक्लवासा गृहं व्रजेत्। शुचौ देशे मंडपिकां कृत्वा चातिमनोहरां। सौवर्णीं प्रतिमां कृत्वा स्थापितां तत्र पूजयेत्। अथ दूर्वांकुरान्साग्रांश्चत्वारिंशत्तथाष्टभिः। अधिकान् हस्त आदाय मंत्रमेतं जपेद्बुधः। बहुप्ररोहा सततममृता हरिता लता। यथेयं ललिते मातस्तथा मे स्युर्मनोरथाः। इति दूर्वापूजामंत्रः। इत्युक्त्वा पूजयेद्देवीमेवमेवंविधां सुधीः। चत्वारिंशतिकृत्वस्तु अष्टकृत्वः समाचरेत्। ततो वाणकमादाय विंशत्या वटकादिकं। पठ्यमानेन मंत्रेण आचार्याय निवेदयेत्। मंत्रश्च। उपांगललितादेव्या व्रतसंपूर्णहेतवे।

---

१ 'रदानां च'.

वाणकं द्विजवर्याय सहिरण्यं ददाम्यहं । ततः कथां समाकर्ण्य वाणकान्नस्य संख्यया । स्वयमद्यात्तदेवान्नं वाग्यतः सह बांधवैः । रात्रौ जागरणं कुर्याद्गीतनृत्यादिमंगलैः । प्रभाते पूजयेद्देवीं ततः कुर्याद्विसर्जनं । सवाहना शक्तियुता वरदा पूजिता मया । मातर्मामनुगृह्याद्य गम्यतां निजमंदिरं । तामर्चां गुरवे दद्यान्निशि वा स्याद्विसर्जनं । व्रतमेवं तु यः कुर्यात्सुतवान्धनवान्भवेत् । विद्यावान् रोगनिर्मुक्तः सुखी गोमांश्च जायते । अवैधव्यं च लभते स्त्री कन्या वरमुत्तमं । विजयं पुष्टिमायुष्यं यच्चान्यदपि वांछितमिति । अस्मिन्नुपांगललिताव्रते । तां परित्यज्य पंचम्यश्च-तुर्थीसहिता हिता इति संग्रहवाक्यात् युगभूतानामिति निगमाच्च पूर्वविद्धा ग्राह्या, तदलाभे तूत्तरैवेति । **हेमाद्रौ स्कांदे**—शुक्ला मार्गशिरे पुण्या श्रावणे या च पंचमी । स्नानदानैर्बहुफला नाग-लोकप्रदायिनी । **वाराहे**—माघशुक्लचतुर्थ्यां तु वरामाराध्य[२] च श्रियं । पंचम्यां कुंदकुसुमैः पूजा कार्या समृद्धये । इति । अत्रैव

वसंतोत्सवः । **वसंतोत्सवारंभ उक्तो निर्णयामृते पुरा-णसमुच्चये**—माघमासे नृपश्रेष्ठ शुक्लायां पंचमीतिथौ । रति-कामौ तु संपूज्य कर्तव्यः सुमहोत्सवः । दानानि च प्रदेयानि तेन तुष्यति माधवः । इति । अत्रोत्तरदिन एव पूर्वाह्णव्याप्तौ उत्तरा, अन्यदा तु पूर्वैवेति । इति पुरुषार्थचिंतामणौ कालखंडे पंचमीनिर्णयः ॥

**अथ षष्ठी निर्णीयते** । सा च स्कंदव्रतातिरिक्ते सप्तमी-विद्धा ग्राह्या । तदुक्तं षण्मुन्योरिति युग्मवाक्ये । **हेमाद्रौ स्कांदे**—नागविद्धा न कर्तव्या षष्ठी चैव कदाचन । सप्तमी-संयुता कार्या षष्ठी धर्मार्थचिंतकैः । **ब्रह्मवैवर्ते**—नहि षष्ठी ना-गविद्धा कर्तव्या हि कदाचन । नागविद्धा तु या षष्ठी कृता पुण्यक्षया भवेत् । सप्तम्या सह कर्तव्या महापुण्यफलप्रदेति । तत्रैव **निगमः**—नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः । कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः । नागः पंचमी । रुद्रोऽष्टमी । दिवाकरः सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी । द्वितीया पंचमीवेधाद्दशमी चेत्यनेनापि पूर्वविद्धानिषेधात् । **विष्णुधर्मोत्तरे**—एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।

---

१ 'गीतवाद्यादि'. २ 'वरमाराध्य'.

अमावास्या तृतीया च ता उपोष्याः परान्विताः । नागविद्धा च या षष्ठी शिवविद्धा च सप्तमी । दशम्येकादशीविद्धा नोपोष्याः स्युः कथंचन । इति **शिवरहस्यसौरपुराणवचनाच्च** ।

स्कंदव्रते । **स्कंदव्रते** तु पूर्वविद्धा ग्राह्या । तदाह **वसिष्ठः**—कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत् । इति । यत्तु—नागो द्वादशनाडीभिर्दिक्पंचदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिं । इति वचनं नैतस्य स्कंदव्रतविषयत्वं । तत्र पूर्वविद्धाया एव विधानात् । नाप्युत्तरविद्धायामनुष्ठेयस्कंदव्रतातिरिक्तव्रतविषयत्वम् । पूर्वदिने षण्मुहूर्तपरिमितपंचम्यां सत्यां मुहूर्तत्रयाधिकक्षयाभावेन द्वितीयदिने मुहूर्तत्रयपरिमितषष्ठ्या अवश्यंभावे—एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि । इति **माधवोदाहृतवसिष्ठवचनस्य** निर्विषयत्वापत्तेः । किंतु एकभक्ते दिनद्वये मध्याह्ने षष्ठ्यादितिथिसत्वेऽसत्वे वा गौणकालसत्वेन पूर्वत्र प्रसक्तावनेन पूर्वा निषिध्यते । अतएव दिनद्वयेऽपि कर्मकालव्यापितिथिसंभवे इदं द्रष्टव्यमुपवासादिविषयता नास्य युक्तेति **हेमाद्रिः** संगच्छते । यत्तु—यदि उत्तरविद्धा न लभ्यते तदा व्रतांतराण्यपि स्कंदव्रतवत्पूर्वविद्धायामनुष्ठेयानि—एकादशीतृतीयेति वसिष्ठवचनादित्युक्त्वा नागवेधः षण्मुहूर्तात्मकः—नागो द्वादशनाडीभिरिति वचनादिति माधवाचार्यैरुक्तं तदेकभक्ताभिप्रायेणैव नेयं । अन्यथा तदुदाहृतवसिष्ठवचनहेमाद्रिविरोधापत्तेः। सप्तमीविद्धाया अलाभे तु स्कंदव्रतातिरिक्तव्रतान्यपि वसिष्ठवचनात्पूर्वविद्धायामेव कर्तव्यानि । इति षष्ठीसामान्यनिर्णयः । **हेमाद्रौ ब्रह्मपुराणे**—जातः स्कंदश्च षष्ठ्यां तु शुक्लायां चैत्रनामनि । सैनापत्येऽभिषिक्तश्च देवानां ब्रह्मणा स्वयं । जितवांस्तारकं दैत्यं क्रौंचं शक्त्या बिभेद सः । तस्मात्सर्वत्र विधिना

स्कंदपूजा । स्कंदो माल्यैः सुगंधिभिः । दीपालंकारवस्त्रान्नकुक्कुटैः पूज्य एव हि । सकुक्कुटक्रीडनकैर्घंटाचामरदर्पणैः । इति स्कंदपूजोक्ता । **निर्णयामृते वाराहे**—आषाढे शुक्लषष्ठी तु तिथिः कौमारिकी स्मृता । कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने । इति । **हेमाद्रौ भविष्यत्पुराणे**—येयं भाद्रपदे मासि

षष्ठी तु भरतर्षभ । स्नानदानादिकं सर्वमस्यामक्षय्यमश्नुते । षष्ठ्यां फलाशनो राजन्विशेषात्कार्तिके नृप । कृष्णशुक्लासु नियतो ब्रह्मचारी समाहितः । षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति । इह चामुत्र सोऽत्यर्थं लभते ख्यातिमुत्तमां । राज्यच्युतो विशेषेण स्वराज्यं लभतेऽचिरात् । योऽस्यां पश्यति गांगेयं दक्षिणापथवासिनं । ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः । तस्यां षष्ठ्यां सदा पश्येत्कार्तिकेयं सदैव हि । त्रिःकृत्वा दक्षिणामाशां गत्वा यः श्रद्धयान्वितः । पूजयेद्देवदेवेशं स गच्छेच्छांतिमंदिरं । इति त्रिःकृत्वा दक्षिणामाशां गत्वेत्युक्तेर्विंध्योत्तरतो गच्छतामेतत्फलमिति **हेमाद्रिः** । तत्र स्कंदव्रते सर्वत्र पूर्वविद्धा ग्राह्या । शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनं ।

कपिलाषष्ठी । प्राशनं पंचगव्यस्य अश्वमेधफलप्रदमिति भास्करपूजोक्ता । तत्र पौर्वाह्णिकी ग्राह्या । **निर्णयामृते वाराहे**—नभस्ये कृष्णपक्षे या रोहिणी पातभूसुतैः । युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता । व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् । कपिलां च द्विजाग्र्याय दत्वा क्रतुफलं लभेत् । **पुराणसमुच्चये**—भाद्रे मासि सिते पक्षे भानौ चैव करे स्थिते । पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् । सूर्यस्य हस्तस्थितत्वं सति संभवे प्राशस्त्यातिशयसंपादकं । अत इयं पूर्वा परा वा योगवशेन ग्राह्या । तद्वद्भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे । चंद्रषष्ठीव्रतं कुर्यात्पूर्ववेधः प्रशस्यते । चंद्रोदये यदा षष्ठी पूर्वाह्ने वा परेऽहनि । चंद्रषष्ठ्यसिते पक्षे सैवोपोष्या प्रयत्नतः । इति । इति भाद्रपदषष्ठी ।

कार्तिकषष्ठी । **कार्तिकषष्ठीकृत्यं मात्स्ये**—वृश्चिकार्के शुक्लषष्ठी भौमवारेप्युपस्थिते । महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः । तस्यां स्वपिति वै वह्निः पूर्वत्रोपोष्य वै दिने । षष्ठ्यां वह्निं समभ्यर्च्य कुर्याद्वह्निमहोत्सवं । इति । अत्र षण्मुन्योरिति वचनादुत्तरा ग्राह्या ।

मार्गशीर्षषष्ठी । **मार्गशीर्षशुक्लषष्ठीकृत्यं मदनरत्ने भविष्योत्तरे**—येयं मार्गशिरे मासि षष्ठी भरतसत्तम । पुण्या पापहरा धन्या शिवा शांता गुहप्रिया । निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् । रराज तेन दयिता तारकेयस्य सा तिथिः ।

स्नानदानादिकं कर्म तस्यामक्षय्यमुच्यते । येऽस्यां पश्यंति गांगेयं दक्षिणाशासमाश्रितं । ब्रह्महत्यादिपापैस्ते मुच्यंते नात्र संशयः । तस्मादस्यां सोपवासः कुमारं स्वर्णसंभवं । इत्यादिना स्कंदपूजाद्युक्तं । तत्र पूर्वविद्धा ग्राह्या कृष्णाष्टमी स्कंदषष्ठीति वचनात् । षष्ठ्यां पूजां गुहस्य चेति वचनेन सर्वास्वपि षष्ठीषु स्कंदपूजोक्ता, तत्रापि पूर्वविद्धा ग्राह्येति । इति कालखंडे षष्ठीनिर्णयः ।

**अथ सप्तमी निर्णीयते** ॥ सा च पक्षद्वयेऽपि सर्वेषूपवासादिषु पूर्वविद्धैव षण्मुन्योरिति युग्मवाक्यात् । **हेमाद्रौ स्कांदे** च—षष्ठ्या युता सप्तमी तु कर्तव्या तात सर्वदा । षष्ठी च सप्तमी यत्र तत्र सन्निहितो रविः । **भविष्यत्पुराणब्रह्मपुराणयोः**—षष्ठी च सप्तमी तात अन्योन्यं तु समाश्रिते । पूर्वविद्धा द्विजश्रेष्ठ कर्तव्या सप्तमीतिथिः । **पैठीनसिः**—पंचमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः । उत्तरविद्धाप्रतिषेधः **स्कांदे**—पष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी । सप्तमी परविद्धा च नोपोष्यं तिथिपंचकं । इति । तत्र संनिहितो रविरित्यनेन सूर्यव्रते एव पूर्वविद्धेति शंका न कार्या । तदुक्तं **ब्रह्मवैवर्ते माधवे**—सप्तमी नाष्टमीयुक्ता न सप्तम्या युताष्टमी । सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा । इति । यदा पूर्वदिनेऽस्तमयपर्यंता षष्ठी द्वितीयदिने क्षयवशादपराह्णांतपर्यंता सप्तमी तदा पूर्वविद्धाया अभावादुत्तरविद्धायाः प्रतिषेधात् कुत्रानुष्ठानमिति चेत् । नागविद्धा तु या षष्ठी दशम्येकादशी तथा । भूतविद्धाप्यमावास्या निष्फलं स्यात्तिथित्रयं । नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी । भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुंगवैः । नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः । चतुर्दशी कामविद्धा तिस्रस्ता मलिनाः स्मृताः । एतानि वचनानि पूर्वविद्धानिषेधमुखेन परविद्धापूज्यतापराणीति **कालादर्श**-सिद्धांतात् । पूर्वविद्धा न कर्तव्या तृतीया षष्ठ्यपि द्विज । अष्टम्येकादशी भूता धर्मकामार्थमोक्षिभिः । तत्रैकादश्यादयः परविद्धा उपोष्याः प्रतीयंते इति विद्धाधिका समद्वादशिका-

---

निषेधमुखेन पूर्वविद्धाप्राशस्त्यबोधकत्वेन पूर्वविद्धाया अभावे उत्तरविद्धानिषेधकत्वाभावात् तिथ्यंतरप्राशस्त्यबोधकत्वमेव युक्तं। अन्यथा पूज्यतिथिप्रकरणे पाठस्यासामंजस्यापत्तेः । तत्र प्रशस्तपूज्यतिथ्यलाभे पूज्यतिथावेवानुष्ठानस्य । एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि । इत्यादिषु दृष्टत्वादष्टमीविद्धायामेव सप्तम्यामनुष्ठानं कर्तव्यं । इति सप्तमीसामान्यनिर्णयः । **चैत्रशुक्लसप्तम्यां** । भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः । कृत्वा प्राप्नोति

सूर्यपूजा । भोगादीन्विगतारिर्महातपाः । इति देवीपुराणे सूर्यपूजोक्ता । **निर्णयामृते ब्रह्मपुराणे**—आषाढशुक्लसप्तम्यां विवस्वान्नाम भास्करः । जातः सर्वासु तस्मात्तं तत्रोपोष्य यजेत्सदा । रथचक्राकृतौ रम्ये मंडले सर्वकामदं । भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपविलेपनैः । इति सूर्यपूजोक्ता । **हेमाद्रौ भविष्यत्पुराणे**—मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप । अपराजितेति विख्याता महापातकनाशिनी । या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी । नंदा सा कथिता वीर सर्वानंदकरी शुभा । स्नानदानादिकं कर्म अस्यामक्षय्यमुच्यते । नंदा मार्गशिरे शुक्ला सप्तम्यानंददायिनी । जयंती नाम सा प्रोक्ता पुण्या पापहरा स्मृता । **निर्णयामृते ब्रह्मपुराणे**—यद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः । अदितेः कश्यपाज्जातो मित्रो नाम दिवाकरः । सप्तम्यां तेन सा ख्याता लोकेऽस्मिन्मित्रसप्तमी । षष्ठ्यां च स्नपनं कार्यं तस्मै मित्राय भानवे । तत्रोपवासः कर्तव्यो भक्ष्याण्यथ फलानि च । रात्रौ जागरणं कार्यं गीतनृत्यपुरःसरं । सप्तम्यां वपनं कार्यं ततः स्नात्वा यजेद्रविं । नानाकुसुमसंभारैर्भक्ष्यैः पिष्टमयैः शुभैः । मधुना च प्रभूतेन होमजाप्यसमाधिभिः । ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्च मानवान् । अष्टम्यां संविभोज्याश्च तथा नटकनर्तकाः । दिनद्वये च

रथसप्तमी । भोक्तव्यं पिष्टमन्नं मधुप्लुतम् । इति । माघशुक्लसप्तमी **रथसप्तमी मन्वादिश्च** । तदुक्तं **हेमाद्रौ मात्स्ये**—यस्यां मन्वंतरस्यादौ रथारूढो दिवाकरः । माघमासस्य सप्तम्यां सा तस्माद्रथसप्तमी । तत्रैव **विष्णुः**—सूर्यग्रहणतुल्या तु शुक्ला

माघस्य सप्तमी। अरुणोदयवेलायां तस्यां स्नानं महाफलं। तथा। माघमासस्य सप्तम्यामुदयत्येव भास्करे। विधिवत्तत्र च स्नानं महापातकनाशनं। माघमाससिते पक्षे सप्तमी कोटि-भास्करा। कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः। अर्घ्य-दानमंत्रश्च। यद्यज्जन्मकृतं पापं मया जन्मसु सप्तसु। तन्मे रोगं च शोकं च माकरी हंतु सप्तमीति। **हेमाद्रौ भविष्य-त्पुराणे**–शुक्लपक्षस्य सप्तम्यां रविवारो भवेद्यदि। सप्तमी विजया नाम तत्र दत्तं महाफलं। शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत्। आद्ये पादे तु देवेंद्र तदा सा भद्रतां व्रजेत्। स्नपनं तत्र देवस्य घृतेन कथितं बुधैः। इत्येषा कथिता वीर भद्रा नामेति सप्तमी। यामुपोष्य नरो भीरु ब्रह्मलोकमवाप्नुयात्। सवितुर्नक्षत्रं हस्तः। तथा। शुक्लपक्षे तु सप्तम्यां यदृक्षं तु करो भवेत्। तस्मात्सा सुमहापुण्या सप्तमी पापनाशिनी। तस्यां संपूज्य देवेशं चित्रभानुं दिवाकरं। सप्तजन्मकृतात्पा-पान्मुच्यते नात्र संशयः। यश्चोपवासं कुरुते तस्यां नियतमा-नसः। सर्वपापविशुद्धात्मा सूर्यलोके महीयते। शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः। महाजया तदा स्याद्धि सप्तमी भास्करप्रिया। स्नानं दानं तथा होमः पितृदेवादिपूजनं। सर्वं कोटिगुणं प्रोक्तं भास्करस्य वचो यथा। **हेमाद्रौ आ-दित्यपुराणे**–रेवती रविसंयुक्ता सप्तमी स्यान्महाफला। रेवती यत्र सप्तम्यामादित्यदिवसे भवेत्। अशोकैरर्चयेद्दुर्गामशोक-कलिकां पिबेदिति। अत्रोपवासे सप्तमी पूर्वविद्धालाभे पूर्वविद्धा ग्राह्या अलाभे तूत्तरा। पूजादौ दिनद्वये कर्मकालव्याप्तौ पूर्वा उत्तरदिने एव तद्व्याप्तावुत्तरेति। **निर्णयामृते**–षष्ठीसप्तमीयोगे वारश्चेदंशुमालिनः। पद्मको नाम योगोऽयं सहस्रार्कग्रहैः समः। इति। **हेमाद्रौ भविष्यत्पुराणे**–षष्ठ्यामुपोष्य यः सम्यक् सप्तम्यां सूर्यमर्चयेत्। रोगमुक्तो वित्तवांस्तु संप्राप्नोतीप्सितं फलं। इति सर्वसप्तम्यां सूर्यपूजोक्ता। तत्र द्विनद्वये कर्मकाल-व्याप्तौ पूर्वा अन्यथोत्तरेति। इति कालखंडे सप्तमीनिर्णयः।

**अथाष्टमी निर्णीयते।** सा चोपवासातिरिक्तव्रतादौ शु-क्लोत्तरा कृष्णा पूर्वा। तदुक्तं **निगमे**–शुक्लपक्षेऽष्टमी चैव शुक्ल-

१ 'देवेश'. २ 'स्वर्गलोके'. ३ षष्ठीसप्तमीसंयोगे.

पक्षे चतुर्दशी। पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता। उपवासादिकार्येषु ह्येष धर्मः सनातनः। कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्। उपवासादिकार्येषु ह्येष धर्मः सनातनः। इति। यानि तु—सप्तमी नाष्टमीयुक्ता सप्तम्यापि सहाष्टमी। सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा। अष्टमी नवमीमिश्रा कर्तव्या भूतिमिच्छता। सप्तमीसंयुता चैव न कर्तव्या शिखिध्वज। इत्यादिब्रह्मवैवर्तस्कांदादिवचनानि तानि शुक्लाष्टमीविषयाणि। कृष्णाविषयत्वे कृष्णपक्षेति निगमविरोधापत्तेः। शिवशक्तिमहोत्सवे तु पक्षद्वयेऽप्युत्तरैव। तदुक्तं पद्मपुराणे—अष्टमी नवमीविद्धा नवम्या चाष्टमी युता। अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः। अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः। शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि। इति। महानुत्साहो यस्मादिति बहुव्रीहिः। अष्टमीनवमीयुग्मस्य विशेषणमिदं, शिवक्षेत्रे इत्यपि। तथाच महोत्सवकारके इत्यर्थः। चतुर्दशीमुपोषंति शिवभक्ता नराधिप। अपरे त्वष्टमीं संतः शिवभक्तिसमाश्रयाः। इत्यादिमार्कंडेयादिवाक्यविहितशैवोपवासातिरिक्तोपवासे तु पक्षद्वयेऽप्युत्तरैव—उपवासे सप्तमी तु वेधाद्धंत्युत्तरं दिनम्। पक्षयोरुभयोरेष उपवासविधिः स्मृत इति, पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी। एकादशीं तु कुर्वीत क्षीयते द्वादशी यदीति, षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी। पूर्णिमा परविद्धा च नोपोष्यं चैव पंचकमिति हेमाद्र्युदाहृतवृद्धवसिष्ठनारदीयपुराणऋष्यशृंगपद्मपुराणादिवचनैः सप्तमीविद्धानिषेधात्। एकदश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी। अमावास्या तृतीया च ता उपोष्याः परान्विताः। इत्यादिभिर्हेमाद्र्युदाहृतपद्मपुराणविष्णुधर्मोत्तरादिभिर्वसुरंध्रयोरिति युग्मवाक्येन चोत्तरस्या एव विधानात्। नचैवं शुक्लपक्षेऽष्टमीति वाक्ये शुक्लपक्षे इत्यस्योपादानं व्यर्थमिति शंक्यं। उपवासादीत्यत्रादिपदग्राह्यव्रतादौ कृष्णपक्षव्यावृत्तये तस्यावश्यकत्वात्। नचैवमपि कृष्णपक्षेऽष्टमीति पूर्वविद्धाविधायकनिगमवाक्ये उपवासादिकार्येष्वित्यत्रोपवासग्रहणात्कृष्णपक्षे विकल्प एव युक्त इति शंक्यं। उपवासादिसकलव्रतविषयकनिगमवाक्यात्।

उपवासमात्रविषयकनारदीयादिवाक्यानां विशेषवचनत्वेन तदपवादकत्वस्यैव युक्तत्वात् । नचैवं पूर्वविद्धाविधायके निगमे उपवासग्रहणवैयर्थ्यापत्तिः । रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत् । इत्यनेनैकवाक्यतया रुद्रोपवासविषयत्वसंभवेन वैयर्थ्याभावात् । नन्वेवमपि उत्तराविधायकवाक्यानि शुक्लपक्षेऽष्टमीति निगमैकवाक्यतया शुक्लपक्षविषयाणि, पूर्वविद्धाविधायकानि तु कृष्णपक्षेऽष्टमीति निगमानुसारात्कृष्णपक्षविषयाणीति सिद्धांतयद्भ्यां हेमाद्रिमाधवाभ्यां सह विरोधो दुर्वार इति चेन्न । अष्टमीनिर्णयप्रकरणे हेमाद्रिणैवमुक्तत्वेपि उपवासतिथिनिर्णयप्रकरणे अष्टमी तु पक्षद्वयेपि परयुतैव । उपवासे सप्तमी तु वेधाढ्यंत्युत्तरं दिनं । पक्षयोरुभयोरेष उपवासविधिः स्मृतः । इति वचनात् । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्तव्या परविद्धा न कुत्रचित् । उपवासादिकार्येषु ह्येष धर्मः सनातनः । इति वचनं तु रुद्रव्रतविषयं, रुद्रव्रतेषु सर्वेष्वितिवचनात्, उपवासे पक्षद्वयगताया अपि उत्तरस्या एव सिद्धांतितत्वात् । अष्टमीप्रकरणस्थो हेमाद्रिरुपवासभिन्नव्रतविषय इति तद्विरोधाभावात् । उपवासप्रकरणस्थहेमाद्र्यविरोधाय माधवस्याप्युपवासातिरिक्तव्रतेऽष्टमीनिर्णये एव तात्पर्येण तद्विरोधस्याप्यभावात् । नचोपवासप्रकरणस्थहेमाद्रिग्रंथोपमर्दार्थमेव माधवप्रवृत्तिरिति शंक्यं । उपवासे सप्तमी तु वेधाढ्यंत्युत्तरं दिनं । पक्षयोरुभयोरेष उपवासविधिः स्मृतः । इत्यादिवाक्यविरोधापत्तेः । नच यथाश्रुतार्थे माधवग्रंथप्रामाण्यनिर्वाहार्थं नारदीयादिवाक्यान्यनादर्तव्यानीति वाच्यं । स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इति वैजवापवाक्येनैव वचनबलाबलव्यवस्थेति हेमाद्रिणा माधवेन च सिद्धांतितत्वात् । वचनविरोधे माधवग्रंथस्यैव त्याज्यत्वापत्तेः । तस्माद्वचनाविरोधेनैव माधवतात्पर्यकल्पनस्यैवोचितत्वात् न तद्विरोधसंभावनेति । अतएवोपवासे तु पक्षद्वयेऽप्यष्टमी परयुतैव ग्राह्या । उपवासे सप्तमी त्विति नारदीयवचनेन पक्षद्वयेऽपि सप्तमीविद्धानिषेधात्, एकादश्यष्टमी षष्ठीति वचनाच्चेति मदनरत्नः संगच्छते । यत्तु

कालतत्त्वविवेचने अष्टम्या नवमीविद्धेति पाद्मे यः पूजोपवासादिरुत्सवः पक्षद्वयगतायामष्टम्यां नवम्यां वा विहितः स नवमीयुतायां अष्टम्यामष्टमीयुतायां च नवम्यां कर्तव्य इत्येतावद्विवक्षितमिति उपवासपरत्वं उत्सवविधायकपाद्मस्योत्प्रेक्ष्य उपवासे सप्तमीति **नारदीयवचनं** शिवशक्तिप्रीत्यर्थोपवासविषयमेव, नतु कृष्णाष्टम्या उपवासे सामान्यवचनप्राप्तं पूर्वविद्धत्वमपोद्य पक्षद्वयेऽप्युत्तराग्राह्यत्वं प्रतिपादयतीति युक्तं। कृष्णाष्टम्याः पूर्वविद्धत्वप्रतिपादकनिगमवाक्ये आहत्योपवासग्रहणात्। नचैतस्य रुद्रव्रतेष्विति वचनवशाद्रुद्रोपवासविषयत्वेनोपसंहारो युक्तः। उपवासादिकार्येषु एष धर्मः सनातनः। इति सर्वविषयत्वस्य स्पष्टत्वात्। रुद्रव्रतेष्वित्यस्य रुद्रव्रतमात्रविषयत्वेनोपवासमात्रविषयत्वाभावात्। समानविषयत्वाभावादिति हेमाद्रिमदनरत्नादिसिद्धांते दूषणोत्प्रेक्षणं कृतं तदत्यंतानुचितं। तथाहि यन्महोत्सवशब्दस्योपवासपरत्वकल्पनं तत् तिथ्यंते वोत्सवांते वा व्रती कुर्वीत पारणं। इति वाक्ये उत्सवः प्रातस्तनदेवपूजेति **माधवमदनरत्नादिविरोधात्**। अष्टम्यां पूज्यते रुद्रो नवम्यां शक्तिरर्च्यते। द्वयोर्योगे तु संप्राप्ते पूजायां तु महाफलं। इति निर्णयामृतोदाहृतभोजराजीयस्य, अतश्चोमामहेश्वरपूजा कृष्णाष्टम्यामपि नवमीयुक्तायामेवेति सिद्धमिति **निर्णयामृतस्य मदनरत्नस्य** च विरोधादयुक्तमेव। यदपि उपवासे सप्तमीत्यस्य पूर्वविद्धापवादकत्वे पूर्वविधायकनिगमवाक्ये आहत्योपवासग्रहणविरोधोद्भावनं तत्। एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी। अमावास्या तृतीया च ता उपोष्याः परान्विताः। इति हेमाद्र्युदाहृतवसिष्ठवाक्येप्याहत्यैवोपवासग्रहणादयुक्तं। यदपि सर्वविषयक-कृष्णपक्षेष्टमी चैवेति निगमस्य व्रतसामान्यविषयकेन रुद्रव्रतेष्वित्यनेनोपवासे उपसंहारो न युक्तः, अस्योपवासमात्रविषयत्वाभावेन समानविषयत्वाभावादिति दूषणं तु उपवासे उपसंहारं वदतां भवतामेव। नतु नारदीयादिविशेषवचनेन अन्योपवासे अस्य बाधितत्वात्। रुद्रव्रतेष्वित्यनेनैकवाक्यतया कृष्णपक्षे उपवासादिरुद्रव्रतसामान्ये एतस्य पर्यवसानमित्यर्थककृष्णपक्षेऽष्टमीति वचनं रुद्रव्रतविषयं रुद्रव्रतेष्विति वचनादिति हेमाद्रिसिद्धांते इति यत्किंचिदेतत्। तस्माच्छुक्लाष्टमी

नवमीयुतैव कृष्णाष्टमी पूर्वयुतैवेति **निर्णयामृतः** कालतत्वविवेचनं च । अष्टमी तु सर्वमते कृष्णा पूर्वा सिता परेति निर्णयसिंधुः, एवं स्मृतिकौस्तुभमयूखादयः सर्वे नवीनग्रंथा नारदीयादिवचनविरुद्धा एवेति बोध्यं । इत्यष्टमीसामान्यनिर्णयः ॥

**चैत्रशुक्लाष्टम्यां** । अशोककलिकाश्चाष्टौ ये पिबंति पुनर्वसौ । चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः । त्वामशोक नमामीह मधुमाससमुद्भवं । पिबामि शोकसंततो मामशोकं सदा कुरु । इति **लिंगपुराणे**ऽशोककलिकाप्राशनमुक्तं, तत्र नवमीयुताष्टमी ग्राह्या । चैत्राष्टम्यां महायात्रां भवान्याः कारयेत्सुधीः । अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रदक्षिणाः । प्रदक्षिणीकृता तेन सप्तद्वीपवती मही । सशैला ससमुद्रा च साश्रमा च सकानना । कुर्याज्जागरणं रात्रौ महाष्टम्यां व्रती नरः । प्रातर्भवानीमभ्यर्च्य प्राप्नुयाद्वांछितं फलं । इति **स्कांदे** । भवानीं यश्च पश्येत्तु शुक्लाष्टम्यां मधौ नरः । न जातु शोकं लभते सदानंदमयो भवेत् । इति **काशीखंडे** च अन्नपूर्णायात्रोक्ता । तत्र पूर्वविद्धालाभे उपवासजागरणे तत्र कृत्वा पूजाप्रदक्षिणादिकं च नवमीयुतायामेव । पूर्वविद्धाया असंभवे तु सर्वमुत्तरत्रैव कार्यं । इति चैत्राष्टमी । **वैशाखशुक्लाष्टम्यां** । सहकारफलैः स्नानं वैशाखे ह्यष्टमीदिने । आत्मनो देवतां स्नाप्य मांसीवालकवारिभिः । लेपनं फलकर्पूरं धूपं चापि सुगंधकं । फलं जातीफलमिति **निर्णयामृते** । देव्याः पूजां प्रकुर्वीत केतक्या चंपकेन च । शर्कराक्षीरनैवेद्यं कन्याविप्रेषु भोजनं । आत्मनः पारणं तद्वद्दक्षिणां शक्तितो ददेत् । इति **देवीपुराणे** आम्रफलरसेन देव्याः स्नानपूजादिकमुक्तं । तत्र पौर्वाह्णिकी ग्राह्या । ज्येष्ठे मासि द्विजश्रेष्ठ कृष्णाष्टम्यां त्रिलोचनं । यः पूजयति देवेशं शिवलोकं व्रजेन्नरः । इति **भविष्योत्तरे ज्येष्ठकृष्णाष्टम्यां** शिवपूजोक्ता । तत्र सायाह्नव्यापिनी ग्राह्या । रुद्रव्रतेषु सर्वेष्विति वचनात् । **आषाढशुक्लाष्टम्यां** । अष्टम्यां च तथाषाढे निशातोयेन स्नापयेत् । स्वयं स्नात्वा च कर्पूरैश्चंदनैस्तां विलेपयेत् । धूपैश्चंदनकर्पूरवालकैः सितसिह्लकैः । भक्ष्याणि शर्करापूर्णान्यनेकानि शुभानि च । दापयेत्कन्यकाविप्रभोजनं चात्मन-

स्तथा । शक्तितो दक्षिणां दद्यान्महिषघ्नीं च कीर्तयेत् । दीप-माला घृतेनैव सर्वान्कामान्प्रयच्छति । इति देवीपुराणे महिषघ्न्याः हरिद्रातोयेन स्नानपूजादिकमुक्तं । तत्र दीपमालाविधानात्प्रदो-षव्यापिनी ग्राह्या । इत्याषाढाष्टमी ।

**अथ जन्माष्टमी निर्णीयते।** साच दर्शांतमासाभिप्रायेण श्रावणकृष्णाष्टमीति, पूर्णिमांतमासाभिप्रायेण भाद्रपदकृष्णाष्ट-मीति वाक्येषु व्यवह्रियत इति श्रावण्युत्तरा एकैवाष्टमी । यत्तु श्रावणे वा नभस्ये वा रोहिणीसहिताष्टमी । यदा कृष्णा नरैर्लब्धा सा जयंतीति कीर्तिता । श्रावणे न भवेद्योगो नभस्ये तु भवेद्ध्रुवं । तयोरभावे योगस्य तस्मिन्वर्षे न संभवः । इति माधवे वसिष्ठसंहितावचनं, तत्र सा जयंतीत्यत्र सेत्यनेन श्रावणगतैव परामृश्यते नतु नभस्यगता । रोहिणी च यदाष्टम्यां कृष्णायां श्रावणे भवेत् । जयंती नाम सा प्रोक्ता नतु भाद्र-पदेऽष्टमी । इति कालादर्शोदाहृतवाराहवचनविरोधात् । दर्शां-तमासाभिप्रायेण श्रावणे इति, पूर्णिमांतमासाभिप्रायेण भाद्रपद इत्युच्यत इति एकैवाष्टमीति हेमाद्रिमाधवकालादर्शादिविरो-धाच्च । एतेन श्रावणकृष्णाष्टम्यां रोहिणीयोगाभावे भाद्रपद-कृष्णाष्टम्यां रोहिणीसत्वे च तत्रैव जयंतीव्रतं कार्यमिति स्मृतिकौस्तुभ उपेक्ष्यः । वाराहवचनाद्यदर्शननिबंधनत्वात् । अस्यां हेमाद्रिमदनरत्नाद्युदाहृतभविष्योत्तरे—कीदृशं तद्व्रतं देव देवैः सर्वैरनुष्ठितं । जन्माष्टमीतिसंज्ञं च पवित्रं पापनाशनं । इति युधिष्ठिरेण पृष्टः कृष्ण उवाच—मासि भा-द्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे । शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञिते । योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत् । तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः । भगवत्याश्च त-त्रैव क्रियते सुमहोत्सवः । योगेऽस्मिन्कथितेऽष्टम्यां सिंहरा-शिगते रवौ । इत्युपक्रम्य, सूतिकागृहनिर्माणाद्यभिधाय, प्रण-वादिनमोंतं च पृथङ्नामानुकीर्तयन् । कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये । देवक्यै वसुदेवाय वासुदेवाय चैव हि । बलदेवाय नंदाय यशोदायै पृथक् पृथक् । इत्यादिपूजामभि-धाय । मंत्रेणानेन नैवेद्यं दद्याच्चंद्रमसे नरः । तथैवार्घ्यं च मंत्रेण अनेनैव तु दापयेत् । क्षीरोदार्णवसंभूत अत्रिगोत्रसमु-

द्भव । गृहाणार्घ्यं शशांकेदं रोहिण्या सहितो मम । ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषांपते । नमस्ते रोहिणीकांत अर्घ्यं नः प्रतिगृह्यतां । स्थंडिले स्थापयेद्देवं शशांकं रोहिणीयुतं । देवक्या वसुदेवं च नंदं चैव यशोदया । बलदेवं मया सार्धं भक्त्या परमया नृप । संपूज्य विधिवद्देही किं नाप्नोत्यतिदुर्लभं । ततो नालच्छेदादिनामकरणपर्यंतसंस्कारान्नवमीप्रातःपूजां चोक्त्वा । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणां । हिरण्यं मेदिनीं गावो वासांसि कुसुमानि च । यद्यदिष्टतमं तत्तु कृष्णो मे प्रीयतामिति । इत्यादिपारणांतमभिधाय । एवं यः कुरुते देव्या देवक्याः सुमहोत्सवं । प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् । पुत्रसंतानमनघं सौभाग्यमतुलं लभेत् । इह धर्मरतिर्भूत्वा मृतो वैकुंठमाप्नुयात् । इत्याद्यनेकफलान्युक्तानि । अत्र प्रतिवर्षमिति वीप्साश्रवणात्, श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतं । न करोति नरो यस्तु भवति क्रूरराक्षसः । जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम । त्रैलोक्यसंभवं पापं तेन भुक्तं द्विजोत्तम । इत्यादिमाधवाद्युदाहृतभविष्यत्पुराणादिवचनैरकरणे प्रत्यवायश्रवणात्, करणे पुत्रादिफलश्रवणाच्च नित्यं काम्यं च जन्माष्टमीव्रतं रोहिणीयुताष्टम्यां विहितं । अग्निपुराणे वसिष्ठ उवाच—कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी नृप । जयंती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः । सप्तजन्मकृतं पापं राजन्य त्रिविधं नृणां । तत्क्षालयति गोविंदस्तिथौ तस्यां सुभावितः । उपवासश्च तत्रोक्तो महापातकनाशनः । जयंत्यां जगतीपाल विधिना नात्र संशयः । त्रेतायां द्वापरे चैव राजन्कृतयुगे पुरा । रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता । वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः । सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते । तत्र पारणकं कुर्यादेवं वेदविदो विदुः । अतः परं महीपाल संप्राप्ते तामसे कलौ । जन्मनो वासुदेवस्य भविता व्रतमुत्तमं । आराधितः स देवक्या विष्णुः सर्वेश्वरः पुरा । समायोगे तु रोहिण्यां निशीथे राजसत्तम । समजायत गोविंदो बालरूपी चतुर्भुजः । तं दृष्ट्वा जगतां नाथं प्रणम्य

गरुडध्वजं । देवकी प्रांजलिर्भूत्वा इदं वचनमब्रवीत् । नाहं वियोगं संसोढुं हार्दप्रस्रुतलोचना । तवेदग्रूपमालोक्य[1] शक्नोमि मधुसूदन । वासुदेव उवाच । त्वं मां द्रक्ष्यस्यसंदिग्धं दिनेऽस्मिन्नेव मामके । तव दर्शनमेष्यामि बालरूपेण देवकि । ये त्वां पुष्पादिभिर्देवि पूजयिष्यंति मानवाः । दिनेऽस्मिन्मां महाभागास्तवोत्संगे व्यवस्थितं । दास्यंति ये निशीथेऽर्घ्यं रोहिण्या सहिते विधौ । सुवर्णेन कृते पात्रे राजते वा नरोत्तमाः । सर्वान्कामानवाप्स्यंति इह लोके परत्र च । सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि । भविता साष्टमी पुण्या यावच्चंद्रदिवाकरौ[2] । यत्पुण्यं सम्यगिष्टेन राजसूयेन पार्थिव । तत्पुण्यं सकलं लब्ध्वा विष्णोः सालोक्यतां व्रजेत् । नापुत्री नाधनो दुःखी वियोगी नापि रोगवान् । भवेन्नाकालतो मृत्युर्यावज्जन्मशतं नृप । शंखे तोयं समादाय सपुष्पफलकांचनं । जानुमेकं धरां कृत्वा चंद्रायार्घ्यं निवेदयेत् । क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव । अर्घ्यं गृह्ण शशांकेदं रोहिण्या सहितो मम । ततोनु पूजयेत्तां तु सकृष्णां देवकीं नृप । गंधपुष्पैः सनैवेद्यैर्वस्त्रैराभरणैस्तथा । इत्यादिना पूजामभिधाय, पूर्वैतिहासैः पौराणैः क्षपेत्तां शर्वरीं नृप । दद्यात्स्वशक्तितो राजन्प्रभाते उदिते रवौ । ब्राह्मणेभ्यो यथाशक्ति धेनुं वस्त्राणि कांचनं । दक्षिणां च द्विजेभ्यस्तु सर्वं तदक्षयं भवेत् । भांते कुर्यात्तिथेर्वापि शस्तं भारत पारणं । व्रतेनानेन पूतात्मा राजसूयफलं लभेत् । यः कुर्याद्व्रतमेतत्तु पुण्यवान्भक्तितः सदा । इहामुत्र सुखी विद्वान्परात्परतरं व्रजेत् । इत्यादिना जयंतीव्रतमुक्तं । अत्र फलश्रवणात्काम्यत्वं । न करोति यदा विष्णोर्जयंतीसंभवं व्रतं । यमस्य वशमापन्नः सहते नारकीं व्यथां । जयंतीवासरे प्राप्ते करोत्युदरपूरणं । संपीड्यतेऽतिमात्रं तु यमदूतैः कलेवरं । इत्यादिवाक्यैरकरणे प्रत्यवायश्रवणान्नित्यत्वं चास्य स्पष्टं । एतस्य पूर्वोदाहृतभविष्योत्तरोक्ताजन्माष्टमीव्रताद्भेदस्वीकारे—शूद्रान्नेन तु यत्पापं शवहस्तस्थभोजने । तत्पापं लभते पुंभिर्जयंत्यां भोजने कृते । गृध्रमांसं खरं काकं श्येनं च मुनिसत्तम । मांसं वा द्विपदां भुक्तं भुक्तं जन्माष्टमीदिने । कृष्णाष्टमी-

१ 'तवेदं रूप'. २ 'यावज्जीव'.

दिने प्राप्ते येन भुक्तं द्विजोत्तम । त्रैलोक्यसंभवं पापं तेन भुक्तं न संशयः । ब्रह्मघ्नश्च सुरापश्च स्त्रीवधो गोवधोऽपि वा । न लोको मुनिशार्दूल जयंतीविमुखस्य च । ये न कुर्वंति जानंतः कृष्णजन्माष्टमीव्रतं । ते भवंति नराः प्राज्ञ व्याला महति कानने । श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतं । न करोति नरो यस्तु भवति क्रूरराक्षसः । श्रावणे बहुले पक्षे न करोति यदाष्टमीं । क्रूरायुधाः क्रूरमुखा हिंसंति यमकिंकराः । न करोति यदा विष्णोर्जयंतीसंभवं व्रतं । यमस्य वशमापन्नः सहते नारकीं व्यथां । जयंतीवासरे प्राप्ते करोत्युदरपूरणं । संपीड्यतेऽतिमात्रं तु यमदूतैः कलेवरं । यो भुंजीत विमूढात्मा जयंतीवासरे नृप । नरकोत्तारणं नास्ति द्वादशीं तु प्रकुर्वतः । यदा सह जयंत्या तु करोति द्वादशीव्रतं । तस्य शौरिपुरे वासो यावदाभूतसंप्लवं । रटंतीह पुराणानि भूयोभूयो महामुने । अतीतानागतं तेन कुलमेकोत्तरं शतं । पातितं नरके घोरे भुंजता कृष्णवासरे । इति हेमाद्रिणा निर्णयामृतेन मदनरत्नेन चोदाहृते स्कंदपुराणे एकस्यैव व्रतस्य जन्माष्टमीशब्देन जयंतीशब्देन च बहुशो व्यवहारविरोधापत्तेः । अथ जयंतीव्रतनित्यत्वनिर्णय इति प्रस्तुत्य एतान्येव स्कांदवाक्यान्युदाहृत्य त्याज्यभोजनप्रतिषेधस्य नित्यजन्माष्टमीव्रतस्तुत्यर्थता वेदितव्या । भोजननिंदावाक्यानां नित्यव्रतविधिशेषत्वं स्पष्टमेव । फलसंबंधवचनात् काम्यत्वमप्येतस्यावगम्यते । विष्णुरहस्ये–प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । मुहूर्तमपि लभ्येत सैवोपोष्या महाफला । स्कांदे–व्रतेनाराध्यते देवं देवकीसहितं हरिं । त्यक्त्वा यमपदं घोरं याति विष्णोः परं पदं । जन्माष्टमीव्रतं ये वै प्रकुर्वंति नरोत्तमाः । कारयंति च विप्रेंद्र लक्ष्मीस्तेषां सदा स्थिरा । ममाज्ञया कुरुष्व त्वं जयंतीं मुक्तयेऽनघ । भविष्योत्तरे–प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् । इत्यादिवाक्यान्युदाहृत्य, तस्मादेतद्व्रतं नित्यं काम्यं चेति सिद्धमिति हेमाद्रिसिद्धांतविरोधापत्तेः । अकरणे प्रत्यवायबोधकजन्माष्टमीपदयुक्तजयंतीपदयुक्तानि पूर्वोक्तानि वाक्यान्युदाहृत्य

---

१ 'संवद' २ 'मप्येतद्व्रतस्याव' ३ 'यमपथं'

एतैर्वाक्यैर्जन्माष्टम्यां भोजने महादोषः श्रूयते उपवासे महाफलसंबंधश्च । तदुक्तं **विष्णुरहस्ये**—प्राजापत्यर्क्षसंयुक्तेत्यादिफलसंयुक्तबोधकान्युदाहृत्य तस्मात्सर्वैरेवोपवासव्रतं कार्यमिति **निर्णयामृतस्य,** अथ जन्माष्टमीव्रतनित्यकाम्यतानिर्णय इत्युपक्रम्य जन्माष्टमीजयंतीशब्दयुक्तान्यकरणे प्रत्यवायस्य करणे फलसंबंधस्य बोधकानि वाक्यान्युदाहृत्येति जन्माष्टमीव्रतनित्यकाम्यतानिर्णय इति **मदनरत्नस्य** च विरोधापत्तेः । अतएव यदा शुद्धाधिकाष्टमी द्वितीयदिने एव रोहिणीयुक्ता तत्र नोपवाससंदेहः रोहिणीयुक्तद्वितीयकोटेरभावादिति । यदा विद्धाधिका द्वितीयदिने एव रोहिणीयुक्ता तत्रोपवासः पूर्वतिथौ न युक्तः रोहिणीयोगाभावात् परेद्युस्तु तत्सद्भावात्प्राजापत्यर्क्षेत्यादिना तत्रैवोपवासो विधीयत इति । रोहिणीयोगे तु केवलायास्तिथेरनुपादेयत्वादिति योयं जयंतीव्रते योगनिर्णयो जन्माष्टमीव्रतेऽपि स एव द्रष्टव्यः । अष्टमी निशीथात्पूर्वं प्रवृत्ता रोहिणी निशीथादूर्ध्वं प्रवृत्ता तत्र परेद्युर्नक्षत्रबाहुल्येऽप्यष्टमीयोगस्यालपत्वादनुपादेयत्वशंका **पद्मपुराणे** व्यावर्त्यते । पूर्वविद्धाष्टमी या तु उदये नवमीदिने । मुहूर्तमपि संयुक्ता संपूर्णा साष्टमी भवेत् । कला काष्ठा मुहूर्तापि यदा कृष्णाष्टमी तिथिः । नवम्यां सैव कार्या स्यात्सप्तमीसंयुता नहि । इति **माधवः** संगच्छते । नच भविष्योत्तरे यशोदानंदबलदेवपूजोक्ता न तु वह्निपुराणे इत्यनुष्ठेयपदार्थन्यूनाधिकभावेन प्रयोगविध्येकत्वासंभवात्कथं व्रतैक्यमिति वाच्यं । पूर्वोक्तरीत्या व्रतैक्ये निर्णीते सर्वशाखांगोपसंहारन्यायेन चात्रापि यशोदादिपूजाया उपसंहरणीयत्वात् । अशक्तौ तु । वह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितं । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् । इत्यत्रैव वह्निपुराणोक्तकृष्णदेवकीपूजने कृतेऽपि प्रत्यवायपरिहारो भवत्येव । अतएव प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । सोपवासो हरेः पूजां तत्र कृत्वा न सीदति । इत्यादिषु हरिपूजामात्रमेवोक्तं । तस्माज्जयंतीशब्देन जन्माष्टमीशब्देन चोच्यमानं व्रतमेकमेव । ननु व्रतद्वयमिदं भवितुमर्हतीति प्रतिज्ञाय नामनिमित्तरूपशुद्धमिश्रत्वनिर्देशभेदैः पंचभिर्हेतुभिर्महता प्रयत्नेन व्रतभेदं प्रसाध्य सर्वथा व्रतभेदोऽगीकार्य इति

माधवग्रंथस्तु स्वरूपासिद्धहेतुविषयकनिगमनरूप एव। तथाहि। अथैष ज्योतिरित्यत्राथशब्देन प्रकरणांतरत्वनिश्चये सति ज्योतिःशब्देन ज्योतिष्टोमानुवादासंभवाद्यागांतरकल्पना युक्ता। प्रकृते उदाहृतस्कांदसंदर्भे—तत्पापं लभ्यते पुंभिर्जयंत्यां भोजने कृते। इति, मांसं वा द्विपदां भुक्तं भुक्तं जन्माष्टमीदिने। इति, ये न कुर्वंति जानंतः कृष्णजन्माष्टमीव्रतं। इति, न करोति यदा विष्णोर्जयंतीसंभवं व्रतं। इत्यादिषु एकस्यैव व्रतस्य शब्दद्वयेन बहुशोऽनुवादेन जन्माष्टमीव्रतशब्दजयंतीव्रतशब्दयोः पर्यायत्वनिश्चयेन व्रतभेदकल्पनाया असंभवात्। अन्यथा सोमयागशब्दज्योतिष्टोमशब्दयोर्भेदेन तत्रापि भेदकल्पनापत्तेः, इति नामभेदरूपहेतुः स्वरूपासिद्ध एव। मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे। शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञिते। योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत्। इत्यादिजन्माष्टमीकथावचनैः, वासरे वा निशायां वा यत्र स्वल्पापि रोहिणी। विशेषेण नभोमासे सैवोपोष्या मनीषिभिः। इति वचनात् योऽयं जयंतीव्रतयोगे निर्णयो जन्माष्टमीव्रतेपि स एव ग्राह्य इति निर्णयता माधवेनापि जन्माष्टमीव्रतेऽपि रोहिण्या निमित्तत्वप्रतिपादनात्, जन्माष्टमीव्रते तिथिरेव निमित्तं जयंतीव्रते तु रोहिणीयोग इति निमित्तभेदाद्व्रतभेद इत्यत्र निमित्तभेदहेतुरपि स्वरूपासिद्धः। जन्माष्टमीकथायामेव भविष्योत्तरे—देवक्या वसुदेवं च नंदं चैव यशोदया। बलदेवं मया सार्धं भक्त्या परमया नृप। संपूज्य विधिवद्देही किं नाप्नोत्यतिदुर्लभं। ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणां। हिरण्यं मेदिनीं गावो वासांसि कुसुमानि च। इति पूजादानादिविधानादुपवासमात्रं जन्माष्टमीव्रतस्वरूपं, जयंतीव्रतस्य तु दानादिसहितोपवासः स्वरूपमिति रूपभेदाद्व्रतभेद इत्यत्र रूपभेदोऽपि स्वरूपासिद्धः। अकरणे प्रत्यवायमात्रश्रवणात् शुद्धं नित्यं जन्माष्टमीव्रतं; जयंतीव्रतं नित्यं काम्यमपीति शुद्धमिश्रत्वभेदाद्भेद इत्युक्तं। तत्र जन्माष्टमीव्रतं ये वै प्रकुर्वंति नरोत्तमाः। कारयंति च विप्रेंद्रा लक्ष्मीस्तेषां सदा स्थिरा। सिध्यंति सर्वकार्याणि कृते जन्माष्टमीव्रते। इति स्कांदे,

पुत्रसंतानमारोग्यं सौभाग्यमतुलं लभेत्¹ । इत्यादिभविष्योत्तरे चानेकफलश्रवणात् जन्माष्टमीव्रतमपि नित्यकाम्यमेवेति शुद्धमिश्रत्वरूपहेतुरपि स्वरूपासिद्धः । जन्माष्टमी जयंती च शिवरात्रिस्तथैव चेति, अत्र जन्माष्टमीजयंत्योर्निर्देशभेदाद्व्रतभेद इत्युक्तं । तत्र रोहिणीयुक्ताष्टम्यां विहितस्यैव व्रतस्य यस्मिन्वर्षे अष्टम्यां रोहिणीयोगो नास्ति तत्र वर्षे वर्षे तु कर्तव्येत्यनेन केवलाष्टम्यां विधानादेकस्मिन्नेव व्रते वर्षभेदेन उभयविधानार्थं निर्देशभेदस्यावश्यकत्वेन तस्य व्रतभेदापादकत्वासंभवादिति पृथङ्निर्देशरूपहेतुरपि स्वरूपासिद्ध एवेति व्रतभेदो निष्प्रमाणक एव । व्रतद्वयस्वीकारे तु यस्मिन्वर्षे रोहिणीयोगो नास्ति तत्र जयंतीव्रतलोपे जन्माष्टमीव्रतप्रवृत्तिरूपं प्रयोजनमुक्तं तदन्यथासिद्धं । रोहिणीयुक्ताष्टम्यां विहितस्यैव व्रतस्य—प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् । प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी । वर्षे वर्षे तु कर्तव्या तुष्ट्यर्थं चक्रपाणिनः । इत्यादिवचनैः रोहिणीरहिताष्टम्यामपि विधानात् । श्रावणे बहुले पक्षे न करोति यदाष्टमीं । यमस्य वशमापन्नः सहते नारकीं व्यथां । इत्यादिना केवलाष्टम्यतिक्रमेऽनिष्टबोधनाच्च केवलाष्टम्यामपि जयंतीव्रतस्यावश्यानुष्ठेयत्वादिति² निष्प्रयोजनश्च व्रतभेदः । एवंस्थिते तिथिनिर्णयप्रतिपादकमाधवग्रंथस्य व्रतभेदप्रतिपादकमाधवग्रंथस्य च परस्परविरोधात् विरोधेऽप्रतिपत्तिर्वोभयोरिति महाभाष्यकारोक्तेर्ग्रंथद्वयस्यापि³ त्यागप्रसक्तौ—सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पंडितः । इत्यभियुक्तोक्तेरेकस्य प्रौढिवादत्वकल्पनं विना विरोधस्य परिहर्तुमशक्यत्वात् कस्य तत्कल्प्यमित्याकांक्षायां—स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इति जाबालिवचनात्, वचनविरुद्धं पौरुषेयं वाक्यं त्याज्यमिति प्रमाणबलाबलविचारे, प्रधानस्य जगत्कारणताविचारे च अप्रतिज्ञातेऽर्थे तात्पर्यं नास्तीति च माधवेनापि व्यवस्थापनात्, प्रकृते हेमाद्र्यादिनिर्णीतकालसंग्रहार्थं ममायमुद्योग इति ग्रंथोपक्रमे माधवेन प्रतिज्ञानात्तिथिनिर्णये एव माधवतात्पर्यं न व्रतभेदे इति निश्चयात्, उदा-

---

१ 'तुलं भवेत्'. २ 'व्रतस्यानुष्ठेयत्वा'. ३ 'स्यापि प्रत्यासत्तौ'.

द्वतसकलवचनानुकूलत्वाच्चेति तिथिनिर्णयग्रंथे तत्कल्पनस्यायुक्तत्वात् वचनविरुद्धप्रासंगिकव्रतभेदप्रतिपादकग्रंथस्यैव प्रौढिवादत्वं युक्तं । विधाने वानुवादे वा यागः करणमिष्यते । इति मीमांसावार्तिकवदिति विभावनीयम् । तत्सिद्धं जन्माष्टमीव्रतशब्देन जयंतीव्रतशब्देन च व्यवह्रियमाणं व्रतमेकमेवेति । एतेन युक्तिविरुद्धं हेमाद्रिमाधवादिमहानिबंधविरुद्धं जन्माष्टमीजयंतीव्रतयोरैक्यमिति, जयंतीयोगसत्वे तु जन्माष्टमीव्रतं जयंतीव्रतं च तंत्रेण करिष्ये इति संकल्प्येत्यादि च स्मृतिकौस्तुभः, कृतादिषु जयंती स्यात्कलौ जन्माष्टमी स्मृतेति नंदपंडितोक्तिः, शुद्धाधिका विद्धाधिका वा द्वितीयदिने एव रोहिणीयुक्ता तदा युक्तं तूपवासद्वयं द्वयोर्नित्यत्वादिति निर्णयसिंधुः, जन्माष्टमी नित्या जयंती नित्या काम्या चेति मयूखः, एवं व्रतद्वयबोधका अन्येप्यर्वाचीनग्रंथाः सर्वेऽप्युपेक्ष्याः । हेमाद्रिमाधवादिसिद्धांतस्कांदादिवचनार्थाज्ञाननिबंधनत्वात् । नन्वेवं —मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे । शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञिते । इत्यादिवचनैः रोहिणीयुक्तायामेवाष्टम्यां जन्माष्टमीव्रतविधानाद्यस्मिन्वर्षेऽष्टम्यां रोहिणी नास्ति तदा कथमिति चेत् । प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् । इति जन्माष्टमीकथायामेव रोहिण्यभावेऽप्यष्टम्यां विधानात् । श्रावणे बहुले पक्षे न करोति यदाष्टमीं । क्रूरायुधाः क्रूरमुखा हिंसंति यमकिंकराः । इत्यादिवचनैरकरणेऽनिष्टबोधनाच्च केवलाष्टम्यामपि व्रतानुष्ठानं । हेमाद्रिणापि—प्राजापात्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी । वर्षे वर्षे तु कर्तव्या तुष्ट्यर्थं चक्रपाणिनः । अयमर्थः । रोहिणीयुताष्टम्यां तुष्ट्यर्थं देवकीसूनोर्जयंतीसंभवं व्रतं । कर्तव्यं वित्तमानेन भक्त्या भक्तजनैरपि । इत्यादिवाक्यैर्विहितं यज्जयंतीव्रतं तद्वर्षे वर्षे कर्तव्यमिति सिद्धांतितत्वात् । मदनरत्नादिभिरप्येवमेव । तत्सिद्धं रोहिणीयोगाभावे केवलाष्टम्यां जयंतीव्रतं कर्तव्यमिति । व्रतस्वरूपं तु—उपवासश्च तत्रोक्तो महापातकनाशनः । तस्यामभ्यर्चनं शौरेर्हंति पापं त्रिजन्मजं । ०—कुर्याज्जागरणं तु यः । अर्धरात्रयुताष्टम्यां सोऽश्वमेधफलं

लभेदित्यादिवचनैस्त्रयाणां फलसंबंधबोधनादुपवासपूजाजागरणानि । केवलेनोपवासेन तस्मिन् जन्मदिने मम । इत्यादयस्त्वनुकल्पा अशक्तविषयाः । एतेन उपवास एव प्रधानमिति कौस्तुभः, पूजैव प्रधानमिति मयूखश्चोपेक्ष्यौ । सुंदोपसुंदन्यायाच्च । अस्मिन्व्रते ग्राह्याष्टमी द्विविधा । शुद्धा विद्धा च । तत्र नात्र तिथ्यंतर इव दिवैव वेधः । अपितु अष्टमी शिवरात्रिश्च अर्धरात्रादधो यदि । दृश्यते घटिकैका सा पूर्वविद्धा प्रकीर्तिता । इति **माधवो**दाहृतवचने घटिकाशब्देन–अर्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत् । जयंती नाम सा प्रोक्तेत्याद्येकवाक्यतयार्धरात्रात्पूर्वमष्टमीकलामात्रस्याप्युपलक्षणात् द्वितीययामांतकलामारभ्य प्रवृत्तापि पूर्वविद्धा भवति । तत्र शुद्धा विद्धा रोहिणीसहिता तद्रहितापि वा यदा द्वितीयसूर्योदयानंतरं नास्ति तदा सैवेति संदेह एव नास्ति । द्वितीयसूर्योदयोत्तरं मुहूर्तापेक्षया न्यूना विद्यते तदापि पूर्वैव मुहूर्तन्यूनाया विधायकाभावात् । यदा शुद्धा द्वितीयदिने मुहूर्तादिपरिमिता वर्तते, रोहिणी च सूर्योदयमारभ्यार्धरात्रमारभ्य रात्रेरंतिमक्षणमारभ्य वा प्रवृत्ता तदा पूर्वैव । मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे । शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञिते । योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत् । तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः । इति, अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् । तस्यामभ्यर्चनं शौरेर्हंति पापं त्रिजन्मजं । इति, मुहूर्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते । अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत् । कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि । जयंती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः । इति **भविष्यत्पुराणविष्णुधर्मविष्णुरहस्यवह्निपुराणवचनेभ्यः** । यदा तु शुद्धाधिका द्वितीयदिने एव रोहिणीयुक्ता तदा तूत्तरैव । तदुक्तं **हेमाद्रौ विष्णुरहस्ये**–प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । मुहूर्तमपि लभ्येत सोपोष्या सा महाफला । मुहूर्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते । अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत् । तत्रैव **विष्णुधर्मोत्तरे**–रोहिण्यृक्षं यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम । जयंती नाम सा प्रोक्ता सर्वपापहरा तिथिः । **सनत्कुमारसं-**

हितायां-श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप । रोहिणी यदि लभ्येत जयंती नाम सा तिथिः । स्कांदे-प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत् । श्रावणे बहुले सा तु सर्वपापप्रणाशिनी । जयं पुण्यं च कुरुते जयंतीं तेन तां विदुः । विष्णुधर्मे-जयंत्यामुपवासश्च महापातकनाशनः । सर्वैः कार्यो महाभक्त्या पूजनीयश्च केशवः । वह्निपुराणे-कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि । जयंती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः । सप्तजन्मकृतं पापं राजन्य त्रिविधं नृणां । तत्क्षालयति गोविंदस्तिथौ तस्यां सुभावितः । उपवासश्च तत्रोक्तो महापातकनाशनः । इत्यादिवचनैः । अहोरात्रं तयोर्योगो ह्यसंपूर्णो भवेद्यदि । मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत् । वासरे वा निशायां वा यत्र स्वल्पापि रोहिणी । विशेषेण नभोमासे सैवोपोष्या मनीषिभिः । दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला । रात्रियुक्तां प्रकुर्वीत विशेषेणेंदुसंयुतां । इति माधवोदाहृतवसिष्ठसंहितावचनैश्च स्वल्पाया अपि रोहिणीयुताया एव विधानात्, विधिः पूज्यतिथौ तत्र निषेधः कालमात्रकः इति वचनात् । संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदीत्येतद्वचनविहिताया एव तिथेर्मुख्यमपि संपूर्णाहोरात्रसत्वमुपेक्ष्य साकल्यवचनबोधितमपि सत्वमादाय कर्मणो यस्य यः काल इति कर्मकालशास्त्रं प्रवर्तते । तथा प्रकृतेऽपि मुहूर्तमात्राया अपि रोहिणीयुताया एव विधानादर्धरात्रे कर्तव्यपूजादावपि साकल्यवचनापादितसत्वमादाय उत्तरदिने एव कर्मकालशास्त्रप्रवृत्तेः । अतएव मुहूर्तमपि संयुक्ता संपूर्णा साष्टमी भवेत् । प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्धे भवेद्यदि । तदाष्टयामिकं ज्ञेयमित्यादिवचनानि सार्थकानि । शुद्धाधिकायां द्वितीयदिने एव रोहिणीयोगे उत्तरैवेति हेमाद्रिमाधवमदनरत्ननिर्णयामृतादयश्च संगच्छंते । तत्सिद्धं यद्दिने एव रोहिणीयुक्ता शुद्धाधिकोत्तरैवेति । एवं विद्धाधिकायां पूर्वदिने एव रोहिणीयोगे सैव ग्राह्या । अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् । तस्यामभ्यर्चनं शौरेर्हंति पापं त्रिजन्मजं । सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।

भविता साष्टमी पुण्या यावच्चंद्रदिवाकरौ । तस्मात्कृष्णाष्टमी पूज्या सप्तम्यां नृपसत्तम । रोहिणीसंयुतोपोष्या सर्वाघौघविनाशिनी । कार्या विद्धापि सप्तम्या रोहिणीसंयुताष्टमी । तत्रोपवासं कुर्वीत तिथिभांते च पारणं । इति भविष्यद्विष्णुधर्मब्रह्मपुराणपाद्मादिवचनेभ्यः । यदा दिनद्वयेप्यर्धरात्रे रोहिणीयोगस्तदा—सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी । इति हेमाद्रिमाधवोदाहृतब्रह्मवैवर्तवचनेन पूर्वस्या निषेधात् । अविद्धायां सऋक्षायां जातो देवकिनंदनः।इति माधवे ब्रह्मवैवर्तवचनात् । मासिभाद्रपदेऽष्टम्यां कृष्णपक्षेर्धरात्रके । शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञिते । योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत् । तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः । इति वचनादुत्तरैव । यदोत्तरदिन एवार्धरात्रे रोहिणीयोगस्तदोदाहृतवचनादुत्तरैवेति संदेह एव नास्ति । यदा पूर्वार्धरात्रात्पूर्वं प्रवृत्ताष्टमी द्वितीयार्धरात्रे विद्यते अर्धरात्रात्पूर्वं वा समाप्ता रोहिणी चार्धरात्रादूर्ध्वं प्रवृत्ता द्वितीयार्धरात्रादर्वागेव समाप्ता, यदा वाष्टमीरोहिण्यौ अर्धरात्रादूर्ध्वं प्रवृत्ते द्वितीयार्धरात्रात्पूर्वं समाप्ते तदा—वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी । स ऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी । इत्यनेन पूर्वस्या निषेधादुदाहृतानेकवचनादुत्तरैव । यदार्धरात्रानंतरं प्रवृत्ताष्टमी द्वितीयार्धरात्रात्पूर्वं समाप्ता रोहिणी चार्धरात्रात्पूर्वं प्रवृत्ता द्वितीयदिने स्वल्पेतिशंका निवर्त्यते । हेमाद्रिमाधवोदाहृतस्कांदे—सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम । प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्धं भवेद्यदि । तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा । इति । यदा विद्धाधिकाष्टमी द्वितीयदिने स्वल्पा तत्रैव रोहिणीयुक्ताष्टम्या अल्पत्वशंका व्यावर्त्यते हेमाद्रिमाधवोदाहृतपाद्मे—पूर्वविद्धाष्टमी या तु उदये नवमीदिने । मुहूर्तमपि संयुक्ता संपूर्णा साष्टमी भवेत् । कला काष्ठा मुहूर्तापि यदा कृष्णाष्टमी तिथिः । नवम्यां सैव कार्या स्यात्सप्तमीसंयुता नहि । इति । यस्मिन्वर्षेऽष्टम्यां रोहिणीयोगो नास्ति तदा केवलायामपि । प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । वर्षे वर्षे तु कर्तव्या तुष्ट्यर्थं चक्रपाणिनः । इत्यादिवाक्यैर्जयंतीत्वं विधीयते । तत्र [illegible] अधिकविद्धायां वा संदेह

एव नास्ति । विद्धाधिका तु पूर्वदिन एवार्धरात्रव्यापिनी तदा सैव ग्राह्या । रात्रियुक्तां प्रकुर्वीत विशेषेणेंदुसंयुतां । इति वचनात् । दिनद्वये अर्धरात्रव्याप्तावव्याप्तौ च—वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमीति पूर्वस्या निषेधात्, दिवा रात्रौ व्रतं यच्च एकमेकतिथौ गतं । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती । इत्यादिवचनात्, दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला । रात्रियुक्तां प्रकुर्वीत विशेषेणेंदुसंयुतां । इति वचनाच्चोत्तरैवेति । यदा निर्णीततिथिदिने बुधवासरादिर्भवति तदा प्राशस्त्यमुक्तं स्कांदे—उदये चाष्टमी किंचिन्नवमी सकला यदि । भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता । अपि वर्षशतेनापि लभ्यते यदि वा नवा । इति । पाद्मेपि—प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः । यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता । किं पुनर्बुधवारेण सोमेनापि विशेषतः । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा । इति । अतएव यदा द्वितीयदिवसे एव रोहिणीयोगस्तदा तत्रैव व्रतमित्युक्तं । तत्र बुधवारादियोगे प्राशस्त्यातिशय इति हेमाद्रिमाधवनिर्णयामृतमदनरत्नादिसिद्धांतः संगच्छत इति दिक् । यत्तु पूर्वदिने रोहिणीरहिता निशीथगाष्टमी द्वितीयदिने रोहिणीसहितापि निशीथात्प्रागेव समाप्ता तदापि पूर्वैव । कर्मकालशास्त्रस्य सर्वापेक्षया प्राबल्यस्य सर्वग्रंथसिद्धत्वात् । रोहिणीयोगे तु प्राशस्त्यात्फलातिशयः । नतु तस्य निर्णयोपयोगित्वं नवमीबुधवारवत् । अन्यथा प्रेतयोनिगतानां त्विति वचनात्, पूर्वेद्युरर्धरात्रे विद्यमानां सरोहिणीमप्यष्टमीं त्यक्त्वा बुधनवमीयुता परैव कार्या आपद्येतेति मयूखे द्वैतनिर्णये चोक्तं । तत्र कर्मकालवाक्यस्य तत्तिथिविषयकविशेषवाक्यानुग्रहेणैव प्रवृत्तिरित्येव हेमाद्रिमाधवादिसिद्धांतः । विशेषवाक्यापेक्षयापि प्राबल्यकल्पने तु एकादश्यां तु नक्तं च नरः कुर्याद्यथाविधि । मार्गशीर्षशुक्लपक्षादारभ्याब्दं विचक्षणः । तद्व्रतं धनदः श्रेष्ठ कृतं वित्तं प्रयच्छति । इति पुण्यैकादशीप्रकरणे हेमाद्र्यादौ वाराहाद्युक्तनक्तादौ उदयादूर्ध्वप्रवृत्तविद्धाधिकैकादश्यादितिथौ पूर्वदिने कर्मकालवाक्यप्रवृत्त्यापत्तौ—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । उदयस्था सदा पूज्या हरिनक्तव्रते

तिथिः। इत्यादिस्कांदादिवचनानां तत्रत्यहेमाद्रिमाधवादीनां च निर्विषयत्वापत्तेः। तस्माद्विधिः पूज्यतिथौ तत्रेति वचानादुदयस्थेत्यादिविशेषवचनविहितायाः एव तिथेः साकल्यवचनापादितमपि कर्मकालसत्वमादाय तत्रैव कर्मकालवाक्यप्रवृत्तेस्तत्रैवानुष्ठानमिति यथा हेमाद्रिमाधवादिभिः सिद्धांतितं, तथा प्रकृतेऽपि प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्तमपि लभ्येत सोपोष्या सा महाफला। त्रेतायां द्वापरे चैव राजन् कृतयुगे पुरा। रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता। वासरे वा निशायां वा यत्र स्वल्पापि रोहिणी। विशेषेण नभोमासे सैवोपोष्या मनीषिभिः। अहोरात्रं तयोर्योगो ह्यसंपूर्णो भवेद्यदि। मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत्। इत्यादिवाक्यैः स्वल्पाया अपि रोहिणीयुताया एव विधानात्। अर्धरात्रे पूजाकालेऽष्टमी नास्तीति शंकायाः पूर्वविद्धाष्टमी या तु उदये नवमीदिने। मुहूर्तमपि संयुक्ता संपूर्णा साष्टमी भवेत्। इत्यादिवचनैर्निवर्तितत्वात् मुहूर्तमात्रापि रोहिणीयुतैव ग्राह्येति हेमाद्रिमाधवकालादर्शादिभिः सर्वैरुक्तत्वात्। पूर्वदिने एवार्धरात्रव्यापिनी द्वितीयदिने एव रोहिणीयुता पूर्वेत्युक्तिरुदाहृतवचनहेमाद्र्यादिनिबंधविरोधादुपेक्ष्या। रोहिण्या निर्णायकत्वे बुधवारस्यापि निर्णायकत्वापत्तिरित्याद्युक्तिस्तु अष्टम्या विधायकयावद्वचनैः रोहिणीविशिष्टाया एवोपवासादिनिमित्तत्वविधानाद्बुधवारस्य तु केनापि तेनास्पर्शात्, प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः। यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता। इत्यनेन रोहिणीयुताया एव फलमुक्त्वा किं पुनर्बुधवारेणेत्यादिना बुधवारादेः प्राशस्त्यसंपादकत्वस्यैव प्रतिपादनात्। हेमाद्रिमाधवनिर्णयामृतमदनरत्नादिभिः सर्वैस्तथैव सिद्धांतितत्वादयुक्तैव। अतएव द्वैतनिर्णये पूर्वविद्धाष्टमी या तु उदये नवमीदिने इत्यादिवाक्येषु उदयपदं चंद्रोदयपरं। कला काष्ठा मुहूर्तापीत्यत्र कलादिपदं अर्धरात्रवर्तिकलादिपरमित्यर्थांतरोत्प्रेक्षाप्ययुक्ता। वचनात् स्वारस्येन तथाप्रतीतेरभावात्, संपूर्णा साष्टमी भवेदित्यस्य वैयर्थ्यापत्तेः, हेमाद्रिमाधवादिविरोधाच्च। अतएव यदि तु जयंतीव्रतं जन्माष्टमीव्रताद्भिन्नं तदा तद्भवतु तत्परे-

हनि ननु जन्माष्टमीव्रतमिति पक्षांतरमनुसृतं मयूखे । अत्र संदिग्धत्वेनोक्तिर्व्रतभेदनिश्चयबोधक—तत्र जन्माष्टमी-नित्या जयंती नित्या काम्या च—इति स्वोक्तिविरुद्धा । जन्माष्ट-मीजयंतीशब्दाभ्यां व्यवह्रियमाणव्रतस्यैकत्वबोधकानेकवचन-मूलकहेमाद्रिग्रंथार्थाप्रतिसंधाननिबंधनाच्चेत्यसंगतैव । तस्मा-दनेकवचनैः प्रतिपादितस्य हेमाद्रिमाधवनिर्णयामृ-तमदनरत्नादिभिः पुरस्कृतस्य रोहिण्या निर्णायकत्वस्य जन्मकाले सद्भावमात्रेण रोहिण्या निमित्तत्वे बुधवारस्यापि निमित्तत्वापत्तिरिति प्रौढिवादरूपमाधवग्रंथदर्शनमात्रेणापह्न-वस्य साहसरूपत्वादुपेक्ष्यो द्वैतनिर्णयो मयूखश्चेति । यत्तु अल्पकालरोहिणीयोगे जयंतीनामाष्टमी अर्धरात्रे योगे तु रोहिण्यष्टमीति कैश्चिदुक्तं तत्—अर्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत् । इत्यादिवचनविरोधेन दूषयित्वा—श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप । रोहिणी यदि लभ्येत जयंती नाम सा तिथिः । इत्यादिवचनाद्रोहिणीयुताष्टमीवचन एव जयंतीशब्द इति हेमाद्रिणा सिद्धांतितं । एतेनार्धरात्रे रोहिणीयुक्ता जयं-तीति निर्णयामृत उपेक्ष्यः । उदाहृतवचनहेमाद्रिमाधव-विरोधादितिदिक् । इत्थंच हेमाद्रिमाधवयोः परस्परं विरो-धपरिहारपुरस्सरं सर्ववाक्याविरोधेन निर्णीताया जन्माष्टम्या अयं संग्रहः—शुद्धसमायां शुद्धन्यूनायां, विद्धसमायां विद्ध-न्यूनायां वा ईषद्रोहिणीयोगेपि संदेह एव नास्ति । शुद्धाधि-कायां पूर्वदिने दिनद्वयेऽपि वा रोहिणीयोगे पूर्वैव । यदोत्तरदिने एव रोहिणीयोगस्तदा मुहूर्तमात्राप्युत्तरैव । विद्धाधिकायां पूर्वदिने एव निशीथात्पूर्वं निशीथे वा रोहिणीयोगे पूर्वा । दिनद्वयेपि निशीथे निशीथं विहाय वा रोहिणीयोगे तूत्तरै-वेति । यस्मिन्वर्षे रोहिणीयोगो नास्ति तत्रापि शुद्धाविद्धयोः समान्यूनयोः संदेह एव नास्ति । शुद्धाधिकापि पूर्वैव । विद्धाधिका तु पूर्वदिने एव निशीथव्याप्तौ पूर्वा । दिनद्वयेऽपि निशीथव्याप्तावव्याप्तौ चोत्तरैवेति संक्षेपः । एवं निर्णीतायां तिथौ उपवासादि कृत्वा—पारणांतं व्रतं ज्ञेयं व्रतांते तद्धि भोजनं । इत्यादिवाक्यैर्द्वितीयदिने भोजनरूपं पारणं व्रतांगतया विधीयते । तच्च सति सामर्थ्ये पारणदिनेऽनुवर्तमानामष्टमीं

रोहिणीं चातिक्रम्य कार्यं। तदुक्तं पद्मपुराणे—कार्या विद्धा तु सप्तम्या रोहिणीसहिताष्टमी। तत्रोपवासं कुर्वीत तिथिभांते च पारणं। इति। उभयांतप्रतीक्षायां सामर्थ्याभावे त्वन्यतरांते कर्तव्यं। तदुक्तं वह्निपुराणे कथायां—भांते कुर्यात्तिथेर्वापि शस्तं भारत पारणं। इति। तथा रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता। वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः। सांयोगिके व्रते प्राप्ते यत्रैकापि वियुज्यते। तत्र पारणकं कुर्यादेवं वेदविदो विदुः। इति। यत्तु वचनं—याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः। ऋक्षांते पारणं कुर्याद्विना श्रवणरोहिणीं। इति तत् नक्षत्रांतापेक्षया तिथ्यंतस्य प्राशस्त्यद्योतकं नतु नक्षत्रांशस्यानुकल्पत्वाभावार्थं, पारणे नक्षत्रांतप्रतीक्षाभावार्थं वा। भांते कुर्यादित्यादिवाक्यविरोधात्। एतेनाष्टम्यंते पारणं कार्यं रोहिण्यंतो नापेक्षित इति निर्णयामृत॰ उपेक्षणीयः। अतएवोभयांतमुख्यत्वद्योतनायेदमिति मदनरत्नः, केवलनक्षत्रोपवासविषयमिदमित्युक्त्वा, तत्र याः काश्चित्तिथय इत्यस्य स्वारस्यभंगभिया पूर्वोक्तानुकल्पविषयं चेदमिति माधवश्च संगच्छते। तथाचोभयांत उत्तमः, तिथ्यंतो मध्यमः, नक्षत्रांतो जघन्य इति फलितम्। अन्यतरांतप्रतीक्षायामपि सामर्थ्याभावे तु भविष्योत्तरे कथायामुक्तं—शांतिरस्तु शिवं चास्तु इत्युक्त्वा मां विसर्जयेत्। ततो बंधुजनौघं च दीनानाथजनं बहु। भोजयित्वा तु शांतात्मा स्वयं भुंजीत वाग्यतः। इति देवविसर्जनानंतरं पारणविधानात्। माधवोदाहृते गारुडेपि—जयंत्यां पूर्वविद्धायामुपवासं समाचरेत्। तिथ्यंते वोत्सवांते वा व्रती कुर्वीत पारणं। इति। नन्वेवं—अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित्। हन्यात्पुराकृतं कर्म उपवासार्जितं फलं। तिथिरष्टगुणं हंति नक्षत्रं तु चतुर्गुणं। तस्मात्प्रयत्नतः कुर्यात्तिथिभांते च पारणं। इति ब्रह्मवैवर्तवचनविरोध इति चेन्न। सायमाद्यंतयोरह्नोः सायं प्रातश्च मध्यमे। उप-

त्वश्रवणेन काम्यव्रतांगपारणविषयत्वस्यैवोचिततत्वेन नित्यव्रतविषयत्वाभावात् । अन्यथा पूर्वोदाहृतवाक्यविरोधेनाव्यवस्थापत्तेः । काम्यव्रतांगपारणं तु अष्टम्यामथेति वचनादुभयांत एव मुख्यं । तत्र रात्र्यष्टमुहूर्तरूपनिशीथात्प्रागुभयांतसंभवे उभयांत एव । यदा तु निशीथाव्यवहितपूर्वकाले अन्यतरांत एव तदान्यतरांतेपि अर्धरात्रे पारणं कर्तव्यं । तिथ्यृक्षयोर्यदा छेदो नक्षत्रांतमथापि[1] वा । अर्धरात्रेपि वा कुर्यात्पारणं त्वपरेहनि । इति हेमाद्रिमाधवाद्युदाहृतवचनात्[2] । केवलतिथ्यंते भांते च पारणाविधानमसमर्थविषयं, उभयांतपारणं तु समर्थविषयमिति सिद्धांतयतो हेमाद्रेरप्युक्तार्थे एव तात्पर्यं । सर्वांगानुष्टानसमर्थस्यैव काम्याधिकारित्वात् । न च—सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्यादृते धारणपारणं । इति रात्रिपारणनिषेधकवचनविरोध इति वाच्यं । जयंती शिवरात्रिश्च कार्ये भद्राजयान्विते । कृत्वोपवासं तिथ्यंते तदा कुर्वीत पारणं । इत्यादिविशेषवचनविषये सामान्यविषयकनिषेधाप्रवृत्तेः । यदपि न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् । तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशां । इति मदनरत्नोदाहृतवचनं तत्सार्धप्रहरादुपरितनमहानिशातः पूर्वमुभयांतरूपकालसंभवे तत्रैव कार्यमित्यभिप्रायकं । अन्यथा अष्टम्यामथ रोहिण्यामित्यादिविरोधापत्तेः । नचैवं यदा रात्रौ तिथ्याद्यंतस्तदा दिवैव पारणं कुर्यादिति कालादर्शनिर्णयामृतविरोध इति शंक्यं । तयोर्नित्यव्रतांगपारणविषयत्वेन तद्विरोधाभावात् । तयोर्नित्यविषयत्वं कथं निश्चितमिति चेत् । अष्टम्यामथेत्यादिवचनानुपन्यासात् । अन्यथा एतद्वचनविरोधेन तयोरुपेक्षणीयत्वमेव स्यात् । अशक्तस्य तु तिथिनक्षत्रयोरनुवर्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं न दुष्यतीति वदतो माधवस्यापि उक्तार्थे एव तात्पर्यकल्पनसंभवात् । एवं च हेमाद्र्यादीनां कालादर्शादीनां च परस्परविरोधोपि परिहृत इति विभावनीयं । एवं सति पूर्वोक्तहेमाद्रिमाधवमदनरत्नग्रंथानन्द्य तदेतन्मतत्रयमप्ययुक्तं, दिवैव पारणमिति कालादर्श-

१ 'मथापि'. २ 'हेमाद्युदाहृत'.

मतमेव युक्तमिति द्वैतनिर्णयः साहसरूपत्वादुपेक्ष्य एवेति बोध्यं । इति पुरुषार्थचिंतामणौ जन्माष्टमीनिर्णयः ।

भाद्रपदशुक्लाष्टम्यां । विष्णुरुवाच । ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः । पूजयेच्छंकरं भक्त्या यो नरः श्रद्धयान्वितः । स याति परमं स्थानं यत्र देवस्त्रिलोचनः । अत्राष्टम्यां पूजयेदित्यन्वयादर्थात्सप्तम्यामुपवासः, कृतोपवासः सप्तम्यामित्यग्रेऽभिधानाच्च । गणेशं पूजयेद्यस्तु दूर्वया सहितं मुने । गणेशो महेश्वरः । फलैर्नानाविधैर्दिव्यैर्गंधपुष्पविलेपनैः । दूर्वामभ्यर्च्य चेशानं मुच्यते सर्वपातकैः । शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम । स्थाप्य लिंगं ततो गंधैः पुष्पैर्धूपैः समर्चयेत् । खर्जूरैर्नारिकेरैश्च मातुलिंगफलैस्तथा । पूजयेच्छंकरं भक्त्या दूर्वया विधिवद्द्विज । दध्यक्षतैर्द्विजश्रेष्ट अर्घ्यं दद्यात्त्रिलोचने । दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः । स वै सुकृतजन्मा स्यात्सर्वदेवैस्तु वंदितः । विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् । धनार्थी धनमाप्नोति भार्यार्थी लभते च तां । मनसा यद्यदिच्छेत्तु तत्तदाप्नोति मानवः । य एवं पूजयेद्दूर्वां भूतेशं मानवः फलैः । स सप्तजन्मपापाद्यैर्मुच्यते नात्र संशयः । कृतोपवासः सप्तम्यामष्टम्यां पूजयेच्छिवं । दूर्वासमेतं विप्रेंद्र दध्यक्षतफलैः शुभैः । त्वं दूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः । सौभाग्यं संततिं देहि सर्वकार्यकरी भव । यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले । तथा ममापि संतानं देहि त्वमजरामरं । इति दूर्वापूजामंत्रः । स्वलिंगमंत्रैरीशानमर्चयेत्प्रयतः शुचिः । ततः संपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज । अनग्निपक्वमश्नीयादन्नं दधि फलं तथा । अक्षारालवणं ब्रह्मन्नश्नीयान्मधुनान्वितं । दद्यात्फलानि विप्रेषु फलाहारः स्वयं भवेत् । प्रणम्य शिरसा दूर्वां शिवं शिवमवाप्नुयात् । य एवं कुरुते भक्त्या महादेवस्य पूजनं । गणत्वं यात्यसौ ब्रह्मन्मुच्यते ब्रह्महत्यया । एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिता । चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः । इति हेमाद्रिमदनरत्नाद्युदाहृतभविष्यत्पुराणे दूर्वाष्टमीव्रतं स्त्रीपुंसाधिकारिकं काम्यमुक्तं । भविष्योत्तरे तु । अष्टम्यां फलपुष्पैश्च खर्जूरैर्ना-

दूर्वाष्टमीव्रतं ।

रिकेरकैः । द्राक्षामलकपिंडैश्च वदरैर्लकुचैस्तथा । नारंगैर्जंबुकैराम्रैर्बीजपूरैश्च दाडिमैः । दध्यक्षतैः स्रजोभिश्च धूपैर्नैवेद्यदीपकैः । मंत्रेणानेन राजेंद्र शृणुष्वावहितो मम । त्वं दूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः । सौभाग्यं संततिं दत्वा सर्वसौख्यकरी भव । यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले । तथा ममापि संतानं देहि त्वमजरामरे । दत्वा पिष्टानि विप्रेभ्यः फलं च विविधं प्रभो । तिलपिष्टकगोधूमधान्यपिंडानि पांडव । भोजयित्वा सुहृन्मित्रसंबंधिस्वजनांस्तथा । ततो भुंजीत तच्छेषं स्वयं श्रद्धासमन्वितं । दूर्वाष्टमीव्रतं पुण्यं यः करोतीह मानवः । न तस्य क्षयमाप्नोति संततिः साप्तपौरुषं । नंदते मोदते नित्यं यथा दूर्वा तथा कुलं । इति दूर्वापूजामात्रं प्रतीयते । तथापि शिवपूजाया अप्युपसंहार्यत्वादेकमेव व्रतं नतु व्रतांतरं । अतएव एतच्च पिष्टादिकमनग्निपक्वमेव भक्षणीयं । अनग्निपक्वमश्नीयादिति भविष्यत्पुराणवचनादिति मदनरत्नः संगच्छते । एतच्च स्त्रीणां नित्यमपि । या न पूजयते दूर्वां मोहादिह यथाविधि । त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः । तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः । सुखसंतानजननी भर्तुः सौख्यकरी सदा । इति मदनरत्नाद्युदाहृतपुराणसमुच्चये अकरणे दोषश्रवणाद्वीप्साश्रुतेश्च । मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा । दूर्वाष्टमी तु सा ज्ञेया ज्येष्ठां मूलं च वर्जयेत् । इति पुराणसमुच्चयान्नवममुहूर्तस्यैव कर्मकालत्वात्पूर्वत्रैव दिनद्वयेऽपि वा तद्व्याप्तौ दिनद्वये रौहिणास्पर्शे वा पूर्वैव ग्राह्या । श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनं । इति बृहद्यमवचनात् । शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् । दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते । इति पुराणसमुच्चयाच्च । उत्तरदिन एव रौहिणव्याप्तौ मुहूर्ते रौहिण इति वचनादुत्तरैव । तत्रापि । ऐंद्रर्क्षे पूजिता दूर्वा हंत्यपत्यानि नान्यथा । भर्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् । इति पुराणसमुच्चये ज्येष्ठामूलयोरनिष्टफलबोधनात् , दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता । तथा । प्राप्ते भाद्रपदे मासि शुक्लाष्टम्यां च भारत । दूर्वामभ्यर्चयेद्भक्त्या ज्येष्ठां मूलं च वर्जये-

त् । इति निषेधाच्च, पूर्वदिने रौहिणे ज्येष्ठादिसत्वे उत्तरदिने रौहिणे तदभावश्चेत्तदोत्तरत्रैव । यदा ज्येष्ठामूलरहिताष्टमी न लभ्यते तदापि कर्तव्यमुक्तं पुराणसमुच्चये—कर्तव्या त्वेकभक्तेन ज्येष्ठा मूलं यदा भवेत् । दूर्वामभ्यर्चयेद्भक्त्या न वंध्यं दिवसं नयेत् । इति । अनेनानग्निपक्वमश्नीयादिति विहितानग्निपक्वभोजनस्थाने अग्निपक्वान्नभोजनरूपैकभक्तं विधीयते । अन्यत्पूजाफलदानादिकं स्वयमेव कर्तव्यं । अतएव दूर्वामभ्यर्च्यैकभक्तं कार्यमिति निर्णयामृतः संगच्छते । अतो ब्राह्मणद्वारा पूजां कृत्वेति मदनरत्नः कालतत्वविवेचनादयश्च चिंत्याः । कर्तव्या त्वेकभक्तेनेत्यनेनानग्निपकाशने एव निषेध इति बोध्यते । पूजायामपि तत्स्वीकारे दूर्वामभ्यर्चयेदित्येतद्विरोधात् । नचैंद्रर्क्षे पूजितेत्यनेन पूजायामप्यनिष्टफलश्रवणाद्ब्राह्मणद्वारेत्युक्तमिति शंक्यं । ब्राह्मणकृतादपि पूजनात् यथेंद्रशत्रुः स्वरतोऽपराधादित्यत्रेव यजमानस्यैव तदापत्तेः । या न पूजयते दूर्वां मोहादिह यथाविधीत्यत्र यथाविधीति विशेषणांशत्यागापत्तेः । नन्वेवमपि—शुक्ला भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी । सिंहार्के एव कर्तव्या न कन्यार्के कदाचन । सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तम । तथा । अगस्त्ये उदिते तात पूजयेदमृतोद्भवां । वैधव्यं पुत्रशोकं च दश जन्मानि पंच च । इति निर्णयामृताद्युदाहृतस्कांदे । उद्यानिकाशिवपवित्रकमेघपूजादूर्वाष्टमीफलविरूढकनागराणि । स्त्रीणां व्रतानि निखिलान्यपि वार्षिकाणि कुर्यादगस्त्य उदिते न शुभानि लिप्सुः । इति हेमाद्र्युदाहृतलौगाक्षिणा च कन्यार्के अगस्त्योदये च निषेधात्, भाद्रशुक्लाष्टम्याः पूर्वं कन्यार्कः अगस्त्योदयो वा भवति तदा किं कार्यमिति चेत् । प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी । वर्षे वर्षे तु कर्तव्या तुष्ट्यर्थं चक्रपाणिनः । इति वाक्यं रोहिणीयुक्ताष्टम्यां चक्रपाणितुष्ट्यर्थं वाक्यांतरेण व्रतं विहितं तद्रोहिणीरहितायामप्यष्टम्यां विधत्ते इति यथा हेमाद्रिमदनरत्नादिभिः[1] सिद्धांतितं, तथा प्रकृतेपि शुक्ला भाद्रपदे मासीति स्कांदेन भाद्रशुक्लाष्टम्यां वचनांतरैर्यद्दूर्वाष्टमीसंज्ञकं व्रतं विहितं तत्सिंहार्कें एव कर्तव्यमिति विधीयते ।

---

१ 'हेमाद्रिमाधवादिभिः'.

तथाच सिंहार्कबहिर्भूतशुक्लपक्षपरित्यागेन सिंहार्कयुक्तभाद्रकृष्णाष्टम्यामेव कार्यमिति पर्यवसानान्नानुपपत्तिः । नचाष्टमीशब्दस्य व्रते लक्षणैव दोष इति शंक्यं । लक्षणां विनापि वाक्योपपत्तावेव लक्षणादोष इति सिद्धांतात् । प्रकृते कन्यार्कगताष्टम्याः सिंहार्के कथमपि कर्तुमशक्यत्वेन वाक्यस्यैव वैयर्थ्यापत्तेः । एवमगस्त्योदयेपि । अधिमासे तु संप्राप्ते नभस्ये तूदये मुनेः । अर्वाग्दूर्वाव्रतं कार्यं परतो नैव कुत्रचित् । इति **निर्णयदीपोदाहृतस्कांदात्** कृष्णाष्टम्यामेव कर्तव्यं । दूर्वाष्टमी च सिंहस्थे सूर्ये भाद्रपदशुक्लाष्टमी भवति । यदि चाष्टम्याः पूर्वमगस्तिरुदेति तदा प्राग्बहुले पक्षे कार्येति **हेमाद्रि**सिद्धांतोपि उक्तार्थतात्पर्यकत्वाद्युक्त एव । अतएव कन्यारवौ कुंभजनावनस्तगे दूर्वाष्टमी यास्ति नभोपराष्टमी । इति **ज्योतिर्विदाभरणे कालिदासः** संगच्छते । एतेन कन्यार्कागस्त्योदयरूपदोषेपि दूर्वामभ्यर्च्यैकभक्तं[1] कार्यमिति **निर्णयामृतः**, ब्राह्मणद्वारा पूजां कृत्वैकभक्तं कार्यमिति **मदनरत्नः**, **कालतत्त्वविवेचनादयश्चोपेक्ष्याः** । स्वोदाहृत–शुक्ला भाद्रपदे मासि इति स्कांदवैयर्थ्यापत्तेः, **हेमाद्रि**विरोधाच्चेति दिक् । इति दूर्वाष्टमी ॥ ॥ मासिभाद्रपदे शुक्लपक्षे ज्येष्ठायुताष्टमी ।

महालक्ष्म्यष्टमीव्रतं । आरब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः । करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः । इत्युच्चार्य ततो बद्ध्वा दोरकं दक्षिणे करे । षोडशग्रंथिसहितं गुणैः षोडशभिर्युतं । ततोऽन्वहं महालक्ष्मीं पूजयेन्नियतात्मवान् । गंधपुष्पैः सनैवेद्यैर्यावत्कृष्णाष्टमीदिनं । तस्मिन्दिने तु संप्राप्ते कुर्यादुद्यापनं व्रती । इत्यादि**स्कंदपुराणे** षोडशतिथिसाध्यं महालक्ष्मीव्रतमुक्तं । तस्यारंभः संपूर्णायां मध्याह्नादूर्ध्वं नवमीयुक्तायां वा ज्येष्ठानक्षत्रयुतायां भाद्रसिताष्टम्यां सिंहार्के एव कार्यः । उद्यापनं तु वक्ष्यमाणदोषचतुष्टयरहिताश्विनकृष्णाष्टम्यां कार्यं । मासि भाद्रपदे शुक्लपक्षे ज्येष्ठायुताष्टमीत्यादि**स्कांदात्** । कन्यागतेऽर्के प्रारभ्य कर्तव्यं न श्रियोर्चनं । हस्तप्रांतदलस्थेर्के तद्व्रतं न समापयेत् । इति **पुराणसमुच्चयात्** । **निर्णयामृते ब्रह्मांडपुराणे**–

---

१ 'कारयित्वैकभक्तं'.

सप्तमी पुष्यसंयुक्ता कर्तव्या चाश्विनाष्टमी । दुर्गोत्सवे सिते पक्षे बहुले श्रीव्रते शुभा । इति । अत्र सप्तमी पुष्यसंयुक्तेति बहुलाष्टम्या एव विशेषणं । सिताष्टम्याः पुष्ययोगासंभवात् दुर्गोत्सवे सितपक्षगाष्टमी शुभेत्येवार्थः । अर्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः । तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं शुभं । इति च पुराणसमुच्चये । पूजनीया गृहस्थेन अष्टमी प्रावृषि श्रियः । दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी तिथिः । पुत्रसौभाग्यराज्यायुर्नाशिनी सा प्रकीर्तिता । तस्मात्सर्वप्रयत्नेन त्याज्या कन्यागते रवौ । विशेषेण परित्याज्या नवमीदूषिता यदि । त्रिदिने चावमे चैव अष्टमीं नोपवासयेत् । पुत्रहा नवमीविद्धा स्वघ्नी हस्तार्धगे रवौ । धर्मघ्नी त्रिदिने प्रोक्ता त्याज्या चैवावमेपि सा । इति दोषचतुष्टयं । अत्र कन्यार्कनिषेधो व्रतारंभविषयः, त्रिदिनावमौ उभयविषयौ, नवमीवेधः हस्तार्धगार्कश्च समाप्तिविषयाविति बोध्यं । त्रिदिनावमयोर्लक्षणं रत्नमालायामुक्तं । यत्रैकं स्पृशति तिथिद्वयावसानं वारश्चेदवमदिनं तदुक्तमाद्यैः । यः स्पर्शाद्भवति तिथित्रयस्य वारस्त्रिद्युस्पृक् कथितमिदं द्वयं च नेष्टं । इति । एतद्दोषचतुष्टयवर्जनं प्रायेणारंभोद्यापनयोरेवेति । अन्यथा षोडशवर्षसाध्यव्रतस्य मध्ये दोषसंभवे अकरणं स्यात् । अतो मध्ये सतिसंभवे त्याज्यं न नियमतः । अतएव—श्रियोऽर्चनं भाद्रपदे सिताष्टमीं प्रारभ्य कन्यामगते च सूर्ये । समापयेत्तत्र तिथौ च यावत्सूर्यस्तु पूर्वार्धगतो युवत्याः । इति पुराणसमुच्चयेप्युक्तं । आश्विनकृष्णाष्टम्यां च प्रयोगसमाप्तिस्तत्र—अर्धरात्रमतिक्रम्य वर्तते योत्तरातिथिः । तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं शुभमिति पूर्वोदाहृतवचनेनार्धरात्रोर्ध्वकालस्पर्शिन्या उत्तरस्या एव विधानात् । पूर्वा वाऽपरविद्धा वा ग्राह्या चंद्रोदये सदा । त्रिमुहूर्तापि सा पूज्या परतश्चोर्ध्वगामिनी । इति पुराणसमुच्चयेन परविद्धा अपरविद्धेति पर्युदासेन नवमीवेधयोग्यनवम्यविद्धायाः चंद्रोदयव्यापिन्या विधानात् । षोडशैरुपचारैश्च धूपदीपादिभिस्तथा । जागरं तत्र कर्तव्यं गीतवादित्रनिःस्वनैः । ततो निशीथे संप्राप्तेऽभ्युदितेऽमृतदीधितौ । दद्यादर्घ्यं च रागेण व्रती तस्यै समाहितः । इति स्कांदेन—चंद्रोदयात्पूर्वकाले एव

पूजाविधानात् । पूर्वदिने एव चंद्रोदयव्याप्तौ पूर्वा । उत्तरदिने उभयत्र वा चंद्रोदयव्याप्तौ तूत्तरैव । यदा पूर्वचंद्रोदयानंतरं प्रवृत्ता द्वितीयचंद्रोदयात्पूर्वं समाप्ता तदोत्तरत्र पूजाकाले ज्योतिःशास्त्रप्रसिद्धतिथेः चंद्रार्घ्यदानकाले च साकल्यवचनापादिततिथेः सत्वात्—कर्मणो यस्य यः काल इति वचनेनोत्तरस्या एव विधानात् । त्रिमुहूर्तापि सा पूज्येत्यनेन द्वितीयदिने उदयोर्ध्वगामिनी त्रिमुहूर्तापि पूज्या किं पुनः कर्मकालव्याप्तिशास्त्रविषयीभूतेति सैव प्रस्तूयते इति सिद्धं । पूर्वदिने एव चंद्रोदयव्याप्तौ पूर्वा, उभयत्र चंद्रोदयव्याप्तावव्याप्तौ च परैवेति । यत्तु मदनरत्ने अस्य समापनं—चंद्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता। इति वचनाच्चंद्रोदयव्यापिन्यामेव कार्यं । उभयत्र चंद्रोदयव्याप्तौ कृष्णपक्षेऽष्टमी चैवेत्यादिवचनात्पूर्वस्यां कर्तव्यं । उभयत्र चंद्रोदयव्यापित्वेऽप्युत्तरदिने चंद्रोदयोत्तरमुहूर्तत्रयव्यापिनी तदोत्तरस्यां समापनीयं, पूर्वा वा परविद्धा वेति वचनादित्युक्तं । तदन्यतरदिनेपि चंद्रोदयव्याप्त्यभावे समापनलोपापत्तेः । दिनद्वयेपि निशीथव्यापिनी जन्माष्टमी कृष्णपक्षेऽष्टमी चैवेत्यादिभिर्न निर्णेतुं शक्या तेषां अहर्वेधविषयत्वात् । अन्यथा व्रतांतरेष्वपि निशीथवेधः प्रसज्येतेति माधवादिभिः सिद्धांतितत्वेन कृष्णपक्षेऽष्टमीति सामान्यवचनस्य प्रकृते प्रवृत्त्यसंभवात्, अष्टघटिकापरिमिततिथिवृद्धेरसंभावितत्वेन तदेकसाध्यस्य पूर्वचंद्रोदयमारभ्य प्रवृत्ततिथेरुत्तरचंद्रोदयोत्तरमुहूर्तत्रयसत्वस्य बाधितत्वात्, त्रिमुहूर्तापीत्यपिशब्दविरोधात्, पूर्वा वा परविद्धा वा ग्राह्या चंद्रोदये सदा । इति पूर्वार्धविरोधाच्चात्यंतासंगतमेव । अतएव मदनरत्नपृष्ठानुयायिनः कालतत्वविवेचनस्मृतिकौस्तुभादयः सर्वे नवीनग्रंथा उपेक्ष्याः । पूर्वा वा परविद्धावेति वचनार्थाज्ञानमूलत्वाच्च । एतेन चंद्रोदयादूर्ध्वं त्रिमुहूर्तव्यापित्वे तूत्तरैव नवमीविद्धापि कार्येति निर्णयामृतोप्ययुक्तः । अर्धरात्रानंतरवेधस्वीकारस्तु त्रिभिर्मुहूर्तैर्विध्यंति इति वचनस्य वेधकतिथेरुदये अस्तमये वा त्रिमुहूर्तसत्वं वेधप्रयोजकं । वेध्यतिथेरपि त्रिमुहूर्तसद्भावोऽपेक्षितः । तेनोदयास्तसमययोरेव वेध इति माधवस्य च विरोधात्, उदाहृतवचनैरुदयास्तमयव्यापि-

नीनामेव तिथीनां सामस्त्येन प्राशस्त्याभिधानात्पूर्वपरवेधोपि उदयास्तमयकालीन एवेत्यवसीयते इति उदाहरणप्रकरणस्थ-स्वग्रंथविस्मरणमूलत्वाच्चायुक्तमेव । इति महालक्ष्मीव्रताष्टमी ॥

लिंगपुराणे—तेन सा जलसंस्तरे । ग्रामे कर्कटबाह्ये तु नि-

ज्येष्ठापूजा । त्यमास्ते शुभा पुनः । इत्यंतेन ज्येष्ठानामिकाया अ-लक्ष्म्या उत्पत्त्याद्युक्त्वा । अनाथाहं जगन्नाथ वृत्तिं देहि नमोस्तु ते । इत्युक्तो भगवान्विष्णुः प्रहस्याह जनार्दनः । ज्ये-ष्ठामलक्ष्मीं देवेशो माधवो मधुसूदनः । यो रुद्रमनघं शर्वं शंकरं नीललोहितं । अंबां हैमवतीं वापि जनित्रीं जगतामपि । मद्भक्ता निंदयंत्यत्र तेषां वित्तं तवैव हि । ये तमेव महादेवं विनिंद्यैव यजंति मां । मूढा ह्यभाग्या मद्भक्ता अपि तेषां धनं तव । ये विनिंद्य यजंते मामत्यंतभ्रंशकारकाः । मद्भक्ता नैव तद्भक्ता एवं वर्तंति दुर्मदाः । तेषां गृहं धनं क्षेत्रमिष्टापूर्तं तवैव च । तस्मात्प्रदेयस्तस्यैवं बलिर्निंद्यो न चेश्वर। विष्णुभक्तैर्न संदेहः सर्वयत्नेन सर्वथा । अंगनाभिः सदा पूज्या बलिभिर्द्धि-विधैर्द्विजाः । इति ज्येष्ठापूजोक्ता । तत्कालोपि लिंगपुराणे—कन्यार्के याष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता । अलक्ष्मीपरिहा-राय ज्येष्ठां तत्र प्रपूजयेत् । इति । कन्यार्काव्यभिचारिदर्शांते भाद्रपदे इत्यर्थः । तत्र पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः। इति वचनान्मध्याह्नव्यापिन्या ग्राह्यत्वात् । यदा दिनद्वयेपि मध्याह्नव्यापिनी तदा शुक्लापक्षगतत्वेनोत्तरस्या एव ग्रहणे प्राप्ते पूर्वत्रैव ज्येष्ठायोगे ज्येष्ठर्क्षे महती स्मृतेत्यनेन पूर्वैव ग्राह्येत्यर्थः। यदा पूर्वदिने मध्याह्नानंतरं नक्षत्रं प्रवृत्तं द्वितीयदिने मध्यह्ने मध्याह्नात्पूर्वं वा समाप्तिस्तदा । यस्मिन्नस्तमियाद्भानुस्तन्नक्ष-त्रमुपोषणे । इत्युपवासेऽस्तगामिनो विधानात् । उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः । इत्यनेनैकभक्ते तस्यैव ग्राह्यत्वात् , सा तिथिस्तच्च नक्षत्रं यस्मिन्नस्तमियाद्रविः । इति वचनापादितनक्षत्र-मादाय पूर्वदिने एव। यदा पूर्वमध्याह्नमारभ्य प्रवृत्तं द्वितीयदिने अपराह्णं स्पृशति तदा यथानक्षत्रमेव प्रधानतया निमित्तमाश्रित्य मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुते। यस्मिन्कस्मिन्दिने कुर्या-ज्ज्येष्ठायाः परिपूजनं । इति स्कांदविहितव्रतस्य—यस्मिन्दिने

---

१ 'तथैव'.

भवेज्ज्येष्ठा मध्यान्हादूर्ध्वमप्यणुः। तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे। इति स्कांदादुत्तरदिन एवानुष्ठानं। तथा नक्षत्रविशिष्टतिथिनिमित्तकव्रतेऽप्युपसर्जनीभूतस्यापि नक्षत्रस्योचितत्वादुत्तरदिन एव। यदा पूर्वमध्याह्नानंतरं तिथिनक्षत्रं प्रवृत्तं द्वितीयमध्याह्नात्पूर्वं समाप्तं तदा साकल्यवचनापादिततिथिनक्षत्रसत्ताया उभयत्र सत्त्वेपि तिथिप्राधान्यात्तस्याः शुक्लाया उत्तरस्या एव पूज्यत्वात्तत्रैवानुष्ठानं। यदा तु दिनद्वयेपि कर्मकाले तिथिनक्षत्रसत्ता समाना एकत्र रविवारयोगस्तदा—तत्राष्टम्यां यदा वारो भानोर्ज्यैष्ठर्क्षमेव च। नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिका। इति स्कांदेन रविवारयोगे प्राशस्त्यबोधनाद्रवियुक्तैव ग्राह्या। एवं पूर्वमध्याह्नमारभ्य नक्षत्रं प्रवृत्तं उत्तरमध्याह्नात्पूर्वं समाप्तं, तिथिस्तु द्वितीयदिन एव मध्याह्नव्यापिनी तदा तिथेः प्राधान्यादुत्तरैव ग्राह्येति। पूजा तु। ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमोनमः। शर्वायै ते नमस्तुभ्यं शांकर्यै ते नमोनमः। इति मंत्रेण कर्तव्या। यत्तु कालतत्त्वविवेचने, तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्र वैश्वदेवीशब्दान्वयलभ्यदेवतान्वयेन यागविनियोगलाभेन पयसः प्राधान्यात् सेति शब्देन परामर्शसंभवादामिक्षाशब्दः तस्य नामधेयमिति युक्तं नतु तथाष्टम्याः प्राधान्यं संभवति। येन नीलज्येष्ठेति तन्नामधेयं स्यात्। न चात्रापि—कृतस्नानो नरः कुर्यात्तस्यामन्यत्र वा दिने। भक्तियुक्तः शुचिर्भूत्वा ज्येष्ठायाः परिपूजनं। इत्युत्तरवाक्ये तस्यामित्यष्टम्यां विनियोगात्संभवत्येव तदिति वाच्यं। उपक्रमे ज्येष्ठायुक्तस्य यस्य कस्यापि दिनस्य कर्मकालत्वावगमेन तद्विरुद्धस्याष्टम्यास्तत्र विनियोगस्यासंभवात्। तेनोपक्रमानुरोधान्नक्षत्रमेव सेति शब्देन परामृश्यत इति तस्यैव नामधेयं नीलज्येष्ठेति। स्त्रीलिंगं च सा वैश्वदेव्यामिक्षेतिवत्। माधवस्य तु तिथावेवेदं योजयतोऽभिप्रायं न विद्म इत्युक्तं। तत्र यस्मिन्कस्मिन्दिने इत्युपक्रमवाक्येपि तिथ्यंतरवदष्टम्या अपि परामर्शात् तस्यामन्यत्र वा दिने इत्यत्राष्टम्या एव मुख्यत्वप्रतीतेः उपक्रमाविरोधेनैवान्वयसंभवात्सेति स्त्रीलिंगशब्देन तत्परामर्शस्यैव युक्तत्वान्नीलज्येष्ठेति तस्या एव नामधेयमुचितं। किंच सा वैश्वदेव्यामिक्षेत्यत्र विधेयबोधकामिक्षापदसामानाधिकर-

इतिकरणात् नीलज्येष्ठेतिशब्देन बोधनेन स्त्रीलिंगवाचकाभि-
धेयपदसामानाधिकरण्याभावात्सेतिशब्देन नक्षत्रपरामर्शासंभ-
वान्नीलज्येष्ठेति नक्षत्रस्यैव नामधेयमित्युक्तिः कथमिति चिन्त्यं। तस्मान्माधवाशयं न विद्म इति ग्रंथ एव यथार्थक इति दिक्। यत्तु—मासि भाद्रपदे पक्षे शुक्ले ज्येष्ठा यदा भवेत्। रात्रौ जागरणं कृत्वा गीतवादित्रनिःस्वनैः। एवंविधविधानेन ए-भिर्मंत्रैस्तु पूजयेत्। इति। मदनरत्नाद्युदाहृतभविष्योत्तरे—मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते। यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनं। इति। हेमाद्रौ स्कांदे च ज्येष्ठा-नक्षत्रं प्राधान्येन निमित्तीकृत्य ज्येष्ठाव्रतमुक्तं। तत्र यदा पूर्व-मध्याह्नमारभ्य प्रवृत्ता ज्येष्ठा द्वितीयमध्याह्ने मध्याह्नात्पूर्वं वा समाप्यते तदा मासि भाद्रपदे इति स्कांदात्पूर्वदिने एव। यदा पूर्वमध्याह्नानंतरं प्रवृत्ता द्वितीयमध्याह्ने समाप्यते तदा—कृतस्नानो नरः कुर्यात्तस्यामन्यत्र वा दिने। इति स्कांदादष्ट-मीयुता ग्राह्या। यदा मध्याह्नमारभ्य प्रवृत्ता द्वितीयदिने अ-पराह्णं स्पृशति तदा—यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्व-मप्यणुः। तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे। इति स्कांदादुत्तरदिने एव। मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूज-येत्। मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तमं। इति वचनात्पूजा-दिनात्पूर्वदिने आवाहनं उत्तरदिने विसर्जनं कार्यं। प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतं व्रतं। प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि। तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षके। इति कालादर्शोदाहृतमात्स्ये ज्येष्ठायोगाभावे केवलतिथौ कार्य-मित्यर्थसिद्धः सर्ववाक्याविरोधेन ज्येष्ठाष्टमीनिर्णयः। इति भा-द्रपदशुक्लाष्टमी॥ ॥ आश्विनशुक्लाष्टम्यां। अश्वयुक् शुक्लपक्षे या

दुर्गाष्टमी। अष्टमी मूलसंयुता। सा महानवमी प्रोक्ता त्रै-
लोक्ये तु सुदुर्लभा। कन्यागते सवितरि शुक्ले पक्षेऽष्टमी तु या। मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता। अष्टम्यां च नवम्यां च जगन्मातरमंबिकां। पूजयित्वाश्विने मासि विशोको जायते नरः। इति हेमाद्रौ स्कांदे प्रभासखंडे अंबिकापू-जोक्ता। तत्राष्टम्यां महाकाली दक्षयज्ञविनाशिनी। प्रादुर्भूता

महाघोरा योगिनीकोटिभिः सह । अतोर्थं पूजनीया सा तस्मिन्नहनि मानवैः । उपोषितैर्धूपदीपवस्त्रमाल्यानुलेपनैः । इति ब्रह्मपुराणे उपवासोप्युक्तः । अयं पुत्रवता न कार्यः । उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् । यथा तथा च पूतात्मा व्रती देवीं प्रपूजयेत् । इति कालिकापुराणात् । तत्रोपवासपूजादावष्टमी नवमीयुता ग्राह्या । वसुरंध्रयोरिति युग्मवाक्यात् । शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता । उपवासादिकार्येषु एष धर्मः सनातनः । इति निगमवाक्याच्च[1] । मदनरत्ने स्मृतिसमुच्चये—शरन्महाष्टमी पूज्या नवमीसंयुता[2] सदा । सप्तमीसंयुता नित्यं शोकसंतापकारिणी । जंभेन सप्तमीयुक्ता पूजिता तु महाष्टमी । इंद्रेण निहतो जंभस्तदा दानवपुंगवः । तस्मात्सर्वप्रयत्नेन सप्तमीमिश्रिताष्टमी । वर्जनीया प्रयत्नेन मनुजैः शुभकांक्षिभिः[3] । सप्तमीशल्यसंविद्धा वर्जनीया सदाष्टमी । स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदयो भवेत् । इति । अत्र भौमवारयोगोऽतिप्रशस्तः । अष्टम्यामुदिते सूर्ये दिनांते नवमी भवेत् । कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः । इति निर्णयामृताद्युताहृतवचनात् । निर्णयामृते—मूलेनागमनं देव्याः पूर्वाषाढासु पूजनं । उत्तरासु बलिं दद्याच्छ्रवणे चापराजिता । इति । तत्रैव देवीपुराणे—सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदा । बलिदानं प्रकर्तव्यं तत्र देशः शुभावहः । बलिदाने कृतेऽष्टम्यां राष्ट्रभंगो भवेन्नृप । इति । अयं निषेधो नवम्यां विहितस्यैव बलेर्नतु वक्ष्यमाणाष्टम्यां विहितस्य बलेः । अत्र सप्तमीविद्धानिषेधकवाक्यानि द्वितीयदिने पूजोपवासयोग्याष्टमीसत्वे एव प्रवर्तंते । द्वितीयदिने उपवासादियोग्याष्टम्यलाभे तु सप्तमीयुतापि कार्या कर्मकालव्याप्तिशास्त्रस्य तत्रैव प्रवृत्तेः । महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी । सप्तम्यापि युता कार्या मूलेन तु विशेषतः । अहं भद्रा च भद्राहं नावयोरंतरं क्वचित् । सर्वसिद्धिं प्रदास्यामि भद्रायामर्चिता ह्यहं । भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया । तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः । विष्टिं त्यक्त्वा महाष्टम्यां मम पूजां करोति

---

१ 'निगमाच्च'. २ 'सहिता'. ३ 'शुभकारिभिः'.

यः । तस्य पूजाफलं न स्यात्तेनाहमवमानिता । इति निर्णयामृताद्युदाहृतविश्वरूपनिबंधादिवचनेभ्यश्च यदा सार्धत्रिमुहूर्ता सप्तमी द्वितीयदिने मुहूर्तद्वयमष्टमी तृतीयदिने मुहूर्तार्धं नवमी तदा त्रिकालं पूजयेद्देवीमिति वचनात्पूजायाः कालत्रयसाध्यत्वादुपवासस्य चाहोरात्रसाध्यत्वात्तत्र मुख्यतिथ्यभावे साकल्यबोधकवचनापादिततिथिसत्ताया अवश्यमपेक्ष्यत्वात् । द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी । इत्यादिभिर्वृद्धावेव द्विमुहूर्तायाः साकल्यप्रतिपादनात् क्षयगामिन्यां तिथौ द्विमुहूर्तायां साकल्याभावेन पूर्वत्रैव कर्मणो यस्य यः काल इत्यस्य प्रवृत्तेः, उत्तरास्तिथयो यत्र क्षयं यांति नराधिप । पूर्वाष्टमीं तदा कुर्यादन्यथा त्वशुभं भवेत् । इति दुर्गोत्सववाक्येन पूर्वस्या एव विधानात् । सप्तम्यामुदिते सूर्ये परतश्चाष्टमी भवेत् । तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि । यदाष्टम्यां तु संप्राप्य अस्तं याति दिवाकरः । तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि । दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते । इत्यादिनिर्णयामृतमदनरत्नाद्युदाहृतवचनैर्नवमीयुक्ताया निषेधाच्च पूर्वैव । नचैवं याष्टमी सप्तमीविद्धा सती तिथिक्षयवशात् द्वितीयदिने न वर्धते तद्विषयत्वात् पूर्वविद्धाविधायकवचनानां । तदुक्तं स्मृतिसंग्रहे— यदा सूर्योदये न स्यादष्टमी चापरेऽहनि । तदाष्टमीं न[2] कुर्वीत सप्तम्या सहितां नृप । इति द्वितीयदिने अष्टम्यभावे एव पूर्वविद्धावचनानां प्रवृत्तिरिति निर्णयामृतविरोध इति वाच्यं । प्रकृते द्वितीयदिने वाष्टमीस्वीकारे कर्मकालव्याप्तिशास्त्रविरोधान्नवमीयुक्तानिषेधकवाक्यानां निर्विषयत्वापत्तेश्च । नचाश्विनकृष्णनवम्यां विहितो देवीप्रबोधस्तदंगत्वेन कृष्णाष्टम्यां क्रियमाणदेवीपूजाविषयाण्येतानीति निर्णयामृते उक्तत्वान्न निर्विषयत्वमिति शंक्यं । महाष्टमीप्रकरणपठितवाक्यानामनन्यथासिद्धवचनं विना प्रकरणविरोधेन कृष्णाष्टमीविषयत्वासंभवात्, संग्रहवाक्यस्य नवमीयुक्तानिषेधकवाक्याविरोधेनैव विद्धानधिकाष्टम्यां चरितार्थत्वात्, तृतीयदिने नवम्यभावे पूर्वविद्धाविधायकानीमानीति मदनरत्नादिविरोधापत्तेश्च । अतः—तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इति बैजवापवाक्यात्प्रकृतो

१ 'वृद्धावद्विमुहूर्तायाः'. २ 'प्रकुर्वीत'.

**निर्णयामृत** उपेक्ष्य एव । यदा द्वादशघटिका सप्तमी द्वितीयदिने—वृद्धिक्षयौ स्तः परमौ तिथौ यथा—व्यर्धा रसाः सांघ्रिरसाश्च नाडिका इति **ज्योतिर्विदाभरणो**क्तेः सपादषट्घटिकाष्टमी नवमी च सूर्योदये समाप्ता तदा शुक्लपक्षेऽष्टमीत्यादिसामान्यवचनैः, मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः । लेशमात्रेण सप्तम्या अपि स्याद्यदि दूषिता । इत्यादि**निर्णयामृता**द्युदाहृत**रूपनारायणा**द्यनेकविशेषवचनैश्च सप्तमीविद्धानिषेधात् । शरन्महाष्टमी पूज्या नवमीसंयुता सदा । इति पूर्वोदाहृतेन, नवमी च यदा देव्या मूर्तिर्दैत्यविनाशिनी । अतएव हि पूज्या स्यादष्टमी नवमीयुता । इत्यादिदुर्गोत्सवादिविशेषवचनैरपि नवमीयुताया एव पूज्यत्वप्रतिपादनात् पूज्यतिथेरेव साकल्यबोधकवचनापादितमपि सत्वमादायैव कर्मकालव्याप्तिशास्त्रप्रवृत्ति**र्हेमाद्रिमाधवा**दिसंमतेति जन्माष्टमीप्रकरणे प्रतिपादनात् प्रकृते उत्तरदिने एव तत्प्रवृत्तिरिति नवमीयुतैवाष्टमी ग्राह्या । एवं सप्तमीविद्धाष्टमी द्वितीयदिने मुहूर्तद्वयात्किंचिदधिका तृतीयदिने नवमी नास्ति द्वितीयदिने एव मूलनक्षत्रं तत्रापि—अश्वयुक्शुक्लपक्षे या अष्टमी मूलसंयुता । सा महानवमी प्रोक्ता त्रैलोक्येपि सुदुर्लभा । इत्याद्युदाहृतवाक्यैर्मूलयुतायामेव पूजादिविधानात् । उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः । इत्यनेनौदयिक्यास्तिथेर्द्विमुहूर्ताया अपि साकल्यप्रतिपादनाद्द्वितीयैव ग्राह्या । न चैवं द्वितीयदिनेऽष्टमीलाभेपि यदा तृतीयसूर्योदये नवमी नास्ति तदा सप्तमीविद्धैव कार्या । यदा सूर्योदये न स्यान्नवमी चापरेहनि । इत्यादि**स्मृतिसंग्रह**वाक्यादिति **मदनरत्न**विरोध इति वाच्यं । **निर्णयामृते**ऽष्टमीत्येव पाठे नवमीति पाठस्यैवाभावात्[१] । भवतु नाम नवमीति पाठस्तथापि यदा द्वितीयदिने मुहूर्तद्वयान्यूनाष्टमी तत्र स्तोकापि सा तिथिरित्यादिना प्रसक्तौ सप्तमीविद्धाविधानेन चरितार्थत्वात् साकल्यबोधकवचनाविषयीभूतनवमीयुक्ताष्टमीस्थले तत्प्रवृत्तेरसंभवात् । अन्यथा द्वादशघटिका सप्तमी द्वितीयदिने मूलयुक्तमुहूर्तत्रयाष्टम्यामपि द्वितीयदिने नवम्यसंभवेन[२] सप्तमीविद्धाग्रहणापत्तौ पूर्वोक्तानेकवचननिर्ण-

१ 'नवमीभावात्'. २ 'नवम्यलाभसंभवेन'.

यामृतादिग्रंथविरोधापत्तेः । तस्मात्प्रकृतविषये उपेक्ष्य
मदनरत्नः । एतेन मदनरत्नपृष्ठानुयायिनः कालतत्त्व
चनकृत्यरत्नावलीस्मृतिकौस्तुभनिर्णयसिंधुमयूखा
सर्वे नवीनग्रंथा अप्ययुक्ता एव । यत्तु निशायां पूजिता
वैष्णवी पापनाशिनी । तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूज
इति निर्णयामृते भविष्ये रात्रौ पूजोक्ता । तदर्धयामि
विजयार्थं नृपोत्तमः । पंचाब्दं लक्षणोपेतं गंधधूपस्रग
विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् । इति दे
राणे रात्रोऽर्धरात्रे बलिदानमष्टम्यामुक्तं तत्तत्कालव्यापिन्य
कार्यं । कर्मकालव्याप्तिशास्त्रं सर्वेभ्यः प्रबलमिति हेमाद्रिम
वादिभिः सिद्धांतितत्वात् । अतः कर्मकालव्याप्तिशास्त्रं बा
नवमीयुतायामेव रात्रौ असत्यामप्यष्टम्यां नवमीपूजया सह
अष्टमीपूजोचितेति कालतत्त्वविवेचनस्मृतिकौस्तुभ
उपेक्ष्याः । इति दुर्गाष्टमीनिर्णयः । कार्तिक्युत्तराष्टम्यां—

भैरवाष्टमी । शीर्षासिताष्टम्यां कालभैरवसंनिधौ । उ
जागरं कुर्वन्सर्वपापैः प्रमुच्यते । इति काशीखंडे उपव
जागरणे उक्ते । कृत्वा च विविधां पूजां महासंभारविस्तरैः ।
मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् । तीर्थे कालो
स्नात्वा कृत्वा तर्पणमत्वरः । विलोक्य कालराजानं निरय
द्धरेत्पितॄन् । इति काशीतत्त्वप्रकाशिकायां पूजास्ना
युक्तं । तत्र कृष्णपक्षेऽष्टमी चैवेति निगमात्, रुद्रव्रतेषु स
कर्तव्या संमुखी तिथिरिति ब्रह्मवैवर्ताच्च अस्तात्प्राचीनमुहू
त्रयव्यापिनी पूर्वविद्धा ग्राह्या । पूर्वविद्धाया अलाभे तूत्तरैव
एतेनेयं मध्याह्नव्यापिनी ग्राह्येति कमलाकरभट्टोक्तिः, रात्रिव्या
पिनी ग्राह्येति नंदपंडितोक्तिश्चोपेक्ष्या । कृष्णपक्षेत्यादिवचनवि
रोधात् । इति भैरवाष्टमी ॥ ॥ हेमाद्रौ ब्रह्मांडे—पौषे मा

महाभद्राष्टमी । यदा देवि शुक्लाष्टम्यां बुधो भवेत् । तदा सा
महापुण्या महाभद्रेति कीर्तिता । तस्यां स्नानं जपो होमस्तर्प
विप्रभोजनं । मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् । तस्म
त्तस्यां सदा देवि पूज्योहं विधिवन्नरैः । पौषे मासि यदा दे
अष्टम्यां यमदैवतं । नक्षत्रं जायते पुण्यं शिवे शैलात्मजे शुभे

१ 'व्यापिवाक्यं'.

तदा तु सा महापुण्या जयंती चाष्टमी स्मृता । तस्यां स्नानं तथा दानं जपो होमश्च तर्पणं । सर्वं कोटिगुणं देवि कृतं भवति कृत्स्नशः । इति पौषशुक्लाष्टमी ॥ माघे मासि सिताष्टम्यां सलिलं

भीष्माष्टमी । भीष्मवर्मणे । श्राद्धं च ये नराः कुर्युस्ते स्युः संततिभागिनः । तर्पणमंत्रः । भीष्मः शांतनवो वीरः सत्यवादी जितेंद्रियः । आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियां । वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च । अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे । इति हेमाद्रौ वाराहपुराणे भीष्मतर्पणं श्राद्धं चोक्तं । अत्र श्राद्धं काम्यं तर्पणं नित्यं । ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलं । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम । इत्यकरणे प्रत्यवायस्मरणात्[1] । जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः । इति वचनात् । अत्र श्राद्धस्यैकोद्दिष्टत्वान्मध्याह्नव्यापिन्यष्टमी ग्राह्या । इति पुरुषार्थचिंतामणौ अष्टमीनिर्णयः ।

**अथ नवमी निर्णीयते** । सा च उपवासव्रतादिषु पूर्वविद्धा ग्राह्या । वसुरंध्रयोरिति युग्मवाक्यात् । न कुर्यान्नवमीं तात दशम्या तु कदाचन । इति हेमाद्रौ स्कांदात् । नवम्येकादशी चैव दशाविद्धा यदा भवेत् । तदा वर्ज्या विशेषेण गंगांभः श्वदृतौ यथा । इति तत्रैव पाद्मात् । द्वितीया पंचमीवेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वापरे तिथी । इति बृहद्वसिष्ठाच्च ॥ ॥ चैत्रशुक्लनवमी रामनवमी ।

रामनवमी । चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ । उदये गुरुगौरांश्वोः स्वोच्चस्थे ग्रहपंचके । मेषं पूषणि संप्राप्ते लग्ने कर्कटकाह्वये । आविरासीत्स कलया कौसल्यायां परः पुमान् । तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा । तत्र जागरणं कुर्याद्रघुनाथपरो भुवि । प्रातर्दशम्यां कृत्वा तु संध्याद्याः[2] कालिकाः क्रियाः । संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः । ब्राह्मणान् भोजयेद्भुत्वा दक्षिणाभिश्च तोषयेत् । रामभक्तान्प्रयत्नेन[3] प्रीणयेत्परया मुदा । एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतं । अनेकजन्मसिद्धानि पातकानि बृहंत्यपि । भस्मीकृत्य व्रजत्येव तद्विष्णोः परमं पदं । सर्वेषामप्ययं धर्मो भुक्तिमुक्त्यैकसाधनं । यस्तु रामनवम्यां तु भुंक्ते स च नराधमः । कुंभी-

१ 'श्रवणात्'. २ 'संध्यायाः'. ३ 'रामभक्त्या'.

पाकेषु घोरेषु पच्यते नात्र संशयः। इति मदनरत्ने मत्स्य-संहितायां रामनवमीव्रतमुक्तं। अत्र सदाशब्दस्याकरणे प्रत्यवायस्य फलस्य च श्रवणान्नित्यकाम्यमिदं। अत्र लग्ने कर्कटकाह्वये इत्यनेन मध्याह्नस्य जन्मकालत्वाभिधानात्, सैव मध्याह्नयोगेन महापुण्यतमा भवेदितिवचनाच्च मध्याह्नव्यापिनी ग्राह्या। उभयत्र तद्व्याप्तावव्याप्तौ वा—पुनर्वस्वृक्षसंयोगः स्वल्पोपि यदि दृश्यते। चैत्रशुक्लनवम्यां तु सा पुण्या सर्वकामदा। इति मदनरत्नेऽगस्तिसंहितावचनात् या पुनर्वसुयुता सैव ग्राह्या। यदा एकत्र मध्याह्ने पुनर्वसुयोगः अन्यत्र मध्याह्नं विहाय पुनर्वसुयोगस्तदा मध्याह्ने पुनर्वसुयुता ग्राह्या। यदा दिनद्वयेऽपि मध्याह्ने पुनर्वसुयोगः, मध्याह्नं विहायैव वा पुनर्वसुयोगस्तदोत्तरा। यदा पुनर्वसुयोगो नास्ति केवलनवम्येव दिनद्वये मध्याह्नव्यापिनी तदैकदेशव्यापिनी मध्याह्नास्पर्शिनी वा तदाप्युत्तरैव। नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यां वै दशम्यां पारणं भवेत्। इति माधवोदाहृतागस्तिसंहितावचनात्। इति रामनवमी॥ हेमाद्रौ ब्रह्मपुराणे—

दुर्गानवमी। चैत्रशुक्लनवम्यां च भद्रकाली महाबला। योगिनीनां तु सर्वासामाधिपत्ये विनिश्चिता। तस्मात्तां पूजयेत्तत्र सोपवासो जितेंद्रियः। विचित्रैर्बलिभिर्भक्त्या सर्वासु नवमीषु च। इति। निर्णयामृते भविष्योत्तरे—वैशाखे मासि राजेंद्र नवम्यां पक्षयोर्द्वयोः। उपवासपरो भक्त्या पूजयेद्यस्तु चंडिकां। हंसकुंदेंदुसंकाशस्तेजसा सूर्यसंनिभः। विमानवरमारूढो देवलोके महीयते। इति। उपवासपरो भक्त्या नवम्यां पूजयेदुमां। ब्रह्माणी त्विति वै नाम्ना साक्षाद्ब्रह्मस्वरूपिणी। ज्येष्ठे मासि नृपश्रेष्ठ कृत्वा नक्तस्य वै विधिं। उपवासपर इत्यत्र दिवेति शेषः। अन्यथा नक्तविधानविरोधात्। शाल्यन्नं पयसोपेतं स्वयं भुंजीत वाग्यतः। कुमारीर्भोजयेच्चापि स्वशक्त्या ब्राह्मणांस्तथा। इति। उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः। आषाढे मासि राजेंद्र यः कुर्यान्नक्तभोजनं। पूजयेच्छ्रद्धया दुर्गामैंद्रीनाम्नीति नामतः। ऐरावतगतां शुभ्रां श्वेतरूपेण रूपिणीं। स ऐरावतमारुह्य इंद्रस्यानुचरो भवेत्। इति। श्रावणे मासि

१ 'दशमी ग्राह्या'.

राजेंद्र यः कुर्यान्नक्तभोजनं । क्षीरषष्टिकभक्तेन सर्वभूतहिते रतः । उपवासपरो वारे नवम्यां पक्षयोर्द्वयोः । वारे वासरे इत्यर्थः । कुमारीमिति वै नाम्ना चंडिकां पूजयेत्सदा । कृत्वा रौप्यमयीं भक्त्या घोरपापविनाशिनीं । करवीरस्य पुष्पैस्तु गंधैश्चागुरुचंदनैः । धूपेन च दशांगेन मोदकैश्चापि पूजयेत् । कुमारीर्भोजयेच्छक्त्या स्त्रियो विप्रांश्च शक्तितः । भुंजीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः । एवं यः पूजयेदार्यां श्रद्धया परया युतः । स याति परमं स्थानं यत्र देवो गुहः स्थितः । इति । अथ भाद्रपदे या स्यान्नवमी बहुलेतरा । सा तु नंदा महापुण्या कीर्तिता पापनाशिनी । तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनंदन । सोऽश्वमेधफलं विंद्याद्विष्णुलोकं स गच्छति । इति । देवीपुराणे । कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेंबिकां । नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः । इति । अत्र दुर्गापूजादौ नवमी पूर्वविद्धैव ग्राह्या । श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनं । इति बृहद्यमवचनात् । दुर्गापूजा तु नवमी मूलाद्यृक्षत्रयान्विता । महती कीर्तिता तस्यां दुर्गां महिषमर्दिनीं । चंडिकामुपहारैस्तु पूजयेद्राज्यवृद्धये । इति लिंगपुराणात् । मूलाद्यृक्षयोगेऽतिप्रशस्ता । बलिदाने तूत्तरैव । सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि । बलिदानं प्रकर्तव्यं तत्र देशः शुभावहः । बलिदाने कृतेऽष्टम्यां राष्ट्रभंगो भवेन्नृप । इति देवीपुराणेन बलिदाने दशमीयुताविधानादष्टमीयुताया निषेधाच्च । नचैवं । न कार्या दशमीविद्धा नवमी तु सदा बुधैः । नवमीं दशमीविद्धां ये कुर्वंति विमोहिताः । वृथा तेषां भवेत्सर्वं बलिपूजाविधानकं । इति मदनरत्नलिखितवचनविरोध इति वाच्यं । एतच्छुद्धाधिकाविषयमिति तत्रैवोक्तेः । नवम्यामपराह्ले तु बलिदानं प्रशस्यते । दशमीं वर्जयेत्तत्र नात्र कार्या विचारणा । इति ब्रह्मवैवर्तादिवचनान्यप्येतद्विषयाण्येवेति । तस्यां ये ह्युपयुज्यंते प्राणिनो महिषादयः । सर्वे ते स्वर्गतिं यांति घ्नतां पापं न विद्यते । यावन्न चालयेद्गात्रं पशुस्तावन्निहन्यते । न तथा बलिदानेन पुष्पधूपानुलेपनैः । यथा संतुष्यते मेषैर्महिषैर्विंध्यवासिनी । इति हेमाद्रिनिर्णयामृताद्युदाहृतभविष्योत्तरोक्तेः । इति दुर्गानवमीनिर्णयः ॥ हेमाद्रौ

जायते कोटिगुणितं दानं तस्यां नराधिप । शुक्लपक्षे नवम्यां तु कार्तिकस्य समाहितः । स्नायाद्ध्यान्नमस्कुर्यादक्षयं लभते फलं । तत्रैव पाद्मे—कार्तिके नवमी शुक्ला पितॄणामुत्सवाय च । तस्यां स्नातं हुतं दत्तमनंतफलदं भवेत् । इति । इयं युगादिरपि । तन्निर्णयोऽक्षय्यतृतीयाप्रकरणे बोध्यः । निर्णयामृते भविष्योत्तरे—मासि मार्गशिरे पार्थ शुक्लपक्षे तु या भवेत् । सा नंदिता महापुण्या नवमी परिकीर्तिता । यस्तस्यां पूजयेद्देवीं त्रिरात्रोपोषितो नरः । सोऽश्वमेधमवाप्येह विष्णुलोके महीयते । इति । माघमासे तु या शुक्ला नवमी लोकपूजिता । महानंदेति सा प्रोक्ता सदानंदकरी नृणां । तस्यां स्नानं तथा दानं जपो होम उपोषणं । सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः । इति । पुरुषार्थचिंतामणौ नवमीनिर्णयः ।

अथ दशमी निर्णीयते । सा च पूर्वविद्धा ग्राह्या । तदुक्तं हेमाद्रौ स्कांदे—दशमी चैव कर्तव्या सदुर्गा द्विजसत्तम । इति । यदा तु दिनद्वयेपि कर्मकालव्यापिनी तदा पूर्वा परा वा ग्राह्या । संपूर्णो दशमी कार्या पूर्वया परयाथवा । युक्ता न दूषिता यस्मादतः सा सर्वतोमुखी । इति हेमाद्रौ अंगिरसः भविष्यत्पुराणस्य वचनात् । दिनद्वयेऽपि कर्मकालास्पर्शिनी तदेकदेशव्यापिनी वा तदा पूर्वैव । पंचमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः । इति कालादर्शहेमाद्र्याद्युदाहृतपठिनसिवचनाच्च उपवासे तु सर्वापि पूर्वैव । प्रतिपत्पंचमी भूतं सावित्रीवटपूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः । नंदाविद्धा तु या पूर्णा द्वादशी मकरे सिता । भृगुणा नष्टचंद्रा च एता वै निष्फलाः स्मृताः । नंदाः प्रतिपत्षष्ठ्येकादश्यः । पूर्णाः पंचमीदशमीपंचदश्यः । तथा चैकादशी विद्धा दशमी नोपोष्येत्यर्थः । नागविद्धा तु या षष्ठी सप्तम्या तु तथाष्टमी । रुद्रेण दशमी विद्धा नोपोष्या मलिनाः स्मृताः । इति कालादर्शोदाहृतब्रह्मवैवर्तकूर्मस्कंदपुराणवचनैः । तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः । वेधादधस्ताद्धन्युस्ता उपवासे तिथीस्त्विमाः । ना-

१ 'विधिविरोधात्'. २ 'दधस्तात्ता हन्युरुपवासे'.

[illegible]
यशिवरहस्यसौरपुराणादिवचनैरुपवासरूपव्रतविशेषविशेष-
कैः व्रतसामान्यविषयकसंपूर्णा दशमी कार्येति वाक्यस्य
उपवासे बाधात्, **कालादर्शहेमाद्रिनिर्णयामृतमदनर-**
**त्नादिभिः** उपवासे पूर्वैवेति सिद्धांतितत्वाच्च । नन्वेवं दश-
मीसंपूर्णावत्पूर्वविद्धा परविद्धा वा कर्तव्येति संपूर्णा दशमी
कार्येत्यनेन विधीयते । तत्र वचनाभावे एव ऐच्छिकविकल्पस्य
स्वीकर्तव्यत्वात् । प्रकृते शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो
रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः । इति **मार्क-**
**ण्डेय**वचनाच्छुक्लपक्षे परयुता कृष्णपक्षे पूर्वयुता कार्या । पूर्व-
विद्धाविधायकवचनानि उपवासे उत्तरविद्धानिषेधकानि च
वचनानि कृष्णपक्षविषयाणि तस्मात् शुक्लोत्तरविद्धा कृष्णा
पूर्वविद्धेति **माधवविरोध** इति चेत् । मूलवचनानुगुण-
**हेमाद्र्यादिसंवादिमाधवाचार्य**तात्पर्यविषयीभूतार्थप्रतिपादक-
कर्मकालव्याप्तौ अनेकस्मृतीनामत्यंतनिर्बंधदर्शनात्कर्मकालव्या-
प्तिशास्त्रं सर्वेभ्यः प्रबलमिति निश्चीयते । तदनुसारेणैव
द्वितीयाद्याः तिथयो ग्राह्या इति द्वितीयाप्रकरणस्थ**माधव-**
ग्रंथः, दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः । इत्येकादशीप्रक-
रणस्थग्रंथः, एताभ्यां विरुद्धस्य तत्तात्पर्यार्थविषयाप्रतिपाद-
कग्रंथविरोधस्य दोषत्वात् । कथं पूर्वापरमाधवग्रंथाभ्यामे-
तस्य विरोध इति चेत्, यदा शुक्लपक्षे पूर्वविद्धैव कर्मकालव्या-
पिनी नोत्तरविद्धा, कृष्णपक्षे उत्तरविद्धैव कर्मकालव्यापिनी
न पूर्वविद्धा तदा पक्षभेदेन व्यवस्थास्वीकारे कर्मकालव्याप्त्यैव
निर्णय इति ग्रंथविरोधस्य शुक्लपक्षे उत्तरविद्धदशम्यामुपवा-
सापत्तौ दशम्यामेकभक्तनक्तबोधकग्रंथविरोधस्य च स्पष्टत्वात् ।
नन्वेवमपि विचारपूर्वकत्वेन प्रवृत्तदशमीनिर्णयग्रंथस्य प्रती-
यमानेऽर्थे **माधव**तात्पर्यं नास्तीति कथं निश्चय इति चेत् ।
अप्रतिज्ञातेर्थे ग्रंथकर्तुः तात्पर्यं नास्तीति **माधवाचार्यै**रेव
निर्णीतमिति जन्माष्टमीप्रकरणे प्रतिपादितत्वात् । प्रकृते **हेमा-**
**द्र्यादिभिः** कर्मांगतयापि निर्णीतकालस्य संकरीकरणार्थं म-
मायमुद्योग इति **माधवाचार्यहेमाद्र्यादि**निर्णीतकालसंग्रह-

स्यैव प्रतिज्ञातत्वात् तत्रैव तेषां तात्पर्यं, न तु महत्स्वभाव-तया प्रसंगेन विचारितेर्थे इति सुनिश्चयात् । किंच । यत्रैकैव्य तिथिरेकेन वचनेन पूर्वविद्धा ग्राह्येत्युच्यते द्वितीयेन परयु-तेति तत्र विरोधे सति व्यवस्थापकं मार्कंडेयवचनमिति हेमाद्रिणा सिद्धांतितत्वात्, प्रकृते विरोधाभावेन तस्याप्र-वृत्तेः । अपिच द्वितीयादितिथिष्विवात्रापि तत्प्रवृत्तिस्वीकारे तिथ्यंतरे तिथ्यंतराद्विशेषः प्रतिपादकः अतः सा सर्वतोमुखीत्यस्य वैयर्थ्यापत्तेश्च । तत्सिद्धं हेमाद्र्यादिकृतदशमीनिर्णय एव माधवाचार्यसंमत इति । एवं सति दशमीशुक्लोत्तरा कृष्णा पूर्वेति माधवकृतनिर्णयो न समीचीनः, स एव समीचीन इत्यादिपरस्परविरुद्धार्थप्रतिपादकाः कालतत्त्वविवेचननि-र्णयसिंधुमयूखादयः सर्वे नवीनग्रंथाः हेमाद्रिकाला-दर्शमाधवनिर्णयामृतमदनरत्नविरोधादुपेक्ष्या इति दिक् । इति दशमीसामान्यनिर्णयः ॥ हेमाद्रौ स्कांदे ज्येष्ठस्य शुक्लदशमी

दशहरा । संवत्सरमुखी स्मृता । तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः । यां कांचित्सरितं प्राप्य दद्याद्दर्भतिलोदकं । मुच्यते दशभिः पापैः सुमहापातकोपमैः । ब्राह्मे—ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता । हरते दश पापानि तस्माद्दशहरा स्मृता । तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः । दशपापा-न्याह मनुः—पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः । असंबद्ध-प्रलापश्च वाङ्मयं स्याच्चतुर्विधं । अदत्तानामुपादानं हिंसा चै-वाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतं । पर-द्रव्येष्वभिध्यानं मनसानिष्टचिंतनं । वितथाभिनिवेशश्च त्रिविधं कर्म मानसं । भविष्ये । ज्येष्ठे शुक्लदशम्यां च भवेद्भौमदिनं यदि । ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः । विष्णुधर्मो-त्तरे—दशम्यां शुक्लपक्षे च ज्येष्ठे मासे कुजे दिने । गंगावतीर्णा हस्तर्क्षे सर्वपापहरा स्मृतेति । निर्णयामृते वाराहे—दशम्यां शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि । अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे तु सरिद्वरा । हरते दश पापानि तस्माद्दशहरा स्मृता । दश-योगा उक्ताः स्कांदे—ज्येष्ठे मासि सिते पक्षे दशम्यां बुध-हस्तयोः । गरानंदे व्यतीपाते कन्याचंद्रे वृषे रवौ । दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते । इति । बुधहस्तयोगे आनंदयोगे

भवति । अत्र बुधभौमवारयोः कल्पभेदेन व्यवस्था बोध्या । अस्याः खंडत्वे यत्र योगाधिक्यं सा ग्राह्या । ॐनमः शिवायै नारायण्यै दशपापहरायै गंगायै नमोनम इति मंत्रेण गंगापूजा कार्या । काशीखंडे विशेषः–ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदां तिथिं । दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः । एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः । आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् । इति तथा—लिंगं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ । दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः । इति । ज्येष्ठे मले तत्रैवेदं कर्तव्यं—दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु। उपाकर्ममहाषष्ठ्योर्हीतदिष्टं वृषादितः । इति हेमाद्रौ ऋष्यशृंगवचनात् ।

अथाश्विनशुक्लदशम्यां राजानं प्रत्युक्तं गोपथब्राह्मणे–

सीमोल्लंघनं । राजा निर्गत्य भवनात्पुरोहितपुरोगमः । प्रास्थानिकं विधिं कृत्वा प्रातिष्ठेत्पूर्वतो दिशि । गत्वा नगरसीमांतं वास्तुपूजां समारभेत् । संपूज्य चाथ दिक्पालान्पूजयेत्पथि देवताः । मार्गे शमीतरुमूले दिक्पालपूजनपूर्वकं वास्तुपूजनं कुर्यादित्यर्थः । मंत्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुं । अमंगलानां शमनीं शमनीं दुष्कृतस्य च । दुःखप्नशमनीं धन्यां प्रपद्येऽहं शमीं शुभां । ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान्क्रमेत् । रिपोः प्रतिकृतिं कृत्वा ध्यात्वा च मनसाथ तं । शरेण स्वर्णपुंखेन विध्येद्धृदयवर्मणि । दिशाविजयमंत्राश्च पठितव्याः पुरोधसा । पूर्वमेव विधिं कुर्याद्दक्षिणादिदिशास्वपि । पूज्यान्द्विजांश्च संपूज्य सांवत्सरपुरोहितौ । गजवाजिपदातीनां प्रेक्षाकौतुकमाचरेत् । जयमंगलशब्देन ततः स्वभवनं विशेत् । नीराज्यमानः पुण्याभिर्गणिकाभिः सुमंगलं । य एवं कुरुते राजा वर्षे वर्षे सुमंगलं । आयुरारोग्यमैश्वर्यं विजयं च स गच्छति । नाधयो व्याधयस्तस्य भवंति न पराजयाः । श्रियं पुण्यमवाप्नोति विजयं च सदा भुवि । इति । सर्वे जना अपि तस्यां सीमोल्लंघनं कुर्युः । उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो नराः । इति कश्यपवचनात् । अपराजितां च पूजयेयुः । दशम्यां च नरैः

अपराजितापूजा । सम्यक् पूजनीयाऽपराजिता । ऐशानीं दिशमा-

१ 'दुःस्वप्ननाशिनीं'.

श्रित्य अपराह्णे प्रयत्नतः । इति पुराणसमुच्चयवचनात् । ग्रामादैशान्यामपराह्णे अपराजितापूजां कुर्युः । तत्र चंदनादिना लिखिताष्टदलपद्ममध्ये अपराजितायै नमः इत्यपराजितां तद्द-क्षिणे क्रियाशक्त्यै नमः इति जयां तद्वामे उमायै नमः इति विजयां प्रतिष्ठाप्य अपराजितायै नमः जयायै नमः विजयायै नमः इत्यावाहनाद्युपचारैः संपूज्य नमस्कृत्य । इमां पूजां मया देवि यथाशक्ति निवेदितां । रक्षणार्थं समादाय व्रज स्वस्थानमुत्तमम् । इति विसर्जयेत् । राजा तु नमस्कारानंतरं । चारुणा मुखपद्मेन विचित्रकनकोज्ज्वला । जयादेवी शिवे भक्त्या सर्वकामान्ददातु मे । कांचनेन विचित्रेण केयूरेण विराजिता । जयप्रदा महा-माया शिवभावितचेतसा । विजया च महाभागा ददातु विजयं मम । हारेण सुविचित्रेण भास्वत्कनकमेखला । अपरा-जिता रुद्रभक्ता करोतु विजयं मम । इति प्रार्थनां कृत्वा । हरि-द्रारक्तवस्त्रे दूर्वायुक्तं सिद्धार्थकान्प्रदक्षिणवलयाकारेणाबध्य । सदाऽपराजिते यस्मात्त्वं लतासूत्तमा स्मृता । सर्वकामार्थसि-द्ध्यर्थं तस्मात्त्वां धारयाम्यहं । भवाऽपराजिते देवि मम सर्वस-मृद्धये । पूजितायां त्वयि श्रेयो ममास्तु दुरितं हतम् । इति तद्वलयमभिमंत्र्य । जयदे वरदे देवि दशम्यामपराजिते । धार-यामि भुजे दक्षे जयलाभाभिवृद्धये । बलं मां धेहि वलय मम शत्रौ पराभवं । त्वद्धारणाद्भवेयुर्मे धनधान्यसमृद्धयः । इति मंत्रेण दक्षिणबाहौ धारयित्वा पूर्ववदपराजितां विसर्जयेदिति । सर्वे च जना ग्रामाद्बहिरीशानदिगवस्थितां शमीं संपूज्य । अमंगलानामिति पूर्वोक्तेन मंत्रेण प्रार्थयेयुः । ज्योतिर्निबंधे स्कांदे अश्वगजादिभूषणमभिधाय । ततस्तु पूजयेद्देवान् गंध-पुष्पाक्षतैरलम् । आहूय ब्राह्मणान्सर्वान्वाचयेत्स्वस्ति मंगलम् । ततस्तुरगमारुह्य तूर्यघोषसमन्वितः । बंदिभिः स्तूयमानस्तु सन्मानैः शकुनैर्व्रजेत् । ज्योतिःशास्त्रोदितां काष्ठां सुहृद्भिः परिवारितः । संप्राप्य तु शमीवृक्षमश्मंतकमथापि वा । अव-तीर्य नृपो वाहाद्वेगात्सह पुरोधसा । संनिषण्णः शमीमूले

१ 'अपराजितां तद्दक्षिणे पूजां'. २ 'भद्ररता', 'रुद्रभक्त्या'. ३ 'शुभे दक्षे'. ४ 'बलमाधेहि'.

विदध्यात्स्वस्तिवाचनं । कार्योद्देशान्द्विजैः साकं प्रयोगकुशलैर्वदन् । ततः प्रोक्ष्य शमीमूले भूमिं भूमिपतिर्ध्रुवं । उद्धृत्य मृत्तिकां तत्र प्रक्षिपेत्तंडुलाञ्शुभान् । सपूगं हेम शक्त्या च अभावे ताम्रमुत्तमं । ततः प्रदक्षिणाः कुर्यात्तस्य वृक्षस्य भूपतिः । शमी शमयते पापं शमी शत्रुविनाशिनी । धरित्र्यर्जुनबाणानां रामस्य प्रियवादिनी । करिष्यमाणयात्रायां यथाकालं सुखं मम । तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते । इति प्रार्थयेत् । शम्या अलाभे अश्मंतकपूजा कार्या । तत्र अश्मंतक महावृक्ष महादोषनिवारण । इष्टानां दर्शनं देहि शत्रूणां च विनाशनं । इति अश्मंतकप्रार्थनामंत्र इति ज्योतिर्निबंधे उक्तं । तथा–गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदं । गीतवादित्रघोषैस्तामानयेत्स्वगृहं प्रति । ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह । इति । ज्योतिषे–कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमं । शोभनं खंजनं पश्येज्जलगोगोष्ठसंनिधौ । तिथितत्त्वे मंत्रः–नीलग्रीव शुभग्रीव सर्वकामफलप्रद । पृथिव्यामवतीर्णोऽसि खंजरीट नमोस्तु ते । वसंतराजे–त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन । संदृश्यसे प्रावृषि निर्गतायां त्वं खंजनाश्चर्यमयो नमस्ते । इति । दर्शनफलं तिथितत्त्वे–अब्जेषु गोषु गजवाजिमहोरगेषु राज्यप्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः खलु खंजरीटः । वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रे हुताशे भयं याम्यामग्निभयं सुरद्विपकलिर्लाभः समुद्रालये । वायव्यां वरवस्त्रगंधसलिलं दिव्यांगना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खंजने ॥ अत्र यात्रासीमोल्लंघनापराजितापूजासु दशमी श्रवणनक्षत्रयोगाभावे नवमीयुता ग्राह्या । या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता । क्षेमार्थं विजयार्थं च प्रसिद्ध विधिना नरैः । नवमीशेषसंयुक्तदशम्यामपराजिता । ददाति विजयं देवी पूजिता जयवर्धिनी । आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः । एकादश्यां न कुर्वीत पूजनं चापराजितम् । इति पुराणसमुच्चयवचनात् । दशमीं यः समुल्लंघ्य प्रस्थानं कुरुते

१ 'शान्जनैः साकं'. २ 'उत्कृत्य'. ३ 'शमी लोहितकंटका । अर्जुनस्य धनुर्धारिरामस्य'. ४ 'अस्याः'. ५ 'त्रनिर्घोषैरानयेत्'. ६ 'नववस्त्र'.

नृपः । तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् । इति निर्णयामृते स्कांदाद्दिनद्वये श्रवणयोगेपि नवमीयुतैव । यदा तु उत्तरदिने एव श्रवणयुक्ता तदोत्तरैव । उदये दशमी किंचित्संपूर्णैकादशी यदि । श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा । श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः । उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो नराः । इति काश्यपवचनात् । मूलेनागमनं देव्याः पूर्वाषाढासु पूजनं । उत्तरासु बलिं दद्याच्छ्रवणे चापराजितां । पूजयेति शेषः । इति पूर्वोदाहृतवचनाच्च । अत्रापराह्णादिकाले ज्योतिःशास्त्रप्रसिद्धदशम्यभावेपि साकल्यवचनापादिततत्सत्वमादायोत्तरदिने एवानुष्ठानं । पूज्यतिथेरेव साकल्यवचनापादितमपि सत्वमादाय कर्मकालव्याप्तिशास्त्रप्रवृत्तिरित्येव हेमाद्र्यादिसिद्धांत इति पूर्वमुक्तत्वात् । एतेन दिनद्वये अपराह्णव्याप्तौ पूर्वा । दिनद्वये प्रदोषव्याप्तौ परा । उभयत्रैकदेशस्पर्शेपि पूर्वैव । परदिनेपराह्णे श्रवणसत्वे परेति निर्णयसिंधुरुपेक्ष्यः । द्वितीयदिने एव श्रवणयुतायां दिनार्धपर्यंतदशम्यां पूर्वाग्रहणापत्तौ उदाहृतवचननिर्णयामृतमदनरत्नादिविरोधापत्तेः । अतएव परदिने एकादशमुहूर्ते दशम्यभावेपि श्रवणं चेत्तत्रैव यात्रा । पूजा तु पूर्वदिने एवेति मयूखोप्युपेक्ष्यः । एवमन्ये नवीनग्रंथाश्चेति । अत्र चंद्राद्यानुकूल्याभावेपि यात्रोक्ता ज्योतिर्निबंधे—आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु । सायंकाले शुभा यात्रा दिवा वा विजयक्षणे । एकादशो मुहूर्तो विजयः । ईषत्संध्यामतिक्रांतः किंचिदुद्भिन्नतारकः । विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः । इति । अथ । इषस्य दशमीं शुक्लां पूर्वाविद्धां न कारयेत् । श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने । सूर्योदये यदा राजन् दृश्यते दशमीतिथिः । आश्विने मासि शुक्ला तु विजयां तां विदुर्बुधाः । इति । इति विजयादशमी । इति पुरुषार्थचिंतामणौ दशमीनिर्णयः ।

अथैकादशी निर्णीयते । सा च द्विविधा शुद्धा विद्धा च । शुद्धापि द्विविधा असंपूर्णा संपूर्णा च । संपूर्णापि उदयमारभ्य त्रिंशन्मुहूर्तात्मकत्व—अरुणोदयमारभ्य द्वात्रिंशन्मुहूर्ता-

षष्टिर्नाडिकां । या तिथिः सा तु संपूर्णा कथिता पूर्वसूरिभिः ।
इति हेमाद्रौ नारदीयपुराणे प्रतिपादिता । द्वितीयापि—
उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता । संपूर्णैकादशी नाम
तत्रैवोपवसेद्गृही । आदित्योदयवेलायां प्राङ्मुहूर्तद्वयान्विता ।
एकादशी तु संपूर्णा विद्धान्या परिकीर्तिता । इति हेमाद्रौ
गारुडपुराणभविष्यपुराणवचनाभ्यां प्रतिपादिता । तेन
द्विविधैकादशी संपूर्णा—अहोरात्रव्यापिनी अरुणोदयादारभ्य
द्वितीयसूर्योदयपर्यंतमवस्थिता च । तत्रापि सर्वतिथिसाधारणः
पूर्वस्यां संपूर्णशब्दो मुख्यो न द्वितीयायां । अनेकार्थत्वापातात् ।
उदयात्प्राक् घटिकाचतुष्टयेपि विद्यमानायाः संपूर्णेत्यभिधानं च
अरुणोदयवेधनिराकरणार्थं । प्रतिपत्प्रभृतयः सर्वा उदयादोदया-
द्रवेः । संपूर्णा इति विख्याता हरिवासरवर्जिताः । इत्यपि चेति
हेमाद्रिसिद्धांतादपि पूर्वस्यामेव मुख्यत्वं प्रतीयते । सूर्योदये
दशमीयोगरहिता शुद्धा । उदयात्प्राचीनमुहूर्तद्वयव्यापित्वाभि-
धानं तु वैष्णवैस्तत्कालवर्तिदशमीयुक्ताया अपि त्याज्यत्वं ज्ञाप-
यितुं नतु प्रकृतेऽस्य कश्चिदुपयोग इति मदनरत्नादपि तथा ।
विद्धापि सूर्योदयोत्तरदशमीसद्भाव—अरुणोदयोत्तरदशमीसद्भा-
वरूपवेधद्वैविध्यात् द्विविधा । यस्तु—नागो द्वादशनाडीभि-
र्दिक्पंचदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिं ।
इति स्कंदपुराणे पंचदशनाडीवेध उक्तः स तु—सर्वप्रकार-
वेधोऽयमुपवासस्य दूषकः । सार्धसप्तमुहूर्तैस्तु वेधोयं बाधते
व्रतं । इति माधवीये निगमवचनेन एकभक्तादिव्रतविषय-
त्वेनैव व्यवस्थापितो नतूपवासविषयकः । योऽपि—अर्धरात्रात्परा
यत्र एकादश्यां तु लभ्यते । तत्रोपवासनं कर्तुं न चेच्छेद्दशमी-
कला । इति हेमाद्रौ स्मृतिवचने अर्धरात्रादूर्ध्वं दशमीकला-
रूपो वेधः प्रतीयते । सोऽपि—अर्धरात्रेऽपि केषांचिद्दशम्या वेध
इष्यते । अरुणोदयवेलायां नावकाशो विचारणे । कपालवेध
इत्याहुराचार्या ये हरिप्रियाः । न तन्मम मतं यस्मात्त्रियामा
रात्रिरिष्यते । तत्प्रातरेव वदनं दैविकं धर्मसाधनं । मुख्यमा-
हुरतस्त्यागस्तत्र वेधस्य निश्चितः । इति हेमाद्रौ ब्रह्मवैवर्त-
वचनेनैव कैमुतिकन्यायेनारुणोदयवेधपरत्वेनैव प्रतिपादितः,

---

१ 'सा तिथिः स्यात्तु'.

दशम्याः संगदोषेण अर्धरात्रात्परेण तु । वर्जयेच्चतुरो यामान्संकल्पार्चनयोस्तदा । इति हेमाद्रौ नारदवचनात्संकल्पाद्वावुपयुज्यते । वेधस्तत्र न त्रिमुहूर्तात्मकः । किंतु— सूर्योदयस्पृशा ह्येषा दशमी गर्हिता सदा । इति, दशम्याः प्रांतमादाय यदोदेति दिवाकरः । इति हेमाद्रौ स्मृतिवाक्याभ्यां सूर्योदयोत्तरकालस्पर्शमात्रस्यैव प्रतीतेः कलाधमात्रोपि । अरुणोदयकाले तु दशमी यदि दृश्यते । न तत्रैकादशी कार्या धर्मकामार्थनाशिनी । अरुणोदये तु दशमीगंधमात्रं भवेद्यदि । द्रष्टव्यं तत्प्रयत्नेन वर्जनीयं नराधिप । इति तत्रैव नारदीयभविष्यद्वाक्याभ्यां अरुणोदयेपि कलार्धमात्र एव । तत्रापि— अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः । सर्वेप्यवेधा विज्ञेया वेधः सूर्योदये मतः । इति हेमाद्रिमाधवादौ स्मृतिवचनात्सूर्योदयोत्तरकालस्पर्शिनी सूर्योदयस्पृशाशब्देनोक्तेति गम्यते । तस्मात्सूर्योदयोत्तरकालदशमीस्पर्श एव सर्वविषयो वेधः । दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । वैष्णवेन न कर्तव्यं तद्दिनैकादशीव्रतं । इति हेमाद्र्यादौ भविष्यपुराणवचनादरुणोदयवेधो वैष्णवविषय एव । उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी यदा । संदिग्धैकादशी नाम वर्ज्या स्याद्धर्मकांक्षिभिः । उदयात्प्राङ्मुहूर्तेन व्यापिन्येकादशी यदा । संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये । आदित्योदयवेलाया आरभ्य षष्टिनाडिका । संकीर्णैकादशी[1] नाम त्याज्या धर्मफलेप्सुभिः । पुत्रपौत्रप्रवृद्ध्यर्थं द्वादश्यामुपवासयेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणं । इति हेमाद्र्यादौ गारुडादिवचनैः घटिकात्रयवेधमुहूर्तवेधसूर्योदयकालवेधा उक्तास्ते काम्किोपवासविषयाः । ननु अरुणोदयकाले कलार्धमात्रवेधो वक्तुमशक्यः । अरुणोदयकालस्याव्यवस्थितत्वात् । तथा हि— चतस्रो घटिकाः प्रातररुणोदयनिश्चयः । अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयं । इति हेमाद्रिमाधवयोर्ब्रह्मवैवर्तवाक्याभ्यां निशिप्रांते तु यामार्धं देववादित्रवादने । सारस्वतानध्ययने चारुणोदय उच्यते । इति हेमाद्रौ स्मृतिवचनेन चारुणोदयस्यानेकत्वप्रतीतेः किं घटिकाचतुष्टये आद्यभागे कलार्धं, उत

---

१ 'संपूर्णैकादशी'.

भाग कलार्धमित्यत्र विनिगमकवाक्याभावात् । अरुणोदयशब्द-
स्यानेकार्थत्वापत्तिश्च । तस्मादरुणोदयस्याव्यवस्थितत्वात्—क-
लार्धेनापि विद्धा स्याद्दशम्यैकादशी यदि । तदाप्येकादशीं
हित्वा द्वादशीं समुपोषयेत् । इत्यादिवचनैः कुत्र कलार्धवेधो
बोधनीय इति निश्चेतुमशक्यमेवेति चेन्न । चतस्रो घटिकाः प्रात-
रुणोदय उच्यते । यतीनां स्नानकालोऽयं गंगांभःसदृशः स्मृतः ।
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यंतचतुष्टयं । नाडीनां तदुभे संध्ये
दिनस्याद्यंतसंज्ञिके । तदादिवेधरहितामुपोष्यामाहुः इति हेमाद्रौ
ब्रह्मवैवर्ते रात्रेः प्रथमयामार्धस्य दिनांतत्वेन अंत्ययामार्धस्य च दि-
नादित्वेन स्पष्टं तत्प्रतिपादनात् । द्वात्रिंशद्घटिकापरिमितरात्रिमाने
यामार्धचतुर्थांशवाचकत्वेन घटिकानाडीशब्दयोर्निश्चितत्वाद्यामा-
र्धन्यूनाधिकभावेऽपि तच्चतुर्थांशवाचकत्वमेव स्वीकर्तुमुचितं ।
अन्यथा द्वात्रिंशद्घटिकारात्र्यतिरिक्तकाले त्रियामां रजनीमित्या-
द्यसंगतमेव स्यात् । कपालवेध इत्याहुराचार्या ये हरिप्रियाः । न
तन्मम मतं यस्मात्त्रियामा रात्रिरिष्यते । इत्यपि । तस्मात्पंचदशमु-
हूर्तात्मकरात्रिचतुर्थांशपादो न मुहूर्तचतुष्टयात्मकयामस्यार्धं अर्ध-
पादन्यूनमुहूर्तद्वयात्मकयामार्धमेवारुणोदयः । तत्रैव कलार्धेना-
पीत्यादिवचनानि कलार्धमात्रदशमीसद्भावरूपं वेधं बोधयंतीति
न काचिदनुपपत्तिः । एवंच सति सप्तविंशतिघटिकारात्रिस-
मये सार्धघटिकात्रयान्न्यूनो रात्र्यष्टमो भागः । अष्टाविंशतिरात्रि-
मानविषया सार्धघटिकात्रयोक्तिः । महत्तररात्रिं विषयीकृत्य
चतस्रो घटिका इत्युक्तमिति निशि प्रांते तु यामार्धे इति व-
चनघटिताग्रिमप्रघट्टकांतरे हेमाद्र्युक्तिरपि चतस्रो घटिकेत्या-
दिब्रह्मवैवर्तमूलकत्वाद्युक्ततरैव । एवं सति किं भवता विनि-
गमकमध्यवसितं येन रात्र्यंत्ययामार्धवेधवाक्यमेवाद्रियते न मु-
हूर्तद्वयवाक्यमित्यादिदूषणपरद्वैतनिर्णयः, रात्र्यंत्याष्टमभागरूप-
स्यारुणोदयस्य कालभेदेन घटिकाचतुष्टयादिरूपत्वसंभवात् तद्वे-
धोपलक्षकत्वेनैकार्थत्वमेवोक्तं हेमाद्रिणा तद्वेधातिवेधमहा-
वेधयोगाख्यवेधानां भेदस्य स्पष्टं प्रतीतेरयुक्तमिति कालतत्त्व-
विवेचनं, एवं हेमाद्रिदूषणोत्प्रेक्षायुक्ता निर्णयसिंध्वादयो-
ऽप्ययुक्ताः हेमाद्र्युदाहृतब्रह्मवैवर्तदर्शनाभावमूलकत्वात् ।

माधवीयेपि नाडिकाघटिकाशब्दौ यामार्धचतुर्थांशवाचकावेवेति । तत्राप्यतिप्रामाणिकेन हेमाद्रिणा निर्दिष्टाकरतयापि लिखितेन निशि प्रांते तु यामार्धे इति वाक्येन सपाददंडचतुष्टयादिसत्वरूपा अपि वेधा उक्ताः, माधवेन संगृहीता इत्यादिमाधवदूषणपरद्वैतनिर्णयो निरस्तः । अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयं । इति । इदमपि वचनं । मुहूर्तं द्वादशीं न स्यात्त्रयोदश्यां यदा मुने । उपोष्या दशमी मिश्रा सदैवेकादशी तिथिः । इत्यादि हेमाद्र्युदाहृतविष्णुरहस्यादिवचनेषु । पारणाहे न लभ्येत द्वादशी कलयापि चेत् । इति वचनान्मुहूर्तादिग्रहणमविवक्षितं, किंतु द्वादशीसद्भावमात्रमेव विवक्षितमिति हेमाद्रौ सिद्धांतितं सर्वैरपि स्वीकृतं, तथा प्रकृतेऽपि अरुणोदयकाले दशमीसद्भाव एव वेधस्तन्न्यूनाधिकभावोऽविवक्षित इति समंजसमेव । माधवाचार्यैरपि अरुणोदयस्य प्रथमघटिकायां दशमीसद्भावो वेध इत्युक्तः । स च द्विविधः । घटिकाप्रारंभे कृत्स्नघटिकायां च दशमीवृत्तिभेदात् । तत्र प्रारंभे दशमीयुक्तैकादशी संपृक्तेत्युच्यते । कृत्स्नघटिकावर्तिदशमीयुक्तैकादशी संदिग्धेति । गारुडे—उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी यदा । संदिग्धैकादशी नाम वर्जयेद्धर्मवृद्धये । इति । यद्यपि पूर्वत्र वेधवाक्ये सार्धं तु घटिकात्रयमित्युक्तं, अत्र तु संदिग्धैकादशीवाक्ये त्रिघटिकेत्युक्तं तथापि नैतावता वैषम्येण विरोधः शंकनीयः । शास्त्रद्वयस्यापि दशमीवेधत्यागपरत्वादिति सिद्धांतितत्वाच्च । उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता । इति गारुडवाक्ये अत्र संपूर्णत्वमहोरात्रव्यापित्वं विवक्षितं । अन्यथा परतो द्वादशी न चेदित्यसंगतं स्यात् । अरुणोदयमारभ्य प्रवृत्ताया द्वितीयदिने एकघटिकासत्वं घटिकापंचकवृद्धावेव संभवति । अस्यां परमवृद्धौ समनंतरदिने षट्घटिकाक्षयस्य ज्योतिःशास्त्रविरुद्धत्वादिति हेमाद्रिमदनरत्नाभ्यां सिद्धांतितत्वान्मुहूर्तद्वयग्रहणमविवक्षितमेव । तस्मात्सर्ववचनसामंजस्यादर्धपादन्यूनमुहूर्तद्वयात्मकार्धयाम एवारुणोदयशब्दवाच्य इति सिद्धं । अतएव नानार्थत्वशंकापि व्युदस्ता । एवं सति मुहूर्तद्वयस्यारुणोदयत्वबोधकवचनाभावेपि तस्यारुणोदयत्वस्वीकारे—यो ह्युत्सूत्रं कथयेन्नादो गृह्येतेति महाभाष्यविरोधः स्पष्ट एव । एतेनार्धयामवाक्य-

स्यैव स्वल्पांतरत्वेन मुहूर्तद्वयोपलक्षणत्वौचित्यात् हेमाद्र्यु-क्तमयुक्तमिति कालतत्त्वविवेचनोक्तं दूषणमयुक्तं । हेमाद्र्यु-दाहृतब्रह्मवैवर्तार्थापर्यालोचनमूलत्वात् । अरुणोदये तु दशमी गंधमात्रं भवेद्यदि । द्रष्टव्यं तत्प्रयत्नेन वर्जनीयं नराधिप । इत्या-दिवचनविरोधाच्चेति बोद्धव्यम् । अपिच मुहूर्तद्वयाद्यपादार्धस्या-रुणोदयत्वाभावेन तत्र दशमीकलासद्भावमात्रेण द्वितीयदिने उपवासस्वीकारे शास्त्रार्थाननुष्ठानाशास्त्रार्थानुष्ठानापत्तिश्च । घटिकाचतुष्टयात्मक एवारुणोदय इति स्वीकारे तु चतुस्त्रिंशत् घटिकारात्रिसमये सपादघटिकाचतुष्टयात्मकार्धयामाद्यपाद-घटिकापर्यंतदशमीसद्भावयुक्तैकादश्यां विद्धत्वं न स्यात्, सपा-दघटिकात्रितयात्मकयामार्धसमये घटिकाचतुष्टयाद्यपादे घटि-काद्यपादत्रये दशमीसद्भवमात्रेणापि विद्धत्वं स्यात् । नचेष्टं तत् । त्रियामां रजनीमित्यादिवचनैर्विरोधापत्तेरिति दिक् । अयं चारुणोदयवेधः पूर्वोदाहृतभविष्यपुराणवाक्यात् । दश-मीशेषसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दि-नैकादशीव्रतं । इति हेमाद्रिमाधवयोः गारुडाच्च वैष्णव-विषय एव ॥ वैष्णवलक्षणं च । वैखानसाद्यागमोक्तदीक्षा-

वैष्णवलक्षणं । युक्तो हि वैष्णवः । इति मदनरत्नोदाहृतायां स्मृतौ । परमापदमापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजे-द्यस्तु यस्य दीक्षास्ति वैष्णवी । समात्मा सर्वजीवेषु निजाचा-रादविप्लुतः । विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते । न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हंति किंचिदुच्चैः सितमनसं तमवेहि विष्णुभक्तं । इति माधवोदाहृतस्कांदवाक्ययोर्विष्णुपुराणवाक्ये चाभिहितं । अत्र यथोक्तगुणसंपन्नो वैष्णवदीक्षां प्राप्तो वैष्णव इति माध-वादिभिरुक्तं । तथाप्यनेकवाक्येषूपादानात् विष्णुदीक्षा एव वैष्णवलक्षणं, अन्ये गुणाः सतिसंभवाभिप्राया इति बोध्यं । अत-एव वैष्णवदीक्षायुक्त एव वैष्णव इति मदनरत्नादयः संग-च्छंते । तस्मात् स्कांदादिवाक्योक्तगुणसंपन्ना वैष्णवागमोक्त-दीक्षायुक्ता वैष्णवास्तान् प्रति अरुणोदयोत्तरदशमीकलार्धेनापि युक्तैकादशी विद्धा अरुणोदयमारभ्य प्रवृत्ता शुद्धा । द्विविधापि द्विविधा । आधिक्येन युक्ता तद्रहिता च । आधिक्यं च त्रि-

विधं । एकादश्याधिक्यं द्वादश्याधिक्यमुभयाधिक्यं चेति । आधिक्यं न्यूनत्वं च समत्वं च उत्तरसूर्योदयावधिकमेव सर्वत्र । तत्रारुणोदयमारभ्य प्रवृत्ताया द्वितीयसूर्योदयोत्तरं कलादिकालावच्छेदेन विद्यमानत्वरूपमाधिक्यं किंचिदधिकचतुःषष्टिघटिकात्मकतिथिभोगे सत्येव संभवति नान्यथा । तत्र पूर्वतिथिभोगापेक्षया उत्तरतिथिभोगस्य सार्धघटिकापेक्षया न्यूनाधिकभावस्य ज्योतिःशास्त्रे अप्रसिद्धत्वात्किंचिदधिकचतुःषष्टिघटिकापरिमितायामेकादश्यां समनंतरद्वादश्याः सूर्योदयपर्यंतत्वरूपं समत्वमपि न संभवतीति शुद्धाधिकाधिकद्वादशिकैव । एवं शुद्धसमापि समद्वादशिकापि न संभवतीति साप्यधिकद्वादशिकैव । शुद्धहीना तु द्विविधा अधिकद्वादशिकानधिकद्वादशिका चेति । शुद्धा चतुर्विधा । तत्राद्या सर्वैरेव परोपोष्या । तदाह हेमाद्रिमाधवयोः भृगुः–संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि । इति । अत्र यदिशब्दो–यदि वेदाः प्रमाणं, स यदि सोमं विभक्षयिषेत् इत्यादाविव निश्चयपर एव । एकादश्याः परमवृद्धौ द्वादश्यनाधिक्यस्य पूर्वोक्तरीत्या बाधितत्वात् । तत्रैव नारदोपि–संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि । यत्तु कालतत्त्वविवेचने–अरुणोदयवेधः अवैष्णवविषयोपि इति प्रक्रम्य भृग्वादिवचनं वैष्णवेतरविषयमेव युक्तं । वैष्णवानां विद्धत्वमात्रेणैव परत्रान्यतरस्या अलाभेपि उत्तरत्रोपवाससत्वादित्युक्तं । तत्संपूर्णा चात्र न सूर्योदयद्वयमात्रव्यापिनी किंतूदयात्प्रागिति परिभाषितैवेत्युत्तरग्रंथे स्वयमेवोक्तत्वादरुणोदयमारभ्य प्रवृत्तायास्त्यागे विद्धत्वस्य कथं हेतुत्वमिति विचारणीयं । हेमाद्रौ वचनांतरमपि—एकादशी विष्णुना चेद्द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदं । विष्णुर्द्वादशी । सहार्थे तृतीया । द्वादशीयुक्तेत्यर्थः । एतादृशानि सर्वविषयाण्येव । शुद्धहीनानधिकद्वादशिकायामपि । उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि । एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः । इत्यादिहेमाद्र्याद्यौ गारुडसनत्कुमारादिवचनैः शुद्धैकादश्यामेवोपवासः सर्वेषां । शुद्धस-

रत्रैवोपवासः । तदाह हेमाद्रौ स्कंदः ।—एकादशी भवेत्पूर्णा परतो द्वादशी यदा । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । तत्रैव विष्णुरहस्ये—एकादशी तु संपूर्णा सदृशा चोत्तरा भवेत् । पूर्वा तु पूर्ववज्ज्ञेया तिथिवृद्धिः प्रशस्यते । उत्तरा द्वादशीसदृशा सशेषा त्रयोदश्यामपि स्यादित्यर्थः । पूर्वा एकादशी पूर्ववद्दशमीवद् नोपोष्येत्यर्थः । तत्रैव गरुडपुराणे—पूर्णा भवेद्यदा नंदा भद्रा चैव विवर्धते । तदोपोष्या तु भद्रा स्यात्तिथिवृद्धिः प्रशस्यते । तत्रैव भागवतादितंत्रे । संपूर्णैकादशी त्याज्या परतो द्वादशी यदि । उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणं । न गर्भे विशते जंतुरित्याह भगवान्हरिः । भविष्यत्पुराणेऽपि—उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् । निर्गतायां त्रयोदश्यां कला वा द्विकलापि वा । द्विकलायां तु द्वादश्यां पारणं यः करोति हि । तामुपोष्य महीपाल न गर्भे विशते नरः । एवमादि शुद्धद्वादश्युपवासविधायकानि[1] वैष्णवविषयाण्येव । विद्धायामपि एकादश्याधिक्यं द्वादश्याधिक्यं उभयाधिक्यं चेति त्रैविध्यं बोध्यं । तत्रोभयाधिक्ये सर्वेषां परत्रैवोपवासः । तदाह हेमाद्रौ स्कंदः—एका लुब्ध्या समायुक्ता याति वृद्धिं परा तिथिः । द्वादशी पारणार्था च नोपोष्यं पूर्ववासरे । एकादशी लेशमात्रेण द्वादश्या युक्ता परा । द्वादशी वृद्धिं याति तदा पूर्वनिषेधस्योत्तरविधानार्थत्वादुत्तरत्रोपवास इत्यर्थः । तत्रैव नारदोऽपि—द्वादश्येकादशी यत्र द्वादशी परतोऽपि च । द्वादश्यां पारणं कुर्यात्क्रतुकोटिफलं लभेत् । तत्रैव पाद्मे—एकादशीकलायुक्ता येन द्वादश्युपोषिता । किं तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप । एकादशी द्वादशी च तत्र सन्निहितो हरिः । उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति । स्कन्दरत्ने तत्त्वसागरसंहिता—द्वादश्येकादशी यत्र द्वादशी परतोऽपि हि । द्वादशीपारणं कृत्वा क्रतुकोटिफलं लभेत् । इत्येवमादिवचनानि सर्वसाधारणान्येव । एतावान् परं विशेषः । स्मार्तानां सूर्योदयोत्तरमेव दशमीयुक्ता विद्धाधिका ततः पूर्वं तद्युक्ता शुद्धाधिकैवेति । अनुष्ठानं तु समानमेव । द्वादशी-

---

१ 'विषयकाणि'.

मात्राधिक्येपि उदयात्पूर्वं वेधे वैष्णवानां उदयवेधे तु सर्वेषां परत्रैव। तदाह हेमाद्रौ नारदः—शुद्धा तु द्वादशी राजन् समुपोष्या सदा तिथिः। दशम्यैकादशी मिश्रा न कर्तव्या कदाचन। हेमाद्रिमाधवयोर्व्यासः—एकादशी यदा लुप्ता परतो द्वादशी भवेत्। उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदं। पूर्वत्र दशमीविद्धत्वात्परत्र वृद्ध्यभावाच्चोपोष्यत्वेन लुप्ता नतु स्वरूपेण। उदयोत्तरवेधे तु स्वरूपेणैव युक्ता। क्षयं गतेति यावत्। हेमाद्रौ ब्रह्मवैवर्ते—नंदा शरीरं देवस्य भद्रा ह्यात्मा ह्यजोऽव्ययः। तस्मात्सरोगं त्यक्त्वांगमात्मानं तूपवासयेत्। इति। स्मार्तानामसाधारणवचनं तत्प्रकरणे उदाहरिष्यते। एकादशीमात्राधिक्ये तु वैष्णवानां परत्रैवोपवासमाह हेमाद्रिमाधवयोर्विष्णुरहस्यं—एकादशीकलाप्राप्ता येन द्वादश्युपोषिता। तुल्या क्रतुशतेन स्यात्त्रयोदश्यां तु पारणं। तत्रैव स्मृत्यंतरं—एकादशी तु संपूर्णा परतः पुनरेव सा। पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणं। अरुणोदयविद्धायामप्युदयादुदयपर्यंतत्वरूपं सपूर्णत्वं तिष्ठत्येव। हेमाद्रौ बौधायनः—एकादशीकलायुक्तामुपोष्य द्वादशीं नरः। त्रयोदश्यां तु भुंजानो विष्णुसायुज्यमृच्छति। माधवीये नारदः—संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी। द्वादश्यां लंघनं कार्यं त्रयोदश्यां तु पारणं। इति। ननु विद्धाभेदकल्पेन तत्रतत्र वचनांतरोपन्यसनं वेधातिवेधमहावेधयोगाख्यवेधचतुष्टयकथनं च प्रकृते व्यर्थमेव। दशमीवेधसंयुक्तो यदि स्यादरुणोदयः। वैष्णवेन तु कर्तव्यं तद्दिनैकादशीव्रतं। इति वचनेनैव वैष्णवानां परत्रानुष्ठानसिद्धेः। अरुणोदयवेलायां या स्तोकापि तिथिर्भवेत्। पूर्णा इत्येव मंतव्या प्रभूता नोदयं विना। तत्र चेद्दशमीवेधोऽतिवेधो वापि जायते। महावेधोऽथ वा योगो रक्षसां स फलं भवेत्। इति हेमाद्रौ ब्रह्मवैवर्तवचनेन रक्षःफलभागित्वेन चतुर्विधवेधस्यापि साम्यत्वप्रतीतेर्वेधत्यागेनैव सर्वेषां त्यागसंभवात्॥ नच दशमीशेषसंयुक्ता न तु कुर्यात्कथंचन। जंभस्येयं पुरा दत्ता दशमीशेषसंयुता॥ अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीं नरः। दशमी

१ 'च्छरीरं त्यक्त्वा'. २ 'शेषसंयुक्तो'.

शेषसंयुक्तां प्रायश्चित्तमिदं भवेत् । तप्तकृच्छ्रं नरश्चीर्त्वा गां च दद्यात्सवत्सिकां । सुवर्णस्यार्धकं देयं तिलद्रोणसमन्वितं । इति प्रायश्चित्तं । यातुधानव्रतं योगे महावेधे तु बाष्कलः । जंभासुरस्यातिवेधे मोहिनी वेधलेशिनी । इति भेदचतुष्टयमुक्त्वा जंभासुरभागितया निंदितातिवेधे एव पूर्वोक्तं प्रायश्चित्तं । वेधांतरे तु प्रायश्चित्ताल्पत्वमहत्त्वस्य कल्पनीयत्वात् वेधभेदस्योपयोगः स्पष्ट एवेति वाच्यं । षष्ठे परकृतिः सुराकल्पमिति सूत्रे यद्कुर्वाण्णिमीपान्मे पचतेत्यत्र वार्ष्णिग्रहणस्येव जंभस्येयं पुरा दत्तेति निंदार्थवादगतजंभकग्रहणस्योपलक्षणत्वेन प्रायश्चित्ततारतम्यव्यवस्थापकत्वासंभवात् । किंच प्रायश्चित्तं प्रकर्तव्यं शुद्ध्यर्थं तु व्रतस्य वै । निश्छिद्रं जायते येन धर्मसंतानमेव च । ब्राह्मणान्भोजयेत्रिंशद्गां च दद्यात्सवत्सिकां । धरणस्यार्धकं देयं तिलद्रोणमथापि वा । इति हेमाद्रौ स्मृत्यंतरेपि साधारणस्यैव प्रतीतेः । नचाल्पत्वादिदं वेधे एव अतिवेधमहावेधादौ महत्त्वं कल्पनीयमिति वाच्यं । वैपरीत्यस्यापि सुवचनत्वात् । नच पुरुषदोषतारतम्यात्प्रायश्चित्ततारतम्यमिति शंक्यं । दोषतारतम्यबोधकस्यानुपलब्धेः । न चोच्चावचप्रायश्चित्तस्य श्रवणमेव तत्कल्पकं । उच्चावचप्रायश्चित्तश्रवणात्पुरुषदोषतारतम्यं दोषतारतम्याच्च प्रायश्चित्ततारतम्यमित्यन्योन्याश्रयापत्तेः । अपिच स एष यज्ञायुधो यजमानोऽञ्जसा स्वर्गं लोकं यातीत्यर्थवादे, एतानि वै दश यज्ञायुधानीति यज्ञायुधव्यपदेशस्योपयोगवत् जंभस्येयं पुरा दत्तेति निंदार्थवादे वेधातिवेधमहावेधयोगाख्यचातुर्विध्यप्रतिपादकस्मृतेरुपयोगसंभवेन तद्बलाद्दोषतारतम्यकल्पना युक्ता । तस्माद्विद्धाभेदादिकथनस्य प्रकृते कोप्युपयोगो नास्तीति चेन्न । भेदप्रदर्शनं विना पूर्वोक्तवचनानां व्यवस्थापयितुमशक्यत्वाद्भेदकथनमावश्यकं । अन्यथा दशमीविद्धां वैष्णवो न कुर्यादित्येतावत एव नैवोपोष्यं वैष्णवेनेति वचनात्प्रतीतेर्यदा वेधरहिता लभ्यते तदानीमेव कुर्यादिति संभाव्येत । ननु न कदाचिदतिक्रमेदिति वचनादेकादश्युपवासस्य नित्यत्वप्रतीतेरेतादृशी संभावना न युक्तेति चेत्, तथापि दशमीविद्धानिषेधस्यैव शब्दात्प्रतीतेः किमुत्तरत्रोपवासः कल्पनीयः । किंवा—उपोष्या दशमी तत्र

द्वादशी न लभेद्यदि । दशम्यापि हि मिश्रैव एकादश्येव धर्मकृत् । इत्यादि हेमाद्रौ स्मृत्यंतरवचनैर्दशमीविद्धायामेवोपवास इति संदेह एव स्यान्न तु निश्चयः । न चैतादृशानि वचनानि वैष्णवभिन्नविषयत्वेन संकोचनीयानीति न दोष इति वाच्यं । आर्थिकोपवासकल्पनया स्पष्टानेकवचनसंकोचस्यायुक्तत्वात् । तस्माद्विरुद्धवचनैर्विना वचनांतरसंकोचस्य कर्तुमशक्यत्वात्तेषामावश्यकत्वे तेषामेवोत्तरत्रोपवासविधायकत्वमुचितं । नैवोपोष्यं एतस्य तु वेधनिषेधकत्वमेव युक्तम् । एवंच सत्येकैकार्थविधानेनानेकशास्त्रोपपत्तौ नैकमस्तके वहुभार आरोपणीयः । तस्मादुत्तरत्रोपवासविधानार्थं वचनोपन्यासो युक्ततर एव । वेधभेदेपि—अरुणोदये तु दशमी गंधमात्रं भवेद्यदि । द्रष्टव्यं तत्प्रयत्नेन वर्जनीयं नराधिप । इति वचनेन दशमीसद्भावस्य प्रयत्नेन द्रष्टव्यत्वप्रतिपादनाद्गंधमात्रस्य द्रष्टुमशक्यत्वेन तत्र पुरुषापराधः स्वल्पः । उत्तरोत्तरं दर्शनस्य सुकरत्वात् । तदनादरेण निषिद्धकाले कर्मानुष्ठाने कर्मवैगुण्यवत्पुरुषदोषस्यापि वहुषु वाक्येषु श्रवणात् पुरुषदोषतारतम्यं तत्तारम्यात्प्रायश्चित्ततारतम्यमपि युक्तमेवेति सर्वं समंजसमेव । माधवाचार्यैरपि वैष्णवं प्रति तिथिरेवं निर्णेतव्या ।

एकादशी द्विविधा अरुणोदयवेधवती शुद्धा चेति । तत्र वेधवती सर्वथा त्याज्या,तद्दिनैकादशीव्रतमिति सामान्येन प्रतिषेधात्, विशेषतस्तु संपृक्तादिभेदेन प्रतिषेधो द्रष्टव्य इत्यभिधाय संपृक्तादिभेदानुक्त्वोक्तं—तदेवं सामान्यविशेषाभ्यां प्रतिषिद्धत्वादरुणोदयविद्धैकादशी वैष्णवेन त्याज्या । यस्तु योगसंज्ञकश्चतुर्थो वेधस्तस्य त्याज्यत्वमर्थात्सिद्धमित्यादिना विद्धानिषेधं प्रदर्श्य शुद्धां लक्षयितुमुक्तं—या तु चतुर्विधवेधरहिता शुद्धैकादशी सा द्विविधा । आधिक्येन युक्ता तद्रहिता चेति । यद्यपि वेधरहितत्वमेव लक्षणं तथापि शिष्यवुद्धिवैशद्यार्थमुक्तिवैचित्र्यार्थं चातुर्विध्योपादानं । तत्र या तु चतुर्विधवेधरहिता सा शुद्धेत्यन्वयः। अनेन शुद्धालक्षणं कृत्वा भेदांतरं दर्शयितुमेकादशी द्विविधेति पूर्वोक्ता विद्धा, इयं शुद्धा चेति द्विविधैकादशीत्यर्थः । द्वैविध्यं दर्शयितुं आधिक्येन युक्ता तद्रहिता चेतीति । आधिक्यस्यापि भेदं दर्शयितुमुक्तं। आधिक्यं च त्रिविधं। एकादश्याधिक्यं द्वाद-

यदि शुद्धायामपि विवक्षितं स्यात्तर्हि स्मार्तप्रकरणे शुद्धायां चत्वारो भेदा इति यथोक्तं तथात्राप्युक्तं स्यात्। तदनुक्तेः पूर्वोक्त-रीत्या अरुणोदयमारभ्य प्रवृत्तैकादशीमात्राधिक्यस्य बाधितत्वात् द्वादश्याधिक्यं उभयाधिक्यं चेति द्विविधमेवाधिक्यं। आधिक्यस्य प्रयोजनमुक्तं—त्रिष्वप्येतेषु पक्षेषु अरुणोदयमारभ्य प्रवृत्तां शुद्धामप्येकादशीं परित्यज्य परेद्युरुपवासः कर्तव्य इति। विद्धाविषयेषु त्रिषु पक्षेषु शुद्धामपीत्यपिशब्दसमुच्चितां विद्धां त्रिष्वपीत्यपिशब्दसमुच्चिते शुद्धाविषयपक्षद्वये अरुणोदयमारभ्य प्रवृत्तां शुद्धामेकादशीं परित्यज्य परेद्युरुपवासः कर्तव्य इत्यर्थः। यद्यत्रापि शुद्धैकादशीमात्राधिक्यं विवक्षितं स्यात्तर्हि स्मार्तप्रकरणे शुद्धायामेकादश्याधिक्ये इति यथोक्तं तथात्राप्युक्तं स्यात्तदनुक्तेस्तस्य बाधितत्वाच्च विद्धामेवाभिप्रेत्योक्तं। तत्रैकादश्याधिक्ये नारदप्रोक्तसंपूर्णैकादशी इत्यादिवैष्णवानां वेधमात्रेणैवोत्तरसिद्धत्वाद्वचनवैयर्थ्यशंका तु पूर्वमेव निराकृता। तत्रापि विद्धाविषयद्वादशीमात्राधिक्यस्य वैष्णवस्मार्तसाधारणत्वाद्वैष्णवासाधारणे एकादशीमात्राधिक्ये प्रथमतः प्रमाणवचनान्युपन्यस्य विद्धाविषयद्वादश्याधिक्ये तदुपन्यासार्थमुक्तं—द्वादश्याधिक्ये व्यास आह—एकादशी यदा लुप्तेति। शुद्धाविषयद्वादशीमात्राधिक्ये एवेदं प्रमाणमस्त्विति शंका तु लुप्तेतिपदार्थाज्ञाननिबंधनत्वात्। माधवाचार्यैरेव स्मार्तानां विद्धायां द्वादशीमात्राधिक्ये प्रमाणत्वेनोपन्यस्यमानव्यासवचनस्य वैष्णवानां शुद्धायां द्वादशीमात्राधिक्ये प्रमाणत्वेनोपन्यासस्यात्यंतासंगतेरेव निरस्ता। तस्मात् विद्धायां द्वादशीमात्राधिक्यस्य वैष्णवस्मार्तसाधारणत्वादेकस्यैव प्रमाणवचनस्य उभयत्राप्युपन्यासो युक्त इति कृतः। विद्धात्वपरं वैष्णवस्मार्तभेदेन भिन्नं। एतेन यत्तु शुद्धायां द्वादशीमात्राधिक्ये वैष्णवानामप्येतस्माद्वचनात्परेद्युरुपवास इति माधवस्तन्नेति मयूखे दूषणमुक्तं तत् शुद्धायामितिपदघटितान्माधवात्पराहृत्तं शुद्धायामिति पदघटितमयूखाद्वावेवावस्थितं। एवंच यो दूषणसमर्थनाय व्रतार्के परिक्लेशः सोपि दूषणपृष्ठानुयायित्वात्तत्रै-

वावतिष्ठते इति बोध्यं । उभयाधिक्यस्य वैष्णवस्मार्तविद्धाशुद्धासाधारणत्वात्पश्चात्प्रमाणमुपन्यस्तमुभयाधिक्ये भृगुराहेत्यादिना । अतएवोभयाधिक्यवत्यां द्विविधायां यथा न कस्यापि संदेहस्तथा तद्रहितायां तस्यां तत्प्रसक्तिमाशंक्योक्तं । उभयाधिक्यरहितायां तु शुद्धायां न कोपि संदेह इति तुर्भिन्नक्रमः शुद्धायामित्यस्याग्रे बोध्यः । उभयाधिक्यरहितायां शुद्धायां त्वित्यर्थः । उभयाधिक्यरहितायां स्मार्तानां पूर्वा वैष्णवानामुत्तरेति व्यवस्थितविकल्परूपसंदेहस्य सत्वादुक्तं शुद्धायां त्विति न कोपि संदेहोस्तीति च इति योजनया यथाश्रुतग्रंथदर्शनप्रसक्तबाधितार्थकत्वरूपक्लेशसागरं प्रतीर्णो माधवग्रंथः सुस्थ एव । अर्थानुसारेण ग्रंथयोजनस्यैवोचितत्वात् । ग्रंथानुसारेणार्थकल्पनायां तु नहि शब्दकृतेन नामार्थेन भवितव्यं अर्थकृतेन नामशब्देन भवितव्यमित्यादिमहाभाष्यविरोधः स्पष्ट एवेति । एवं सति यथाश्रुतमाधवग्रंथमात्रदर्शनप्रवृत्ताः शुद्धायामेकादशीमात्राधिक्य इत्याद्यानुपूर्वीघटिताः कालतत्त्वविवेचनस्मृतिकौस्तुभमयूखादिनवीनग्रंथाः सवैय्प्ययुक्ता इति विभाव्यतां सदसद्व्यक्तिहेतुभिः सूरिभिः ॥

**अथोन्मीलिन्याद्यष्टभेदाः** । तत्र हेमाद्रौ ब्रह्मवैवर्ते—एकादशीव्रतं सर्वव्रतानां प्रवरं स्मृतं । विशोधनमिदं पुंसां शुष्कार्द्रस्यांहसः[1] परं । तत्स्वरूपं श्रुतं तीर्थस्नानादप्यधिकं विदुः । एतत्सारमिदं तत्त्वमिदं सत्यमिदं व्रतं । प्रायश्चित्तमिदं सम्यक् यदेकादश्युपोषणं । विशेषस्तत्र विज्ञेयो द्वादशीषु द्विजोत्तम । भवंत्यष्टौ परिख्यातास्ताः शृणुष्व यथोदिताः । उन्मीलिनी वंजुली च त्रिस्पृशा पक्षवर्धिनी । जया च विजया चैव जयंती पापनाशिनी । द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज । तिथियोगेन जायंते चतस्रश्चापरास्तथा । नक्षत्रयोगात्प्रबलं पापं प्रशमयंति ताः । एकादशी तु संपूर्णा वर्धते पुनरेव सा । उन्मीलिनी भृगुश्रेष्ठ कथिता पापनाशिनी । द्वादश्यामुपवासस्तु द्वादश्यामेव पारणं । वंजुलीनाम सा प्रोक्ता हत्यायुतविनाशिनी । अरुणोदय आद्या स्यात् द्वादशी सकलं दिनं । अंते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया । कुहूराके यदा वृद्धिं प्रयाते

---

१ 'शुष्कैधस्यांहसः'.

पक्षवर्धिनी । विहायैकादशीं तत्र द्वादशीं समुपोषयेत् । पुष्य-श्रवणपुष्याद्यै रोहिणीसंयुतास्तथा । उपोषिताः समफला द्वादश्योष्टौ पृथक् पृथक् । ब्रह्मघ्नमपि सा पूर्वा विशोधयति भार्गव । वंजुलीति द्वितीया सा हत्यायुतविनाशिनी । महापापानि चत्वारि शोषयेत्रिस्पृशा कृता । कुरुतेऽशेषकलुषविच्छेदं पक्षवर्धिनी । जया जयं तु विजया प्रेतमोक्षं तथा परा । जयंती नरकच्छेदमपि दुष्कृतकारिणां । अष्टमी तु भृगुश्रेष्ठ महापातकनाशिनी । इत्यष्टौ उन्मीलिन्यादयः । तदित्थं । वैष्णवैररुणोदयादिवेधे एकादशीमात्राधिक्ये द्वादशीमात्राधिक्येऽनुभयाधिक्ये वा पूर्वां त्यक्त्वा द्वितीयैव कार्येति सिद्धं । अत्र केचन शैवादयोपि गतानुगतिकन्यायेन वैष्णववद्द्वितीयामेव कुर्वंति । तत्र–वैष्णवो वाथ शैवो वा सौरोप्येतत्समाचरेत् । इति सौरपुराणादिभिः शैवादीनामप्यधिकारबोधनात्तेषां वक्ष्यमाणवाक्यैः प्रथमाया एव विधानात् । द्वितीयदिने उपवासे कृतेपि विहितत्यागाविहितानुष्ठानजन्यप्रत्यवायः । एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् । इति प्रायश्चित्तापत्तिश्च दुर्वारैवेति बोध्यं । इति वैष्णवान्प्रत्येकादशीं निर्णीय तदितरान् स्मार्तशब्दव्यवहार्यान् प्रत्येकादशी निर्णीयते । तत्र सूर्योदयपर्यंतदशमीवेधस्य वैष्णवकाम्यव्रतविषयत्वेन व्यवस्थापितत्वात् । सर्वेप्यवेधा विज्ञेया वेधः सूर्योदये स्मृतः । सूर्योदयस्पृशा ज्ञेया दशमी गर्हिता सदा । इत्यादिवचनबोधितो वेधः परिशेषात्स्मार्तविषयः । तत्र सूर्योदयोत्तरं दशमीसद्भावरहिता शुद्धा दशमीयुक्ता विद्धा । तत्रापि समन्यूनाधिकभेदेन शुद्धा त्रिविधा । एवं विद्धापि । तत्र द्वितीयसूर्योदयपर्यंता समा । ततः पूर्वमेव समाप्ता न्यूना । तत ऊर्ध्वं विद्यमानाधिका । तत्र शुद्धसमासमद्वादशिका, न्यूनद्वादशिका, अधिकद्वादशिकेति त्रिविधा । एवं शुद्धसमा, शुद्धन्यूना, शुद्धाधिकापि प्रत्येकं त्रिविधेति शुद्धा नवविधा । विद्धसमापि समद्वादशिका, न्यूनद्वादशिका, अधिकद्वादशिकेति त्रिविधा । एवं विद्धसमा, विद्धन्यूना, विद्धाधिका च

यद्यपि निर्णये सर्वेषां भेदानामसांकर्येणोपयोगो नास्ति तथापि—शुद्धा यदा समा हीना समक्षीणाधिकोत्तरा -इत्यादिवचनेषु व्यवहृतत्वादुपन्यस्ताः। तत्र शुद्धसमाशुद्धन्यूनयोः समद्वादशिकयोर्न्यूनद्वादशिकयोश्च एकादश्यामेवोपवास इति संदेह एव नास्ति। अधिकद्वादशिकयोरपि एकादश्यामेवोपवासः। उत्पत्तिशिष्टैकादश्यविरुद्धे उपवासे द्वादशीसमवायासंभवात्। अतएव हेमाद्रौ द्वादश्युपवासप्रकरणे द्वादश्यामुपवासः कार्य इति वदंतं मार्कंडेयं प्रति प्रद्युम्नवचनम्। उपोष्या व्याहृता ब्रह्मंस्त्वया ह्येकादशी शुभा। द्वादश्यां पारणं कार्यमेकादश्यां हि लंघनं। पुराणविहिते मार्गे विरुद्धं वदसे कथं। इति संगच्छते। हेमाद्रिणापि केचिदाहुरित्यादिना प्रकृते विषये एकादश्यामेवोपवास इति सिद्धांतयित्वा। एकादशी त्वहोरात्रं द्वादशी च कलाधिका। त्रयोदश्यां यदा प्रातरुपोष्या द्वादशी तदा। इति वचनविरोधमाशंक्य तद्दशमीविद्धैकादशीविषयं द्वादश्यां विद्यमानकियन्मात्रैकादशीविषयं चेति समाहितं। अहोरात्रव्यापिन्यप्येकादशी येषां दशमीविद्धैकादशी तद्विषयं। वैष्णवविषयमिति यावत्। स्मार्तान्प्रति तु प्रकृते यदा द्वादश्यां किंचिदेकादशी विद्यते तदैव प्रवर्तते न प्रकृतेपीति तदाशयः। तथाच स्मार्तानामेकादश्यामेवोपवासो वैष्णवानां द्वादश्यामिति सिद्धांतः पर्यवसन्नः। नच केचिदिति वदतो हेमाद्रेर्नायं सिद्धांत इति शंक्यं। एतान्यरुणोदयवेधनिषेधकवचनान्यपि यदा द्वादश्यां कियन्मात्राप्येकादशी दृश्यते त्रयोदश्यां च कियन्मात्रा द्वादशी तदा परित्याज्येत्येवंपराणि द्रष्टव्यानि। काम्यैकादशव्रतविषयाणि वा वैष्णवविषयाणि वा। शैवानां तु तत्रोपवासे नास्ति दोष इति हेमाद्रिणैवाग्रे निष्कृष्यमाणत्वात्। अतएव—एकादशी भवेत्पूर्णा परतो द्वादशी यदा। तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। इत्यादिस्कांदादिवचनानां प्रकृते विरोधमाशंक्य वैष्णवविषयाण्येवैतानीति माधवः, द्वादश्यां विद्यमानकियन्मात्रैकादशीविषयाणीति मदनरत्नश्च संगच्छते। प्रकृते तद्विषयत्वाभावे उभयोस्तात्पर्यात्। कालादर्शनिर्णयामृतमाधवमदनरत्नेषु स्कांदमपि—शुद्धा यदा समा हीना

१ 'तादृशानीति'

समक्षीणाधिकोत्तरा । एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि । इति । वैष्णवीं द्वादशीमित्यर्थः । **माधवमदनरत्नयोर्नारदः**—न चेदेकादशी विष्णौ द्वादशी परतः स्थिता । उपोष्यैकादशी तत्र यदीच्छेत्परमं पदं । इति । नचैवमपि—विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् । अविद्धापि तदा विद्धा परतो द्वादशी यदि । इति पाद्मविरोध इति वाच्यं । तत्र पूर्वार्धे दशमीशेषसंयुक्त इत्यादिवचनविरोधात्स्मार्तविषयमेव । उत्तरार्धे तु शुद्धा यदा समा हीनेत्यादिविरोधात् वैष्णवविषयमेव । उत्तरार्धं शुद्धाधिकाविषयमिति **मदनरत्नादयः** । वस्तुतस्तु विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् । द्वादश द्वादशीर्हंति त्रयोदश्यां तु पारणं । इति विद्धैव ग्राह्येति पूर्ववाक्येनोक्तं । तत्र विद्धानिषेधविरोधाशंकायां परत्र द्वादश्यभावे सैव ग्राह्येत्यर्थकेत्र पूर्वार्धेन तां दूरीकृत्य परत्र द्वादशी चेदविद्धापि न ग्राह्या किमुत विद्धैवेति कैमुतिकन्यायेन विद्धानिषेध एव दृढीक्रियते उत्तरार्धेनेत्येव युक्तं अप्रकृतार्थकल्पने प्रमाणाभावात् । अतएव प्रकृते परत्र द्वादशीसत्वेऽपि पूर्वा ग्राह्येति **हेमाद्रिप्रभृतिसिद्धांतः** संगच्छते । इदं वाक्यमनुपन्यस्यतां **माधवादीनां** च न न्यूनता । तथाच प्रकृते तद्विषयत्वस्यैवाभावात् । एतेनैकस्य वाक्यस्योभयविषयत्वासंभवात्सर्वेषामेव प्रकृते द्वादश्यामुपवास इति **स्मृतिकौस्तुभः** पाद्मप्रकरणाज्ञानमूलकः[1] स्कांदादिवाक्यविरुद्ध एवेति बोध्यं । यदा प्रकृते अरुणोदयमारभ्यैकादशी प्रवृत्ता तदापि वैष्णवानां द्वादश्यामेवोपवास इति प्रतिपादनार्थं **हेमाद्रिणा** मतांतरमुपन्यस्तं ।

परे त्वाहुः—परतो द्वादशीसद्भावे शुद्धद्वादश्यामेवोपवासो नैकादश्यां । एका तिथ्या तु संयुक्ता यदि वृद्धा परा भवेत् । अथवैकादशी नास्ति दशम्या वाथ संयुता । कलाथ काष्ठा द्वादश्यां यदि स्यादपरेऽहनि । द्वादश द्वादशीर्हंति पूर्वस्मिन्पारणे कृते । इति **विष्णुपुराणं** । एकादशी भवेत्पूर्णेत्यादीनि भागवततंत्रांतानि वैष्णवप्रकरणोदाहृतानि वचनान्युपन्यस्य तस्मादेवंविधे विषये द्वादश्यामेवोपवासः सिद्ध इत्युपसंहृत्य अपरे तु उदयात्प्राग्यदेति वाक्याद्गृहिणां पूर्वा एकादशी भवेत्पूर्णेत्यादि

1 'प्रकरणविरोधाज्ञान'.

स्कांदादिभिर्मुमुक्षूणां परा। एतद्भिन्नानामपि—बहुवाक्यविरोधेन संदेहो जायते यदा। द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणं। इत्यादिना तृतीयमतमुपन्यस्य बहुवाक्येतिवाक्यं, विवादेषु तु सर्वेषु द्वादश्यां समुपोषणमिति प्रद्युम्नवाक्यं च उक्तवेधविषयत्वेन व्याख्येयमित्यादिना तृतीयं मतं प्रदूष्य तस्माद्यथोक्तमेव साधीय इत्यनेन मतद्वयमेव व्यवस्थापितं। स्मृत्यर्थसारकालादर्शमाधवनिर्णयामृतमदनरत्नैरपीत्थमेव सिद्धांतितं। एवं सर्वेषामेकमत्ये सति—शुद्धोनाभ्यधिका समा भवतु वा विद्धा तथैकादशी चेद्द्वादश्यधिका तदोपवसने ग्राह्याखिलैर्द्वादशी। इति दीपिका प्रकृतविषये किंमूलिकेति चिंतनीयं। अतएव शुद्धोनाभ्यधिकसमासु द्वादश्याधिक्ये सर्वैर्द्वादश्येवोपोष्येति भट्टोजिदीक्षितोक्तिरप्युपेक्ष्यैव। यत्तु हेमाद्रिणा प्रकृतविषये एकादश्यामुपवासविधानं उदयात्प्राग्यदेति वाक्याद्वृद्धिविषयं, शुद्धद्वादश्यामुपवासविधानं संपूर्णैकादशी यत्रेति वाक्याद्यतिविषयमिति स्वसंमतं व्यवस्थांतरमुक्तं तदुभयाधिक्यविषयत्वेन वैष्णवविषयत्वेन वा व्याख्येयमिति कालतत्त्वविवेचनं, प्रद्युम्नवचनादेव हेमाद्रिणा सिद्धांतः कृतः सोऽनुचित इति निर्णयसिंधुः, प्रद्युम्नवचनाद्धेमाद्रिकृतः सिद्धांत एवोचित इति स्मृतिकौस्तुभश्च उपेक्ष्यः। हेमाद्र्यर्थाज्ञाननिबंधनत्वात्। एतेन हेमाद्रिणा शुद्धसमा शुद्धन्यूना वाधिकद्वादशी चेत्सर्वेषां परैवेति निर्णयसिंधूक्तिर्हेमाद्रिसिद्धांतापर्यालोचनमूलिकैवेति बोद्धव्यं। यदपि स्मृतिकौस्तुभे सर्वैः स्मार्तैः प्रकृतविषये द्वादश्यामेवोपोषणं कार्यमित्यभिप्रायेण हेमाद्रिणा द्वितीयमतमुपन्यस्तमिति निश्चित्य तत्र माधवविरोधमाशंक्य न चानेकवाक्यानां माधवोदाहृतवचनद्वयेन संकोचो युक्तस्तस्मान्माधवोदाहृते न चेदेकादशी विष्णाविति वाक्ये यदीच्छेत्परमं पदमितींद्रादिपदकामाभिप्रायमेव प्रतीयते इत्यादिना दूषणमुद्भाव्य गृहियतिव्यवस्थेति हेमाद्रिणा दूषितं तृतीयमतमेव सिद्धांतितं तत्र संवादार्थं संगच्छते च। एवं पृथ्वीचंद्रोदये बृहन्नारदीयवाक्यं—संपूर्णैकादशी शुद्धा द्वादश्यां नैव किंचन। द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्। पूर्वा गृहस्थैः कार्या स्यादुत्तरा यति-

भिस्तथा। इति। ये तु हेमाद्रिसंमतार्थकमप्येतद्वाक्यं हेमाद्य-लिखनान्निर्मूलं, हेमाद्यलिखितत्वे तुल्येऽपि शुद्धा यदेति माधवलिखितं वाक्यद्वयं समूलमिति वदंति नमस्तेभ्यो निष्फलाग्रहशीलेभ्य इत्युक्तं। तत्र सिद्धांतस्तृतीयमतदूषणपरहेमाद्रिसिद्धांतविरुद्धस्मृत्यर्थसारकालादर्शनिर्णयामृतमदनरत्नादिसकलग्रंथैः शुद्धा यदेत्यादिवचनैश्च विरुद्ध एव। यदपि परमपदशब्दादिंद्रादिपदमेव प्रतीयत इत्युक्तं तदप्यभियुक्तानां तथा प्रतीतावेव संगच्छते नान्यथेति माधवदूषणाभिनिवेशप्रयुक्तमेव। तस्मात्प्रकृते स्मार्तान्प्रति चंद्रोदयलिखितवचनविरुद्धं प्रथममतमेव सिद्धांतयता हेमाद्रिणा स्मृत्यर्थसारादिभिश्च माधवोदाहृतवचनद्वयार्थस्यैव सिद्धांतितत्वात् हेमाद्यलिखितत्वे तुल्येपि चंद्रोदयलिखितं निर्मूलं माधवलिखितं समूलमिति वदतां निर्गतफलाग्रहशीलानां नमस्कार एव युक्त इति बोध्यं। नच बृहन्नारदीयवाक्यस्योपलंभान्निर्मूलत्वकथनमयुक्तमिति चेत् स्मार्तान्प्रत्यप्रवर्तकमिति तदाशयात्। अतएव—उपोष्यैव द्वितीयेति केचिदाहुश्च भक्तितः। इति बृहन्नारदीयवाक्यशेषश्च संगच्छते इति दिक्।

या तु शुद्धाधिका समद्वादशिका न्यूनद्वादशिका वा तत्र व्यवस्थामाह हेमाद्रौ कूर्मपुराणं—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही। गृह्यत्र स्मार्तः न तु वैष्णवः। पूर्वोक्तवचनविरोधात्। गृह्यत्र वैष्णव इति मयूखोक्तिस्तु शुद्धाधिकायां वैष्णवस्य पूर्वत्रोपवासासंभवादसंगतैव। हेमाद्रौ स्कांदे तु—प्रथमेह्नि तु संपूर्णा व्याप्याहोरात्रमास्थिता। द्वादश्यां च तथा तात दृश्यते पुनरेव च। घटिका च प्रदृश्येत द्वादश्यां शिखिवाहन। पूर्वा कार्या गृहस्थैस्तु यतिभिश्च तथा विभो। द्वादशीसंयुता कार्या सदा वै मोक्षकांक्षिभिः। इति। यतीनामपि मुक्तीच्छायामुत्तरा अन्यथा तु पूर्वैवेति व्यवस्थामाह। माधवे तु—पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो। इत्येव पाठः। हेमाद्रौ गारुडं—उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता। संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही। पुनः प्रभातसमये घटिकैका यदा भवेत्।

अत्रोपवासो विहितश्चतुर्थाश्रमवासिनां । विधवायाश्च तत्रैव परतो द्वादशी न चेत् । चशब्देन वनस्थस्य संग्रहः । अत्र गृहस्थयतिशब्दौ यथाश्रुतार्थावेवेति स्मृत्यर्थसारहेमाद्रिमाधवनिर्णयामृताः । यत्तु-संपूर्णैकादशी यत्र परत्र पुनरेव सा । पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत् । इति मार्कंडेयवचाद्गृहस्थयतिपदे सकामनिष्कामपरे । अन्यथा—निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा । प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम । इति स्कांदवचनान्निष्कामस्य गृहस्थस्योत्तरत्रोपवासविधानं विरुध्येतेति हेमाद्रौ मतांतरं । मदनरत्ने कालतत्त्वविवेचने च तदेव पुरस्कृतं तत् उपोष्ये द्वे तिथी इति वाक्ये तस्मिंस्त्रयोदशे त्वह्नि यदा द्वादशी नास्ति तदा पूर्वोक्तगृहस्थाश्रमिचतुर्थाश्रम्यधिकारिभेदेन द्वे तिथी उपोष्ये नत्वेकेनेत्यर्थ इति सिद्धांतयतो हेमाद्रेर्मार्कंडेयादिवाक्यद्वयमनुपन्यस्यतो माधवस्य गृहियत्योर्व्यवस्थेति सिद्धांतयतोः स्मृत्यर्थसारनिर्णयामृतयोश्चानभिमतमेव । किंच निष्कामस्त्विति स्कंदवाक्येन कामसामान्याभावो विशेषणं । तद्वतं प्रति वचनशतेनापि प्रवर्तयितुमशक्यत्वात् । शुद्धाप्येकादशी यत्र तया विद्धा तु द्वादशी । स्वर्गदोपोषिता पूर्वा द्वितीया स्वर्गमोक्षदा । इति हेमाद्रौ ब्रह्मपुराणवचने द्वितीयस्या अपि फलश्रवणाद्वस्तुमहिम्नोन्यथयितुमशक्यत्वाच्च । राज्यादिकामाभाव एव विशेषणत्वेन विवक्षितः सोपि न स्मार्तगृहस्थं विशिनष्टि । तत्र्यहस्पृगहोरात्रं नोपोष्यं तत्सुतार्थिभिः । उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः । एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । द्वादश द्वादशीर्हंति त्रयोदश्यां तु पारणं । इत्यादिवचनैस्तस्योपवासनिषेधात् । नोपवासो गृहाश्रम इति गृहस्थमात्रस्य उपवासनिषेधदर्शनादिति हेमाद्रिसिद्धांतात्, पुत्ररहितस्यापि निषेधनिश्चयात् द्वादशीदिनक्षये उपोषणं वैष्णवविषयं यतिविषयं वा द्रष्टव्यं । गृहस्थे तु तन्निषिद्धमिति माधवसिद्धांतात् गृहस्थशब्दस्य वैष्णवभिन्नगृहस्थपरत्वनिश्चयाच्च । तस्मात्—एकादशी कलाप्येका द्वादशी यत्र लुप्यते । तत्रोपवासं कुर्वीत निष्कामो विष्णुतत्परः । इति हेमाद्र्युदाहृतवचनांतरेण समानार्थत्वात् । सपुत्रश्च सभार्यश्च स्वज-

नैर्भक्तिसंयुतः। एकादश्यामुवसेत्पक्षयोरुभयोरपि। इति। संसार-सागरोत्तारमिच्छन्विष्णुपरायणः। ऐश्वर्यं संततिं स्वर्गं मुक्तिं वा यद्यदिच्छति। एकादश्यामुपवसेत्पक्षयोरुभयोरपीत्यादि-वचनैर्वैष्णवानां दिनक्षयेप्युपवासविधानात् निष्कामस्त्विति वचनं वैष्णवविषयमेव। तथाच तस्य स्मार्तविषयवचने गृहस्थ-यतिशब्दयोः सकामनिष्कामपरत्वसाधकत्वं खपुष्पायमाणमेवेति विभाव्यतां सूरिभिः। तस्मात्सकामनिष्कामशब्दावेव गृहस्थ-यतिपराविति बोद्धव्यं। अतएव—आदित्योदयवेलायामारभ्य षष्टिनाडिका। संपूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः। इत्या-दिवचनानि काम्यैकादशीविषयाण्येव वैष्णवविषयाणि वेत्यग्रे हेमाद्रिसिद्धांतः। एतेन—द्वादश्यस्ति समालिपकोत परतः शुद्धाधिकैकादशी काम्याद्यां समुपावसेत्परदिने वांच्छाविहीन-स्तदा। विष्णुप्रीणनकृद्द्वयोरुपवसेत्। इति दीपिका हेमाद्र्युप-न्यस्तमतांतरमूलिका हेमाद्र्यादिसिद्धांतविरुद्धेति बोध्यं। एतेन मदनरत्नकालतत्त्वविवेचनाद्यः सर्वे नवीनग्रंथा अप्यु-पेक्ष्या एव। निष्कामस्तु गृही कुर्यादिति स्कांदे निष्काम एवोत्तरामिति निष्काम उत्तरामेवेति वा नियमस्य—संकीर्णैका-दशी नाम त्याज्या धर्मफलेप्सुभिः। पुत्रपौत्रप्रवृद्ध्यर्थं द्वादश्या-मुपवासयेत्। इति सकामस्योत्तराविधानेन—द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः। तामेवोपवसेत्काममकामो विष्णुतत्परः। इति निष्कामस्यापि पूर्वाविधानेन—वक्तुमशक्यत्वाच्चेति दिक्।

न्यूनद्वादशिकायां तु शुद्धाधिकायां विशेषमाह हेमाद्रौ वृ-द्धवसिष्ठः—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः। इति। अत्र गृहस्थयतिरूपाधिकारिभेदेनैव व्यवस्था नत्वेकेनाधिकारिणा समुच्चिते द्वे तिथी उपोष्ये इति स्मृत्यर्थसारकालादर्शहेमाद्रिमाधवनिर्णयामृताः। वि-ष्णुप्रीतिकामेन एकेनैव तिथिद्वयमुपोष्यमिति हेमाद्रौ मतांतरं। मदनरत्ने कालतत्त्वविवेचने इदमेव पुरस्कृतं। शुद्धाधिका अधिकद्वादशिका चेत्सर्वैः परा कर्तव्या। संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि। इति पूर्वोदाहृतनारदादिवचनेभ्यः—संपूर्णैकादशी यत्र प्रभाते पुनरेव

सा । वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते । गृहस्थोपि परां कुर्यात्पूर्वां नोपवसेत्तदा । इति माधवीये स्मृत्यंतराच्च । यदा विद्धसमा समद्वादशिका न्यूनद्वादशिका वा तदा एकादश्यामेवोपवासः । तदाह हेमाद्रिमाधवयोर्ऋष्यशृंगः । पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः । हारीतोपि—त्रयोदश्यां यदा न स्याद्वादशीघटिकाद्वयं । दशम्येकादशी मिश्रा सैवोपोष्या सदा तिथिः । हेमाद्रौ वृद्धवसिष्ठः—यदार्कोदयमात्रापि द्वादशी ह्यपरेहनि । त्रयोदश्यां तदा कार्या दशमीशेषसंयुता । हेमाद्रिमाधवयोः स्मृत्यंतरं—उपोष्यैकादशी तत्र द्वादशी न भवेद्यदि । दशम्यापि विमिश्रैव एकादश्येव धर्मकृत् । तत्रैव वृद्धवसिष्ठः—द्वादशी स्वल्पमल्पापि यदि न स्यात्परेहनि । दशमीमिश्रिता कार्या महापातकनाशिनी । हेमाद्रौ तत्वसागरसंहिता—दशम्येकादशी यत्र नोपोष्या सा कुलापहा । सैवोपोष्या कलामात्रा द्वादश्यां चेन्न विद्यते । हेमाद्रौ भविष्यं—एकादशी कलाप्येका परतो न च वर्धते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या सदा तिथिः । ऋष्यशृंगः—एकादशी न लभ्येत सकला द्वादशी भवेत् ॥ उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽब्रवीत् । हेमाद्रौ पद्मपुराणं—दिनक्षयस्पृते देवि नोपोष्या दशमीयुता । सैवोपोष्या तदा पुण्या परतश्चेत्त्रयोदशी । इति । द्वादश्यां सूर्योदयात्पूर्वं यदि त्रयोदशीत्यर्थ इति हेमाद्रिः । तत्रैव निगमः—पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । इति । एतेन विद्धसमा समद्वादशिका न्यूनद्वादशिका च सकामैरुपोष्या निष्कामैस्तु द्वादशीति भट्टोजीदीक्षितोक्तिरुपेक्ष्या उदाहृतवचनविरोधादिति बोध्यं । यानि तु—दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते । एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् । शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकांक्षिभिः । इत्यादीनि हेमाद्रौ व्यासादिवचनानि तानि सर्वाणि वैष्णवविषयाणि मुमुक्षुविषयाणि च बोद्धव्यानि । विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् । द्वादशद्वादशीर्हंति त्रयोदश्यां तु पारणं । इति हेमाद्रौ पद्मपुराणादिवचनविरोधात् । यदा तु विद्धसमाधिकद्वा-

दशिका तदा सर्वेषां शुद्धद्वादश्यामेवोपवासः । तदाह हेमाद्रिमाधवयोर्व्यासः–एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदं । इति । यदीच्छेदित्याद्यर्थवादमात्रं उदाहृतवचननिचयपर्यालोचनया सर्वेषां द्वादश्युपवासावगमादिति हेमाद्रिः । हेमाद्रौ नारदः–शुद्धा तु द्वादशी राजन्समुपोष्या सदा तिथिः । दशम्यैकादशी मिश्रा कर्तव्या न कदाचन । हेमाद्रौ पाद्मं–दशमीगर्भिता पूर्वा लुप्यतैकादशी परा । उपोष्या द्वादशी तत्र न दशम्या कथंचन । पलार्धेनापि विद्धा च दशम्यैकादशी यदा । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । इति । हेमाद्रौ नारदीयपुराणं –उपवासदिनं विद्धं यदा भवति पूर्वया । द्वितीयेह्नि यदा न स्यात्स्वल्पाप्येकादशी तिथिः । तत्रोपवासः[1] कथितः कथं तद्वद सूतज । सूत उवाच । यदा न प्राप्यते विप्रा द्वादश्यां पूर्ववासरः । रविचक्रार्धमात्रोपि तदोपोष्यं परं दिनं । उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् । निर्गता चेत्त्रयोदश्यां कला वा द्विकलापि वा । इति । नन्वेकादशीनिमित्त उपवासो द्वादश्यां कथं युज्यते । नच किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभार इत्यभियुक्तोक्त्या समाधानस्य कालतत्त्वविवेचने स्पष्टत्वात्प्रश्न एवानुपपन्न इति वाच्यं । असाधारणवचनविषयिण्या अभियुक्तोक्तेर्वैष्णवविषये सावकाशैकादशी यदा लुप्तेत्यादिवचनविषयत्वस्यैवाभावात् । नच स्मार्तविषयेपि प्रवृत्तौ बाधकाभावः । नचेदेकादशी विष्णाविति नारदवचनस्य बाधकस्य सत्वात् । इदमपि शुद्धाविषये सावकाशमिति चेत् । एकादशी कलाप्येका परतो न च वर्धते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या तदा तिथिः । इत्यादिभविष्यादिवचनानामेव बाधकत्वात् । ननु अनधिकद्वादशीविषये एतान्यपि सावकाशानीति चेत्तर्हि परस्पराविरोधेन सावकाशानां विरोधस्थले कस्य प्रवृत्तिरिति संप्रधारणायां स्मार्तान्प्रति तद्विषयकभविष्यवाक्यप्रवृत्तेरेवोचितत्वात् । भवतु तर्हि विद्धायामेव स्मार्तगृहिणामिति चेन्न । पारणाहे न लभ्येत द्वादशी कलयापि चेत् । इत्यादिभिर्द्वादश्यभावे एव विद्धाभ्यनुज्ञानात् । द्वादशीवृद्धौ विद्धाभ्यनु-

1 'वासो विहितः.'

ज्ञाभावेन नोपोष्या दशमीयुतेत्यादिवाक्यैस्तस्या निषिद्धत्वात् । नचैते द्वादशीविद्धाविधिप्रशंसार्था निषेधसरूपा निंदार्थवादा इति न दोष इति वाच्यं । पूर्वविद्धा न कर्तव्येति ऋष्यशृंगवचने अत्र विधिर्गृहस्थविषयो निषेधो यतिविषय इति माधवग्रंथविरोधापत्तेः ।—कुर्वन्नेकादशीं नरः । दशमीशेषसंयुक्तां प्रायश्चित्तमिदं चरेत् । तप्तकृच्छ्रं नरश्चीर्त्वा गां च दद्यात्सवत्सिकां । इत्यादिप्रायश्चित्तविधिविरोधापत्तेश्च । नच नानुयाजेष्विवत्पर्युदासवृत्त्या दशमीविद्धाभिन्नामुपवसेदित्यर्थान्नानुपपत्तिः। पर्युदासस्यापि निषेधे पर्यवसानान्न माधवविरोधः प्रायश्चित्तविधिश्चोपपन्न इति वाच्यं ।—मुहूर्तैः पंचभिर्विद्धा ग्राह्यैवैकादशी तिथिः । इत्याद्यनेकवाक्यविरोधापत्तेः । अपिच दशम्यादावतिप्रसंगवारणार्थं दशमीविद्धाभिन्नामेकादशीमुपवसेदित्यर्थस्यावश्यकतया प्रकृते द्वादशीमात्रवृद्धावनुपपत्तिस्तदवस्थैव । नच द्वादशीक्षये द्वादश्या इव द्वादशीवृद्धौ दशमीविद्धाया निमित्तत्वाभावान्नैमित्तिकोपवासस्याप्यभावादेव नानुपपत्तिरिति वाच्यं । शुक्लामेव सदा गृही । वैष्णवो वाथ शैवो वा कुर्यादेकादशीव्रतं । एकादशीमुपवसेन्न कदाचिदतिक्रमेत् । इत्याद्यनेकवाक्यैरेकादश्युपवासस्य नित्यत्वप्रतिपादनात् । नन्वेवमपि स्मार्तानां—एकादशी कलाप्येका परतो नच वर्धते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या। इत्यादिभिर्विद्धायामेवोपवासो युक्तो नतु द्वादश्यां । अतएव मदनरत्नेन प्रकृते मुमुक्षुव्यतिरिक्तानां विद्धायामेवोपवास इति सिद्धांतितं । तस्माद्बाधे दृढे अन्यदपि बाध्यतामिति न्यायात् स्मृत्यर्थसारकालादर्शहेमाद्रिनिर्णयामृतमाधवादिसिद्धांत उपेक्ष्यः प्रमाणाभावादिति चेन्न । विद्धाग्रहणे पारणाहे न लभ्येत इत्यादिवाक्यैर्द्वादश्यभावस्य हेतुत्वोक्तेर्भविष्यादिवचनानां दिनक्षये गृहिण उपवासनिषेधात्तस्य तिथित्रयसंबंधतिथ्यंतद्वयमात्रसंबंधरूपत्वेन द्वैविध्यात् । उभयत्र निषेधप्रसक्तौ तिथ्यंतद्वयमात्ररूपे तस्मिन्नुपवासविधायकत्वेन चारितार्थ्येन तेषां द्वादशीवृद्धौ विद्धाभ्यनुज्ञापकत्वासंभवात् । एकादशी दिशा विद्धा द्वादश्यां न प्रतीयते । द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत् । उपोष्या द्वादशी शुद्धा सर्वैरेव न संशयः । केचिदाहुश्च पूर्वां तु तन्मतं न समंजसं । इति बृह-

नारदीयवचनेन ऐंद्या गार्हपत्योपस्थान इव प्रकृते एकादश्युपवासे द्वादश्या एव विधानात् द्वादश्यामेवोपवासः कार्यः । अतएव स्मृत्यर्थसारहेमाद्रिमाधवादिसिद्धांतः संगच्छते इति बोध्यं ॥

नन्वत्र मुमुक्षुव्यतिरिक्तानां विद्धायामेवोपवास इति मदनरत्नः किमित्युपेक्षितः । नच तत्र साधकाभावः । सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः । प्रातर्भवतु मा वा भूद्यतो नित्यमुपोषणं । इति कालादर्शस्थऋष्यशृंगवचनस्य मदनरत्नेनोपन्यासात् । नच कालतत्त्वविवेचने एव मदनरत्नकृतवचनव्याख्यां दूषयित्वा प्रातरेकादशी भवतु मावेति व्याख्यामाशंक्य एकादशीमात्राधिक्ये विद्धायामुपवासः स्यात्तदपि बहुवचनविरुद्धमिति दूषितमदनरत्नोपन्यास एवानुचित इति वाच्यं । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । इत्यादिवाक्यैर्विहितस्यैकादशीमात्राधिक्ये विद्धोपवासस्य स्मृत्यर्थसारकालादर्शनिर्णयामृतहेमाद्रिमाधवादीनां संमतत्वेन तत्प्रतिबंद्या दूषणस्य भूषणपर्यवसायित्वादिति चेन्न । कालादर्शहेमाद्रिमाधवोदाहृतवचनपरविरुद्धसिद्धांतस्यात्यंतानुचितत्वात् । नच ऋष्यशृंगवचनविरोधः कथं न पर्यालोच्यत इति वाच्यं । कालादर्शमात्रोदाहृतवाक्यस्य वृद्धहीनात्रयविषयत्वेनैव तत्रैव व्यवस्थापनात् । अतएव विद्धसमायां द्वादश्याधिक्यवत्यां परत्रोपवासः स्मृत्युक्तः । कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदा । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । इति कालादर्शसिद्धांतः संगच्छते । नचैवमपि मुहूर्तैः पंचभिर्विद्धेति वाक्यस्यापि तेनोपन्यासात्कथमनौचित्यमिति शंक्यं । पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । इत्यादिहेमाद्र्याद्युदाहृतानेकवचनाविरोधेनैवास्य प्रवृत्तौ संभवत्यां तद्विरोधेन प्रवृत्तेरनुचितत्वात् । शुद्धा यदा समाहीनेति स्कांदे शुद्धेति विशेषणवैयर्थ्यापत्तेरित्यलं बहुना ॥

या तु विद्धन्यूना समद्वादशिका न्यूनद्वादशिका वा तत्र पुत्रवद्भिन्नानां सर्वेषां पूर्वत्रैव । तदाह हेमाद्रौ वृद्धवसिष्ठः—

१ 'मुपवासणं'.

यदार्कोदयमात्रापि द्वादशी ह्यपरेऽहनि । त्रयोदश्यां तदा कार्या दशमीशेषसंयुता । **हेमाद्रौ ऋष्यशृंगः**—एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् । **हेमाद्रौ स्कांदे**—एकादश्यां प्रदृश्येत दशमी घटिका अपि । द्वितीयेह्नि न चाप्नोति यदा चैकादशी तिथिः । तदा कार्या च विद्वद्भिर्दशमीसंयुता तिथिः । **हेमाद्रौ नारदः**—दशमीशेषसंयुक्ता नोपोष्यैकादशी तिथिः । एकादश्यां रात्रिशेषे द्वादशी चेन्न दृश्यते । यदि दैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयं । तत्र क्रतुशतं पुण्यं द्वादशीपारणे भवेत् । आदौ दशमी मध्ये एकादशी अंते द्वादशी एतत्तिथित्रयं । **हेमाद्रौ कौर्मे**—द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः । तामेवोपवसेत्काममकामो विष्णुतत्परः । दशमीं द्वादशीं च या स्पृशत्येकस्मिन्वासरे **सा द्विस्पृक्** । **हेमाद्रौ पाद्मे**—एकादशी दिशा विद्धा परतो नच वर्धते । यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः । यानि तु—दिनक्षयेपि शुद्धैव द्वादशी मोक्षकांक्षिभिः । उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा । दिनत्रयवती जाता तिथिरेकादशी यदा । प्रथमा तत्र नोपोष्या उपोष्या चोत्तरा भवेत् । इत्यादीनि **सुमंतुसत्यव्रतभविष्यत्पुराणादिवचनानि** तानि मुमुक्षुविषयाणीति **हेमाद्र्यादयः** । **हेमाद्रौ पाद्मे**—दिनक्षयस्पृते देवि नोपोष्या दशमीयुता । सैवोपोष्या तदा पुण्या परतश्चेत्त्रयोदशी । द्वादश्यां सूर्योदयात्पूर्वं यदि त्रयोदशीत्यर्थ इति **हेमाद्रिः** । अत्रैवकार आग्नेय्येव मनोता कार्या इत्यत्रेवायोगव्यवच्छेदार्थक एव । कालादर्शहेमाद्रिमाधवमदनरत्नादिसकलनिबंधेषु अनधिकद्वादशिकविद्धसमाविधायकत्वेनोपन्यस्तानां—पारणाहे न लभ्येत द्वादशी कलयापि चेत् । इत्याद्यृष्यशृंगादिवचनानां विरोधान्नान्ययोगव्यवच्छेदार्थकः । एतेन दिनक्षयमिति वचनं दिनक्षयातिरिक्तदशमीविद्धायामुपवासनिवृत्तिं विनाऽनर्थकमिति व्रतार्क उपेक्ष्यः । उदाहृतवचनार्थाज्ञानमूलकत्वात् । पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । इति **निगमवचनं हेमाद्रिणोपन्यस्तं** । यद्यपीदं षष्ठ्यादिनिमित्तकानुष्ठेयलोपप्रसंगाद्विद्धानधिकायां ष-

श्यादौ न प्रवर्तते किंतु विद्धाधिकायामेव प्रवर्तते तत्साहचर्या-देकादश्यामपि विद्धाधिकायामेव प्रवर्तते उत्तरार्धेन पूर्वार्धोपात्तविषये एव द्वादशीक्षये प्रतिप्रसवः क्रियते इति विद्धाधिकाविषयमेव निगमवाक्यं तथापि द्वादशीक्षये विद्धाधिकापि चेत्पूर्वा ग्राह्या तदाविद्धानधिका पूर्वा ग्राह्येत्यत्र किं वक्तव्यमित्यभिप्रायेणात्रोपन्यस्तमिति बोध्यं ।

पुत्रवद्गृहिणामत्रोपवासनिषेधमाह **हेमाद्रौ पितामहः**— एकादशीदिनक्षये उपवासं करोति यः । तस्य पुत्रा विनश्यंति मघायां पिंडदो यथा । पिंडद इति षष्ठी ।—दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता । यदीच्छेत्पुत्रपौत्राणामृद्धिं संपदमात्मनः। **हेमाद्रौ व्यासः**—एकादशीदिनक्षये उपवासी तु वेद्गृही । अन्नाभावेऽवरुद्धो वा संकल्पाद्वा विशेषतः । धर्महानिश्च भवति संततिर्नश्यते ध्रुवं । तस्यायुः क्षीयते नित्यं संवत्सरमिति श्रुतिः। एकादशीषु कृष्णासु रविसंक्रमणे तथा । पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही । इति । नच दिनक्षयनिमित्तोपवासस्यायं निषेध इति शंक्यं । एकादशीपदवैयर्थ्यप्रसंगाद्धे**माद्रिणा**पि तथैव सिद्धांतितत्वाच्च । एवमुपवासे निषिद्धे पुत्रवद्भिः किं कार्यमित्यत्र **हेमाद्रौ गोभिलः** । ( एकादश्यां यदा ब्रह्मन्दिनक्षयतिथिर्भवेत् । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । इत्यादिवचनाद्द्वादश्यामुपवासः । अथवा ) उपवासनिषेधे तु भक्ष्यं किंचित्प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलं लभेत् । इति **वायुपुराणवचनात्** किंचिद्भक्षयित्वा एकादश्यामेवोपवासः कार्यः । विद्धन्यूनाधिकद्वादशिकायां तु द्वादश्यामेवोपवासः सर्वेषां । तदाह **हेमाद्रिमाधवयोर्व्यासः**—एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिं । लुप्ता क्षयं गता । परतस्त्रयोदश्यां । शुद्धा तु द्वादशी राजन्समुपोष्या सदा तिथिः । दशम्यैकादशी मिश्रा न कर्तव्या कदाचन । इत्यादिविद्धसमाधिकद्वादशिकानिर्णये उदाहृत**नारदा**दिवचनान्यपि । एकादशी दिशाविद्धा द्वादश्यां न प्रतीयते। द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत् । उपोष्या द्वादशी शुद्धा सर्वैरेव न संशयः । इति

**बृहन्नारदीयेन** एकादश्यनाधिक्येऽपि द्वादशीवृद्धौ द्वादश्यामेव सर्वेषामुपवासविधानादिति दिक् ॥

यत्त्वत्र सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः । प्रातर्भवतु मा वाभूद्यतो नित्यमुपोषणं । इति वचनाद्विद्धायामेवोपवासः सर्वेषामिति । **कालादर्शे**–गृहस्थानामेव विद्धायां–दशमीशेषसंयुक्ता नोपोष्यैकादशी तिथिः । एकादश्यां रात्रिशेषे द्वादशी चेन्न दृश्यते । इति **नारदवचनादिति मदनरत्ने** सिद्धांतितं । तत्र सर्वत्र द्वादश्याः साम्ये हानौ च प्रातर्दैविकमुहूर्तद्वयमध्ये एकादशी प्रवर्ततां मा वा तथापि दशमीमिश्रिता कार्येत्यर्थकऋष्यशृंगवाक्य**नारदवाक्ययोर्व्यासादि**वाक्याविरोधेनैवानधिकद्वादशिकायामेव विद्धायां प्रवृत्तेरुचितत्वात्स्मृत्यर्थ**सारहेमाद्रिमाधव**विरोधाच्चोपेक्ष्यं । या तु विद्धाधिका समद्वादशिका तत्र सर्वेषां परत्रैव । तदाह **हेमाद्रौ नारदः**—द्वादश्यैकादशी यत्र संगता त्रिदशाधिप । तामुपोष्य ततः कुर्यात्त्रयोदश्यां तु पारणं । एकादशी कला यत्र परतो द्वादशी न चेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणं । **बौधायनोपि**—कलाप्येकादशी यत्र परतो द्वादशी न चेत् ॥ तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणं । **हेमाद्रौ पाद्मे**—द्वादशीमिश्रिता कार्या सर्वत्रैकादशी तिथिः । द्वादशी च त्रयोदश्यां विद्यते यदि वा नवा । सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः । प्रातर्भवतु वा मा वा यतो नित्यं हि पारणं । यद्यप्यस्मिन्प्रकरणे **हेमाद्रौ** नित्यमुपोषणमिति पाठो दृश्यते तथापि ग्रंथकांतरे पारणमित्येव पाठः । तत्र द्वितीयदिने प्रातर्द्वादशी भवतु मा वेत्यर्थात्पूर्वोत्तरवाक्यानुगुणत्वादयमेव पाठो युक्तः । अथवा यदुपोषणं नित्यं तत्र तु अंत्यक्षणोपलक्षितोहोरात्र एव मुख्यः कालः । स तु प्रकृतेऽस्त्येव । पारणं त्वंगं । तत्र त्रयोदश्यां द्वादशी लभ्यते चेत्सम्यगेव । नोचेत्तत्रयोदश्यामपि भवत्वित्यर्थकल्पनया उपोषणमिति पाठः संगमनीयः । यथाश्रुतस्तु विद्धाधिकाप्रकरणेऽसंगतः । **हेमाद्रौ** स्थलांतरे **स्कांदे**—दशमीशेषसंयुक्ता यदि वृद्धिमती भवेत् । तत्रोपोष्या द्वितीया स्यात्त्रयोदश्यां तु पारणं । **हेमाद्रौ सुमंतुसनत्कुमारौ**—तृतीयैकादशी षष्ठी चतुर्थी च त्रयोदशी । अमावास्याष्टमी चैव

ता उपोष्याः परान्विताः । हेमाद्रौ पैठीनसिः । एकादशी तथा षष्ठी शुक्लपक्षे चतुर्दशी । तृतीया च चतुर्थी च ता उपोष्याः परान्विताः । इत्यादीनि वचनान्युत्तरामेव विदधति । नच पूर्वविद्धा न कर्तव्या षष्ठी चैकादशी तथा । विद्धाप्येकादशी कार्या परतो द्वादशी न चेत् । इति त्रिद्व्यूनसमद्वादशिकाप्रकरणे हेमाद्र्युदाहृतस्मृत्यंतरवचनेन विद्धैव भवत्विति शंक्यं । एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् । इति तत्रैवोदाहृतऋष्यशृंगादिवचनविरोधापत्तेः । किंच—अविद्धानि निषिद्धैश्चेन्न लभ्यंते दिनानि तु । मुहूर्तैः पंचभिर्विद्धा ग्राह्यैवैकादशी तिथिः । इत्यृष्यशृंगवचनेन अविद्धाया अलाभे एव विद्धाभ्यनुज्ञावचनानां प्रवृत्तेर्नियमितत्वात् । तदलाभस्तु—एकादशी कलाप्येका परतो न च वर्धते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या सदा तिथिः । इत्यादिप्रतिपादितस्वरूपेण—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्र्यहस्पृगहोरात्रं नोपोष्यं तत्सुतार्थिभिः । इत्यादिशास्त्रांतरनिषिद्धत्वेन वा प्रकृते स्वरूपेण सत्वाच्छास्त्रांतरेणानिषिद्धत्वाच्चाविद्धालाभसंभवेन विद्धाभ्यनुज्ञावचनानामप्रवृत्तेः । औदयिक्याः द्वादशीयुक्तैकादश्या एव मुख्यत्वाच्च । यत्तु माधवाचार्यैर्निर्णयप्रकरणे एकादश्याश्रिवये पूर्ववद्वृद्धियत्योर्व्यवस्थेत्युक्तं । वचनव्यवस्थांते च यत्तु ऋष्यशृंगवचनं—अविद्धानि निषिद्धैश्चेन्न लभ्यंते दिनानि तु । मुहूर्तैः पंचभिर्विद्धा ग्राह्यैवैकादशी तिथिः । तदर्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः । पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । अत्र निषेधो यतिविषयो विधिर्गृहस्थविषयः। वेधबाहुल्येन हेयत्वशंका माभूदिति पंचभिर्मुहूर्तैरित्युक्तमित्युपसंहृतम् । तत्र विद्धायां चत्वारो भेदा इति पूर्वग्रंथानुरोधात् । पंचभिर्मुहूर्तैरित्यस्य विद्धोपलक्षणत्वे तदर्धविद्धान्यन्यानीत्यग्रिमवाक्येपि तथात्वापत्तौ सर्वोपप्लव एव स्यात् । अविद्धाया अलाभे एव पंचमांतमुहूर्तैरेव विद्धा ग्राह्या नत्वधिकविद्धेति नियमार्थकत्वैव हेमाद्र्यादिभिर्व्यवस्थापितत्वाद्विद्धानीतिवाक्य-

चाचार्याणामपि पूर्वोक्तनियमे एवाविद्धानीति वाक्यस्य तात्पर्यात्न्यूनत्वरूपद्वादशीक्षये एव गृहियत्योर्व्यवस्था । द्वादशीसाम्ये तु गृहिणामपि परैवेति पर्यवसितम् । चत्वारो भेदा इति ग्रंथस्य पंचमभेदस्याप्युपलक्षणपरत्वे तु सर्ववाक्यानुग्रह एव संपद्यत इति महाँल्लाभ एव। अतएव–शुद्धा यदा समा हीना सक्षीणाधिकोत्तरा । इति वाक्यगतद्वादश्या न्यूनत्वे अधिकत्वे[1]ऽपि पूर्वेति माधवग्रंथः संगच्छते । परिगणनपरत्वे त्वसंगत एव स्यात् । एवं सति स्मृत्यर्थसारकालादर्शनिर्णयामृतहेमाद्रिमदनरत्नग्रंथैरप्येकवाक्यता भवतीति सर्वसंप्रतिपन्नत्वात् उत्तरैवेति सिद्धं । एतेनोपसंहारग्रंथतात्पर्यार्थमपर्यालोच्यैकादशीमात्राधिक्ये गृहियत्योर्व्यवस्थितेत्येतावदेव दृष्ट्वा प्रवृत्ता माधवेनोक्ता व्यवस्था असंगतेति केचित् । व्यवस्थैव संगतेत्यन्येऽप्यर्वाचीनग्रंथा अयुक्ता एवेति दिक् ॥

या तु विद्धाधिका न्यूनद्वादशिका तस्यामपि गृहस्थव्यतिरिक्तानां परैव । तदाह हेमाद्रौ पाद्मं–द्वादशीसंयुता यत्र भवत्येकादशी कला । दिनक्षयेऽपि सा पुण्या दशम्या न कथंचन । हेमाद्रौ नारदोऽपि–एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति । इत्याद्यनेकवाक्यानि हेमाद्र्युदाहृतान्यपि गृहस्थस्य तु विद्धैकादश्यामेवोपवासः । तदाह कालादर्शे एकादशीप्रकरणे प्रघट्टकांतरे वायुपुराणं–एकादशी यदा विद्धा द्वादशी च क्षयं गता । दशमीमिश्रिता तत्र उपोष्या मुनिसत्तम । इति हेमाद्रिमाधवयोर्ऋष्यशृंगः–पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । न चानेन प्रकृते द्वादशीसाम्येऽपि तिथ्यंतद्वयाधिकरणरूपदिनक्षये एव हेमंतादिसमये सार्धपंचमुहूर्तादिविद्धे[2]ऽपि द्वादशीन्यूनत्वसंभवेन तिथित्रयसंबंधाधिकरणरूपदिनक्षये च विद्धाग्रहणापत्तौ- द्वादशीमिश्रिता कार्या सर्वत्रैकादशी तिथिः । द्वादशी च त्रयोदश्यां विद्यते यदि वा नवा । इत्यादिभिर्द्वादशीसाम्ये उत्तराविधायकपाद्मादिवाक्यैः अनभ्यनुज्ञातवेधपरशल्यशब्दयुक्त–तिथिहानौ प्रमोक्तव्या सशल्यैकादशी यदि । इति हेमाद्र्युदाहृतवच-

1 'न्यूनत्वे समाधिकत्वेपि', 'समत्वेऽधित्वेऽपि'. २ 'वेधेपि'.

दशमीव इव तिथ्यंतद्वयाधिकरणत्वेपि द्वादशीव । एवं पंच-
मांतमुहूर्तविद्धाया इव पंचमुहूर्ताधिकदशमीविद्धाया अपि पूर्व-
विद्धेत्यनेन ग्रहणप्रसक्तौ नियमार्थेन–अविद्धानि निषिद्धैश्चेन्न
लभ्यंते दिनानि तु । मुहूर्तैः पंचभिर्विद्धा ग्राह्यैवैकादशी तिथिः ।
इति ऋष्यशृंगवचनांतरेण उत्तरदिने उपवासयोग्यैकादश्य-
लाभ एव पंचमुहूर्तविद्धाया एव ग्राह्यत्वप्रतिपादनात् । एत-
देकवाक्यतयैवानयोर्विधायकत्वेन द्वादशीसाम्ये अविद्धालाभ-
संभवेन अधिकवेधे वचनांतरनिषिद्धत्वेन चातिप्रसंगाभावात् ।
अतएव शुद्धिकामविष्णुसायुज्यकाममुमुक्षुव्यतिरिक्तगृहस्थविषयं
ऋष्यशृंगवचनद्वयं । निषिद्धैर्दशम्यादिभिरविद्धानि एकाद-
श्यादिदिनानि–एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र्य-
हस्पृगहोरात्रं नोपोष्यं तत्सुतार्थिभिः । इत्यादिवचनादुपोष्य-
त्वेन न लभ्यंते न स्वरूपेण चेत्यर्थ इति हेमाद्रिः । विद्धानि-
षेधकानेकवचनोपन्यासानंतरं विद्धैकादश्या द्वादश्यामभावे द्वाद-
श्याश्च त्रयोदश्यामभावेपि–एकादशीं दिशाविद्धां पक्षवृद्धौ विव-
र्जयेत् । पक्षहानौ स्थिते सोमे कुर्वीत दशमीयुतां–इति श्रुतेः
शुद्धद्वादश्येव–तिथिहानौ प्रमोक्तव्या सशल्यैकादशी यदि । इत्य-
नुसारादुपोष्या । विहीनशल्यापि विवर्जनीया यद्यग्रतो वृद्धिमु-
पैति पक्षे । इति तु यद्यपि स्मार्तं तथाप्येकादशीं दिशाविद्धामि-
त्यस्य, सशल्यैकादशी यदीत्यस्य च विशेषणस्यान्यथानुपपत्तेर्वि-
हीनशब्दस्य चात्यंताल्पवाचित्वेनाप्युपपत्तेः अविद्धानि निषिद्धै-
रित्यविद्धालाभनिमित्तविद्धाभ्यनुज्ञास्मृत्युक्तघटिकादशकापेक्षया-
प्यधिकविद्धातिथिर्वर्जनीयेत्येव व्याख्येयमित्यग्रिमो हेमाद्रिश्च
संगच्छते । यत्तु समद्वादशिकाविद्धन्यूनाप्रकरणे हेमाद्रिणा
एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमी-
विद्धा ऋषिरुद्दालकोऽब्रवीत् । पारणाहे न लभ्येत द्वादशी
कलयापि चेत् । तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः ।
इति ऋष्यशृंगवचनद्वयमध्ये अविद्धानि निषिद्धैश्चेदिति वाक्य-
मुपन्यस्य अरुणोदयवेधांतर्भावेन मुहूर्तपंचकवेधे षड्घटिकात्म-
कक्षये द्वादश्यामेकादश्यभावेन त्रयोदश्यां च द्वादश्यभावेन
उक्तवक्ष्यमाणवाक्यपर्यालोचनया दशमीयुताया अपि ग्रहणो-

पपत्तेरित्युक्तं तत् निषेधैर्मुहूर्तैर्विद्धानि दिनानि यदि न लभ्यं तदैकादशी त्रिभिर्द्वाभ्यां वा मुहूर्ताभ्यां विद्धा ग्राह्यैव । व्यस्तयोरपि संख्ययोर्लाघवार्थं पंचशब्देनाभिधानं । नत्वेतदुपपद्यते एवंविधे विषये द्वादश्यामेकादशीलाभात् । नत्र तस्यां लभ्यमानायामपि दशमीविद्धा ग्राह्येति कचित्स्मर्यत इति केचिन्मतमुपन्यस्य तदयुक्तमिति[1] प्रकम्यैवोक्तमिति नास्य मुख्यो विषयः सः अतएव तत्रोक्तवक्ष्यमाणवचनानां ग्राहकत्वोक्त्या एतस्यान्यथासिद्धत्वं सूचितं तदपि त्रिंशद्घटिकाधिकदिनमानसमये न संभवतीति तत्र व्याख्यामुपेक्ष्य विद्धाधिकामात्रविषयपूर्वविद्धेति ऋष्यशृंगवचनांतरमुपन्यस्यात्रैव व्याख्यातं । युक्तं चैतदेव । अरुणोदयवेधनिषेधस्य वैष्णवमात्रविषयत्वस्य हेमाद्र्यादिभिः सर्वैः सिद्धांतितत्वाद्वैष्णवानां विद्धाभ्यनुज्ञाया अभावात् विद्धाभ्यनुज्ञावाक्यानां स्मार्तविषयमात्रविषयत्वात्स्मार्तानां सर्वैष्यवेधा विज्ञेया इत्यादिवाक्यैः सूर्योदयोत्तरदशमीसद्भावस्यैव वेधत्वप्रतिपादनात्सूर्योदयोत्तरमेव मुहूर्तपंचकविद्धाग्रहणमितिविभावनीयं । अतएव एकादशी तु मुहूर्तपंचकविद्धाप्युपोष्यैवेति तिथ्यंतरनिर्णयप्रकरणे स्मृत्यर्थसारः संगच्छते । अत्र निषेधो यतिविषयो विधिर्गृहस्थविषयः । वेधबाहुल्येन हेयत्वशंका माभूदिति पंचभिर्मुहूर्तैरित्युक्तमिति माधवसिद्धांतादपि सूर्योदयोत्तरमेव मुहूर्तपंचकविद्धाया एव ग्राह्यत्वप्रतीतेः । अन्यथा मुहूर्तत्रयवेधस्य तिथ्यंतरसाधारण्येन वेधबाहुल्येनेत्यस्य वैयर्थ्यापत्तेः । तस्मान्मुहूर्तपंचकाधिकदशमीविद्धाभ्यनुज्ञानाभावात् सा त्याज्यैव । नच विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।इत्यभ्यनुज्ञापकं तिष्ठत्येवेति वाच्यं । ऋष्यशृंगादिवाक्यैकवाक्यतयैवास्याभ्यनुज्ञापकत्वसंभवेन तद्विरुद्धविषयेभ्यनुज्ञापकत्वे प्रमाणाभावादिति चिंतनीयं । अतएव दशमीविद्धैकादशी द्वादश्यां किंचिदस्ति रात्रिशेषे च त्रयोदशी तदा यतिभिरुत्तरा गृहिभिः पूर्वेति स्मृत्यर्थसारः । द्वादशीहानियुक्तायां विद्धाधिकायां गृहियत्योर्व्यवस्थेति कालादर्शो निर्णयामृतश्च संगच्छते । यत्तु तिथितत्वाख्ये गौडग्रंथे—एकादशीमुपवसेद्द्वादशीमथवा पुनः । विमिश्रां वापि कुर्वीत न दशम्या युतां कचित् । कुर्यादलाभे संयुक्तां नालाभेपि प्र-

1 तदुपयुक्तमिति ।

वेशिनीं। उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणं। उदयात्प्रा-ग्दशम्यास्तु शेषः संयोग इष्यते। उपरिष्टात्प्रवेशस्तु तस्मात्तां प-रिवर्जयेत्। इति कालविवेकसंवत्सरप्रदीपाद्युदाहृतकूर्मपु-राणवचनमुपन्यस्य द्वादश्यां कलार्धमात्रमेकादश्या अनिर्गमे यदि दशमी नोदयं स्पृशति उदयात्प्रागरुणोदयकाल एवावतिष्ठते तदा संयुक्तोच्यते सैवोपोष्या। अत्रैव विषये एकादशी दिशाविद्धा परतोपि न वर्धते। गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः। इति भविष्यत्पुराणादिवचनैर्द्वादश्यामेकादश्यलाभे एवारुणो-दयविद्धायाः कर्तव्यतोपदेशात् द्वादश्यामेकादशीलाभे तादृग्वि-द्धां न कुर्यादित्यर्थतोवसीयते। अतस्तत्र परोपोष्येति गम्यते। अत्रापि त्रयोदश्यां द्वादशीलाभे एव परोपोष्येत्यवधेयम्। न चेत्तत्र पूर्वा-मुपोष्य परदिने द्वादश्याद्यपादमुत्तीर्य पारणं कुर्यात्। विद्धाप्येका-दशी ग्राह्या परतो द्वादशी न चेत्। इत्यादिमात्स्यादिवचनेभ्यः अथोदयानंतरवर्तिनी दशमी यद्येकादशीं स्पृशति सा प्रवेशिनी, तां विहाय द्वादशीमेवोपवसेत्तदिदमुक्तं नालाभेपि प्रवेशिनीमिति। अलाभेपि परदिने एकादश्यलाभेपि। अतएव—उदयोपरि विद्धा तु दशम्यैकादशी यदि। दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशास-नः। इत्यादिकण्वादिवचनानि। अथारुणोदयविद्धषष्टिदंडैका-दशीपूर्णैकादश्योर्व्यवस्थायामविशेष इति चेन्न—पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदि। द्वादश्यां पारणालाभे पूर्णैव परिगृ-ह्यते। इति प्राचेतसा वैष्णवेनापि पूर्णोपोष्येति। अरुणोदयविद्धा तु द्वादशीपारणस्यालाभेपि वैष्णवैर्नोपोष्या किंतु खंडैकादश्युपोष्ये-ति—दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन त-द्दिनैकादशीव्रतं। इति गारुडे वैष्णवेनेत्यभिधानात्। तत्रापि कृष्ण-पक्षेरुणोदयविद्धैव एकादशीं दिशायुक्तां वर्धमाने विवर्जयेत्। पक्ष-हानौ स्थिते सौम्ये लंघयेद्दशमीयुतां इति भविष्यपुराणैकवाक्य-त्वात्। तदयं संक्षेपः। यदा तु पूर्वदिने दशम्या उत्तरदिने द्वादश्या युतैकादशी तदोत्तरामुपोष्य द्वादश्यां पारणं कुर्यात्। पारणादिने द्वादश्यनिर्गमे तु त्रयोदश्यामपि। यदा सूर्योदयानंतरं दशमीयुतै-कादशी अथच परदिने न निःसरति तदा तां विहाय परदिने द्वादशीमुपवसेत्। यदा तु सूर्योदयपूर्वकाले दशमीविद्धैकादशी प-रदिने न निःसरति तदा तामुपवसेत्। यदा तु तथाविद्धा सती

परदिनेपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय खंडामुपोष्य द्वादश्यां पारयेत्। याच उभयदिने तद्विद्धैकादशी तत्परदिने च न द्वादशी तदा षष्टिदंडात्मिकां विद्धामुपोष्य परदिने द्वादश्याद्यपादमुत्तीर्य पारयेत्। वैष्णवस्तु तत्रापि शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेदिति सिद्धांतितं। तत्र अरुणोदयमारभ्य प्रवृत्ताहोरात्रव्यापिन्या एव पूर्णत्वस्य तिथितत्वेप्युक्तत्वात् पूर्वतिथिभोगापेक्षयोत्तरतिथिभोगस्य सार्धघटीपेक्षया न्यूनाधिकभावस्य ज्योतिःशास्त्रे अप्रसिद्धत्वाच्चतुःषष्टिघटिकापरिमितैकादश्यां सत्यां समनंतरद्वादश्या वृद्ध्यवश्यंभावेन द्वादश्यां पारणालाभ इत्युत्तरार्धस्यानन्वयापत्तेः प्रचेतोवाक्ये पूर्णत्वमहोरात्रव्यापित्वमात्रमित्येव स्वीकर्तव्यत्वेन तस्य वैष्णवविषयत्वासंभवात् द्वादश्यवृद्धौ प्रचेतोवाक्यात् पूर्णाधिकायां वैष्णवैः पूर्णोपोष्येत्युक्तिः। तिथितत्वेप्युदाहृतदशमीशेषसंयुक्ता इति वचनविरोधात्–एकादशीकलायुक्तामुपोष्य द्वादशीं नरः। त्रयोदश्यां तु भुंजानो विष्णुसायुज्यमृच्छति इत्यादिबौधायनाद्यनेकवाक्यविरोधाच्चिंत्यैव। कृष्णपक्षे वैष्णवैररुणोदयविद्धैवोपोष्येत्युक्तिरपि–पक्षहानौ स्थिते सोमे इत्यस्य–तदा कार्या च विद्धापि दशमीसंयुता तिथिः। तिथिक्षये तु सेनानीर्न वृद्धौ तु कथंचन। इति–विहीनशल्यापि विवर्जनीया यद्यग्रतो वृद्धिमुपैति पक्षे। इति हेमाद्र्युदाहृतस्कांदाद्येकवाक्यतया तिथिक्षये एव विद्धाभ्यनुज्ञापकत्वेनोपपन्नत्वात् पक्षहानिसंपादकशीघ्रगामिचंद्रे इत्यर्थक–पक्षहानौ स्थिते सोमे इत्येतस्मात्सोमहानिपक्षे इत्यर्थस्य कथमप्यलाभेन कृष्णपक्षपरत्वस्य वक्तुमशक्यत्वात् वैष्णवानां कुत्रापि विद्धाभ्यनुज्ञानाभावेन नैवोपोष्यं वैष्णवेनेत्यस्य संकोचासंभवादिति चिंत्यैव। अतएव द्वादशी दशमीयुक्ता यत्र शास्त्रे प्रतिष्ठिता। न तच्छास्त्रमहं मन्ये यदि ब्रह्मा स्वयं वदेत्। वरमेकादशीत्यागो न कार्या दशमीयुता। इति ब्रह्मवैवर्तादिवाक्यानि संगच्छंते।न लाभेपि प्रवेशिनीमित्यस्य सर्वत्र स्मार्तविषयत्वस्वीकारस्तु–एकादशी यदा विद्धा द्वादशी च क्षयं गता। दशमीमिश्रिता तत्र उपोष्या मुनिसत्तम। इति कालादर्शोदाहृतवायुपुराणस्थ–सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः। प्रातर्भवतु मावा भूद्यतो नित्यमुपोषणं। इति कालादर्शमदनरत्नोदाहृतऋष्यशृंगस्य–पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी। एका-

दशीं तु कुर्वीत क्षीयते द्वादशी यदि । इति हेमाद्रिमाधवोदाहृतऋ-ष्यशृंगवाक्यस्य–अविद्धानि निषिद्धैश्चेन्न लभ्यंते दिनानि तु । मुहूर्तैः पंचभिर्विद्धा ग्राह्यैवैकादशी तिथिः । इति आचार्यचूडामणिप्रभृतिगौडैरप्युदाहृतस्य चादर्शनमूलक इत्युपेक्ष्य एव । कस्तर्हि उदाहृतकौर्मस्य विषय इति चेत्–एकादशीमुपोष्यैव द्वादशीमथवा पुनः।विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित्। इत्यादि सौरधर्मोत्तरवाक्यानां–पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं दशमीविद्धा ह्युपोष्यैकादशी तिथिः । इत्याद्यनेकवाक्य।विरोधार्थमननुज्ञातविद्धापरत्वस्य हेमाद्र्यादिभिर्व्यवस्थापितत्वात्तत्समानार्थकं प्रथमवाक्यं तद्विषयमेव कुर्यादलाभे संयुक्तामित्येतदपि पूर्वोक्तरीत्या वैष्णवविषयत्वासंभवात् । आदित्योदयवेलाया आरभ्य षष्टिनाडिका । संकीर्णैकादशी नाम त्याज्या धर्मलेप्सुभिः । उदयोत्तरविद्धा तु दशम्यैकादशी यदि । दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः । इत्यादिगारुडकादिवचनानि काम्यैकादशीविषयाणीति हेमाद्र्यादिभिः सिद्धांतितत्वात्फलकामस्मार्तविषयकमेवेति सिद्धा सर्ववाक्यानामेकवाक्यतेति विपश्चितो विदांकुर्वंत्विति दिक् । एतेन यत्तु माधवेन शुद्धाधिकावत् विद्धाधिकायामपि द्वादश्यनाधिक्ये-एकादशी त्रिवृद्धा चेच्छुक्ले कृष्णे विशेषतः । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही । इति प्रचेतोवाक्याद्गृहियत्योर्व्यवस्थेत्युक्तं तत्प्रचेतोवाक्यस्यापि संपूर्णैकादशीत्यादिवच्छुद्धाविषयत्वस्यैव युक्तत्वादयुक्तमिति कालतत्वविवेचनोक्तं दूषणं परास्तं । एकादशी यदेति वायुपुराण–पूर्वविद्धा न कर्तव्येति ऋष्यशृंगवचनदर्शनाभावप्रयुक्तत्वात् शुक्ले कृष्णे इत्यनेन पक्षद्वयसंग्रहे शुद्धाविद्धोभयसंग्राहकाविशेषत इति पदयुक्तस्य शुद्धामात्रविषयत्वस्य वक्तुमशक्यत्वाच्च । यत्तु व्रतार्के माधवाद्युक्तिरयुक्तेति विद्धैकादशीमात्रे किंचिदुच्यत इत्युक्तं तत्र माधवे दूषणोद्भावनं माधवार्थाज्ञानमूलकमेव । किंचिदुच्यते इत्यादिकं तु–पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । इत्यादि ऋष्यशृंगादिवाक्य–तद्व्यवस्थापक–हेमाद्रिमाधवार्थादर्शनमूलकत्वात् दशमीविद्धैकादशी द्वादश्यां किंचिदस्ति रात्रिशेषे च त्रयोदशी तदा यतिभिरुत्तरा गृहिभिः

पूर्वेति स्मृत्यर्थसार–द्वादशीहानियुक्तायां विद्धाधिकायां गृहि-यत्योर्व्यवस्थेति **कालादर्शनिर्णयामृत**विरुद्धत्वाच्च यत्किंचिदेव । यदपि **मदनरत्ने कालतत्त्वविवेचने** च पुत्रवद्भिर्गृहिभिरपि परा कार्या । पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः । इत्यादि**ऋष्यशृंगा**दिवचनानि तानि विद्धाधिकातिरिक्तविषयाणि । पूर्वोदाहृतवचनविरोधादित्युक्तं तदप्ययुक्तं । यत्यादिविषयकैः–एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । इत्यादिभिः पारणाह इत्यादेर्यथाकथंचित्संकोचकल्पनेऽपि विद्धाधिकामात्रविषये अविद्धानीत्यस्य तद्विषयत्वस्य वक्तुमशक्यत्वात् । नच **हेमाद्रिमाधव**विरोधेपि अरुणोदयमारभ्य मुहूर्तपंचककल्पनया विद्धानधिकाविषयमेवेदमिति वदता तद्विषयत्वं वक्तुं शक्यमिति वाच्यं । वैष्णवानां कुत्रापि विद्धाभ्यनुज्ञानाभावेन स्मार्तमात्रविषयकमेवेदमित्यस्यैव युक्तत्वेनारुणोदयमारभ्य तत्कल्पनाया असंभवात् । एवमपि तत्कल्पनेन–तदर्थविद्धान्यन्यानीत्यग्रिमवाक्यस्यासंगत्यापत्तेश्च । अपि च उत्तरदिने ग्राह्यतिथिलाभे एव पूर्वानिषेधप्रवृत्तिरित्येव स्वीकार्यं । अन्यथा प्रधानलोपापत्तेः । ततश्च पूर्वविद्धा न कर्तव्येत्यादि **ऋष्यशृंगा**दिवाक्यस्य–एकादशी दिशाविद्धा द्वादशी च क्षयं गता । दशमीमिश्रिता तत्र उपोष्या मुनिसत्तम । इति **वायुपुराण**स्य च विद्धाधिकामात्रविषयत्वमनिच्छद्भिरपि स्वीकार्यमिति तद्विरोधस्य स्पष्टत्वादिति दिक् ।

गृहस्थस्यापि यदा—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता । उपवासः कृतस्तस्यां महापातकनाशनः । द्वादश्यां तु यदा भूप दिनक्षयतिथिर्भवेत् । तदोपवासः कर्तव्यो विष्णुसायुज्यमिच्छता । इत्यादिवाक्यविहितकाम्योपवासचिकीर्षा तदा पूर्वदिने नित्योपवासं कृत्वोत्तरत्रापि भवत्येव । तत्रापि–एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र्यहस्पृगहोरात्रं नोपोष्यं तत्सुतार्थिभिः । इत्यादि**पाद्मा**दिवचनैः पुत्रवत उपवासनिषेधो नित्योपवासविषयः । एतेन विद्धाधिकन्यूनद्वादशिका तु सकामानां पूर्वा निष्कामानां परेति **भट्टोजीदी**-

क्षितोक्तिरुपेक्ष्या । उदाहृतवाक्यवैपरीत्यादिति बोध्यं । या तु विद्धाधिकाधिकद्वादशिका सा सर्वैरुत्तरैव कार्या । तदाह हेमाद्रौ नारदः—द्वादश्यैकादशी यत्र द्वादशी परतोपि च । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदं । हेमाद्रौ भविष्यत्पुराणं—तृतीयेऽहनि संप्राप्ते द्वादशी यदि दृश्यते । द्वितीयैकादशीं कुर्यात्प्रथमां तु विवर्जयेत् । द्वादश्यैकादशी युक्ता द्वादशी परतो यदि । द्वादशीमिश्रितोपोष्या तिथिरेकादशी तदा । द्वादश्यैकादशी यत्र द्वादशी परतो भवेत् । तत्रोपोष्या द्वितीया तु द्वादश्यां चैव पारणं । इति ।

तदेवं वचनव्यवस्थापकशिरोमणिहेमाद्रिमाधवयोरैकमत्यप्रदर्शनपरिष्कारपूर्वकं अष्टादशस्वपि भेदेषु निर्णीताया एकादश्याः संक्षेपतोऽयं निर्णयसंग्रहः । शुद्धसमाभेदत्रये शुद्धन्यूनाभेदत्रये च सर्वेषामेकादश्यामेवोपवासः । शुद्धा यदा समा हीना समक्षीणाधिकोत्तरा । एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि । इति स्कांदात् शुद्धाधिकायां द्वादश्याः समत्वे न्यूनत्वे च गृहियत्योर्व्यवस्था । संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही । इति कौर्मात् । पुनः प्रभातसमये घटिकैका यदा भवेत् । अत्रोपवासो विहितो वनस्थस्य यतेस्तथा । विधवायाश्च तत्रैव परतो द्वादशी न चेत् । इति गारुडाच्च । द्वादश्याधिक्ये तु सर्वेषां परत्रैव ।—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या परा पुण्या परतो द्वादशी यदि । इति गारुडात् विद्धसमायां द्वादश्याः समत्वे न्यूनत्वे च सर्वेषां विद्धायामेव । यदार्कोदयमात्रापि द्वादशी त्वपरेऽहनि । त्रयोदश्यां तदा कार्या दशमीशेषसंयुता । इति वृद्धवसिष्ठात् । एकादशी दिशाविद्धा परतो नच वर्धते । यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः । इति पाद्मात् । नच वर्धत इत्यनेन एकादश्याः समत्वसूचनात् द्वादश्या एव क्षयः परिशेषात् । द्वादश्याधिक्ये तु सर्वेषां द्वादश्यामेव—एकादशी दिशाविद्धा द्वादश्यां न प्रतीयते । द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत् । उपोष्या द्वादशी शुद्धा सर्वैरेव न संशयः । इति बृहन्नारदीयात् विद्धन्यूनायां द्वादश्याः समत्वे न्यूनत्वे च पुत्रवद्गृहिणानां सर्वेषां विद्धायामेव । दशमीशेषसंयुक्ता

नोपोष्यैकादशी तिथिः । एकादश्यां रात्रिशेषे द्वादशी चेन्न लभ्यते । इति **नारदीयात्** । पुत्रवतां तु अत्रापि द्वादश्यामेव— एकादश्यां यदा ब्रह्मन्दिनक्षयतिथिर्भवेत् । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । इति **गोभिलीयात्** एकादश्यामेव वा किंचिद्भक्षयित्वोपवासः कार्यः । उपवासनिषेधे तु भक्ष्यं किंचित्प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलं लभेत् । इति **वायवीयात्** । द्वादश्याधिक्ये तु सर्वेषां द्वादश्यामेव । उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् । निर्गता चेत्त्रयोदश्यां कला वा द्विकलापि वा । इति **नारदीयात्** । **बृहन्नारदीये** विद्धायां द्वादशीवृद्धौ सर्वेषां द्वादश्यामेव विधानाच्च । विद्धाधिकायां द्वादशीसाम्ये उत्तरत्रैव सर्वेषां । द्वादश्येकादशी यत्र संगता त्रिदशाधिप । तामुपोष्य ततः कुर्यात्त्रयोदश्यां तु पारणं । इति **नारदीयात्** । दशमीशेषसंयुक्ता यदि वृद्धिमती भवेत् । तदोपोष्या द्वितीया स्यात्त्रयोदश्यां तु पारणं । इति **स्कांदाच्च** । विद्धाधिकायां द्वादश्यां न्यूनत्वे एव विद्धाभ्यनुज्ञानात् द्वादशीसाम्ये विद्धाभ्यनुज्ञानाभावात् उदयकालिकद्वादशीयुक्तैकादश्या एवोपवासे मुख्यत्वाच्चेति दिक् ।

विद्धाधिकायां द्वादशीन्यूनत्वरूपक्षये गृहिणां पूर्वत्रैव । पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदि । इति **ऋष्यशृंगवाक्यात्** पंचमुहूर्ताधिकदशमीविद्धा तु त्याज्यैव । मुहूर्तैः पंचभिर्विद्धेति नियमात् यतीनामुत्तरत्रैव । एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति । इति **नारदीयात्** । कलाप्येकादशी यत्र द्वादश्यनुगता भवेत् । दिनक्षयेऽपि सा पुण्या यतीनामुत्तमा तिथिः । इति **हेमाद्र्युदाहृतवचनाच्च** विद्धायामुभयाधिक्ये उत्तरैव सर्वेषां । द्वादश्यैकादशी यत्र द्वादशी परतोऽपि च । द्वादश्यां पारणं कुर्यात्क्रतुकोटिफलं लभेत् । इति **नारदीयादि**ति । यानि तु दशमीशेषसंयुक्तां यः करोति विमूढधीः । एकादशीफलं तस्य न स्याद्द्वादशवार्षिकं । इत्येवमादीनि दशमीविद्धानिषेधकानि **ब्रह्मवैवर्तादि**वचनानि तानि या विद्धोपोष्यत्वेनोक्ता

त्रयोदश्यां न तत्कुर्याद्द्वादशद्वादशीक्षयात् । एवमादित्रयोदशीपारणनिषेधकानि कूर्मपुराणादिवचनानि तानि यस्यां त्रयोदश्यां वचनांतरेण पारणं पूर्वमुक्तं तद्व्यतिरिक्तविषयाणीति बोध्यं । इति संक्षेपः ।

**अथैकादशीमहिमा** । तत्र **हेमाद्रौ नारदीयपुराणे वसिष्ठः**-एकादशीसमुत्थेन वह्निना पातकेंधनं । भस्मतां याति राजेंद्र अपि जन्मशतोद्भवं । नेदृशं पावनं किंचिन्नराणां भूप विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदं । तावत्पापानि देहेस्मिंस्तिष्ठंति मनुजाधिप । यावन्नोपवसेज्जंतुः पद्मनाभदिनं शुभं । अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हति षोडशीम् । एकादशेंद्रियैः पापं यत्कृतं भवति प्रभो । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् । एकादशीसमं किंचित्पापत्राणं न विद्यते । स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी । सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी । न गंगा न गया भूप न काशी न च पुष्करं । न चापि कौरवं क्षेत्रं न रेवा नच देविका । यमुना चंद्रभागा च तुल्या भूप हरेर्दिनात् । व्याजेनापि कृता राजन्न दर्शयति पातकं । अनायासेन राजेंद्र प्राप्यते वैष्णवं पदं । चिंतामणिसमा ह्येषा ह्यथवापि निधेः समा । संकल्पपादपप्रख्या वेदवाक्योपमा तथा । इति । **हेमाद्रौ स्कांदे**-अभोज्यभोजनाज्जातमगम्यागमनाच्च यत् । अयाज्ययाजनाच्चैव अभक्ष्याणां च भक्षणात् । अस्पृश्यस्पर्शनाद्यच्च परेषां निंदनाच्च यत् । आत्मसंस्तवनाद्यच्च पारदार्यकृतं च यत् । विहिताकरणाद्यच्च परवित्तापहारतः । ज्ञानाज्ञानकृतं यच्च पातकं चोपपातकं । तत्सर्वं विलयं याति एकादश्यामुपोषणात् । इति । अस्यामेकादश्यां पक्षद्वयेपि अष्टवर्षाधिकवयस्कैरशीतेर्न्यूनवयस्कैश्च सर्वैरपि भोजनं न कार्यं । तदाह **हेमाद्रौ नारदपुराणे**-अष्टवर्षाधिको मर्त्यो ह्यशीतिर्नहि पूर्यते । यो भुंक्ते मामके राष्ट्रे विष्णोरहनि पापभाक् । स मे वध्यश्च दंड्यश्च निर्वास्यो देशतः

---

१ 'याजनाद्यच्च'.

स मे। हेमाद्रौ विष्णुस्मृतिः—एकादश्यां न भुंजीत कदाचिदपि मानवः। हेमाद्रौ देवलः—न शंखेन पिबेत्तोयं न खादेत्कूर्मसूकरौ। एकादश्यां न भुंजीत पक्षयोरुभयोरपि। हेमाद्रौ नारदीयं—यानि कानि च पापानि ब्रह्महत्यासमानि च। अन्नमाश्रित्य तिष्ठंति संप्राते हरिवासरे। तानि पापान्यवाप्नोति भुंजानो हरिवासरे। रटंतीह पुराणानि भूयोभूयो वरानने। न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे। हेमाद्रौ स्कंदपुराणे—मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा। एकादश्यां तु भुंजानो विष्णुलोकाच्च्युतो भवेत्। इति।

विधवायास्तु दोषविशेषमाह हेमाद्रौ कात्यायनः। विधवा या भवेन्नारी भुंजीतैकादशीदिने। तस्यास्तु सुकृतं नश्येद्ब्रह्महत्या दिनेदिने। इति। हेमाद्रौ नारदीयं—एकादश्यां विना रंडा यतिश्च सुमहामुने। पच्यते ह्यंधतामिस्रे यावदाभूतसंप्लवं। हेमाद्रौ अग्निपुराणे—गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैवच। एकादश्यां न भुंजीत पक्षयोरुभयोरपि। एवमादिवाक्येषु पर्युदासाश्रयणकारणव्रतादिशब्दसामानाधिकरण्याभावात्। न खादेत्कूर्मसूकरावित्यादिनिश्चितनिषेधसाहचर्यात् नञः प्रधानाख्यातान्वयत्यागे बीजाभावाच्च निषेधपरत्वमेव। अतएव तस्मात्स्वतंत्रनञर्थविधिपरमेवमादिवचनमिति मतं समीचीनमिति हेमाद्रिसिद्धांतोपि। अन्नशब्दस्य अन प्राणने इति धातोः कृवृजृसिद्रुपन्यनिस्वपिभ्यो निदिति सूत्रेण नप्रत्यये निष्पन्नत्वात्। अन्नं ओदन इति वृत्तिकारैर्विवरणात् भिःसा स्त्री भक्तमंधोन्नमित्यमरात् अन्नं भक्ते च भुक्ते चेति मेदिनीकोशादपि ओदने एव रूढत्वात्। कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः। अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकं। तिलसक्तुकणादीनां मृगीमुद्रा प्रमाणतः। इति सिद्धांतशेखरवाक्येषु भक्ष्यादीनां पृथगुपादानाच्च ओदन एवान्नपदवाच्यः। भोजननिंदापरेषु उत्तरवाक्येष्वपि—सतांबूलमतांबूलं सभोजनमभोजनं। साहारं च निराहारं चतुर्विधमुपोषणं। यावत्कृताह्निको न स्याद्यावन्नार्चयते हरिं। गृही तांबूलहीनः स्यात्तत्सतांबूलमुच्यते। पूजयित्वाच्युतं पूर्वं पूर्णाभुक्त्या भुनक्ति यः। भद्राभुक्त्या पुनर्भुंक्ते तत्सभोजनमुच्यते। पूर्वदिने

दशमीमध्ये एव भुक्त्वा द्वितीयदिने एकादशीमतिक्रम्य द्वादश्यां प्राप्तायां पुनर्भुंक्ते इत्यर्थः । तृणधान्याशनं मूलपयसाज्येन वा फलैः । हरेरह्न्युपवासं च तत्साहारमुदाहृतं । यदेतै रहितं शुद्धमुपायैः समुपोषणं । अतांबूलमनाहारमभोजनमतो हितं । इति हेमाद्रौ भविष्यत्पुराणद्वादशीकल्पवाक्येषु भुजिविशेषस्याभ्यनुज्ञानात् । मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे । नत्वेव भोजनं कैश्चिदेकादश्यां बुधैः स्मृतं । इति नारदीये भोजनविशेषस्यैव सर्वथा निषेधात् फलादिभक्षणे लोकेपि भोजनशब्दप्रयोगाभावात् । शयने च मदुत्थाने मत्पार्श्वपरिवर्तने । नरो मूलफलाहारी हृदि शल्यं समार्पयेत् । इति कालविशेषे एव निंदातिशयश्रवणाच्च ओदनकर्मकभोजननिंदैवाध्यवसीयत इति तत्सर्वथा सर्वैर्वर्जनीयं । यत्तु कालतत्वविवेचने कृष्णाविद्धैकादश्यादिषु व्रतरूपोपवासनिषेधे भोजननिषेधवशाच्च सकलादनीयवर्जने प्राप्ते—उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् । इति वचनेन फलादिभक्षणविधानादौत्सर्गिकस्य भोजननिषेधस्य सकलादनीयाभ्यवहरणविषयतावसीयते । एतद्वचनवशादपि व्रतविध्यतिरिक्तः सर्वपुरुषसाधारणः सर्वैकादशीसाधारणश्च निषेधोऽवश्यमंगीकरणीयः । अन्यथा संक्रांतिरविवारादिष्विव उपवासनिषेधेपि भोजनस्यैव संभवात्किंचिद्भक्षणविधानस्यानपेक्षितत्वादनुपपत्तेः । अनपेक्षायामपि विधौ संक्रांत्यादावपि तदापत्तेः । सति तु निषेधे तत्परिपालनाय प्रवृत्तस्य निवृत्तेरपि संकल्पाविनाभावस्य प्रजापतिव्रतनये उक्तत्वात् ।इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतं। विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्जितः । इति वचनाद्विशेषनियमरहितभोजनद्वयवर्जनसंकल्परूपनित्यव्रतस्याप्यनुषंगाप्रसक्तेरुपवासनिषेधातिक्रमशंकानिवृत्तये युक्तः किंचिद्भक्षणविधिः । अतएव तस्यैवोत्तरार्धे—न दुष्यत्युपवासेन उपवासफलं लभेत् । इति उपवासेन निषेधेऽनुष्ठीयमाने आनुषंगिकनित्यव्रतरूपतदनुष्ठानेन निषेधातिक्रमाद्यो दोषः प्रसक्तस्तं न प्राप्नोति । उपवासफलं भोजननिवृत्तिरूपनिषेधफलं च प्रत्यवायपरिहाररूपं लभेदित्यर्थः । ननु

त्रुपवासप्राप्तेरेवाभावात्प्राप्तौ वा न दुष्यतीत्येतद्विरोधादित्यादिना महता क्लेशेन भोजननिषेधस्य सर्वादनीयाभ्यवहरणविषयत्वं साधितं । तत्र तावद्भोजननिषेधस्य सकलादनीयाभ्यवहरणविषयत्वसिद्धौ फलादिभक्षणविधानं अस्माच्च विधानान्निषेधस्य सर्वाभ्यवहरणविषयत्वमित्यन्योन्याश्रयः । पूर्वदिने फलादिभक्षणेन निषेधपरिपालमुत्तरदिने व्रतमित्युत्तरग्रंथविरोधश्च स्पष्टः । संक्रांत्यादाविव भोजनापादनं तु संक्रांत्याद्युपवासस्य केवलकाम्यत्वेन तद्विधिः पुत्रवतां निषेधं पर्यालोच्य पुत्रवद्भिन्नमेवाधिकरोतीति केवलं फलेच्छयैव तेषां प्रसक्तिः पर्युदस्तेति तेषां भोजनं युक्तं । प्रकृते संकल्पाद्यंगसहितसर्वभोगवर्जनरूपोपवासे निषिद्धेऽपि भोजनस्य—मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे । नत्वेव भोजनं कैश्चिदेकादश्यां बुधैः स्मृतं । भुक्त्वा चांद्रायणं चरेदित्याद्यनेकवाक्यैर्निषिद्धत्वेनानुचितमेव । पक्षद्वयेपि सर्वेषां भोजनमात्रवर्जनं निषेधपरिपालनार्थमिति हेमाद्रिपक्षद्वयेपि भोजनवर्जनमात्रं वक्ष्यमाणेतिकर्तव्यताशून्यमेकादश्यां सर्वैः कार्यमिति मदनरत्नविरोधाच्च । अतएव किंचिद्भक्षणविधानानुपपत्तिरपि परास्ता । सर्वभोगवर्जनरूपोपवासे निषिद्धे तस्यावश्यकत्वात् । अतएव संक्रांत्यादौ किंचिद्भक्षापादनं निरस्तं । अत्यावश्यक उपवासनिषेधे विहितस्य किंचिद्भक्षस्य तत्र प्रसक्तेर्दूरापास्तत्वात् । निवृत्तेः संकल्पव्याप्यत्वादिस्वीकारेण किंचिद्भक्षणविधेर्युक्तत्वोक्तिस्तु निवृत्तेः संकल्पव्याप्यत्वस्य कलंजभक्षणनिवृत्त्यादौ व्यभिचारस्य स्पष्टत्वात्संकल्पशून्यभोजननिषेधपरिपालनार्थ प्रवृत्तस्य संकल्पांगकनित्यव्रतस्यानुषंगात्प्रसक्तेः खपुष्पायमाणा उपवासनिषेधातिक्रमशंकोत्थापकत्वासंभवेनायुक्तैव । विशेषनियमाशक्त इति वाक्यप्रतिपादितात्यावश्यकनित्यव्रतस्यापि भोजननिषेधे एव पर्यवसानेन तस्य च सर्वेषां नित्यत्वेन तत्रोपवासनिषेधविषयत्वासंभवाच्च । अतएव व्रताकरणे चांद्रायणं चरेदिति प्रायश्चित्तमिति माधवः । भोजने इदं प्रायश्चित्तमिति मदनरत्नश्च संगच्छते । अपिच यत्सत्वं विना यदनुपपन्नं यस्मिन्नाक्षिप्तेऽवश्यमुपपद्यते तस्यैव तदाक्षेपकत्वात् । प्रकृते खंडतिथौ व्रतभोजननिषेधयोर्दिनभेदं वदतां भवतां मते यदोत्तरदिने

उभयप्रसक्तावपि सर्वभोगवर्जनरूपोपवासनिषेधस्य चंदनाद्युपभोगेनापि संपादनसंभवेन भोजननिषेधस्य सर्वाभ्यवहरणविषयत्वेपि किंचिद्भक्षणस्य वैयर्थ्याच्च । पूर्वदिने निषेधपरिपालनार्थं प्रवृत्तस्याप्यानुषंगिकोपवासस्य दुर्वारत्वेनोपवासनिषेधातिक्रमस्यावश्यंभावाच्च । अतएव भोजननिषेधव्याप्यनित्यव्रतेन उपवासनिषेधातिक्रमशंकापि निरस्ता । सर्वभोगवर्जनरूपोपवासविषयकनिषेधस्य अत्यावश्यकभोजनवर्जनरूपनित्योपवासविषयत्वस्यैवाभावात् । उपवासफलप्रत्यवायपरिहारलाभोक्तिस्तु यद्यपि मुख्योपवासे निषिद्धे किंचिद्भक्षणेन उपवासविधानादुचिता तथापि कृष्णाविद्धादावुपवासप्राप्तेरेवाभावादिति भवदुक्तग्रंथविरुद्धैव । भवन्मते सर्वाभ्यवहरणविषयकभोजननिषेधस्य तु तत्राविहितकिंचिद्भक्षणेनातिक्रमात्तज्जनितप्रत्यवायस्यैवावश्यकत्वेन तज्जनितप्रत्यवायपरिहारोत्प्रेक्षानुचितैव । नच चतुर्थपादे उपवासशब्देन भोजननिवृत्तिरेव गृह्यत इति न दोष इति वाच्यं । प्रथमतृतीययोस्तदापत्तौ अर्थासंगतेः पापक्षयरूपफलसाधकोपवासप्राप्तेर्न दुष्यतीत्येतद्विरोधोद्भावनेनापह्नवस्तु तादृशस्थलेऽधिकारिविशेषं प्रति किंचिद्भक्षणेनैवोपवासविधानात् । तस्मादेव पापक्षयरूपस्यापि फलस्य उपवासफलं लभेदित्यनेन बोधनान्निषेधविषयोपवासांतराननुष्ठानेन निषेधातिक्रमाद्दोषस्तु परिशेषादेव नास्तीति न दुष्यतीत्यनेन बोध्यत इति विरोधस्यैवाभावादयुक्तः । तस्मान्नोपवसेदित्यादिनिषेधेन नोपवासादिशब्दवाच्यं सामान्यं निषेद्धुं शक्यते । भोजननिवृत्तावपि नारदादिवाक्येषु उपवासशब्दप्रयोगात् तस्यापि निषेधापत्तेः । अविद्धानामलाभे तु पयो दधि फलानि वा । सकृदेवाल्पमश्नीयादुपवासस्त्वसौ भवेत् । इति ऋष्यशृंगवचनेन अलाभस्त्वत्रोपोष्यत्वेन नतु स्वरूपेणेति अविद्धानिनिषिद्धैरिति वाक्ये हेमाद्रिणा सिद्धांतितत्वाद्यत्र यत्र कृष्णाविद्धादावुपवासनिषेधस्तत्र सर्वत्रैव दुग्धादिभक्षणेनोपवासविधानात् । विधिस्पृष्टे निषेधायोगाच्च । अपितु संकल्पाद्यंगकलापसहितसर्वभोगवर्जनरूपोपवासविशेष एव निषिध्यते

इत्येव स्वीकार्यं । तथाच ऋष्यशृंगवाक्यैकवाक्यतापन्नमेव उपवासनिषेधे त्वितिवाक्यमिति तत्सामर्थ्येन भोजननिषेधस्य सर्वाभ्यवहरणविषयत्वसाधनं ऋष्यशृंगवचनविस्मरणमूलं हेमाद्र्यादिसर्वनिबंधविरुद्धमन्योन्याश्रयाद्यनेकदोषग्रस्तमिति विभाव्यतां सूरिभिः । किंच—न शंखेन पिबेत्तोयं न खादेत्कूर्मसूकरौ । इदं व्यर्थं स्यात् । अपिच 'अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्' । इत्येतेषां व्रताविघातकानामपि निषेधविघातकत्वापत्तौ दुग्धादिभक्षणेपि—एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् । इति प्रायश्चित्तापत्तिर्दुर्वारा । इष्टापत्तिस्तु केनचिन्निमित्तेन भक्षितानां नित्यव्रताविघातकानां नित्यव्रतासमर्थकर्तृकनिषेधपरिपालनविघातकत्वस्याभियुक्तसंमतत्वे एव स्यान्नान्यथेति । नच भवन्मते लोकप्रसिद्धभोजनस्यैव निषेधविषयत्वेन फलादिभक्षणस्य तदविषयकत्वेन तत्र—उपवासनिषेधे तु भक्ष्यं किंचित्प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलं लभेत् । इति वचनवैयर्थ्यमिति वाच्यं । सर्वभोगवर्जनरूपोपवासे निषिद्धे प्रत्यवायपरिहारमात्रफलकभोजननिषेधपरिपालनेन पापक्षयाद्यधिकफलकस्योपवासस्य सिद्ध्यभावादुपवासनिषेधाद्भोजनातिरिक्तसकलभोगेऽनुष्ठीयमाने तांबूलादिभक्षणस्योपवासनाशकत्वस्मरणेन व्रतसंकल्पबाध इति संकटे प्राप्ते एकादश्यां श्राद्धप्राप्तौ अवघ्राणवत् येन भक्षितेनोभयसिद्धिस्तादृशमेव किंचिद्भक्षणीयमित्येतद्बोधनार्थत्वेन वाक्यस्य सार्थक्यात् । अतएवोत्तरार्धे—न दुष्यत्युपवासेन उपवासफलं लभेत् । इत्युक्तं उपवासे कृते उपवासनिषेधातिक्रमात्प्रसक्तं दोषं न प्राप्नोति । उपवासफलं संकल्पसिद्धिपापक्षयादि तदपि लभते इति तस्यार्थ इति दिक् । सर्वेषां पक्षद्वयेपि भोजनमात्रवर्जनं निषेधपरिपालनार्थमिति सिद्धांतयतो हेमाद्रेः उपवासनिषेधेपि अशननिवृत्तिरेभिर्वचनैरध्यवसीयत इति कालादर्शस्य पक्षद्वयेपि भोजनवर्जनं सर्वैः कार्यमिति मदनरत्नस्य च लोकप्रसिद्ध एव भोजनशब्दस्यार्थः संमत

सर्वेषां भोजननिवृत्तौ सिद्धायां गृहस्थ इत्यादिवचनं किमर्थं । न च तत उपसंहारार्थत्वान्न वैयर्थ्यमिति शंक्यं । निषेधस्य निवृत्तिफलत्वेन विशेषानपेक्षत्वादुपसंहारानुपपत्तेः । अन्यथा न हिंस्यात्सर्वाभूतानीत्यस्य ब्राह्मणो न हंतव्य इत्यनेनोपसंहारे क्षत्रियादिवधे प्रायश्चित्तविधेर्वैयर्थ्यापत्तेः । एवमप्युपसंहारे वनस्थादीनां भोजननिषेधो न स्यादितिचेन्न । आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नंत एव सिद्ध्यंति नैषां सिद्धिरनश्नतां । यो गृहस्थो न भुंजीत आहिताग्निस्तथैव च । प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः । इत्येवमादिवचनपर्यालोचनया मानवपदसंकोचपरिहारार्थत्वेन तस्य सार्थक्यादिति दिक् ।

एकादशीव्रतं द्विविधं नित्यं काम्यं च । तत्र नित्यं पूर्वोक्तैर्गृहस्थव्यतिरिक्तैः सर्वैः पक्षद्वयेपि कर्तव्यं । तदाह **हेमाद्रौ देवलः**—एकादश्यां न भुंजीत पक्षयोरुभयोरपि । वनस्थयतिधर्मोयं शुक्लामेव सदा गृही । उपवसेदिति शेषः । **हेमाद्रौ कात्यायनः**—अष्टवर्षाधिको मर्त्यो ह्यपूर्णाशीतिवत्सरः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि । सर्वनियमानामुपनयनोत्तरकालत्वस्मरणादष्टवर्षपर्यंतमुपनीतस्याप्यनधिकारोऽष्टवर्षाधिकशब्देनोक्त इति हेमाद्रिः । **हेमाद्रौ भविष्ये**—एकादश्यां न भुंजीत पक्षयोरुभयोरपि । ब्रह्मचारी च नारी च शुक्लामेव सदा गृही । नारी विधवा । पतिमत्यास्तु विशेषस्य वक्ष्यमाणत्वात् । **हेमाद्रौ मात्स्यभविष्ययोः**—एकादश्यां निराहारो यो भुंक्ते द्वादशीतिथौ । शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत् । **हेमाद्रावाग्नेये**—एकादश्यां न भुंजीत व्रतमेतद्धि वैष्णवं । **हेमाद्रौ नारदः**—नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे तु कर्तव्यमेकादश्यामुपोषणं । सपुत्रश्च सभार्यश्च स्वजनैर्भक्तिसंयुतः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि । इति । **हेमाद्रौ गारुडे**—उपोष्यैकादशी नित्यं पक्षोरुभयोरपि । **सनत्कुमारप्रोक्ते**—एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः । एकादश्यामुपवसेन्न कदाचिदतिक्रमेत् । न करोति हि यो मूढ एकादश्यामुपोषणं । स नरो नरकं याति रौरवं तमसावृतं । **हेमाद्रौ नारदः**—एकादश्या

भूतसंप्लवं । एषु वाक्येषु सदा, नित्यं नातिक्रमेदिति श्रवणात्पक्षे पक्षे इति वीप्साश्रवणात् अकरणे दोषसंकीर्तनाच्च एकादशीव्रतं नित्यं । अत्र केषुचिद्वाक्येषु न भुंजीतेति श्रूयमाणो नञ् न भोजननिषेधार्थः । किंतु व्रतशब्दधर्मशब्दसामानाधिकरण्यात् नेक्षेतोद्यंतमादित्यमितिवत्पर्युदासवृत्त्या भोजनविरुद्धस्याभोजनसंकल्पस्य प्रतिपादकः । तेनैतैर्वाक्यैरभोजनसंकल्पादीतिकर्तव्यतासहितमुपवासाख्यं व्रतं विधीयते इति सिद्धं ।

ननु तद्व्रतं वैष्णवं महदिति श्रवणाद्वैष्णवानामेवावश्यकं नतु शैवादीनामितिचेन्न । तस्य विष्णुसंबंधकीर्तनमुखेन एकादश्युपवासप्रशंसार्थत्वात् । अतएव—वैष्णवो वाथ शैवो वा कुर्यादेकादशीव्रतम् । इति हेमाद्रौ मात्स्यपुराणं । अपिच शैवानामप्यावश्यकं । तदाह हेमाद्रौ विष्णुधर्मोत्तरं—लिंगार्चनं रुद्रजपो व्रतं शिवदिनत्रये । वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा । इत्युक्त्वोक्तं एकादश्यष्टमी चैव पक्षयोश्च चतुर्दशी । शिवस्य तिथयः प्रोक्ता मुनिभिः शौनकादिभिः । तासामाद्यामुपवसेद्दिवा नाद्यात्तथांत्ययोः । इति । हेमाद्रौ सौरं—वैष्णवो वाथ शैवो वा सौरोप्येतत्समाचरेत् । इति । गृहस्थैस्तु शुक्लायामेव संकल्पादीतिकर्तव्यतासहितं व्रतं कर्तव्यं शयनीबोधिनीमध्यगतायां कृष्णायामपि । तदपि पुत्ररहितैरेव । तदाह हेमाद्रौ भविष्योत्तरे—युधिष्ठिरं प्रति कृष्णः—यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया । शुक्ला गृहस्थैः कर्तव्या भोगसंतानवर्धिनी । मुमुक्षुभिस्तथा कृष्णा तेन तेनोपदर्शिता । हेमाद्रौ स्मृत्यंतरं—शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन । हेमाद्रौ भविष्यं—नित्या शुक्ला तदा ख्याता कृष्णा नैमित्तिकी भवेत् । शुक्ला वाथ सदा कार्या न त्याज्या संकटेष्वपि । शुक्लायां यस्तु वै भुंक्ते स भुंक्ते किल्बिषं नरः । इति । निमित्तमिह शयनीबोधिनीमध्यवर्तित्वमिति हेमाद्रिमाधवौ । पुत्राभावो निमित्तमिति हेमाद्रौ मतांतरं ।

ननु कृष्णैकादश्युपवासनिषेधानां शयनीबोधिनीवाक्यविहितोपवासव्यतिरिक्तविषयत्वेनोपपत्तेः पुत्रवतोपि शयनीबोधिनीमध्यवर्तिकृष्णैकादश्यां व्रते किं बाधकमितिचेन्न । ऐरं

कृत्वोद्वेयमित्यस्य गिरापदस्थाने इरापदविधिपरत्ववत् शुक्लामेव सदा गृहीत्यनेन सर्वस्याः कृष्णाया व्यावर्तितत्वाच्छयनी बोधिनीत्यनेन तन्मध्यगताया एव कृष्णाया विधानात् नान्याकृष्णेत्यस्य नित्यानुवादत्वाद्यस्यां कृष्णैकादश्यां गृहस्थसामान्यस्योपवासः प्राप्तस्तस्यामेव पुत्रवतो गृहस्थविशेषस्य पुत्री नोपवसेद्गृहीत्यादिनिषेधस्योपपत्तेः। नच तथापि प्रतिषेधः। प्रदेशेऽनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादित्यत्र दशमीसामान्यरूपस्यापि विधेर्विशेषरूपेणापि निषेधेनोपजीव्यत्वात्समबलत्वमिति सिद्धांतितत्वेन विकल्प एव स्यादिति वाच्यं। संक्रांत्यामुपवासं च कृष्णैकादशिवासरे। चंद्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही। इत्यादिवाक्येषु नानुयाजेष्वितिवदत्र तदधिकरणसिद्धांतपर्युदासाश्रयणेन नञः पुत्रवद्गृहिपदान्वयेन पुत्रवद्गृहिभिन्नः संक्रांतिरविवारग्रहणकृष्णैकादश्यादिषूपवासं कुर्यादित्यर्थाश्रयणान्न विकल्पशंकापि। तस्माद्विकल्पभयात्पर्युदास एवायं नानुयाजेषु ये यजामहं करोतीतिवदिति हेमाद्रिसिद्धांतान्न संकल्पादीतिकर्तव्यतासहितस्यैव नित्योपवासस्यायं विचारः। भोजननिवृत्तिमात्रं तु पुत्रवदादिभिरपि सर्वास्वपि कृष्णैकादशीषु कर्तव्यमेव। भोजननिषेधस्य सार्वदिकत्वस्य सर्वसाधारणत्वस्य च सर्वसंमतत्वात्। विशेषनियमाशक्तोऽहोरात्रं भुजिवर्जितः। इत्यादिवचनैरावश्यकनित्यव्रतस्यापि भोजननिवृत्तावेव पर्यवसानबोधनादिति बोध्यम्।

संक्रांत्यादिनिमित्तकमुपवासमाह हेमाद्रिमाधवयोः **संवर्तः**–अमावास्या द्वादशी च संक्रांतिश्च विशेषतः। एताः प्रशस्तास्तिथयो भानुवारस्तथैव च। अत्र स्नानं जपो होमो देवतानां च पूजनं। उपवासस्तथा दानमेकैकं पावनं स्मृतं। अन्यत्र–सप्तवारानुपोष्यैवं सप्तधा संयतेंद्रियः। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति। इति। तन्निषेधमाह हेमाद्रौ **वृद्धवसिष्ठः**–आदित्यवारे संक्रांतावसितैकादशीदिने। व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही। हेमाद्रौ कौर्मे–द्वौ तिथ्यंतावेकवारे यस्मिन्स स्याद्दिनक्षयः। तस्मिन्स्नानं जपो होमो नोपवासो गृहाश्रमे। अत्र तिथ्यंतद्वयमात्रं प्रतीयते तथापि तृती-

नच वर्धते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या सदा तिथिः । इत्यादि भविष्यादिभिस्तिथ्यंतद्वयरूपे उपवासविधानविरोधापत्तेः । एकस्मिन्सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् । इति वसिष्ठैकवाक्यत्वात् । हेमाद्रौ नारदः—संक्रांत्यामुपवासे तु कृष्णैकादशिवासरे । चंद्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही । एकादश्यां च कृष्णायां संक्रांत्यां च तथा रवौ । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही । हेमाद्रौ गौतमः—आदित्यवारे संक्रांतौ व्यतीपाते दिनक्षये । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही । अयंच पारणोपवासयोर्निषेधस्तत्प्रयुक्तयोरेव नैकादशीनिमित्तकयोः । तदाह हेमाद्रौ जैमिनिः—आदित्येऽहनि संक्रांतौ ग्रहणे सूर्यचंद्रयोः । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही । तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः । नानुषंगकृते ग्राह्यो यतो नित्यमुपोषणं । आदित्यवारादिनिमित्तस्यायं निषेधो न पुनरेकादश्यां आदित्यवाराद्यन्वयनिबंधनोपवासस्य । यत एकादश्यां नित्यमुपोषणमित्यर्थः । कात्यायनोपि—तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः । प्रयुक्तेतरयुक्तस्य न विधिर्न निषेधनं । अतएव हेमाद्रौ सनत्कुमारः—भानुवारेण संयुक्ता तथा संक्रांतिसंयुता । एकादशी सदोपोष्या सर्वसंपत्करी तिथिः । हेमाद्रौ कात्यायनः—व्यतीपातो वैधृतिर्वा एकादश्यां यदा भवेत् । उपोष्या सा महापुण्या पुत्रसंतानवर्धिनी । योपि—श्राद्धं कृत्वा तु यो विप्रो न भुंक्ते पितृसेवितं । हविर्देवा न गृह्णंति कव्यानि पितरस्तथा । इति हेमाद्रौ वचनेन श्राद्धदिने उपवासनिषेधः प्रतीयते । तत्राह हेमाद्रौ याज्ञवल्क्यः—उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवितम् । हेमाद्रौ स्कांदे—यस्मिन्दिने पितुः श्राद्धं मातुर्वाथ भवेद्गुह । तस्मिन्नेव दिने तात भवेदेकादशीव्रतं । अन्यद्वापि व्रतं स्कंद तदा कार्यं च तच्छृणु । न लुप्यते तथा श्राद्धमुपवासोऽथ वा गुह । तदा कृत्वा तु वै श्राद्धं भुक्तशेषं तु यद्भवेत् । तत्सर्वं दक्षिणे पाणौ गृहीत्वान्नं शिखिध्वज । अवजिघ्रत्यनेनार्थस्तेन श्राद्धं शिखिध्वज । पि-

तृणां तृप्तिदं तात व्रतभंगो न विद्यते । यो॒पि—श्राद्धे जन्मदिने चैव संक्रांत्यां राहुसूतके। उपवासं न कुर्वीत यदीच्छेच्छ्रेय आत्मनः । इत्यत्र जन्मदिने उपवासनिषेधः स एकादशीव्यतिरिक्तविषय इति हेमाद्रिः । यदपि—वृद्धिं कृत्वा तु षण्मासान्नोपवासो विधीयते । एतद्गृहीतव्रतविषयमिति प्रांचः। अगृहीतमप्यावश्यकं कार्यमित्यपरे इति हेमाद्रिः ।

ननु ब्रह्मचारिगृहस्थयोरप्युपवासस्वीकारे गृहस्थो ब्रह्मचारी च[1] वानप्रस्थस्ततश्चरेत् । प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः । इति हेमाद्र्युदाहृतवचनविरोध इति चेत् । सप्त ऋषयस्तपसे ये निषेदुः। तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः। तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् । प्रजापतिरकामयत प्रजायेय[2] भूयान्स्यामिति स तपोऽतप्यत । इत्यादौ गृहस्थस्य सतस्तपोनुवादाद्गृहस्थांतरस्यापि तपो युक्तमिति गम्यते । तस्मान्नेदं गृहस्थस्योपवासनिषेधकं । पूर्वामुपवसेद्गृही, शुक्लामेव सदा गृही, इत्यादिवचनविरोधाच्च—तयोर्विशेषैर्विविधैर्व्रतैश्च विधिचोदितैः । वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मना । इत्यादिहेमाद्र्युदाहृतवचनैर्ब्रह्मचारिणोऽपि तपःसंबंधावगमात् , ब्रह्मचारी च नारी चेति वचनविरोधाच्च तस्यापि न निषेधः । हेमाद्रिस्तु प्राणांतिकानशनादिरूपतपोनिषेधपरं वचनं । प्राणाग्निहोत्रलोपेनेति द्वंद्वगर्भस्तत्पुरुषः । इत्थंभूतलक्षणे तृतीया । विहितकर्मोपलक्षणार्थश्चाग्निहोत्रशब्दः । तथाचायमर्थः—यो गृहस्थो ब्रह्मचारी वा प्राणबाधया विहितकर्मबाधया वा तपश्चरति सोवकीर्णिदोषं प्रतिपद्यते इति । यदपि—शरीरं पीड्यते येन शुभेनापि सुकर्मणा । अत्यंतं तन्न कर्तव्यमनायासः स उच्यते । इति तदत्यंतपीडानिवारकं नतु पीडामात्रस्येति । अतएव धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः । तान्निघ्नता किं न हतं रक्षता किं न रक्षितम् । इति, कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । इति वाक्याभ्यां प्राणकर्मणामबाधनीयत्वप्रतिपादनात् वानप्रस्थादेस्तु प्राणाग्निहोत्राद्युपरोधेनापि तपः कुर्वाणस्य नातीव दोष इति सिद्धांतितत्वात् ।

ननु तथापि अस्त्वन्यस्य गृहस्थस्य, आहिताग्नेस्तु न भ-

---

१ 'वा योऽनश्नंश्च तपश्चरेत्'. २ 'प्रजाः सृजेयेति ।'.

वति । आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नंत एव सिद्ध्यंति नैषां सिद्धिरनश्नताम् । इत्यापस्तंबवचनादिति चेन्न । किमनेन आहिताग्नेर्भोजनं विधीयते, उतोपवासः प्रतिषिध्यते । नाद्यः पक्षः । रागप्राप्तभोजने विधिवैयर्थ्यात् । नच शास्त्राननुज्ञातकालेऽनेन भोजनं प्रतिप्रसूयते इति वक्तुं युक्तं । ग्रहणादावपि भोजनापत्तेः । नच तत्र चंद्रसूर्यग्रहे नाद्यादिति निषेधान्न भविष्यतीति चेन्न । अत्रापि–आहिताग्निस्तथैव च । एकादश्यां न भुंजीत इति निषेधस्य जागरूकत्वात् । अस्तु तर्हि विहितप्रतिषिद्धत्वाद्विकल्प इति चेन्न । अश्नंत एव सिध्यंतीति वर्तमानापदेशात्कल्प्यो विधिः । एकादश्यां न भुंजीतेति निषेधस्तु प्रत्यक्ष इति विकल्पासंभवात् । अतएव न द्वितीयोपि । नच तथापि–सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितं । नांतरा भोजनं कुर्यादग्निहोत्रसमो विधिः । इत्येतद्भोजनविधिविरोधो दुष्परिहर इति वाच्यं । रागप्राप्तभोजनस्य सायंप्रातःकालांतरे प्रतिषेधमात्रमनेन क्रियते । प्राङ्मुखोऽन्नानि भुंजीतेति दिङ्नियमवत्सायंप्रातरेवाशनं नांतराल इत्येतावताग्निहोत्रसाम्यस्तुत्युपपत्तेः । ननु भवतु तर्हि नित्यं, काम्यं तु आहिताग्नेर्न भवति साधकाभावादिति चेत् । अत्र हेमाद्रिः । नित्योप्युपवासोऽनेन वारयितुं न शक्यते चेत्कथं काम्यो निवार्येत । काम्यो हि नित्याद्बलीयान् । वाक्यस्य तर्हि का गतिरिति चेत् । यदा क्षीणशक्तेराहिताग्नेरुपवासाद्यनुष्ठानेनाहिताग्निकृत्यविरोधो भवति तथाविधस्याहिताग्नेस्ताभिरेव चोदनाभिः स्मार्तमुपवासाद्यनुष्ठानं निवार्यते, तत्प्रतिपादनार्थमेतद्वाक्यं आहिताग्निरनड्वांश्चेति, आपस्तंबेनापि तथाचात्मनोनुपरोधं कुर्याद्यथा कर्मसु समर्थः स्यादिति प्रक्रम्येदं वचनं पठितं । तस्मादाहिताग्निनाप्यग्निहोत्राद्यबाधेनोपवसितुं शक्यते चेदेकादश्यामुपवसनीयमेवेति सिद्धांतितत्वात् । एतेन यत्तु काम्यस्य नित्याद्बलीयस्त्वान्नित्यस्यैव बाधो नतु काम्यस्येति हेमाद्रिणोक्तं[1] तदयुक्तं । परस्परविरोधे हि तदिति कालतत्त्वविवेचनमुपेक्ष्यं[2] । नित्यस्यैव बाधो नतु काम्यस्येति हेमाद्रिग्रंथस्यैवाभावात् । तावत्पूरणेन दूषणदानस्य हेमाद्रिसिद्धांत-

१ 'स्तुत्युपपत्तेः' । २ विवेचनोद्भावितं दूषणं भित्तिचित्रमिवेति बोध्यं ।

विरोधेनानुचितत्वात् । नच परस्परविरुद्धनित्यकाम्यविषयस्य काम्यो हि नित्याद्बलीयानिति न्यायस्य प्रकृते तयोर्विरोधाभावेपि तेनोपन्यासात्तावत्पूरणेनापि दूषणं युक्तमिति शंक्यं । नित्ये प्रवृत्तिं स्वीकृत्यैव यदा समर्थ आहिताग्निः फलकामनायां सत्यां काम्ये प्रवृत्त्युन्मुखोऽनेन वचनेन निवार्येत इति पूर्वपक्षे कृते परस्परविरोधे प्रबलात्काम्याद्दुर्बलस्य नित्यस्यानेन बाधोऽशक्यश्चेत्कथंनाम काम्यबाधः स्यादित्यभिप्रायेण तदुपन्यासस्य युक्ततरत्वादिति दिक् ।

इदं चैकादशीव्रतं काम्यमपि । तदाह हेमाद्रौ विष्णुरहस्यं–य इच्छेद्विष्णुना वासं श्रुतं संपद्मात्मनः । कौर्मे–य इच्छेद्विष्णुसायुज्यं श्रियं संपत्तिमात्मनः । अनयोरुत्तरार्धं–एकादश्यां न भुंजीत पक्षयोरुभयोरपि । हेमाद्रौ स्कांदं–यदीच्छेद्विपुलान्भोगान्मुक्तिं चात्यंतदुर्लभां । एकादश्यामुपवसेत्पक्षयोरुभयोरपि । माधवीये स्कंदः–पितॄणां गतिमन्विच्छन्कृष्णायां समुपोषयेत् । हेमाद्रौ नारदः–स्वर्गमोक्षप्रदा ह्येषा शरीरारोग्यदायिनी । सुकलत्रप्रदा ह्येषा राजपुत्रप्रदायिनी । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेनेति तपसो विद्यांगत्वावगमात्पारंपर्येण मोक्षार्थत्वमस्तीति मन्यमानेनोक्तं मोक्षप्रदेतीति हेमाद्रिः ।

अस्मिन्काम्यव्रते तत्तत्फलकामः सर्व एवाधिकारी । इदं काम्यव्रतं तु पुत्रवतोपि सर्वकृष्णायामपि भवत्येव । तदाह हेमाद्रौ स्मृत्यंतरं–पुत्रवांश्च सभार्यश्च बंधुयुक्तस्तथैव च । उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवम् । इति गृहिणः पुत्रवतो रुक्मांगदस्योभयैकादश्युपवासस्मरणमुक्तवाक्यपर्यालोचनया काम्यविषयमिति विज्ञेयं । तस्मात् पुत्रवतो गृहस्थस्य न काम्यकृष्णैकादश्युपवासविषयो निषेधः किंतु नित्यैकादश्युपवासविषय इति हेमाद्रिसिद्धांतात् । नैमित्तिककाम्यौ तु गृहस्थस्य कृष्णायामपीति माधवसिद्धांताच्च । वैष्णवानां तु नित्येपि व्रते कृष्णायां पुत्रवतामप्यधिकारः । तदाह हेमाद्रौ नारदः–नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे तु कर्तव्यमेकादश्यामुपोषणं । हेमाद्रौ भविष्यत्पुराणं–एवं ज्ञात्वा सदोपोष्या द्वादशी शुक्लकृष्णजा । तयोर्भेदं न कुर्वीत

भेदनान्नरकं व्रजेत् । द्वादशीशब्देनैकादश्येवोच्यते प्रकरणवशात् । **हेमाद्रौ गारुडं**–शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चन । विशेषं कुरुते यस्तु पितृहा स तु कीर्तितः । **हेमाद्रौ तत्त्वसागरः**–यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा । तुल्ये ते मन्यते यस्तु स हि वैष्णव उच्यते । सर्वेषामिह पापानामाश्रयः स तु कीर्तितः । विवेचयति यो मोहादेकादश्यौ सितासिते । इत्येवमादीनि **हेमाद्रौ कालिकापुराणा**दिवचनानि वैष्णवविषयाणि नतु स्मार्तगृहस्थविषयाणि । शुक्लामेव सदा गृहीत्यादिवचनविरोधात् ।

उपवासस्वरूपमुक्तं **हेमाद्रौ वृद्धवसिष्ठकात्यायनविष्णुधर्मोत्तरेषु**–उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । पापेभ्यः परिवर्जनीयेभ्य उपावृत्तस्य निवृत्तस्य गुणैस्तद्दिनविहितनियमैर्युक्तस्य भोजनादिसकलभोगवर्जनेन यदहोरात्रं संकल्पपूर्वकमवस्थानं स उपवास इत्यर्थः । यत्तु इदं च फलसाधनस्योपवासस्य स्वरूपं, उपवासपदार्थस्तु स्मृतिपुराणव्यवहारे रूढो निराहारावस्थानमात्रमिति **कालतत्त्वविवेचनं** तत्कालादर्शहेमाद्र्यादिसिद्धांतविरुद्धमिति स्पष्टमेव । यत्त्वत्रोपष्टंभकमुक्तं एकादश्यां निराहार इति संकल्पवाक्ये तावदेव प्रतीतिरिति तत्रैव हेमाद्र्याद्यविरोधाय उपलक्षणपरत्वस्यैवोचितत्वात् । अन्यथा भवन्मते काम्योपवासे इदं संकल्पवाक्यं विरुद्धमेव स्यादिति बोध्यम् ।

वर्जनीयान्याह **हेमाद्रौ सुमंतुः**–विहितस्याननुष्ठानमिंद्रियाणामनिग्रहः । निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः । **हारीतः**–पतितपाषंडिनास्तिकादिसंभाषणानृतादिकमुपवासदिने वर्जनीयमिति । आदिशब्देन हिंसेंद्रियचापलादि गृह्यत इति **हेमाद्रिः** । गुणास्तु **विष्णुधर्मोत्तरे** उक्ताः–तज्जप्यजपनं ध्यानं तत्कथाश्रवणादिकं । तदर्चनं च तन्नामकीर्तनश्रवणादयः । उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिः । **विष्णुधर्मेषु**–उपवासी हरिं यस्तु भक्त्या ध्यायति मानवः । तज्जाप्यजापी तत्कर्मरतस्तद्गतमानसः । निष्कामो दैत्यवद्ब्रह्मन्पदमाप्नोत्यसंशयम् । इति ।

अत्र समर्थस्यैवाधिकारः। तदाह हेमाद्रौ ब्रह्मवैवर्ते—एकादशीं विना विप्र न संसाराद्विमोक्षणं। तत्राप्ययं विशेषोस्ति कार्या शक्तिमता च सा। नतु देहं विदुः प्राज्ञाः पीडनीयमिहाग्रहात्। शरीरं पीड्यते येन सुशुद्धेनापि कर्मणा। अत्यंतं तन्न कुर्वीत अनायासः स उच्यते। धर्मसाधनमाद्यं यच्छरीरं बहुपुण्यकृत्। यथाकथंचिन्मौर्ख्यान्न तत्क्षयेदेकहेलया। मूलग्राहेणात्मनो यत्पीडया क्रियते तपः। न स सुखमवाप्नोति न सिद्धिं न परां गतिम्। इति।

नित्यैकादश्युपवासासमर्थेनैकभक्तादिकं कार्यं। तदाह हेमाद्रौ मार्कंडेयः—एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन न निर्द्वादशिको भवेत्। एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत्। पयोमूलफलैर्वापि न निर्द्वादशिको भवेत्। बौधायनोपि—उपवासे त्वशक्तानामशीतेरूर्ध्वजीविनां। एकभक्तादिकं कार्यमाह बौधायनो मुनिः। हेमाद्रौ भविष्यत्पुराणे द्वादशीकल्पे—एकादश्यां प्रभुं विष्णुं समभ्यर्च्य कदाचन। उपोषितेन नक्तेन तथैवायाचितेन च। एकभक्तेन वा तात न निर्द्वादशिको भवेत्। तदेकनियमी नित्यं न सीदति भवार्णवे। कायशक्तिबलादेव न बलाद्धर्ममाचरेत्। उपोषितो वा नक्ती वाऽयाची ह्येकाशनोपि वा। द्विदिनं पूजयेत्तात हरिं संसारपारगं। एकाहारप्रदानेन एकाशनफलं स्मृतम्। अयाचितफलं विद्धि दक्षिणासहितेन च। नक्तस्य च चतुर्गुणं चतुर्गुणमुपोषणं। सदक्षिणं फलं दानाद्व्रतभंगेपि लभ्यते। निर्णयामृते ब्रह्मवैवर्ते—उपवासासमर्थश्चेदेकविप्रं तु भोजयेत्। तावद्धनादि वा दद्याद्भक्त्या तद्द्विगुणं भवेत्। सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान्। कुर्याद्द्वादशसंख्याकान्यथाशक्ति व्रते नरः। इति। हेमाद्रौ व्यासः—हविष्यभोजनं स्नानं सत्यमाहारलाघवं। अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत्।

हविष्यमुक्तं मदनरत्ने भविष्ये—हैमंतिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः। कलायकंगुनीवारा वास्तुकं हिलमोचिका। षष्टिकाः कालशाकं च मूलकं केमुकेतरत्। कंदः

१ 'दिमोक्षणं'.

सैंधवसामुद्रे गव्ये च दधिसर्पिषी । पयोऽनुद्धृतसारं च प
म्रहरीतकी । तिंतिडी जीरकं चैव नागरं नागपिप्पली ।
लवली धात्री फलान्यगुडमैक्षवं । अतैलपक्वं मुनयो हवि
प्रचक्षते । इति । सितास्विन्नं गौडेषु प्रसिद्धो धान्यवि
सच हेमंतोत्पन्न एव नच कालांतरोत्पन्नः । कलायं कुलि
कंगुः कांग इति भाषाप्रसिद्धः । हिलमोचिका गौडेषु हि
इति प्रसिद्धः । पत्रशाकः कालशाकः पर्वतदेशे प्रसिद्धः ।
गौडेषु केंचु इति प्रसिद्धं । मूलकं । कंदः सूरणः । नागरं शु
लवली रायावळीति महाराष्ट्रे हर्फारेवडीति मध्यदेशे प्रसि
अतैलपक्वमित्युक्तानां विशेषणं । **तिथितत्वे अगस**
**हिना**–नालिकेरफलं चैव कदली लवली तथा । आम्रमा
चैव पनसं च हरीतकी । व्रतांतरप्रशस्तं च हविष्यं
बुधाः । इति ।

काम्यव्रते तु यद्यपि–काम्ये प्रतिनिधिर्नास्ति नित्ये नैमि
च सः । काम्येप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः । इति
**धवीये** स्मृत्यंतरं । तस्यार्थः–नित्यं नैमित्तिकं च प्रतिनि
प्युपक्रम्य कारयेत् । काम्यं तु स्वसामर्थ्यं विचार्य स्वयमे
क्रम्य कुर्यात् । उपक्रमादूर्ध्वमसामर्थ्ये प्रतिनिधिनापि क
रयेत् । तदाह **हेमाद्रौ वाराहः**–असामर्थ्ये शरीरस्य व्र
समुपस्थिते । कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितं । भ्र
भ्रातरं चापि व्रतमस्य न लुप्यते । **माधवीये पैठीन**
भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतं । असामर्थ्ये परस्प
व्रतभंगो न जायते । **हेमाद्रौ कात्यायनः**–राज्यस्य क्षत्रि
च एकादश्यामुपोषितः । पुरोधास्तु क्षत्रियो वा द्वयोः सम
रितं । उपवासफलं ताभ्यां समग्रं समवाप्यते । शृणु
न्यमुद्दिश्य एकादश्यामुपोषितः । यमुद्दिश्य कृतो विप्रा
पूर्णं फलं भवेत् । कर्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संश
**हेमाद्रौ वायुपुराणे**–उपवासे त्वशक्तस्तु आहिताग्निर
वा । पुत्राद्वा कारयेदाशाद्ब्राह्मणाद्वापि कारयेत् । अथवा
मुख्येभ्यो दानं दद्यात्स्वशक्तितः । उपवासफलं तस्य
समवाप्यते । तत्र भोजनदोषोपि तत्क्षणादेव नश्यति । **हेम**

**कात्यायनः**–पितृभ्रातृमातुरर्थे आचार्यार्थे विशेषतः । उपवासं प्रकुर्वाणः पुण्यं शतगुणं भवेत् । यमुद्दिश्य कृतः सोऽपि संपूर्णं लभते फलं । द्रव्यसंप्रतिपत्तौ वा एकादश्यामुपोषितः । द्रव्यदातोपवासस्य फलं प्राप्नोत्यसंशयम् । कर्ता नक्तमवाप्नोति नात्र कार्या विचारणा । नारी स्वपतिमुद्दिश्य एकादश्यामुपोषिता । पुण्यं शतगुणं प्राहुर्मुनयः पारदर्शिनः । उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम् । यत्तु **हेमाद्रौ मनुः**–नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं । **विष्णुरपि**–पत्यौ जीवति या नारी उपवासव्रतं चरेत् । आयुः संहरते भर्तुर्नरकं चैव गच्छति । तत् भर्त्राद्यननुमतोपवासविषयं । आहतुर्**हेमाद्रौ शंखलिखितौ**–कामं भर्त्रनुज्ञया व्रतोपवासादीनारभेतेति । **हेमाद्रौ मार्कंडेयपुराणं**–नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा । निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम् । इति । पतिमत्या उपवासे पुष्पादिनिषेधो नास्ति । तदाह **माधवे मनुः**–पुष्पालंकारवस्त्राणि गंधधूपानुलेपनं । उपवासे न दुष्यंति दंतधावनमंजनम् । इति ।

सूतकादिप्राप्तौ कर्तव्यमाह **हेमाद्रौ विष्णुरहस्यं**–परमापदमापन्नो हर्षे वा समुपस्थिते । सूतके मृतके चैव न त्याज्यं द्वादशीव्रतं । **हेमाद्रौ वाराहः**–सूतके तु नरः स्नात्वा प्रणम्य मनसा हरिं । एकादश्यां न भुंजीत व्रतमेवं न लुप्यते । द्वादश्यां च ततो भुक्त्वा सूतकांते जनार्दनं । पूजयित्वा विधानेन पूजयेच्च द्विजोत्तमान् । मृतकेपि न भुंजीत एकादश्यां सदा नरः । द्वादश्यां तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य च । पूर्वसंकल्पितं यत्तु व्रतं सुनियतव्रतैः । तत्कर्तव्यं नरैः श्राद्धदानार्चनविवर्जितं । **माधवे मत्स्यः**–सूतकांते नरः स्नात्वा पूजयित्वा जनार्दनं । दानं दत्वा विधानेन व्रतस्य फलमश्नुते । इति । अन्यत्रापि–सूतकात्प्राक्समारब्धमनेकाहं तु यद्व्रतं । कामिकं तत्तु कुर्वीत नतु दानार्चनं जपं । सूतकाहे तु यत्किंचिद्दानाद्यंतरितं भवेत् । सूतकानंतरे त्वह्नि तत्कर्तव्यमतंद्रितैः । इति ।

स्त्रीणां रजोदर्शनेपि न व्रतत्यागः । तदाह **माधवे पुलस्त्यः**–एकादश्यां न भुंजीत नारी दृष्टे रजस्यपि । **तत्रैव ऋष्यशृंगः**–संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ।

इति । **माधवे सत्यव्रतः**—प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचन । स्नात्वा भर्तुश्चतुर्थेऽह्नि शुद्धा स्यात्परिचारणे । पंचमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि । इति स्मृतिवचनाच्छुद्ध्यनंतरं देवार्चनादि कुर्यादिति **माधवः** । अंतरा तु रजोयोगे पूजामन्येन कारयेत् । इति **मात्स्यमिति मदनरत्नः** । काम्योपवासे **हेमाद्रिमाधवयोरंगिराः**—सायमाद्यंतयोरह्नोः सायं प्रातश्च मध्यमे । उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् । इति । तत्र दशमीनियमानाह **हेमाद्रौ देवलः**—दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि । **हेमाद्रौ स्मृतिः**—दशम्यामेकभक्तं तु कुर्वीत नियतेंद्रियः । आचम्य दंतकाष्ठं तु खादयेत्तदनंतरं । ततश्चानंतरं विप्रो ब्रह्मचारी जितेंद्रियः । रात्रिं नयेत्ततः पश्चात्प्रातःस्नायी समाहितः । उपवासं तु संकल्प्य मंत्रपूतं जलं पिबेत् । **हेमाद्रौ स्कांदे**—कांस्यं मांसं मसूरांश्च क्षौद्रं चानृतभाषणं । पुनर्भोजनमभ्यासं दशम्यां परिवर्जयेत् । **हेमाद्रौ कूर्मः**—कांस्यं मांसं मसूरांश्च चणकान्कोरदूषकान् । शाकं मधु परान्नं च त्यजेदुपवसन्स्त्रियं । उपवासं करिष्यन्नित्यर्थ इति **हेमाद्रिः** । द्यूतमत्यंबुपानं च दशम्यां वैष्णवस्त्यजेत् । **माधवीये नारदः**—अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः । अवनीतलपशयनाः प्रियासंगविवर्जिताः । क्षारो यवक्षारादिः । लवणविशेषणं वा क्षारग्रहणं । तेन सैंधवादेरनिषेध इति आशौचप्रकरणे मनुस्मृतिटीकाकारो **मेधातिथिः** ।

**अथैकादशीकृत्यं**—एकादश्यां प्रातर्दंतधावनं कार्यं । प्रातःसंध्यामुपासीत दंतधावनपूर्वकं । इति वचनात् । उपवासे तथा श्राद्धे न खादेद्दंतधावनं । दंतानां काष्ठसंयोगो हंति सप्त कुलानि वै । इति **हेमाद्रौ वृद्धवसिष्ठवचने** काष्ठसंयोगे एव दोषश्रवणात् पर्णादिना दंतधावनं कार्यमेव । अतएव **हेमाद्रौ पैठीनसिः**—अलाभे वा निषेधे वा काष्ठानां दंतधावने । पर्णादिना विशुद्धेन जिह्वोल्लेखः सदैव हि । इति । पक्षांतरमाह **हेमाद्रौ व्यासः**—अलाभे दंतकाष्ठानां निषिद्धानां तथा तिथौ । अपां द्वादशगंडूषैर्विदध्यादंतधावनं । इति ।

हेमाद्रौ देवलः—एकादश्यां निराहारो भूत्वाहमपरेऽहनि । भोक्ष्यामि पुंडरीकाक्ष गतिर्भव ममाच्युत । अत्र विशेषमाह निर्णयामृते देवलः—गृहीत्वौदुंबरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयाद्यथासंकल्पयेद्बुधः । औदुंबरं ताम्रमयं । यथासंकल्पयेद्यत्फलं कामयेत तत्फलकाम इत्युल्लेखनं कुर्यात् । विशेषांतरमाह हेमाद्रौ स्कंदः—रात्रिं नयेत्ततः पश्चात्प्रातःस्नायी समाहितः । उपवासं तु संकल्प्य मंत्रपूतं जलं पिबेत् । रात्रिं दशमीरात्रिं । मंत्रेणाष्टाक्षरेण त्रिरभिमंत्रितं जलं पिबेदित्यर्थः । तथाच हेमाद्रौ मार्कंडेयः—अष्टाक्षरेण मंत्रेण त्रिर्जप्तेनाभिमंत्रितं । उपवासफलप्रेप्सुः पिबेत्तोयं समाहितः । इति । अत्र फलप्रेप्सुरिति लिंगात्काम्योपवास एव जलपानमिति बोध्यं । अतएव उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयमित्यत्रेदं काम्यविषयमिति सर्वेषां सिद्धांतः संगच्छते ।

नित्यव्रते तु हेमाद्रौ मार्कंडेयः—देवार्चनं ततः कृत्वा पुष्पांजलिमथापि वा । संकल्पमंत्रमुच्चार्य देवाय विनिवेदयेत् । अत्र वाशब्द ऐच्छिकविकल्पार्थक इति यद्यपि हेमाद्र्यादिग्रंथेभ्यः प्रतीयते तथापि व्यवस्थितविकल्पार्थक एव युक्तः पूर्वोक्तरीतेरित्यवधेयं । अतएव नित्यव्रते एकादश्यामिति मंत्रेणोपवाससंकल्पमीरयेत् । मानसिको व्यवसायः संकल्प इति कालादर्शः । नित्ये मनसैव मंत्रेण संकल्पयेदिति निर्णयामृतश्च संगच्छते । शैवानां तु संकल्पमंत्रो हेमाद्रौ शिवधर्मेषु उक्तः—तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । इति । सौराणां तु हेमाद्रौ सौरपुराणे—सावित्र्या त्वथ नाम्ना वा संकल्पं तु समाचरेत् । इति । यदा पूर्वार्धरात्रानंतरं दशम्यनुवर्तते तदैकादश्याः पूर्वार्धं त्यक्त्वा पूजासंकल्पावनुष्ठेयौ । तदाह—हेमाद्रिमाधवयोः स्मृतिः—दशम्यासंगदोषेण अर्धरात्रात्परेण तु । वर्जयेच्चतुरो यामाः संकल्पार्चनयोस्तदा । यदा तु दिनोदये दशम्यनुवर्तते तदा रात्रौ पूजासंकल्पौ कार्यौ । तदाह हेमाद्रौ नारदः—विद्धोपवासेऽनश्नंस्तु दिनं त्यक्त्वा समाहितः । रात्रौ संपूजयेद्विष्णुं संकल्पं च तदाचरेत् । इति । पुनर्हेमाद्रौ नारदः—वर्जयंति नरास्तज्ज्ञा यामांश्च चतुरो द्विज । तदूर्ध्वं स्नानपूजादि कर्तव्यं

तदुपोषितैः । न दिवा शुद्धिमाप्नोति तदा रात्रौ विधीयते । दिनकार्यमशेषं च कर्तव्यं शर्वरीमुखे । इति ।

उपवासप्रतिनिधिषु नक्तादिष्वपि समंत्रक एव संकल्पः कार्यः । तथाच **हेमाद्रौ स्कांदे**–उपोष्य नक्तेन विभो चत्वारः कुजसंयुताः । इति । एकभक्तेन यो मर्त्य उपवासव्रतं चरेत् । इत्यादिवचनेषु एकभक्तादिषु उपवासधर्मातिदेशार्थं उपवासशब्दप्रयोगः । कुंडपायिनामयनगते कर्मणि मासमग्निहोत्रं जुहोतीति वचने अग्निहोत्रधर्मातिदेशार्थं अग्निहोत्रशब्दप्रयोगवत् । तेन संकल्पमंत्रेण निराहारपदस्थाने एकादश्यां नक्ताहार इत्याद्यूहितपठितेन[1] तन्मंत्रेणैव संकल्पः कर्तव्य इति बोध्यं । इदं चोपवासस्थानीयमेकभक्तादिकमुपवासयोग्यायामेवैकादश्यां कार्यं । तदुक्तं **हेमाद्रौ भविष्यपुराणे द्वादशीकल्पे**–पूर्णाविद्धां पलार्धेन नंदां पूर्णामपि त्यजेत् । यदीच्छेदात्मसंतानं चतुर्षु नियमेष्वपि । नोपोषितं न नक्तं च नैकभक्तमयाचितं । नंदायां पूर्वविद्धायां कुर्यादैश्वर्यमोहितः । एकादशीयुता शस्ता द्वादश्या समुपोषणे । नक्ते वाऽयाचिते नित्यमेकभक्ते तथार्चने । नक्तं वाऽयाचितं तात नैकभक्तमुपाहरेत् । दशमीसहितं दानमनर्थं हरिवासरे । इति ।

एकादश्यां देवस्योपरि पुष्पमंडपिकां कुर्यात् । तदाह **माधवे ब्रह्मपुराणं**–एकादश्यामुभे पक्षे निराहारः समाहितः । नानापुष्पैर्नरश्रेष्ठ विचित्रं पुष्पमंडपं । कृत्वा चावरणं पश्चाज्जागरं कारयेन्निशि । तस्मिन्मंडपे देवं पूजयेत् । तदाह **ब्रह्मपुराणं**–एकादश्यामुभे पक्षे निराहारः समाहितः । स्नात्वा सम्यग्विधानेन सोपवासो जितेंद्रियः । संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः । पुष्पैर्गंधैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः । उपचारैर्बहुविधैर्जपैर्होमैः प्रदक्षिणैः । स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः । दंडवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः । एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरं । याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः । इति । **मदनरत्ने बृहन्नारदीयं**–पंचामृतेन संस्नाप्य एकादश्यां जनार्दनं । द्वादश्यां पयसा स्नाप्य हरिसायुज्यमश्नुते । इति । संकलपप्रभृतिपारणपर्यंतं पाषंड्यादिभिः

---

१ 'यूहितपदपठितेन' ।

संभाषणादि न कार्यं । तदुक्तं **हेमाद्रौ विष्णुधर्मोत्तरे**—पाषंडिभिरसंस्पर्शं समं भाषणमेव च । विष्णोराराधनपरैनैंव कार्यमुपोषितैः । **हेमाद्रौ विष्णुपुराणे**—तस्मात्पाषंडिभिः पापैरालापस्पर्शने त्यजेत् । विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः । वेदबाह्यागमविहितकारिणः पाषंडिन इति हेमाद्रिः । **हेमाद्रौ कूर्मपुराणे**—बहिर्ग्रामांत्यजान्सूतिं पतितं च रजस्वलां । न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे । **विष्णुरहस्यं**—नृत्यालोकनगंधादिस्वादनं परिकीर्तनं । अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकांक्षणं । गात्राभ्यंगं शिरोभ्यंगं तांबूलं चानुलेपनं । व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत् । इति । **हेमाद्रौ देवलः**—ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनं । व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः । स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि । भिद्यते ब्रह्मचर्यं तु न दारेष्वनुसंगमात् । असकृज्जलपानाच्च तांबूलस्य च भक्षणात्[1] । उपवासः प्रदुष्येत दिवा स्वापाच्च मैथुनात् । अत्यये चांबुपानेन नोपवासः प्रणश्यति । अशक्तायासकृदपि पानेनेत्यर्थः ।

पाषंड्यादिदर्शनादौ प्रायश्चित्तमुक्तं **विष्णुपुराणे**-तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः । संस्पर्शे तु बुधः स्नात्वा शुचिरादित्यदर्शनात् । संभाष्य तान्शुचिषदं चिंतयेदच्युतं बुधः । इदं चोदाहरेत्सम्यक्कृत्वा तत्प्रवणं मनः । शारीरमंतःकरणोपघातं वाचश्च विष्णुर्भगवानशेषं । शमं नयत्वस्तु ममेह शर्म पापादनंते हृदि सन्निविष्टे । अंतःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः । स करोत्वमले तस्मिन्शुचिरेवास्मि सर्वदा । बाह्योपघातानघो बौद्धांश्च भगवानजः । शमं नयत्वनंतात्मा विष्णुश्चेतसि संस्थितः । एतत्संभाष्य जप्तव्यं पाषंडिभिरुपोषितैः । नमः शुचिष्मतेत्युक्त्वा सूर्यं पश्येत्तु दीक्षितः । इति । **माधवे विष्णुधर्मे**—असंभाष्यान्हि संभाष्य तुलस्यतसिकादलं । आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति । **कालादर्शे** तु तुलस्या विमलं दलमिति पाठः । **हेमाद्रौ याज्ञवल्क्यः**—यदि वाग्यमलोपः स्यात्स्नानदानजपादिषु । व्याहरेद्वैष्णवं मंत्रं स्मरेद्वा विष्णुमव्ययं । **कालादर्शे विष्णुरहस्ये**—श्राद्धोपवा-

---

१ 'सकृत्तांबूलचर्वणात्' ।

सद्दिवसे खादित्वा दंतधावनं । गायत्र्या शतसंपूतमंबु प्राश्य विशुद्ध्यति । **कालादर्शे शंखः**—कृत्वा स्तेयं तथा हिंसां यथार्थं शास्त्रचोदितम् । प्रायश्चित्तं व्रती कृत्वा जपेन्नामशतत्रयं । **कालादर्शे कात्यायनः**—मिथ्यावादे दिवास्वापे बहुशोंबुनिषेवणे । अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः । **कालादर्शे पैठीनसिः**—तांबूलचर्वणे स्त्रीसंभोगे मांसनिषेवणे । व्रतलोपो भवेत्कुर्यादष्टाक्षरमनोर्जपम् । इति ।

द्वादशीकृत्यमाह **हेमाद्रौ कात्यायनः**—प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् । अज्ञानतिमिरांधस्य व्रतेनानेन केशव । प्रसादसुमुखो नाथ ज्ञानदृष्टिप्रदो भव । पारणं तु ततः कुर्याद्यथासंभवमार्गतः । यथासंभवत्वं ब्राह्मणभोजनादिषु । तान्याह **बृहन्नारदीये**—ब्राह्मणान्भोजयेच्छक्त्या दद्याद्वै दक्षिणां तथा । ततः स्वबंधुभिः सार्धं नारायणपरायणः । कृतपंचमहायज्ञः स्वयं भुंजीत वाग्यतः । **तिथितत्वे कात्यायनः**—द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकीं । उपोदकीं पूतिशाकं । **माधवे स्कांदे**—कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने । नैवेद्यं तुलसीमिश्रं कोटिहत्याविनाशनं[1] । **हेमाद्रौ ब्रह्मांडपुराणे**—कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणं । व्यायामं च प्रवासं च दिवास्वापमथांजनं । तिलपिष्टं मसूरांश्च द्वादशैतानि वैष्णवः । द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते । पुनर्भोजनमध्यायो भारमायासमैथुने । उपवासफलं हन्युर्दिवा निद्रा च पंचमी । **हेमाद्रौ बृहस्पतिः**—दिवा निद्रा परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् । कांस्यं मांसं सुरां द्यूतं व्यायामं क्रोधमैथुने । दिवास्वापं पुनर्भुक्तं[2] चणकान्कोरदूषकान् । **हेमाद्रौ स्कांदे**—क्षौद्रं मांसं सुरां तैलं व्यायामं क्रोधमैथुने । परान्नं कांस्यतांबूले लोभं निर्माल्यलंघनम् । द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत् । इदं सर्वं नियमजातं क्वचिदुपवासफलप्रेप्सुरिति, क्वचिदुपवासफलं हन्युरिति च श्रवणात्काम्यव्रतविषयमेवावसीयते । येषु वाक्येषु फलसंबंधो न श्रूयते तत्रापि काम्यविषयसाहचर्येण पाठात्संकल्पो नेय इति बोध्यं ।

---

१ 'हत्याकोटिविनाशनं'. २ 'पुनर्भक्षं'.

नित्योपवासप्रकारमाह **माधवे विष्णुरहस्यं**–अथ नित्योपवासी चेत्सायंप्रातर्भुजिक्रियां । वर्जयेन्मतिमान्विप्रः संप्राप्ते हरिवासरे । **माधवे ब्रह्मवैवर्ते**–इति विज्ञाय कुर्वीताऽवश्यमेकादशीव्रतं । विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्जितः । निगृहीतेंद्रियः श्रद्धासहायो विष्णुतत्परः । उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः । शक्तौ सत्यां नियमावश्यकतामाह **माधवे कात्यायनः**–शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणं । इति । अशक्तस्य तु–एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् । पयोमूलफलैर्वापि न निर्द्वादशिको भवेत् । इत्यनुकल्पः पूर्वमुक्त एव । भोजनमात्रवर्जनसमर्थं प्रति आवश्यकनित्यव्रतस्यापि–विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्जितः । इत्यादिवचनैर्भोजनमात्रवर्जनपर्यवसायित्वप्रतिपादनात् । अतएवैकादश्यामुपवासाकरणे प्रायश्चित्तं स्मर्यत इति **माधवस्य,** एकादश्यां भोजने प्रायश्चित्तं स्मर्यत इति **मदनरत्नस्य** न परस्परं विरोधः । शब्दभेदेऽप्यर्थस्यैकत्वात् । अन्यथा विरोधः स्पष्ट एवेति बोध्यम् ।

समर्थस्यैकादश्यां भोजने प्रायश्चित्तमाह **माधवीये स्मृतिः**–अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैंदवं चरेत् । एकादश्यामहोरात्रं नक्तं चैव तु पर्वणि । **स्मृत्यंतरमपि**–अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा । एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् । इति ।

अत्रेदं चिंत्यते–किमेकादशीव्रतयोग्याहोरात्राधिकरणके भोजने इदं प्रायश्चित्तं, उत एकादश्यधिकरणके भोजन इति । तत्र तावदेकादश्यधिकरणके एव युक्तं । तथा च प्रतिपत्करणे[1] **माधवे वृद्धगार्ग्यः**–निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः । विधिः पूज्यतिथौ तत्र निषेधः कालमात्रकः । इति । तिथीनां पूज्यत्वं नाम कर्मानुष्ठानयोग्यता–निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते । इति । तस्यार्थः न्यायसिद्धोऽप्ययमर्थो न केवलवाचनिकः । तथाहि विधिवाक्यात्कालविशेषे विधेयानुष्ठानस्याभ्युदयहेतुत्वं प्रतीयते । तत्र सकृदनुष्ठानादेवाभ्युदयसिद्धेर्विशेषणकालानुरोधेन प्रधानानुवृत्तेरनुचितत्वा-

१ ‘प्रतिपत्प्रकरणे’.

त्सकृदेवानुष्ठानं, निषेधवाक्यात्तु कालविशेषे कर्मविशेषानुष्ठानस्यानर्थहेतुत्वं प्रतीयते, यदा कदापि तत्काले तत्कर्मानुष्ठाने अनर्थापत्तेः सर्वस्मिन्नपि तत्काले तद्वर्जनीयमिति। तस्माद्वाक्याऽन्यायादर्कादिसाहचर्याच्च एकादश्यधिकरणके एव भोजने प्रायश्चित्तं। अतएव–सिद्धिस्तस्यार्थतो व्रते। अस्यार्थः–उपवासव्रतेऽनुष्ठीयमानेऽर्थतः प्रसंगात्तस्यां न निषेधस्य सिद्धिर्यथा काम्यानुष्ठाने प्रसंगान्नित्यसिद्धिरिति कालादर्शात् सर्वेषां पक्षद्वयेपि भोजनमात्रवर्जनं निषेधपरिपालनार्थं पुत्रवद्गृहस्थव्यतिरिक्तानां पक्षद्वयेपि उपवासव्रतं, गृहस्थस्य शुक्लायामेव व्रतं, शयनीबोधिनीमध्ये कृष्णायामपि, तदपि पुत्ररहितस्येति हेमाद्रिसिद्धांतादपि व्रतभोजननिषेधपरिपालनयोरेकदिन एवानुष्ठानं सर्वदा प्रतीयमानमप्युपेक्ष्यम्। एकस्मिन्दिने उभयोः प्राप्तौ व्रतानुष्ठानमेव[1] निषेधपरिपालनस्य तिथ्युपक्रमावसानपरिच्छिन्नत्वात् व्रतस्य च पूज्यतिथिगामित्वात् पूर्वापरदिनयोर्निषेधव्रतयोः प्राप्तौ कृष्णपक्षे च गृहस्थानां केवलनिषेधस्य प्राप्तौ पूर्वदिने फलादिभक्षणे निषेधपरिपालनं उत्तरदिने च व्रतानुष्ठानमिति कालतत्वविवेचनसिद्धांतः संगच्छते इति चेन्न। धर्मिग्राहकमानविरोधापत्तेः। तथाहि–अष्टवर्षाधिको मर्त्य अशीतिर्नहि पूर्यते। यो भुंक्ते मामके राष्ट्रे विष्णोरहनि पापभाक्। स मे वध्यश्च दंड्यश्च निर्वास्यो देशतः स मे। एतस्मात्कारणाद्विप्र एकादश्यामुपोषणं। कुर्यान्नरो वा नारी वा पक्षयोरुभयोरपि। इति हेमाद्रौ नारदीयपुराणं निषेधविधायकमिति सर्वेषां संमतं। अत्र भोजननिषेधे उपोषणशब्दप्रयोगस्य मासाग्निहोत्रशब्दस्य अग्निहोत्रधर्मातिदेशार्थत्ववदुपवासधर्मातिदेशार्थत्वादुपवासयोग्यायामेवैकादश्यां निषेधप्रतिपादनात्–पूर्णाविद्धां पलार्धेन नंदां पूर्णामपि त्यजेत्। यदीच्छेदात्मसंतानं चतुर्षु नियमेष्वपि। नोपोषितं न नक्तं च नैकभक्तमयाचितं। नंदायां पूर्वविद्धायां कुर्यादैश्वर्यमोहितः। इति हेमाद्रिमाधवयोर्द्वादशीकल्पवचनेन विद्धायां तन्निषेधाच्च। शुक्ला वाथ सदा कार्या न त्याज्या संकटेष्वपि। शुक्लायां यस्तु वै भुंक्ते स भुंक्ते किल्बिषं नरः। इति हेमाद्रौ भवि-

१ 'ष्ठानेनैव निषेधपरिपालनसिद्धिः'.

ऽप्य चक्रभोजनाः । इति हेमाद्रौ पुराणांतरवचने च स्पष्ट-
तरं तथैव प्रतीतेः । उपवासयोग्यदिने भोजने एव पूर्वोक्त-
प्रायश्चित्तमित्येव स्वीकर्तव्यं । अन्यथा–कांस्यं माषं मसूरांश्च
पुनर्भोजनमैथुने । द्यूतमत्यंबुपानं च दशम्यां सप्त संत्यजेत्
इत्यादीनां विद्धाधिकायामप्रवृत्तेः, दिवा निद्रा परान्नं च पुन-
र्भोजनमैथुने । क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ।
इत्यादीनां चाल्पद्वादशीयुक्तत्रयोदश्यां च प्रवृत्तेः व्रतदिनात्पू-
र्वदिनगते एकादशीयुते मध्याह्ने–दशम्यामेकभक्तस्तु, दशम्या-
मेकभुक्तं[1] तु कुर्वीत नियतेंद्रियः । इत्यादीनामप्रवृत्तेर्विद्धान-
धिकद्वादशिकायां–एकादश्यां निराहार इति संकल्पवाक्य-
विलोपापत्तेश्च सर्वोपप्लव एव स्यात्, इष्टापत्तौ विधिस्पृष्टे निषे-
धायोग इति सिद्धांतो विरुध्येत । अतएव प्रायपाठोऽप्यकिंचि-
त्कर एव । अपिच चातुर्मास्यानंतर्गतायां उभयाधिक्यवत्यां
शुद्धायामपि कृष्णायामुपवासयोग्ये उत्तरदिने एव शिष्टानां
विदुषां निषेधपरिपालनाचारोपि विरुध्येतेति दिक् । तस्मात्
हेमाद्रिणा प्रघट्टकांतरे नारदीयप्रथमवाक्यस्यैवोपन्यासात्त-
न्मात्रदर्शनप्रयुक्तो द्वितीयवाक्यादर्शनप्रयुक्त एव कालतत्त्व-
विवेचनसिद्धांत इति बोध्यं । तथाच एकादशीप्रकरणस्थाने-
कवाक्याविरोधाय निमित्तकालमादायेति वाक्यस्यैव एतन्नित-
यातिरिक्तविषयत्वं, दशमीशब्दस्य व्रतदिनात्पूर्वदिनोपलक्षकै-
कादशीशब्दस्य व्रतदिनोपलक्षकत्वं, द्वादशीशब्दस्य पारणदि-
नोपलक्षकत्वमेव स्वीकर्तुं युक्तं । अतएवोदाहृतकालादर्श-
हेमाद्र्यादयः संगच्छंते इति विभावनीयं सूरिभिः । पूर्वोक्तेषु
द्वादशीनियमेषु मध्ये नित्यव्रते पारणमेवावश्यकमन्येषामनुष्ठाने-
ऽभ्युदयोऽननुष्ठाने प्रत्यवायाभाव इति बोध्यम् ।

नित्यव्रतांगमपि पारणं द्वादशी अल्पा चेद्रात्रिशेषे एव स्नानादि
सर्वमनुष्ठाय द्वादशीमध्ये एव कार्यं । तदाह हेमाद्रौ पद्म-
पुराणं–यदा भवति स्वल्पा तु द्वादशी पारणादिने । उषः-
काले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा । नारदीयपुराणं–अ-
ल्पायामथ विप्रेंद्र द्वादश्यामरुणोदये । स्नानार्चनक्रिया कार्या

1 'दशम्यामेकभक्तस्तु'. २ 'स्मार्तादिसर्वे'.

दानहोमादिसंयुता। **हेमाद्रौ कौर्मे**—एकादश्यामुपोष्यैवं द्वादश्यां पारणं स्मृतं। त्रयोदश्यां न तत्कुर्याद्द्वादशद्वादशीक्षयात्। **हेमाद्रौ विष्णुरहस्यं**—दशम्यनुगता हंति द्वादशद्वादशीफलं। धर्मापत्यधनायूंषि त्रयोदश्यां तु पारणं। **हेमाद्रौ कौर्मे**—कलाद्वयं त्रयं वापि द्वादशीं न त्वतिक्रमेत्। अतिक्रांता द्वादशी तु हंति पुण्यं पुराकृतं। **भविष्यत्पुराणं**—यो द्वादशीमतिक्रम्य पारणं कुरुते नरः। द्वादशाब्दं व्रतं तस्य तत्क्षणादेव नश्यति। ननु द्वादश्यतिक्रमेपि न दोषः। सा तिथिः सकला ज्ञेयेति वचनेन साकल्यबोधनादिति चेन्न। स्नानदानजपादिष्विति वाक्यशेषेण स्नानादिष्वेव तद्बोधनात्। अतएव **हेमाद्रौ वसिष्ठः**—पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता। इति। यदा त्रयोदश्यां कियन्मात्रा द्वादशी न संपूर्णपारणपर्याप्ता तत्र साकल्यमाह **हेमाद्रौ पाद्मं**—त्रयोदश्यां यदा राजन्द्वादश्यास्तु कला भवेत्। सा तिथिः सकला चेति वसिष्ठः प्राह धर्मवित्। **हेमाद्रौ स्कांदे**—कलाद्वयं त्रयं वापि द्वादश्याः समतिक्रमेत्। एकादशीमुपोषित्वा तत्र धर्मं फलं व्रजेत्। धर्मं यममित्यर्थः। **हेमाद्रौ पाद्मं**—यदि किंचित्त्रयोदश्यां द्वादशी चोपलभ्यते। द्वादश्यां पारणं तत्र वर्जयित्वा त्रयोदशीं। महाहानिकरी ह्येषा द्वादशी लंघिता नरैः। करोति धर्महरणमस्नातेव सरस्वती। अथवा द्वादशी न स्यात्स्वल्पापि रविसंयुता। पारितव्यं त्रयोदश्यां महापुण्यविवृद्धये। इति। एतेन त्रयोदश्यां पारणनिषेधवचनानि त्रयोदश्यां द्वादशीसद्भावविषयाणीति ज्ञेयं। न स्नातं यस्यां सा अस्नाता। अधिकरणे क्तः। गंगादिसरित्सु उत्तीर्य परस्मिन् तीरे स्नातव्यं सरस्वत्यां तु स्नात्वा परपारे गंतव्यमित्यर्थः। स्नानं विना लंघ्यमाना सरस्वती यथा धर्महरणं करोति एवं पारणलंघिता द्वादश्यपीत्यर्थः। यस्यारुणोदयकालाधिककालसाध्यं जपादिकमावश्यकं तेनापि तद्दिने संख्यासंकोचेनाप्यावश्यकं कृत्वा द्वादशीमध्ये एव पारणं कर्तव्यमित्यर्थो महाहानिकरीत्यनेन बोधितः।

यानि तु—कला काष्ठा मुहूर्तं तु यदि चेन्न परेऽहनि। द्वादश द्वादशीर्हंति त्रयोदश्यां तु पारणम्। इति त्रयोदश्यां द्वादश्यसं-

भवमनूद्य पारणनिषेधकानि तानि–विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् । द्वादश द्वादशीर्हंति त्रयोदश्यां तु पारणं । इत्यादिभिः समानार्थत्वात्स्मार्तविषयाणीति बोध्यं । हेमाद्रौ नारदीयं–एतस्मात्कारणाद्विप्रः प्रत्यूषे स्नानमाचरेत् । पितृतर्पणसंयुक्तं दृष्ट्वाल्पां द्वादशीं तिथिं । हेमाद्रौ भविष्यत्पुराणं–अल्पायामथ भूपाल द्वादश्यामरुणोदये । स्नानार्चनक्रिया कार्या दानहोमादिसंयुता । अत्र होमो वैश्वदेवहोमः उपासनहोमश्च । अग्निहोत्रहोमोप्यनुदितहोमिनां । उदितहोमिनां तु अग्निहोत्रहोम उदयात्पूर्वं न भवति । पौराणधर्मानुरोधेन श्रौतकालबाधस्यायुक्तत्वात्, अनाहिताग्न्यादिविषयत्वेन तस्य सावकाशत्वाच्च । हेमाद्रौ स्कांदं–कलाद्वयं त्रयं वापि द्वादशी यत्र दृश्यते । स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते । इति । एतैर्वचनैर्विहितस्य भोजनपूर्वभाव्यौपासनहोमदेवार्चनवैश्वदेवाद्यपकर्षस्य भोजनापकर्षविधायकवाक्यविषयतामपि दर्शयति हेमाद्रौ कात्यायनः–क्रमवत्सु च कृत्येषु यद्यंत्यमपकृष्यते । तदा सर्वापकर्षः स्यादन्यथा क्रमबाधनात् । इति । अत्र क्रमबाधो विपरीतपौर्वापर्यभावेन पदार्थानामनुष्ठानात् तेषामननुष्ठानाद्वा । तत्र प्रकृते–यो मोहादथवालस्यादकृत्वा देवतार्चनं । भुंक्ते स याति नरकं सूकरेष्वभिजायते । अकृत्वा वैश्वदेवं तु भुंजते ये द्विजाधमाः । सर्वे ते निष्फला ज्ञेयाः पतंति नरकेऽशुचौ । इत्यादिकूर्मपराशरादिवचनैर्भोजनात्पूर्वमेवावश्यानुष्ठानबोधनात्, भोजनोत्तरमनुष्ठानासंभवात् । हेमाद्रौ जैमिनिः–तदादिवाऽभिसंबंधात्तदंतमपकर्षे स्यात् । इति । तत्र प्रकृतौ हविषि आसादिते प्रयाजाः क्रियंते तेषामग्नीषोमीये पशावपकर्षः श्रूयते तिष्ठंतं पशुं प्रयजंतीति । तत्र वचनाद्भवतु प्रयाजानामपकर्षः । तत्पूर्वभाविनामाघारादीनामपकर्षो विना वचनं न स्यादित्याक्षेपे प्रकृतौ पदार्थानुष्ठानक्रमस्य क्लृप्तत्वात् सक्रमाणामेव पदार्थानां चोदकेनातिदेशाद्व्युत्क्रमे सति पूर्वपदार्थेनोत्तरस्य बुद्धावनुपस्थापितत्वात्तस्यानुष्ठानं न स्यात् । तस्मात्प्रयाजांतस्यांगसमूहस्यापकर्ष इति न्यायशरीरम् । प्रकृतेपि भोजनोत्तरं देवपूजादीनां लोपः स्पष्ट

ष्वेति न्यायविषयता स्पष्टैव । एतेन यत्तु हेमाद्रिणा जैमिनिसूत्रस्य कातीयवचनस्य चोपन्यासेन भोजनापकर्षे तत्पूर्वभाविनैसर्गिकनित्यकृत्यापकर्षस्य न्यायसिद्धत्वमेवोक्तं तद्वैश्वदेवादेरन्नसंस्कारत्वेन भोजनार्थत्वात् तदभावेपि वा दर्शपूर्णमाससोमयागवद्वाचनिकपौर्वापर्यमात्रसद्भावात्तदपकर्षे कथंचिद्भवतु नाम । प्रातरौपासनहोमदेवपूजादेस्तु तदभावात्तदपकर्षे तदयुक्तमेवेति वाचनिक एवायमर्थ इत्येव युक्तमिति कालतत्त्वविवेचने दूषणोद्भावनं तद्धेमाद्रिदूषणाभिनिवेशमात्रप्रयुक्तमिति स्पष्टमेव । अपि चापकर्षविधायकानेकवचनोपन्यासे हेमाद्रौ स्पष्टे न्यायसिद्धत्वमेव हेमाद्रिणोक्तमित्युक्तिः । औपासनहोमदेवपूजावैश्वदेवानां समाने पूर्वभावित्वे वैश्वदेवांशेऽपकर्षाभ्युपगमोऽन्यत्र तदनभ्युपगमोऽपि कथमिति चिंतनीयमिति दिक् ।

पारणं द्वादशीप्रथमपादमतिक्रम्य कर्तव्यं । तदाह निर्णयामृतमदनरत्नयोर्विष्णुधर्मोत्तरं—द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः । तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः । इति । इदं वैष्णवानामावश्यकं । वचनस्वारस्यात् । अतएव हेमाद्रिमाधवादीनां अस्यानुपन्यासेपि न न्यूनतेति बोध्यं । यदा तु भागद्वयोत्तरं पारणपर्याप्ता द्वादशी तदा समर्थेन भागद्वयानंतरमेव पारणं कार्यं । दिवा भागद्वयादूर्ध्वमानिशीथात्तु चेन्निशि । द्विजभोजनकालोऽयं बालवृद्धातुरं विना । इति विद्धन्यूनसमद्वादशिकाप्रकरणे हेमाद्र्युदाहृतवचनबोधे प्रमाणाभावात् । नच प्रातरेव हि पारणमिति तद्बाधकमिति शंक्यं । भोजनप्रकरणगतप्रातःशब्दो मध्याह्नपर एवेति सर्वसिद्धांतादिति विभावनीयं । एतेन माध्याह्निकापकर्षस्तु भूयस्यामपि द्वादश्यां भवत्येव । सर्वेषामुपवासानां प्रातरेव हि पारणा । इति वचनादिति कालतत्त्वविवेचनं चिंत्यं । यदा तु त्रयोदशीनिमित्तकक्षयाहश्राद्धादिकं संकटांतरं वा भवति तदा स्वल्पायां द्वादश्यामद्भिः पारणं कृत्वा श्राद्धाद्यनंतरं भोक्तव्यं । तदाह माधवे देवलः—संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथं । अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत् । तत्रैव कात्यायनोपि—

संध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः। अद्भिस्तु पारयित्वाथ नैत्यकांते भुजिर्भवेत्। इति।

अथैकादश्यादिधर्मसंदेहे निर्णायकत्वेन येषां वचनमुपादेयं तानाहतुः **हेमाद्रौ पुलस्त्यसत्यव्रतौ**—धर्मेषु नियता ये च धर्मशास्त्रार्थचिंतकाः। वेदशास्त्रविदो ये च तेषां वचनमौषधं। **हेमाद्रौ व्यासः**—वेदवेदार्थतत्त्वज्ञा धर्मशास्त्रार्थचिंतकाः। सदाचारपरा ये वै तेषां वचनमौषधं। **हेमाद्रौ देवीपुराणं**—ये च न्यायविदः शांता धर्मशास्त्रार्थवेदिनः। स्वकर्मनिरता दांतास्तेषां वचनमौषधं। औषधमिवोपादेयमित्यर्थः। **हेमाद्रौ आपस्तंबः**—यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मो मानुषः स्मृतः। आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेत्ति तत्त्वतः। **हेमाद्रौ शारदापुराणं**—पुराणन्यायमीमांसाधर्मशास्त्रार्थचिंतकाः। सदाचारपरा ये वै तदुक्तं यत्नतश्चरेत्। अनुपादेयवचनान्दर्शयति **हेमाद्रौ स्कंदः**—वेदाधिगमहीना ये शौचाचारविवर्जिताः। नास्तिकाः पंडितंमन्यास्तेषां वाक्यं विवर्जयेत्। वैश्वदेवविहीना ये जपयज्ञविवर्जिताः। देवताविमुखा ये च तेषां वाक्यं विवर्जयेत्। **हेमाद्रौ पाद्मं**—वाचं व्याकुरुते नैव मीमांसांतं तथाध्वरं। शुष्कतर्करता ये वै तेषां वाक्यं विवर्जयेत्। **हेमाद्रौ स्कांदं**—येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते। न तेषां वचनं ग्राह्यं धर्मनिर्णयसिद्धये। इति। **हेमाद्रौ कालिकापुराणे**—वेदे च देवतायां च कर्मण्यपि च वैदिके। श्रद्धा नास्ति च येषां वै तेषां वाक्यं विवर्जयेत्। इति। इति पुरुषार्थचिंतामणौ कालखंडे एकादशीनिर्णयः।

**अथ द्वादशी निर्णीयते।** सा च रुद्रेण द्वादशी युक्तेति युग्मवाक्यात्—द्वादशी च प्रकर्तव्या एकादश्या युता प्रभो। सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः। इति **हेमाद्रौ स्कांदा**च्चैकादशीयुतैव ग्राह्या। उपवासेप्येकादशीयुतैव। तदाह **हेमाद्रौ गार्ग्यः**—एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः। इति। द्वितीया पंचमी वेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी। इति बृहद्वासिष्ठादिवचनैरुत्तरविद्धानिषेधाच्च। नन्वेवमेकादश्युपवासो द्वादश्युपवासश्चेत्युभयमेकस्मि-

न्दिने प्राप्नोति। तच्चैकेन संपादयितुमशक्यमिति चेन्न। विरोधाभावेन सहैवानुष्ठानात्। आसमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतांतरं। इति तु एकस्य व्रतस्य मध्ये व्रतांतरं निषेधति। प्रकृते तु व्रतद्वयस्यापि सहैवोपक्रम इति तंत्रेणानुष्ठानात्। न चैवमपि संपूर्णतिथौ एकादश्युपवासस्य–पारणांतं व्रतं ज्ञेयं व्रतांते तद्धि भोजनं। इत्यनेन पारणं विना समाप्त्यभावबोधनात् द्वादश्युपवासोपक्रमो न संभवतीति वाच्यं। यदनाश्वामुपवसेत् क्षोधुकः स्यात् यदश्नीयाद्रुद्रोस्य पशूनभिमन्येतापोश्नाति तन्नैवाशितं नैवानशितमिति याजमानब्राह्मणेनाशनस्योभयरूपत्वप्रतिपादनादद्भिः पारणं कृत्वैव द्वितीयोपवासोपक्रमसंभवात्। इदं सर्वोपवाससाधारणं। प्रकृते तु–एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्। न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः। इति। भविष्योत्तरे नैरंतर्येणोपवासद्वयविधानाच्च। उपवासद्वयाशक्तौ द्वादश्युपवासेनैवोभयप्राप्तिः। तथाच हेमाद्रिमाधवयोः स्मृतिः– एकामेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयं। इति।

ननु नित्यैकादशीत्यागोऽनुचित इति चेन्न। मार्कंडेयेन एकादशीमुपोष्य द्वादश्यां पारणमित्युक्त्वा द्वादश्यामुपोष्य त्रयोदश्यां पारणमित्युक्तं, तच्छ्रुत्वा प्रद्युम्नः–उपोष्या व्याहता ब्रह्मंस्त्वया ह्येकादशी शुभा। द्वादश्यां पारणं कार्यमेकादश्यां हि लंघनं। पुराणविहिते मार्गे निषिद्धं चरसे कथं। इति पृष्टेन मार्कंडेयेन––शृणु भूपाल सकलं यत्पृष्टं साधुना त्वया। जगद्विनाशितं दुष्टैर्हेतुवादकथान्वितैः। द्वादश्या निर्णये भूप मूढमत्र जगत्त्रयं। नष्टाभावेन स्थिरतां रहस्यं याति भूमिप। समलेष्वत्र देहेषु पीतं चैवौषधं यथा। ये शुद्धास्तेषु तद्याति[1] स्थिरत्वं धर्मसंग्रहात्। त्रिफलारिक्तदेहानामौषधं स्थिरतां व्रजेत्। चतुर्दशीमुपोषंति शिवभक्ता नराधिप। न तेषां गमनं भूप नरके दृश्यते क्वचित्। अपरे त्वष्टमीं संतः शिवभक्तिसमाश्रयाः। एकादशी ऋषीणां तु द्वादशी चक्रपाणिनः। तत्कथं द्वादशी भूप नोपोष्या क्रियते जनैः। एकादशी शरीरं तु पुरुषो द्वादशी स्मृता। द्वादश्यामुपवासेन सिद्धा भूप सह-

1 'तद्यापि', 'तथापि'.

श्वराः । चक्रवर्तित्वमतुलं संप्राप्ता अवनीश्वराः । चतुर्दशैते संजाता बलिनश्चक्रवर्तिनः । इत्यादिना चतुर्दशोक्त्वा, अग्रे-एते राजर्षयो भूप द्वादश्यां समुपोषणे । सिद्धिं परमिकां प्राप्ता ये द्विजास्तान् शृणुष्व मे । याज्ञवल्क्यश्च रैभ्यश्च मांडव्यः कौशिको मुनिः । भरद्वाजस्तथा कण्वः कुंभयोनिस्तपोनिधिः । मया सह गता भूप कथं ते संशयोऽभवत् । तस्माद्भूप न संदेहः कर्तव्यो द्वादशीं प्रति । विशेषफलदा प्रोक्ता द्वादशी पापनाशिनी । इति हेमाद्रौ मार्कंडेयेन द्वादश्यां काम्योपवासविधानात्काम्यं नित्यस्य बाधकमिति न्यायेनासंकल्पितैकादशीव्रतस्योपवासद्वयासमर्थस्य कामिनः द्वादश्युपवासेनैकादश्युपवाससिद्धिर्युक्तैव । एकादशीसंकल्पोत्तरमसामर्थ्यज्ञाने तु एकादश्यामेवोपवासः कर्तव्य इति बोध्यं । आषाढभाद्रपदकार्तिकशुक्लद्वादशीषु अनूराधाश्रवणरेवतीयुक्तासु-आभाकासितपक्षेषु मैत्रश्रवणरेवती । संगवे नैव भोक्तव्यं द्वादश द्वादशीर्हरेत् । इति वाक्यसारोदाहृतभविष्यवचनेन-मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः । इति पंचधा विभक्तस्याह्नः । संगवाख्ये द्वितीयभागे पारणनिषेधात् संगवोत्तरसप्तममुहूर्तादौ संगवात्प्राचीनतृतीयमुहूर्ते वा पारणं कार्यं । संगमे इति पाठं कल्पयित्वा प्रवृत्ता नवीनग्रंथा वचनविरोधसंपादकाः परस्परविरुद्धाश्चेति ज्ञेयं ।

अथ श्रवणद्वादशी हेमाद्रौ विष्णुरहस्ये-उपवासासमर्थानां किं स्यादेकमुपोषणं । महाफलं महादेव तन्ममाचक्ष्व पृच्छतः । या राम श्रवणोपेता द्वादशी महती तु सा । तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनं । प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलं । हेमाद्रौ भविष्योत्तरे-उपवासासमर्थानां सदैव पुरुषोत्तम । एका या द्वादशी पुण्या तां वदस्व ममानघ । मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता । सर्वकामफला पुण्या उपवासे महाफला । संगमे सरितां स्नात्वा द्वादश्यां समुपोषितः । समग्रं समवाप्नोति द्वादशद्वादशीफलं । हेमाद्रौ विष्णुधर्मोत्तरे-श्रवणद्वादशीयोगे बुधवारो भवेद्यदि । अत्यंतमहती नाम द्वादशी सा प्रकीर्तिता । स्नानं जप्यं तथा दानं होमः श्राद्धं सुरार्चनं । सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्भव । तस्मिन्दिने तथा स्नातो यत्र क्वचन संगमे । स गंगास्नानजं

राम फलं प्राप्नोत्यसंशयं । बुधश्रवणसंयुक्ता द्वादशी संगमोदकं । दानं दध्योदनं शस्तमुपवासः परोऽवधिः । हेमाद्रौ पौष्करपंचरात्रे च–सर्वकामप्लवे विष्णुर्बुधश्रवणवासरे । द्वादश्यां प्रीणनीयः स्यान्निम्नगासंगमे क्वचित् । हेमाद्रौ नारदविष्णुरहस्ययोः–द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणं । निषिद्धमपि कर्तव्यमित्याज्ञा पारमेश्वरी । निषिद्धं आपाततो निषिद्धत्वेन प्रतीयमानमित्यर्थः । पूर्वोक्तमार्कंडेयैकवाक्यात् । इयं द्वादशी श्रवणयोगमात्रेणापि कृत्स्ना पुण्या भवति । तदुक्तं हेमाद्रौ मत्स्यपुराणे–द्वादशी श्रवणायुक्ता कृत्स्ना पुण्यतमा तिथिः । नतु सा तेन संयुक्ता तावत्येव प्रशस्यते । श्रवणशब्दस्त्रिलिंगोपीति हेमाद्रिः । श्रवणस्पृष्टेति पाठांतरं च । हेमाद्रौ इमां प्रकृत्य नारदीयपुराणे–तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप । द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टयामिकः । योगः शिवयोगादिः । शिवयोगस्य योगे वै सा भवेदुत्तमोत्तमा । इति शिवराज्यादौ प्राशस्त्यसंपादकः । हेमाद्रौ विष्णुपुराणे–याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः । तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना । येन येन नक्षत्रयोगेन या या तिथिः पुण्या प्रोक्ता तासु विहितं यद्व्रतादिकं तत्तास्वेव कुर्यान्न तु तिथ्यंतरेऽयं नियमः श्रवणद्वादशीं विना । श्रवणद्वादशीव्रतं तु श्रवणयुक्तैकादश्यामपि भवतीत्यर्थः । अतएव हेमाद्रौ नारदीये–यदा न प्राप्यते ऋक्षं द्वादश्यां श्रवणं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्विता । इति । द्वादश्यां श्रवणयोगे तु पूर्वोक्तविष्णुरहस्यादिवचनैर्द्वादश्यामेव कार्यं । यदा श्रवणयुक्ता द्वादशी एकादश्यां चेत्तदातिप्रशस्ता । तदुक्तं हेमाद्रौ मात्स्ये–द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा । स एव वैष्णवो योगो विष्णुशृंखलसंज्ञितः । तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः । प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभां । श्रवणशब्दस्त्रिलिंगोप्यस्ति । श्रवणस्पृष्टेति वदन् स्वल्पश्रवणयोगेनापि द्वादशी उपवासयोग्या भवतीति हेमाद्र्युक्तेः । भाविदिनशेषे रात्रौ वा

थिरिति केचित् । तदयुक्तं । श्रवणयोगेन कृत्स्नतिथिपुण्यत्वाभिधानाद्विष्णुशृंखलयोगेनास्यामेकादश्यां तत्क्षणमेव दिवसपुण्यत्वाम्नानात् द्वादशीव्रतग्रहणसंकल्पः क्रियते । तथाच अस्तत्रयसंबंधिनो नक्षत्रस्योपोष्यत्वात् तस्य च प्रातरप्राप्तादपि व्रतग्रहणसंकल्पश्च पूर्णत्वात्प्रातरेव युक्त इत्यग्रेपि हेमाद्रिणा सिद्धांतितत्वाच्च । एकादशीशब्देन यदि दैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयं । इत्यादिष्वहोरात्र इव प्रकृते एकादश्युपवासयोग्यो दिवस एव ग्राह्यः । नच दृष्टांते इवाहोरात्र एव ग्राह्य इति वाच्यं । प्रकृते द्वादश्युपवाससिद्धेरप्यावश्यकत्वात् । तत्र तद्योग्यद्वादश्या अपेक्षणात् । अहःसु तिथयः पुण्याः इत्यादिना दिवा विद्यमानाया एव योग्यत्वबोधनाद्दिवा सत्वस्यावश्यकत्वात् । अत एव स्पृशेदेकादशीं यदीति सार्थकं । तथाच दिवसे एव द्वादशीयोगः सोपि मुहूर्तत्रयात्मक उत्तमः । तदभावे द्विकलो यदि लभ्येतेति वचनादेकमुहूर्तात्मकोपि ग्राह्यः । एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् । तद्विष्णुशृंखलं नाम विष्णुसायुज्यकृद्भवेत् । इति विष्णुधर्मोत्तरवाक्येपि तत्रशब्देन दिवस एव परामृश्यते । समुच्चयार्थकापिशब्दस्वारस्यात् । निर्णयामृते तु द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि । इति आद्यश्लोके पूर्वार्धपाठस्तत्राप्येकादशीशब्दस्य दिवसपरत्वादेक एवार्थः । एतेन हेमाद्रिमते श्रवणयुक्तद्वादशीयोगमात्रेण विष्णुशृंखलं भवति । निर्णयामृतमते तु श्रवणस्यैकादशीद्वादशीभ्यां योगे एव विष्णुशृंखलं नान्यथेति निर्णयसिंध्वाद्युक्तमुपेक्ष्यं । मतभेदकल्पनस्यायुक्तत्वात् । तत्राप्येकादश्याः द्वादशीश्रवणाभ्यां योगे इति वक्तव्ये प्रकृतोक्तिरपि चिंत्या । यदा त्वेकस्मिन्नेव दिवसे श्रवणमेकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदा फलाधिक्यं । तदुक्तं हेमाद्रौ नारदीयपुराणे —संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति । इति । यत्त्वत्र यदा एकस्मिन्नहोरात्रे श्रवणं एकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदा फलाधिक्यमुक्तं नारदीये इति मदनरत्नेनोक्तं । तत्र यदा पूर्वदिने अस्तानंतरमेव द्वादश्यां श्रवणयोगः द्वितीयदिने सूर्योदयमारभ्य श्रवणयोगस्तदा—तिथिर्नक्षत्रसंयोगविहिता व्रतकर्मणि । प्रदोषव्या-

पिनी ग्राह्या त्वन्यथा निष्फलं भवेत्। इति सामान्येनोक्त्वा श्रवणविषये–उदयव्यापिनी ग्राह्या श्रवणद्वादशीव्रते । इति प्रदोषापवादकबृहन्नारदीयस्य द्वादशी श्रवणस्पृष्टेत्यादि मात्स्यादिभिर्विरोधापादकत्वाद्द्वितीयसूर्योदयात्पूर्वं अर्धघटिकामात्रेण प्रवृत्तश्रवणस्य पादघटिकामात्रेण प्रवृत्तद्वादश्याश्च तृतीयसूर्योदयपर्यंतसत्वेपि विष्णुशृंखलत्वापत्तौ श्रवणद्वादशीव्रतलोपापत्तेर्हेमाद्रिनिर्णयामृतादिविरोधाच्च रात्र्यंशो विवक्षणीयः । नच विष्णुशृंखले व्रतद्वयस्य तंत्रेणानुष्ठानमिति मदनरत्नोक्तत्वेन कथं द्वादशीव्रतलोपापत्तिरिति वाच्यं । शृंखले एकादश्युपवासेन द्वादश्युपवाससिद्धिबोधकवचनाभावेन प्रकृते तस्याप्यसंगतत्वात् । नन्वेवं शृंखले तंत्रेणानुष्ठानमिति हेमाद्र्याद्युक्तिरसंगता स्यादिति चेन्न । एकादशीविद्धाया एव द्वादश्याः खंडतिथावुपोष्यत्वात्तस्यां दिवा मुहूर्ताद्यवच्छेदेन श्रवणसत्वे एव तैः विष्णुशृंखलत्वस्वीकारात् । एकेन पुरुषेणैकस्मिन् दिने उपवासद्वयानुष्ठानासंभवात्सहैवानुष्ठानमित्यभिप्रायकहेमाद्र्याद्युक्ते रमणीयत्वात्, अस्तोत्तरप्रवृत्तद्वादश्या द्वितीयदिने एवोपोष्यत्वात्तत्रैकादश्युपवासेन द्वादश्युपवासासिद्धेस्तल्लोपापत्तेर्दुवारत्वात् । उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुतां । एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयं । इत्यादिवाक्यैर्वैपरीत्यस्यैव प्रतिपादनाच्च । नन्वेवं तर्हि भवतु प्रकृते श्रवणद्वादश्युपवासो द्वितीयदिने तथापि यदा शुद्धाधिका द्वादशी द्वितीयदिने एवोदयकाले श्रवणयुता तद्विषयमेव बृहन्नारदीयमिति वदतो मदनरत्नस्य मते मात्स्यादिभिर्बृहन्नारदीयस्य विरोधोद्भावनं कथमिति चेत् । संपूर्णद्वादश्यां दिवामुहूर्ताद्यवच्छेदेन श्रवणयोगेपि कृत्स्नायाः पुण्यतमत्वप्रतिपादनात् । तत्रैव कर्मकालशास्त्रप्रवृत्तेः तद्विरोधात् बृहन्नारदीयस्य तत्रोत्तरविषयत्वासंभवात् । नच बृहन्नारदीयमनुपन्यसतां हेमाद्र्यादीनां तेन सह मात्स्यादीनां विरोधस्तदवस्थ इति वाच्यं । उदयव्यापिनीत्यस्य सार्वत्रिकत्वे मात्स्यादीनां निर्विषयत्वापत्तेः सामान्यतो नक्षत्रयुता तिथिः प्रदोषव्यापिन्येव ग्राह्येति पूर्वमुक्तत्वादुदयव्यापिनीत्यनेन तस्यैवापवादः क्रियते इति एकादशीविद्धश्रवणद्वादश्यास्तदवि-

षयत्वेन विरोधाभावात् । तस्मान्मदनरत्नीयोऽहोरात्रशब्दो दिवसपरत्वेनैव नेयः । अन्यथा यदा दिनद्वये श्रवणद्वादशीयोगस्तदैकादशीयोगस्य प्रशस्तत्वादिति पूर्वमदनरत्नग्रंथः विष्णुशृंखलयोगे एकादश्युपवासः श्रवणद्वादश्युपवासश्च तंत्रेणैवानुष्ठेय इत्युत्तरग्रंथश्चासंगतः स्यात् । अतएव यदा विद्धाधिकायां दिनद्वयेपि श्रवणयोगस्तदा एकादशीयुता ग्राह्या तदा तंत्रेणोपवासद्वयं । तत्रैव यदा श्रवणमेकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदातिप्राशस्त्यमिति मदनरत्नानुयायि कालतत्त्वविवेचनं संगच्छते । अतएव लाघविकैर्माधवाचार्यैर्द्वादशीश्रवणस्पृष्टेत्यादिवाक्यानि उपवासयोग्यद्वादश्यां श्रवणयोगे प्राशस्त्यमात्रबोधकानि इति पर्यालोच्य तान्यनुपन्यस्यैव द्वादशी पूर्वविद्धा ग्राह्येत्युपक्रम्य—नन्वेवं सत्येकादश्युपवासो द्वादश्युपवासश्चेत्युभयमेकस्मिन्दिने प्राप्नोति । सत्यं विरोधाभावात्सहैवानुष्ठानमिति सिद्धांतितं । संग्रहवाक्येपि—श्रवणेन युता चेत्स्याद्द्वादशी सा हि वैष्णवैः।सातैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा । इत्युक्तं तत्र न्यूनताशंकापि निरस्ता । अतएव भाद्रपदशुक्लद्वादशी श्रवणद्वादशी सा यद्येकादश्यामेव स्यात्तदा विष्णुशृंखलयोग इति निर्णयामृतश्च[1] संगच्छते । तस्मान्मात्स्यादीनां बृहन्नारदीयस्य वा सांकर्येणाप्युपपत्तेर्हेमाद्यादीनामेकवाक्यत्वाच्च । एकादशीयुक्ते दिवसे एकमुहूर्ताद्यवच्छेदेन श्रवणयुक्तायाः द्वादश्या सत्वे एव विष्णुशृंखलयोग इति सिद्धं । एतेन मदनरत्ने अहोरात्रशब्ददर्शनमात्रप्रवृत्ताः यदा निशीथे तदनंतरं सूर्योदयावधि वा द्विकलामात्रमपि श्रवणं भवति तदापि पूर्वैवेति प्रतिपादका निर्णयसिंधुस्मृतिकौस्तुभभट्टोजीदीक्षितादिग्रंथाः गोविंदार्णवादयश्च बृहन्नारदीयहेमाद्र्यादिविरुद्धाः । पूर्वोक्तरीत्या श्रवणद्वादशीव्रतलोपापादकाश्चेति बोध्यं ।

नन्वेवमपि द्विकलो यदि लभ्येतेति नारदीयपुराणमूलकमदनरत्नोक्तार्थस्यैव कालतत्त्वविवेचनातिरिक्तसर्वनवीनग्रंथकारैः स्वीकारात् कथं व्रतलोपापादकत्वमिति चेन्न । प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । मुहूर्तमपि लभ्येत सोपोष्येति स्कांदात् सप्तम्यामर्धरात्रादूर्ध्वं सूर्योदयात्प्रागेवाष्टमी-

1 'श्चानुकूलः'.

रोहिणीयोगेपि अनुष्ठानापत्तेः । इष्टापत्तिनिरासस्तु तत्प्रकरणे द्रष्टव्यः । नारदीयस्य तर्हि का गतिरिति चेन्न । साकल्यबोधकवचनानां व्यवस्थापकत्वे सर्वत्राव्यवस्थापत्तेः । तत्र निर्णायकवाक्यैस्तिथ्यादौ निर्णीते यत्र पूर्वांगाद्यनुष्ठाने प्रधानैकदेशानुष्ठाने च तत्तत्तिथ्याद्यसत्वे कथमनुष्ठानमिति शंकाव्युदासार्थत्वस्यैव सकलकालतत्त्वविद्भिः सिद्धांतितत्वेन तस्य निर्णायकत्वासंभवात् तच्छंकाव्युदासार्थमेव तत् । अन्यथा बृहन्नारदीयादिविरोधापत्तेरिति दिक् । अस्मिन्विष्णुशृंखलयोगे एकादश्युपवासो द्वादश्युपवासश्च पूर्वोक्तरीत्या सहैवानुष्ठेयः । यदा त्वेकादशीश्रवणद्वादश्युपवासौ पृथक् प्राप्नुतः तदा नैरंतर्येणोपवासद्वयं कार्यं । तदुक्तं हेमाद्रौ भविष्योत्तरे—एकादश्यामुपोष्यैव द्वादश्यामप्युपोषयेत् । नचात्र विधिलोपः स्यादुभयोर्दैवतं हरिः। इति। यस्तूपवासद्वयासमर्थः संकल्पितैकादशीव्रतस्तस्यैकादश्यामुपवासो द्वादश्यां तु पूजामात्रं । तदुक्तं हेमाद्रौ मत्स्यपुराणे—द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि । उपोष्यैकादशी तत्र द्वादश्यां पूजयेद्धरिं । इति । हेमाद्रौ यमः—श्रवणेन सिता यत्र द्वादशी लभ्यते क्वचित् । उपोष्यैकादशी तत्र द्वादश्यां पूजयेद्धरिं । इति । यस्तूपवासद्वयासमर्थः असंकल्पितैकादशीव्रतश्च स द्वादश्यामेवोपवसेत् । तदुक्तं हेमाद्रौ नारदीयपुराणे—उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुतां । एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयं । वाजपेये यथा योगे कर्महीनोपि दीक्षितः । सर्वं फलमवाप्नोति अस्नातोप्यहुतोपि सन् । इति । यदा तु शुद्धाधिका विद्धाधिका वा द्वादशी पूर्वदिने सूर्यास्तमारभ्य श्रवणयुक्तोत्तरसूर्योदयोत्तरमपि मुहूर्ताद्यवच्छेदेन श्रवणयुक्ता भवति तदोत्तरैव ग्राह्या । तथाच बृहन्नारदीये—तिथिनक्षत्रसंयोगाविहिता व्रतकर्मणि । प्रदोषव्यापिनी ग्राह्या त्वन्यथा निष्फलं भवेत् । इति सामान्येनोक्त्वा श्रवणे विशेष उक्तः—उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते । इत्यनेन पूर्वदिने प्रदोषश्रवणयुक्तामुपेक्ष्योत्तरदिने उदयोत्तरकाले श्रवणयुक्तैव ग्राह्येति प्रतिपादनात्पूर्वदिने अस्तात्पूर्वंश्रवणयोगश्चेत्तदा श्रवणयोगमात्रेणैव कृत्स्नायाः पुण्यत्वप्रतिपादनात् बहुकर्मकालव्यापित्वेन कर्मकालशास्त्रानुग्रहाच्च सव ग्राह्येति परिशेषणात्पूर्वोक्तहेमाद्रि-

तो युक्ततर एव । शुद्धाधिकापि द्वादशी परदिने एवोदय·
श्रवणयोगवती पूर्वदिने तूदयकालातिरिक्तकाले श्रवण·
ती तदोत्तरा ग्राह्या । यदा तूभयत्रोदयकालिकश्रवणयोग·
दा पूर्वैव बहुकर्मव्यापित्वादिति बोध्यं । यदा द्वादश्यां
नास्ति किंत्वेकादश्यामेव तदा एकादश्यामपि इदं व्रतं
त्युक्तं । तत्रापि दशमीविद्धायामेवैकादश्यां श्रवणं नोत्त-
दा दशमीविद्धायामपि कार्यं । तदुक्तं सामान्यप्रकरणे
दाहृतलिंगपुराणे–दशम्यैकादशी यत्र सा नोपोष्या
थिः । श्रवणेन च संयुक्ता सा शुभा सर्वकामदा । इति ।
ले इदं वचनं विजयैकादशीव्रते वह्निपुराणस्थमित्युक्तं।यत्तु
स्यपुराणे–एकादश्यां तु विद्धायां संप्राप्ते श्रवणे तथा ।सो-
द्वादशी पुण्या सर्वपापक्षयावहा । इति वचनं तद्द्वितीयदिने
त्वे वैष्णवविषये वा बोध्यं । वैष्णवप्रकरणस्थत्वात् तस्य
ने श्रवणयोगाभावे दशमीविद्धापि ग्राह्या । दशम्येका-
वह्निपुराणात् तदाप्येकादश्युपवासस्तंत्रमेवेति काल-
वचनं । तत्र श्रवणद्वादश्युपवासेनैव दशमीविद्धोपवासे-
युपवाससिद्धिबोधकवचनाभावात्कथमितिचिंत्यं । श्रवण-
वासांगपारणं तु द्वितीयदिने उभयानुवृत्तौ उभयांते
थिनक्षत्रनियमे तिथिभांते च पारणं । अतोन्यथा पारणायां
वाप्नुयात् । इति हेमाद्र्युदाहृतसाधारणस्कंदपुराण-
प्यनुग्रहात् उभयांतासंभवे तिथ्यंते एव । याः काश्चित्ति-
क्ताः पुण्या नक्षत्रसंयुताः । ऋक्षांते पारणं कुर्याद्विना
हिणीं । इति हेमाद्रौ स्कंदपुराणात् तिथ्यंतासंभवे
पे भवति । सांयोगिके व्रते प्राप्ते यत्रैकोपि वियुज्यते ।
रणं कुर्यादेवं वेदविदो विदुः । तिथिनक्षत्रसंयोगे
भवेद्यदा । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः ।
माद्र्युदाहृतवह्निपुराणात् नारदीयपुराणाच्चेति ।
विष्णुशृंखलयोगे एवोपवासस्तदा द्वितीयदिने श्रवणां-
पि द्वादशीमध्य एव पारणं कर्तव्यं । एकादश्युपवासां-
द्वादश्यामेवावश्यकत्वात् त्रितययोगनिमित्तोपवासां-
द्वयोरनुवृत्तावपि वह्निपुराणनारदीयपुराणाभ्यां
च्च । अतएव–तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।

तावदेव न भोक्तव्यं यावदेकस्य संक्षयः। विशेषेण महीपाल श्रवणं वर्धते यदि। तिथिक्षये न भोक्तव्यं द्वादशीं नैव लंघयेत्। इति निर्णयामृतोदाहृतनारदीयद्वितीयवचनं सावकाशं। अत्र श्रवणात् द्वादशीन्यूनत्वे पूर्ववाक्यात् तिथिक्षये एव भोक्तव्य-मिति प्रसक्तौ तिथिक्षये न भोक्तव्यमित्यनेन निषिध्यते। तिथिक्षये न भोक्तव्यमित्युक्तेपि अत्र न भोक्तव्यं किंतु नक्षत्रांत एवेति शंकानिरासार्थं द्वादशीं नैव लंघयेदित्युक्तं। तत्रापि आभाके-त्युदाहृतवचनात् संगवादूर्ध्वं सप्तममुहूर्तादौ संगवात्प्राक् तृती-यमुहूर्ते वा पारणं कार्यं। तिथितत्वे त्विदमेव वचनं भवि-ष्योत्तरनाम्ना लिखित्वा तिथिक्षयेण एकादशीक्षयेण भोक्तव्यं द्वादश्यां पारयेदित्यर्थः। अत्र हेतुर्द्वादशीमित्यादिरिति व्या-ख्यातं। अन्यथा तद्वैयर्थ्यं स्पष्टमेवेति विभावनीयं। इति पुरु-षार्थचिंतामणौ कालखंडे द्वादशीनिर्णयः।

अथ त्रयोदशी निर्णीयते। सा च शुक्लकृष्णपक्षभेदेन व्यवस्थितैव। तत्र शुक्लत्रयोदशी पूर्वविद्धा ग्राह्या। त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने। भूतविद्धा न कर्तव्या दर्शः पूर्णा कदाचन। वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम्। इति हेमाद्रौ ब्रह्मवैवर्तात्। एवमेकादशी ग्राह्या द्वादश्या तु त्रयोदशी। इति हेमाद्रौ पाद्मात्। तुश्चार्थे। एकादशी त्रयो-दशी च द्वादशीयुता ग्राह्येत्यर्थः। त्रयोदशी तु कर्तव्या भवेद्या चापराह्णिकी। इति हेमाद्रौ स्कांदाच्च। अत्र प्रतिपद इवा-पराह्णसंबंधोपेक्षित इति माधवेनाप्यपराह्णसंबंधस्यानावश्यक-त्ववचनात्। अतएवापराह्णिकी पूर्वविद्धेत्यर्थ इति हेमाद्रि-मदनरत्नौ। युक्तं चैतत्। द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापरा-ह्णिकी। इत्यादौ तथा निर्णीतत्वात्। यद्यप्येषु वाक्येषु शुक्लपक्षो-पादानं नास्ति तथापि–षष्ठ्यष्टमी त्वमावास्या कृष्णपक्षे त्रयोदशी। एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा। इति विशेषरूपनिग-मवाक्येन कृष्णत्रयोदश्याश्चतुर्दशीयुताया एव विधानात्सामान्य-रूपाणां तेषां शुक्लत्रयोदशीविषयत्वमेव परिशिष्यते। षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी। एताः परयुताः पूज्याः पराः पूर्वयुताः शुभाः। इत्यमाप्रकरणे हेमाद्रौ पाद्माच्च कृष्णापि

१ माधवेनोक्तं तत्र प्रतिपद इवेत्यनेन तस्यानावश्यकत्वमपि सूचितम्।

परदिने न लभ्यते चेत्पूर्वैव । एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि । इति हेमाद्रौ वृद्धवसिष्ठादुपवासेष्वुत्तरैव । एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः । इति हेमाद्रौ विष्णुधर्मोत्तरात् । अत्र कृष्णपक्षशब्दाभावेपि त्रयोदशी त्विति ब्रह्मवैवर्तेन सावित्रीव्रते पूर्वविद्धदर्शादिसाहचर्येण त्रयोदश्या उपवासेपि पूर्वविद्धाया विधानात् इदं कृष्णत्रयोदशीविषयकमेवेति परिशिष्यते । अन्यथा तद्विरोधापत्तेः । अतएवानंगत्रयोदश्याः शुक्लत्वात्तदुपवासस्य ब्रह्मवैवर्तीये पूर्वविद्धायां सिद्धत्वात्संवर्तवचनं स्पष्टार्थमिति माधवसिद्धांतः संगच्छते । द्वितीया पंचमीवेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी । इति वृद्धवसिष्ठेपि विष्णुधर्मोत्तरविरोधाद्ब्रह्मवैवर्तैकवाक्यत्वाच्च शुक्लत्रयोदशीविषयमेवेति । एतेन मदनरत्ने कालतत्त्वविवेचनादौ च एतद्विरोधपरिहारार्थं निगमवचने पुनरपि भारारोपणं कृतं तद्ब्रह्मवैवर्तेनैवावरोपितमिति बोध्यम् ।

अनंगत्रयोदश्यपि पूर्वविद्धैव । तदाह हेमाद्रौ निगमः । कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी । अनंगत्रयोदशी रंभा उपोष्याः पूर्वसंयुताः । इति । मार्गशीर्षशुक्लत्रयोदशी अनंगत्रयोदशी । तत्र ब्रह्मवैवर्तेनैव सिद्धत्वादिदं विशेषवचनमिति बोध्यं । माधवोप्येतत्समानार्थकं संवर्तवाक्यमुपन्यस्यैवमेव सिद्धांतितवान् । एवंच शुक्लत्रयोदशी पूर्वविद्धा कृष्णत्रयोदशी परविद्धेति सामान्यतो निर्णयः सिद्धः । इदानीमिदं विचार्यते—पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा । घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत् । शुक्लांबरधरो भूत्वा वाग्यतो नियमान्वितः । कृतसंध्याजपविधिः शिवपूजां समारभेत् । इत्युपक्रम्य पूजाविधिमभिधाय—एवमाराधयेद्देवं प्रदोषे गिरिजापतिं । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च पूजयेत् । सर्वपापक्षयकरी सर्वदारिद्र्यनाशिनी । शिवपूजेयमाख्याता सर्वाभीष्टफलप्रदा । बहुनात्र किमुक्तेन श्लोकार्धेन ब्रवीम्यहं । ब्रह्महत्याशतं वापि शिवपूजा विनाशयेत् । मया कथितमेतत्ते प्रदोषे शिवपूजनं । रहस्यं सर्वजंतूनामत्र ना-

स्त्येव संशयः। इत्यंतेन पक्षद्वयसाधारण्येन त्रयोदश्यां दिनावच्छेदेनाहाराभावविशिष्टकर्तृकं प्रदोषे शिवपूजाप्रधानकं प्रदोषव्रतं ब्रह्मोत्तरखंडे विहितं। एवं—यदा त्रयोदशी शुक्ला मंदवारेण संयुता। आरब्धव्यं व्रतं तत्र संतानफलसिद्धये। इत्याद्युपक्रम्य—ततस्तु लोहिते भानौ स्नातः सुनियतो व्रती। पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत्। इत्यादिना पूजामभिधाय—निवेद्य कर्मजातं तु दद्याद्वित्तानुसारतः। दक्षिणां ब्राह्मणेभ्यश्च ततो मौनं विसर्जयेत्। इत्याद्यंतेन मंदवारादियुक्तत्रयोदश्यां प्रदोषे शिवपूजाप्रधानं शनिप्रदोषादिव्रतं स्कंदपुराणे उक्तं तदंगत्रयोदशीनिर्णयः किं प्रातिस्विकत्रयोदशीवचनेनोत 'निराहारो भवेद्दिवे'त्युक्त्या पूजोत्तरं रात्रौ रागप्राप्तभोजनपरिशेषणाद्दिवाभोजनाभावविशिष्टरात्रिभोजनस्यैव नक्तत्वान्नक्ततिथिनिर्णायकवचनैर्निर्णयः, अथवा हेमाद्र्यादिभिर्विशेष्यानभिधानात्तत्संमतसाधारणकर्मकालशास्त्रेणैवेत्यत्र कथं निर्णय इति विचार्यते। तत्र तावत्प्रातिस्विकवाक्येनैव निर्णयो युक्तस्तस्य शीघ्रोपस्थितिकत्वात्। न प्राचीनसंमतकर्मकालशास्त्रादिना। तस्य विलंबोपस्थितिकत्वात्। अतएव समयमयूखे दिनद्वये प्रदोषव्यापित्वे अव्यापित्वे वा पूर्वा—त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने। इति सुमंतुवचनादिति सिद्धांतितम्। नच हेमाद्र्यादिभिरनुपन्यासादस्य सौमंतवत्त्वे किं मानमिति वाच्यं। तथाप्येतत्समानार्थकब्रह्मवैवर्तस्य हेमाद्रिणोदाहृतत्वात्। तस्माद्दिनद्वये प्रदोषव्याप्तावव्याप्तावपि पूर्वैवेत्येव निर्णय इति चेन्न। षष्ठ्यष्टमीति निगमपद्मपुराणवाक्याभ्यां कृष्णत्रयोदश्याः परविद्धाया एव विशेषतो विधानात् तद्विरोधपरिहारार्थं ब्रह्मवैवर्तस्य शुक्लामात्रविषयत्वात्। तेन पक्षद्वयेऽनुष्ठीयमानप्रदोषव्रते तिथिनिर्णयस्यात्यंतासंभावितत्वात्। नच शुक्लपक्ष एवेदं निर्णायकं कृष्णपक्षे वाक्यांतरेणोत्तरविद्धाप्रसक्तौ अस्तोत्तरमनुष्ठीयमानव्रते तस्या अयोग्यत्वादनेनैव तत्रापि निर्णय इत्याशय इति शंक्यं। प्रदोषद्वये सत्वे असत्वेऽपि च स्कांदाद्येकवाक्यतया पूर्वविद्धाविधायकस्य तस्यास्तोत्तरमनुष्ठीयमाने व्रते शुक्लाविषयत्वस्या[1]प्यसंभवात्। अपिच यदा स्यात्तिथ्योरुभयोः प्रदोषव्यापिनी-

१ 'वस्यैवासंभवात्'.

व्रती । कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण तु । इत्यादिवचनैरुत्तरप्रदोपगताया एवांगत्वबोधनात्कालरूपांगस्यानुपादेयत्वात् । पूर्वप्रदोषे विद्यमानाया अपि-विधिः पूज्यतिथौ तत्र निषेधः कालमात्रकः । इत्यनेन तिथ्यंतरवन्निषेधाविशेषात् तत्रानुष्ठानापूर्वोत्पत्तौ प्रमाणाभावाच्च । अतएव प्रदोषद्वयव्याप्तौ पूर्वेति तु अत्यंतासंगतं । अतथात्वे परत्र स्यादस्तादर्वाग्यतो हि सा । इति जाबालिविरोधात् । नक्तप्रकरणे दिनद्वये प्रदोषव्याप्तावव्याप्तावपि परैवेति हेमाद्र्यादिसकलविरोधाच्च । अपिच पूर्वदिने एव प्रदोषव्याप्तावपि पूर्वविधायकस्य तस्य निर्णायकत्वासंभवादिति । यदपि इदं दूषणं ज्ञात्वा कालतत्त्वविवेचनानुसारेण मयूखानुयायिकल्पितं पाठांतरं तत्तन्निरासेनैव निरसिष्यत इति दिक् ॥

नन्वेवमप्ययुक्तत्वादसंभवाच्च मास्तु ब्रह्मवैवर्तादिना निर्णयः परंतु सकलानुष्ठेयसकलतिथ्यादिसाधारणकर्मकालशास्त्रापेक्षया–प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । इत्यादिभिर्व्रतविशेषं पुरस्कृत्य तिथिविधायकैरेव निर्णयो युक्तः । प्रदोषव्रतस्याप्याधिकनक्तत्वात् । नतु कर्मकालशास्त्रेण । तस्यात्यंतसाधारणत्वात् । अतएव स्वरसात् निर्णयामृतमदनरत्नाभ्यां कर्मकालशास्त्रादेव निर्णय इत्यभिप्रायेण नक्तकालवाक्यमनुपन्यस्योदाहृते स्कंदपुराणोक्तशनिप्रदोषादिव्रते कालतत्वविवेचनादौ नक्तकालवाक्यैरेव तत्र निर्णयः पुरस्कृतः ।

तथाहि अथ त्रयोदश्यां कश्चिद्विशेषः । शनिवारादियुक्तत्रयोदशीषु कर्तव्यं तत्प्रदोषसमये शिवपूजानक्तभोजनात्मकं प्रदोषव्रतं । तत्र प्रदोषव्यापिनी त्रयोदशी ग्राह्या । तस्य प्रदोषकालत्वं–ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती । पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत् । इति तद्विधावुक्तं । नक्तभोजनस्य प्रदोषकालत्वं नक्तनिर्णये वक्ष्यते । दिनद्वये प्रदोषव्याप्तौ साम्येन तदेकदेशस्पर्शे वोत्तरा, संकल्पमारभ्य सत्वात् । वैषम्येणैकदेशस्पर्शे आधिक्यवती पूर्वापि ग्राह्या । यदि देवपूजाभोज-

नपर्याप्तमाधिक्यं । नोचेदुत्तरैव । सायाह्नरूपगौणकालव्याप्तेरपि लाभात् दिनद्वये प्रदोषस्पर्शाभावेप्युत्तरैव । नचानैकभक्तवन्मुख्यकालेनुष्ठानं किंतु गौणकाल एव । सायाह्ने तु भुक्तिक्रियामिति वचनात्तत्पूर्वस्य पूजादेरपि अपकर्षेण तत्रैव कर्तव्यत्वादिति कालमाधवीयविवेचने दिनद्वये साम्येन वैषम्येण वा तदेकदेशस्पर्शिन्यप्युत्तरैव गौणकालव्याप्तेरधिकत्वादिति नक्तप्रकरणस्वग्रंथविरोधेप्यत्राधिक्यवती पूर्वा ग्राह्येति सिद्धांतः छलः । अतो नक्ततिथिनिर्णायकवाक्येनैव निर्णयो युक्तो नतु कर्मकालवाक्यात् ।तस्माद्धेमाद्र्याद्यभिप्रायानुरोधोऽयुक्त एवेति चेन्न । प्रदोषव्रतस्य नक्तव्रतत्वसंभव एव तदंगतिथिनिर्णायकवाक्यैरस्य निर्णयसंभावना नक्तव्रतत्वं त्वस्य बाधितं । यतः-एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् । इत्यादिवाक्यैः सकलनिबंधकारैश्च दिवावच्छिन्नाभावप्रतियोगिरात्रिभोजने एव नक्तशब्दरूढेः प्रतिपादनात् तादृशरात्रिभोजनमेव नक्तं।प्रदोषव्रतं तु-छलसंख्याजपविधिःशिवपूजां समारभेत् । एवमाराधयेद्देवं प्रदोषे गिरिजापतिं । इत्यादिवाक्यैर्दिवावच्छिन्नभोजनाभाववत्कर्तृकप्रदोषकालिकशिवपूजने एव निरूढिबोधनेन प्रदोषे शिवपूजारूपमेवेति अत्यंतवैलक्षण्येनास्य नक्तत्वासंभवात् । नचास्य पूजारूपत्वेपि अयंच प्रदोषव्यास्या निर्णयः प्रदोषसाध्ये पूजादिरूपेपि द्रष्टव्यो न्यायाविशेषादिति नक्तप्रकरणे कालतत्त्वविवेचने उक्तत्वान्न दोष इति वाच्यं । प्रदोषव्यापिनी न स्याद्दिवानक्तं विधीयते । इत्यादिना दिवापूजानुष्ठानापत्तेः । नच प्रदोषद्वये त्रयोदश्यभावे पूजादिकं कृत्वा दिवैव भोजनं कार्यमिति कालतत्त्वविवेचने सिद्धांतितत्वादिष्टापत्तिरिति वाच्यं । अंगकालानुरोधेन प्रधानकालबाधस्यांगगुणविरोधे च तादर्थ्यादित्यादिन्यायविरोधेनायुक्तत्वे अनंगार्थिकभोजनकालानुरोधेन प्रधानकालबाधे इष्टापत्तेरत्यंतानुचितत्वात् । नच भोजनस्यानंगत्वे-प्रदोषे शिवमभ्यर्च्य[1] नक्तं भोक्ष्यामि शंकर । इति स्कांदविरोध इति शंक्यं । अयाचितव्रते ऽयहमद्याऽयाचितमित्यस्य याचितनिषेधपरत्ववत् दिवाभोजननिषेधपरत्वेन रात्रिभोजनपरत्वासंभवात् । अपिचैवं भोजनानुरोधेन दिवापूजने कृतेपि-पक्षद्वये त्रयोदश्यां निराहारो भवे-

1 'प्रदोषे शिवमर्चयेत्'.

ह्विा । कृतसंध्याजपविधिः शिवपूजां समारभेत् । इति प्रधानविधिबाधे व्रतभंग एव स्यादिति । एतेन नचात्र मुख्यकालेऽनुष्ठानं किंतु गौणे एवेति ग्रंथोऽपि किमाशयक इति चिंतनीयमिति दिक् । तस्मान्नक्तकालविधायकवाक्यैर्निर्णयस्याप्ययुक्तत्वाद्धेमाद्र्यादिसकलनिबंधाभिप्रेत—कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । इत्यादिकर्मकालशास्त्रेणैव प्रदोषव्रते त्रयोदशी निर्णेतव्येति ।

ननु कर्मकालव्याप्तिशास्त्रेणापि निर्णयः कर्तुमशक्यः । कर्मकालपरिमाणनिश्चयाधीनत्वात्तस्य । प्रकृते तन्निश्चयासंभवात् । तथापि प्रदोषे शिवमर्चयेदिति विधेः विधेयप्रदोषपरिमाणबोधकवाक्यांतरसापेक्षत्वात् किं तदित्याकांक्षायां—अस्तमानं समारभ्य सार्धाः सप्त च नाडिकाः । प्रदोष इति विख्यातस्त्वर्धयाममतः शृणु । इति नैमित्तिकदेवपूजाकालप्रकरणे हेमाद्र्युदाहृतविष्णुधर्मोत्तरस्य—त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तंगते सति । नक्तं तु तत्र कुर्वीत इति शास्त्रस्य निश्चयः । इति हेमाद्रिमाधवाद्युदाहृतस्य, यजनं प्रतिमानां तु उत्तमं त्विति कीर्तितं । उदये चैव मध्याह्ने प्रदोषे त्वर्धयामकं । इति हेमाद्रौ विष्णुधर्मोत्तरस्य, प्रदोषो रजनीमुखमिति कोशस्य, प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमुच्यते । इति हेमाद्रिमाधवोदाहृतस्य, प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमुच्यते इति तिथितत्वाद्युदाहृतवाक्यस्य च युगपदुपस्थितत्वात् परस्परविरुद्धार्थकत्वेन सर्वेषां प्रवृत्तेरसंभवात् एकस्यैव प्रवृत्तौ नियामकाभावेन परिमाणविशेषज्ञानासंभवादितिचेन्न । प्राकरणिकनैमित्तिकपूजांगप्रदोषविधायकवाक्याकांक्षापूरणेन । विष्णुधर्मोत्तरस्य नैराकांक्ष्यात्, नक्तं तु तत्र कुर्वीतेत्युत्तरार्धविहितनक्तांगप्रदोषे परिमाणबोधनेन त्रिमुहूर्तमित्यस्य नैराकांक्ष्यान्नात्र प्रवृत्तिः । किंतु अनारभ्याधीतं यजनं प्रतीति विष्णुधर्मोत्तरं । त्रियामां रजनीं प्राहुर्मुक्त्वाद्यंतचतुष्टयं । नाडीनां तदुभे संध्ये दिनस्याद्यंतसंज्ञिते । इति ब्रह्मवैवर्तेन एकादशीप्रकरणोक्तरीत्या राद्यंतयामार्धस्य दिनादित्वप्रतिपादनात् प्रत्यूषोहर्मुखमिति कोशेनापि यामार्धमेव प्रतिपाद्यत इति सिद्धांतः । एवं रात्रेराद्ययामार्धमेव रजनीमुखमित्यभिप्रायकः । प्रदोषो रजनीमुख

मितिकोशश्च तदाकांक्षापूरक इति नानुपपत्तिः । न चैवमपि घटिकात्रय–घटिकाद्वयबोधकवाक्ययोरप्यनारभ्याधीतत्वाविशेषाद्विनिगमनाविरहस्तदवस्थ एवेति वाच्यं । एतयोः प्रदोषपरिमाणबोधकत्वस्वीकारे विष्णुधर्मोत्तरस्य कोशस्य च वैयर्थ्यापत्तेः । परस्परविरुद्धार्थत्वेन तथात्वासंभवाच्च । ननु तस्यैव प्रवृत्तौ एतद्वैयर्थ्यमिति शंक्यं । अर्धयामांतर्गतघटिकात्रय-घटिकाद्वयस्य प्रशस्ततमत्वबोधकत्वेन तयोः सार्थकत्वात् । अतएव अवांतरावधिवचनस्य महावधिवचनप्रमितपूर्वाह्णैकदेशनिवर्तकत्वेन वा स्वाभिधेयस्यातिप्राशस्त्यप्रतिपादनपरत्वेन वा अर्थवत्त्वं वक्तव्यं । तत्राद्यपक्षे महावधिवचनानामानर्थक्यबाधौ स्याताम् । अतोऽवांतरावधिवचनं प्रशस्ततरत्वार्थमिति निश्चीयते इति हेमाद्रिसिद्धांतः संगच्छते । रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः घटिकापंचकं[2] मध्यमः इति नक्तप्रकरणे माधवश्च । तस्माद्यामार्धपरिमित एव प्रदोषकाल इति कर्मकालव्याप्तिशास्त्रेणैव त्रयोदशी निर्णेतव्येति सिद्धं । तेनैकस्मिन्नेव दिने साकल्येनैकदेशेन वा प्रदोषव्यापिनी तदा संदेह एव नास्ति । यदा दिनद्वयेपि प्रदोषव्यापिनी साम्येनैकदेशव्यापिनी वा तदोत्तरैव । संकल्पदिनावच्छिन्नोपवासपूजाकालेषु विद्यमानत्वेनातिप्रशस्तत्वात् । यदा तु पूर्वप्रदोषेऽधिकव्याप्तिर्द्वितीये स्वल्पा तदाप्युत्तरैव । दिवारात्रौ व्रतं यच्च एकमेकतिथौ स्मृतं । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती । इति स्कांदात्–यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण तु । इति बौधायनोक्तेः । यदैकस्मिन्दिने कर्मोपक्रमकालव्यापिनी तिथिः अपरस्मिन्दिने कर्मसमाप्तिकालसंबंधिनी तद्विषयमेव बौधायनादिवचनमिति हेमाद्रियुक्तेश्च । अतएव असौरनक्तेषु साम्येन वैषम्येण वा द्विनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्यमिति नक्तप्रकरणे माधवः । यदा नक्तव्रततिथिः पूर्वदिनेधिकं प्रदोषं स्पृशति परदिने स्वल्पं तदाप्युत्तरैव । नक्तस्य दिवारात्रिव्रतत्वेन दिवारात्रिस्पृश्येव तिथौ विधेयत्वादिति निर्णयामृतश्च संगच्छते । नच पूर्वास्तात्पूर्वं प्रवृत्ते तादृशी दिवारात्राविल्यस्यानुग्रहात् संपूर्णप्रदोषव्याप्तेश्च

१ 'प्रतिपादित'. २ 'घटिकाषट्कं'.

पूर्वा कुतो नेति शंक्यं । दिवारात्राविल्यस्य त्रिसंध्यव्यापिनी यत्रेत्येकवाक्यतया उत्तरत्रैव प्रवृत्तौ पूर्वत्र तत्प्रवृत्तेरसंभवात् विधेयसमर्थकाः मध्याह्नादिशब्दा मध्याह्नाद्येकदेशेऽपि मुख्या इति हेमाद्र्यादिभिः सिद्धांतितत्वात् । प्रदोषैकदेशे पूजनेपि-प्रदोषे पूजनान्निराहारो भवेद्दिवेत्यादिविहितव्रतस्य उदयादिप्रदोषांत-कालसाध्यत्वात्संकल्पदिनोपवासाद्यंगकप्रादोषिकपूजनस्य द्विती-यदिने विहितकाललाभेन तत्रैव कर्मकालशास्त्रप्रवृत्तेः पूर्वत्र संक-ल्पादौ त्रयोदश्यभावेन संपूर्णप्रदोषव्याप्तेरप्रयोजकत्वात् । संकटे विहितजलपारणस्य संकटाभावेनाप्रवृत्तेः । एकादशीव्रतासमाप्तौ तत्र प्रदोषव्रतस्य–नैव कुर्याद्व्रतांतरमिति निषेधाच्चेति दिक् ।

प्रदोषद्वयासत्वेप्युत्तरैव । पूजाकाले सत्वेपि अंगभूतसंकल्प-दिनावच्छिन्नोपवासकाले सत्वात् । रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति वचनाच्च । अत्र किं त्रयोदश्यनुरोधेन दिने एव पूजनं उत त्रयोदश्युपलक्षितप्रदोषे एव । तत्रान्यतरत्या-गावश्यकत्वे नक्तव्रते कृतत्वात्प्रदोषानादरेण दिने एव त्रयोदश्यां पूजनं । अतएव नात्रैकभक्तवन्मुख्यकालेऽनुष्ठानं किंतु गौणे एवे-ति कालतत्वविवेचनं संगच्छत इति चेन्न । पक्षद्वये त्रयो-दश्यां निराहारो भवेद्दिवा । इति प्रधानविधिविरोधस्यानुपदमेवो-क्तत्वात् । अपिच–कैलासशैलभवने त्रिजगज्जनित्रीं गौरीं निवेश्य कनकांचितपीठमध्ये । नृत्यं विधातुमभिवांछति शूलपाणौ देवाः प्रदोषसमयेऽनुभजंति सर्वे । वाग्देवी धृतवल्लकी शतमखो वेणुं क्वणन्पद्मजस्तालोन्निद्रकरी रमा भगवती गेयप्रयोगान्विता । विष्णुः सांद्रमृदंगलंबनपटुर्देवाः समंतात्स्थिताः सेवंते तमनु प्रदोषस-मये देवं मृडानीपतिं । गंधर्वयक्षपतगोरगसिद्धसाध्यविद्याधरा-मरवराप्सरसां गणाश्च । येऽन्ये त्रिलोकनिलयाः सहभूतवर्गाः प्राप्ते प्रदोषसमये हरपार्श्वसंस्थाः । अतः प्रदोषे शिव एक एव पूज्योऽथ नान्ये हरिपद्मजाद्याः । तस्मिन्महेशे विधिनेज्यमाने सर्वे प्रसीदंति सुराधिनाथाः । इति प्रदोषकालं प्रस्तुत्य तस्मि-न्पूजामभिधाय तस्याः–ब्रह्महत्याशतं वापि शिवपूजा विनाशयेत् । इति फलमुक्त्वा–मया कथितमेतत्ते प्रदोषे शिवपूजनं । इत्युप-संहारा ।

काम्यतिथिविशेषपूजाप्रकरणे **हेमाद्रौ कूर्मपुराणं**—त्रयोदश्यां तथा रात्रौ सोपहारस्त्रिलोचनं। दृष्ट्वेशं प्रथमे यामे सर्वैः पापैः प्रमुच्यते। इति। **निर्णयामृतमदनरत्नयोः स्कांदं**—पृथिव्यां यानि तीर्थानि सागरांतानि यानि च। अंडमाश्रित्य तिष्ठंति प्रदोषे गोवृषस्य च। स्पृष्ट्वा तु वृषणौ तस्य शृंगमध्यं विलोक्य च। पुच्छं च ककुदं चैव सर्वपापैः प्रमुच्यते। इत्यादिसर्वसंभवाद्रात्रावेव पूजोचिता। एवंसति तत्र दिवाकृतात्पूजनात्प्रदोषकृतपूजनफलं भवतीत्यत्र न किंचिन्मानं, प्रत्युत—ये नार्चयंति गिरिशं महिते प्रदोषे येऽभ्यर्चितं शिवपदं प्रणमंति चान्ये। ये तत्कथां श्रुतिपुटैर्न पिबंति मूढास्ते जन्मजन्मसु भवंति नरा दरिद्राः। इत्यनिष्टापत्तिश्च। तस्मात्त्रयोदश्यां सत्यामसत्यां वा पूजनं सायंसंध्योत्तरमेव। नच तत्र त्रयोदश्यभावात्केवलप्रदोषे कृतात्पूजनात्कथं विशिष्टफलमिति शंक्यं। अंगभूतसंकल्पोपवासयोः त्रयोदशीसंबंधस्य स्पष्टत्वात्। पूजाकाले ज्योतिःशास्त्रप्रसिद्धत्रयोदश्यसत्त्वेपि साकल्यवचनापादितायाः सत्वात्तादृशस्थले तादृश्या एव वैशिष्ट्यसंपादकत्वशास्त्रानुगतत्वात्। अतएवापराह्णद्वयास्पर्शे तत्तिथ्युपलक्षितपूर्वापराह्ण एव पार्वणश्राद्धानुष्ठानमिति हेमाद्र्यादिभिः[1] सिद्धांतितं। तत्सिद्धं प्रदोषे एव पूजनं न दिवेति। तस्मादुभयप्रदोषव्याप्तौ अव्याप्तौ साम्येनैकदेशव्याप्तौ पूर्वप्रदोषे अधिकव्याप्तौ उत्तरप्रदोषे न्यूनव्याप्तावपि उत्तरदिने एव प्रदोषव्रतानुष्ठानं सर्वथा परदिने प्रदोषव्याप्त्यभावे पूर्वैवेति सिद्धमिति विभावनीयमिति दिक्।

अत्र त्रिलोचनयात्रोक्ता काशीखंडकाशिकाख्यां स्कांदे—क्ष्मां प्रदक्षिणीकृत्य यत्फलं समवाप्यते। प्रदोषे तत्फलं काश्यां दृष्ट्वा देवं त्रिलोचनं। यः प्रदोषे त्रयोदश्यां शनिवासरसंयुजि। संस्नास्यति नरो धीमान्कामकुंडे त्वदास्पदे। त्वत्स्थापितं च कामेशं लिंगं द्रक्ष्यति मानवः। स वै कामकृतात्पापाद्यामीं नश्यति यातनां। इति।

कृष्णादिचैत्रकृष्णत्रयोदश्यां शततारकानक्षत्रं चेत्सा वारुणीत्युच्यते। शनिवारयोगे महावारुणी शुभयोगस्यापि योगे महा-

---

१ 'हेमाद्रिमाधवादिभिः'. २ 'शैवं काम'.

स्कांदे—वारुणेन समायुक्ता मधौ कृष्णत्रयोदशी । गंगायां यदि लभ्येत सूर्यग्रहशतैः समा । शनिवारसमायुक्ता सा महावारुणी स्मृता । गंगायां यदि लभ्येत कोटिसूर्यग्रहैः समा । शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् । इति ।

पूर्णिमांतमासाभिप्रायेण निर्णयामृताद्युदाहृतस्कंदपुराणे—कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे । यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति । इति गृहाद्बहिर्दीपदानं विहितं । तत्र मंत्रः—मृत्युना पाशदंडाभ्यां कालेन श्यामया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति । यत्तु—त्रयोदश्यां तृतीयायां दशम्यां चैव सर्वशः । शूद्रविट्क्षत्रियाः स्नानमाचरेयुः कथंचन । स्नानं कुर्वंति या नार्यश्चंद्रे शतभिषग्गते । सप्तजन्म भवेयुस्ता दुर्भगा विधवा ध्रुवं । इति हेमाद्र्यादौ जाबाल्याद्युक्तः स्नाननिषेधः स याहच्छिकस्नानपरः । तथाच हेमाद्रौ स्मृत्यंतरे—भोगाय क्रियते यत्तु स्नानं याहच्छिकं नरैः । तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके नतु । हेमाद्रौ गार्ग्यजाबाली—क्रियते वा नवा यत्र शास्त्रयंत्रणया विना । मलव्यपोहनफलं स्नानं याहच्छिकं तु तत् । तन्न कुर्यात्तृतीयायां चतुर्दश्यां तथा निशि । शाश्वतीं भूतिमन्विच्छन्दशम्यामपि पंडितः । इति । एवमन्यत्रापि यत्र यत्र स्नाननिषेधः सोपि याहच्छिकस्नानपर एव । योपि रात्रौ स्नाननिषेधः सोपि गंगातिरिक्ते—दिवारात्रौ च संध्यायां गयायां च प्रसंगतः । स्नात्वाश्वमेधजं पुण्यं गृहेप्युद्धृतसज्जलैः । इति ब्रह्मांडपुराणात् । आह हेमाद्रौ मरीचिः—भूयिष्ठमुद्धृतं वापि शीतमुष्णमथापि वा । गांगं पयः पुनात्याशु पापमामरणांतिकम् । इति ॥ इति पुरुषार्थचिंतामणौ कालखंडे त्रयोदशीनिर्णयः ।

अथ चतुर्दशी निर्णीयते—तत्र शुक्लचतुर्दशी पूर्णिमायुता ग्राह्या । चतुर्दश्या च पूर्णिमेति युग्मवाक्यात् । हेमाद्रौ भविष्यपुराणेपि—एवमेकादशी कार्या द्वादश्या तु त्रयोदशी । सदा कार्या त्रयोदश्या नतु युक्ता चतुर्दशी । पौर्णमासीयुता सा

१ 'कोटिसूर्यग्रहैः समा'. २ 'गंगायांच'.

स्याच्चतुर्दश्या च पूर्णिमा। इति। हेमाद्रौ पद्मपुराणे—एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी। एताः परयुताः कार्याः पराः पूर्वेण संयुताः। माधवे व्यासः—शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते। इति। हेमाद्रौ नारदीयपुराणे—तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता। इति। हेमाद्रौ वाराहपुराणे—एकादश्यष्टमी षष्ठी शुक्ला चैव चतुर्दशी। ग्राह्या परेण संयुक्ता नतु पूर्वेण संयुता। इति। हेमाद्रावष्टमीप्रकरणे निगमः—शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता। उपवासादिकार्येषु ह्येष धर्मः सनातनः। इति। कृष्णचतुर्दशी तु उपवासभिन्नव्रतेषु पूर्वविद्धा ग्राह्या। तदाह हेमाद्रावापस्तंबः—कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धैव कर्तव्या परविद्धा न कस्यचित्। इति। उपवासे तु परा। एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी। अमावास्या तृतीया च ता उपोष्याः परान्विताः। इति हेमाद्रौ पद्मपुराणवृद्धवसिष्ठवचनात्। अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी। अमावास्या तृतीया च कर्तव्याः परसंयुताः। इति। हेमाद्रौ नारदीयपुराणं—चतुर्दशी दर्शयुक्ता पौर्णमास्या युता विभो। इति ब्रह्मवैवर्ते च आपस्तंबाविरोधाय पद्मपुराणैकवाक्यतया चोपवासविषयमेव। कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धैव कर्तव्या परविद्धा न कस्यचित्। उपवासादिकार्येषु ह्येष धर्मः सनातनः। इतिहेमाद्रावष्टमीप्रकरणस्थनिगमवचनं तु उपवासविषये पद्मपुराणादिवाक्याविरोधाय—एकादश्यष्टमी षष्ठी अमावास्या चतुर्दशी। तृतीया पूर्वविद्धा च ता उपोष्याः परेऽहनि। इति उपवासप्रकरणे हेमाद्र्युदाहृतनिगमब्रह्मपुराणवाक्याविरोधाय च—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः। अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत्। इति ब्रह्मवैवर्तवाक्यैकवाक्यतया च रुद्रव्रतविषयमेव। अतएव इदं वचनं रुद्रव्रतविषयं रुद्रव्रतेष्विति वचनादिति अष्टमीनिर्णयस्थहेमाद्रिः संगच्छते। शुक्लापि पूर्वदिनापराह्णव्यापिनी चेत्तर्हि रुद्रव्रतेषु पूर्वैव। चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो। मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी। दर्शविद्धा न कर्तव्या

राकाविद्धा कदाचन।इति स्कंदपुराणात्। यदा शुक्लकृष्णचतुर्दश्यौ पूर्वदिनापराह्नं व्याप्नुतस्तदा त्रयोदशीयुते एव ग्राह्ये इति हेमाद्र्युक्तेरपि शुक्लायामेव तात्पर्यं । अन्यथापराह्णव्यापित्वाभावेपि पूर्वविद्धात्वमात्रेण कृष्णचतुर्दश्याः शिवव्रते पूर्वविद्धाया एव ग्राह्यत्वप्रतिपादकपूर्वोक्तहेमाद्रिसिद्धांतविरोधापत्तेः । अतएवापराह्णव्यापित्वे तु शुक्लचतुर्दश्यपि पूर्वविद्धा ग्राह्येति । अत्र मम भक्तैरितीश्वरोक्तिलिंगाच्छिवचतुर्दशीविषयत्वं द्रष्टव्यमिति माधवः मदनरत्नः तिथितत्वं च संगच्छते । तथाच शुक्लचतुर्दशी अपराह्णव्यापिनी चेच्छिवव्रते एव पूर्वा अन्यव्रतेपूत्तरा । अपराह्णव्यापिनी तु शिवव्रतेप्युत्तरैव । कृष्णा तूपवासातिरिक्तसर्वव्रतेषु शिवव्रतरूपोपवासेपि पूर्वविद्धैव । अन्यव्रतरूपोपवासे एवोत्तरेति सिद्धः सामान्यतो निर्णयः ।

चैत्रश्रावणमासयोः शुक्लापि चतुर्दशी पूर्वविद्धैव ग्राह्या । मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी । इति बौधायनवचनात् । ननु रात्रिव्यापिनीति पदयुक्तस्यास्य कथं पूर्वविद्धाविधायकत्वमिति चेत् तत्कल्पनं विनास्य वैयर्थ्यापत्तेः । तथाहि नह्यस्य—निशीथव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । इत्यादाविव कर्मविशेषापादनेन रात्रिव्यापिनीविधायकत्वसंभवः । कर्मविशेषानुपादानात् । नापि—चैत्रशुक्ले चतुर्दश्यां यथावत्पूजयेच्छिवं । इत्यादि—प्रीयतां शिव इत्युक्त्वा नक्तं भुंजीत च स्वयं । वर्षे वर्षे प्रकर्तव्यमेतच्चैत्रोत्सवं महत् । शिवभक्तैस्तथान्यैश्च कीर्तिश्रेयोभिवृद्धये । इत्यंतस्कंदपुराणविहितप्रदोषकालिकदमनमहोत्सवादौ रात्रिव्यापिनीविधायकत्वमस्य पूर्वास्तोत्तरक्षणमारभ्य प्रवृत्ता चतुर्दशी द्वितीयास्तोत्तरद्विमुहूर्तपर्यंता तत्र प्रदोषसत्वस्योभयत्र तुल्यत्वेपि संकल्पकाले सत्वात् दिवारात्रियोगाच्च—दिवा रात्रौ व्रतं यच्चेत्यादिभिरुत्तरत्रैवानुष्ठानेनास्योपयोगाभावात् । यदा द्वितीयास्तादिपर्यंता तादृशी तत्र पूर्वत्रानुष्ठानस्य उभयत्र प्रदोषासत्वे साकल्यप्रतिपादकवचनबोधितसत्वेनोत्तरत्रानुष्ठानस्य च मासांतरगतायामप्यविशिष्टत्वेन परा पूर्वाह्णगामिनीत्यस्यासंगत्यापत्तेः। नाप्युभयत्र प्रदोषासत्वेनै(ए)न पूर्वत्रानुष्ठापकत्वं कर्मकालव्याप्तिशास्त्रविरोधापत्तेः । तस्मात्-पूर्वविद्धा न कर्त-

व्या कर्तव्या परसंयुता। उपवासादिकार्येष्वित्यादिशुक्लचतुर्दशी-सामान्यविषयकवाक्यानामत्रापि प्रसक्तौ विशेषविषयकेनानेन तेषां मासांतरगतशुक्लचतुर्दश्यां संकोचः क्रियते इत्यर्थस्य परा पूर्वाह्णगामिनीत्यनेनास्यैव शेषेणं प्रतिपादनात् । तत्र यस्यां तिथौ यस्मिन्कालविशेषे यत्कर्म विहितं तत्कर्मानुष्ठानकाले तत्ति-थिसत्वस्यावश्यकत्वात् खंडत्ववशाच्च दिनद्वयेपि तत्काले तत्ति-थिसत्वे पूर्वा ग्राह्या परा ग्राह्येत्यादियुग्मादिवाक्यैर्व्यवस्था क्रि-यते। यदा तु दिनद्वयेपि तत्काले ज्योतिःशास्त्रप्रसिद्धतिथे-रभावात्तत्र तस्यां तिथौ विहितस्य तिथ्यंतरेऽनुष्ठानासंभवात् प्रधानस्य तूपवासादेरवश्यानुष्ठेयत्वात् सा तिथिः सकलेत्यादि-वाक्यप्रतिपादिततिथिसत्वमादाय विहितपूर्वाह्णादिकाले एव तस्यानुष्ठानं। तत्र ज्योतिःशास्त्रप्रसिद्धतिथेः अभावेपि यत्र—प्र-दोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः। उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः। इत्यादिविशेषवचनं तत्र तद्नादृत्य साकल्यवचनबोधिततिथेरेव ग्रहणमिति वस्तुस्थितिः। एवं सत्युपवासस्याहोरात्रसाध्यत्वाद्दमनकपूजादेः प्रातःकालमारभ्य प्रदोषांतकालसाध्यत्वात् तस्मिन्काले चतुर्दश्या मुख्यायाः सा-कल्यवाक्यबोधिताया वा आवश्यकत्वादस्तोत्सरं प्रदोषोत्तरं वा यत्र चतुर्दशीप्रवृत्तिस्तत्र पूर्वदिने उपवासाद्यधिकरणदिनादि-प्रदोषांतकाले साकल्यवचनबोधिताया अपि चतुर्दश्या असं-भवेन तन्निमित्तकोपवासादेस्तत्रानुष्ठानासंभवात् । उत्तरदिने रात्रिभागे मुख्यतिथ्यभावेपि साकल्यवचनबोधितायाः सत्वात्त-त्रैवानुष्ठानमिति व्यर्थमेवेदं वचनं स्यात्। तस्मात्साकल्यवचनबो-धिताहोरात्रसत्वचतुर्दश्या एवोपवासादियोग्यत्वात् सूर्यास्तात्पू-र्वमुहूर्तत्रयाद्यवच्छेदेन विद्यमानाया एव साकल्यबोधनात् उप-वासादियोग्यचतुर्दशीपरत्वं विनास्य सार्थक्यासंभवात्पूर्व-विद्धाया एव विधायकं बौधायनवचनं। एवंच सति चैत्रश्राव-णशुक्लचतुर्दशीविषयकेणानेन विशेषशास्त्रेण पूर्वविद्धायां यस्यां विहितायां शुक्लचतुर्दशीसामान्यविषयकनिगमादिवाक्यानां मा-सांतरगतचतुर्दशीविषयत्वं परिशेषसिद्धमेव परापूर्वाह्णगामिनीति चतुर्थचरणेन स्पष्टीक्रियते इति सूपपन्नमस्य पूर्वविद्धाविधायक-

---

१ 'विशेषेण'.

त्वं । एतेन बौधायनवचनगतरात्रिशब्दानुवादकचैत्रश्रावणशुक्लचतुर्दश्यौ शुक्ले अपि रात्रियोगिन्यौ ग्राह्ये इति हेमाद्रिमाधवग्रंथगतरात्रिशब्दोऽपि व्याख्यातः । नचात्रैवार्थे तयोस्तात्पर्यमित्यत्र किं नियामकमिति शंक्यं । युग्मवाक्यस्यैव कर्मकालव्याप्तिशास्त्रविषयपरित्यागो युक्तः । संपूर्णत्वाभिधानेनारोपितकर्मकालिकतिथिग्रहणस्य मुख्यकर्मकालिकतिथिसंभवे अन्याय्याश्रयणात् । यदा युग्मदिनेऽस्तमयसंबंधिनी अयुग्मदिने उदयास्तमयसंबंधिनी तत्रोभयसंबधिन्याः प्राशस्त्यात्सैव ग्राह्या। युग्मदिनसंबंधिन्याः क्रियानर्हाया असत्कल्पत्वादिति अहोरात्रसाध्यं व्रतं उभययोगिन्यामेव कार्यं नतु युग्मत्वादर इति प्राक् हेमाद्रिणा सिद्धांतितत्वात् उदाहृतवचनवशाच्छिवरात्रिचतुर्दशी पूर्वविद्धा गृह्यते । अतएव शिवरात्रिव्रतस्य रात्रिप्राधान्यमुक्तं स्कंदपुराणे—निशि भ्रमंति भूतानि शक्तयः शूलभृद्यतः । अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत् । इति शिवरात्रिप्रकरणे पूर्वविद्धाग्राह्यत्वे उपष्टंभकत्वेनोपन्यस्यमानववचनस्येहोपन्यासाच्च । प्रकृते द्वितीयास्तोत्तरं विद्यमानायां पूर्वप्रदोषोत्तरं अस्तोत्तरं वा प्रवृत्तायां चतुर्दश्यां पूर्वत्र तात्पर्यकल्पने तस्यासंगतत्वापत्तेः । कर्मकालव्याप्तौ सर्वस्मृतीनामत्यंतनिर्बंधदर्शनात्कर्मकालव्याप्तिशास्त्रमितरेभ्यः प्रबलमिति निश्चीयते । तदनुसारेण तिथय उपवासादौ दैवे एकोद्दिष्टादौ पित्र्ये च कर्मकालव्याप्ता ग्राह्या इति माधवेनापि प्राक् सिद्धांतितत्वात्, प्रकृते रात्रिमात्रव्यापिन्यां तात्पर्यकल्पने तद्विरोधापत्तेः पूर्वविद्धाविषयकमेव बौधायनवचनमस्मिन्नेवार्थे हेमाद्रिमाधवयोस्तात्पर्यनिश्चयादिति दिक् ।

तत्सिद्धं चैत्रश्रावणचतुर्दश्याः शुक्लाया अपि पूर्वोक्तकृष्णचतुर्दशीवदेव निर्णय इति । यत्तु मदनरत्ने बौधायनवाक्यं विनैव चतुर्दशीनिर्णयं कृत्वा प्रदोषकालिकदमनकपूजापवित्रपूजे अभिधाय इमौ महोत्सवौ रात्रियोगिन्यां कार्यौ । तथाच बौधायन—इत्यादिनास्य दमनकपवित्रपूजामात्रविषयकत्वं स्वीकृत्य परा चैत्रश्रावणव्यतिरिक्तमासस्य शुक्लचतुर्दशीत्युक्तं तत्पूर्वोक्तरीत्या प्रदोषकालिके कर्मणि मासांतरगतशुक्लचतुर्दश्या अपि प्रदोषकालिक्या एव ग्राह्यत्वेन परा पूर्वाह्णगामिनीति

चतुर्थचरणस्यासांगत्यापत्तेश्चिंत्यं । अतएव दमनकपवित्रारोपणयोस्तु शुक्ले अपि चैत्रश्रावणचतुर्दश्यौ रात्रियोगिन्यौ पूर्वे एव ग्राह्ये नतूत्तरे इति **कालतत्त्वविवेचनं**। चैत्रशुक्लचतुर्दशी दमनकारोपणे रात्रियोगिनी पूर्वा ग्राह्या । मधोः श्रावणेति वचनादिति **कृत्यरत्नावलिश्च** चिंत्ये । दिनद्वये प्रदोषव्याप्तावव्याप्तौ च पूर्वाग्रहणापत्तेश्च । नचेष्टापत्तिः । दिवारात्रौ व्रतमिति कर्मणो यस्येति वाक्यविरोधापत्तेः । अतएव चैत्रश्रावणशुक्लचतुर्दशी रात्रिमात्रे विद्यमानापि पूर्वैवेति **हेमाद्रिमाधव**पर्यालोचनेनापाततः प्रतिभाति । न्याय्यस्त्वयं निष्कर्षः । पूर्वदिनेऽपराह्णव्यापिनी मुख्या । तदभावे मुहूर्तत्रयव्यापिन्यपि पूर्वा । रात्रिमात्रसत्वे तूत्तरैवेति प्रतिज्ञाय उपवासे कृष्णचतुर्दश्यप्युत्तरेत्यर्थक एकादश्यष्टमीत्यादिवाक्यमनादृत्य तृतीयेति नारदीयवाक्याच्छुक्लोत्तरा कृष्णपक्षे कृष्णेत्यापस्तंबात्कृष्णा पूर्वा चतुर्दशीति **स्कांदं** शुक्लायामुत्तरविद्धत्वापवादः कृष्णायां तु पूर्वविद्धत्वानुवादेनापराह्णव्यापित्वविधायकमिति सिद्धवत्कृत्वा मधोः श्रावणेति वाक्ये रात्रिव्यापिनी ग्राह्येत्यंशस्य विधायकत्वं खंडयित्वा परा पूर्वाह्णगामिनीत्यंशस्यैव विधायकत्वसाधनार्थं प्रवृत्तो **द्वैतनिर्णय**श्चिंत्यः । **हेमाद्रिमाधव**तात्पर्यार्थादर्शनमूलकत्वात्, शैवविषयक**स्कांद**स्य अन्यविषयक**नारदीया**पवादकत्वस्य **आपस्तंबो**क्तपूर्वविद्धत्वानुवादेनापराह्णव्यापित्वविधायकत्वस्य चासंभवात् विधिवैरूप्यापत्तेश्च । एतेन बौधायनवाक्यं यथाश्रुतार्थकमिति **हेमाद्रिमाधवौ** । संप्रदायविदस्त्वाहुः **स्कांद**मुत्सर्गः । तदपवादो **नारदीयं** । तदपवादो मधोः श्रावणमासस्येति । तत्रापवादाभावे पुनरुत्सर्गस्थितिन्यायेन पूर्वविद्धैव ग्राह्येति **निर्णयसिंधु**रपि चिंत्यः । शैवविषयक**स्कांद**स्य उत्सर्गत्वासंभवात्, **हेमाद्रिमाधव**तात्पर्यार्थापर्यालोचनमूलत्वात्, **हेमाद्रिमाधवयोः** सांप्रदायाज्ञानकल्पनानौचित्याच्च । शुक्लायामप्यापराह्णिकत्वमात्रं विधातुं पूर्वविद्धत्वप्राप्तिमपेक्षमाणं **स्कांदं** बौधायनीयस्य पूर्वविद्धाविधिपरत्वमापादयतीति रात्रिव्यापिनीपदस्य पूर्वविद्धापरत्वमुचितमिति **स्मृतिकौस्तुभो**पि चिंत्यः । शैवविषयक**स्कांद**स्य स्वविधेयापराह्णिकत्वसंपत्त्यर्थं अन्यविषयक**नारदीया**द्यपवाद-

कबौधायनवाक्यगतरात्रिव्यापिनीति पदस्य पूर्वविद्धत्वपरत्वाक्षेपकत्वासंभवात् । स्मृतेः स्मृत्यंतरसापेक्षत्वे अप्रामाण्यापत्तेश्च । तस्मात्सर्ववाक्याविरोधार्थं पूर्वोक्तरीतिरेव स्वीकार्येति सिद्धम् ।

दमनकपूजाविधिर्मदनरत्ने स्कांदे—दमनकचतुर्दशीं वक्ष्यामि हितकाम्यया । लोकानां पुण्यजनिकां सर्वसौख्यप्रदायिकां । तस्यां दमनकैः पूजा चतुर्दश्यां विधानतः । पूज्यते शंकरो रात्रौ तस्माद्दमनकचतुर्दशी । चैत्रे शुक्लचतुर्दश्यां यथावत्पूजयेच्छिवं । प्रासादशोभां कृत्वैवं सम्यक्संमार्जनादिभिः । संस्नाप्य विधिवद्देवं क्षीराज्येक्षुरसादिभिः । श्रीखंडागरुकर्पूरैः कुंकुमैश्चानुलेपयेत् । ततो दमनकैर्बिल्वैः पत्रैर्मरुवकैः शुभैः । आलिंगं पीठपर्यंतं पूजयेद्ग्रंथितैस्तथा । तगरं देवदारुं च श्रीफलान्यथ सिह्लकं । अगरुं महिषाख्यं च धूपं च निर्दहेत्ततः । शालिपिष्टोद्भवैर्दीपैः पंचभिर्नवभिस्तथा । कुर्यादारार्तिकं शंभोः कांस्यपात्रे समुज्ज्वलैः । विचित्रवस्त्रपूजा च कर्तव्या महती शिवे । पुष्पमंडपिकां चित्रां सवितानोज्ज्वलां शुभां । महोत्सवेन विधिवद्गेयतूर्यरवेण च । विविधैर्भक्ष्यभोज्यैश्च नैवेद्यं चोपकल्पयेत् । संभवे सति कर्तव्या रथयात्रा पिनाकिनः । प्रेक्षणीयैस्तथा नृत्यैर्वाद्ययंत्रैश्च शोभनैः । पूजयेच्छिवभक्तांश्च विप्रानन्यांश्च शक्तितः । प्रीयतां शिव इत्युक्त्वा नक्तं भुंजीत च स्वयं । वर्षे वर्षे प्रकर्तव्यमेतच्चैत्रोत्सवं महत् । शिवभक्तैस्तथान्यैश्च कीर्तिश्रेयोभिवृद्धये । इति । अत्र वर्षे वर्षे इति वीप्साश्रवणात्, चैत्रे च दमनारोपमकुर्वाणो व्रज्यत्यधः । इति पाद्माच्च नित्यमिदं । इति दमनकमहोत्सवः ।

हेमाद्रौ वाराहे—चैत्रे कृष्णचतुर्दश्यामंगारकदिनं यदि । पिशाचत्वं पुनर्न स्यात् गंगायां स्नानभोजनात् । इति । इति चैत्रचतुर्दशी ।

वैशाखशुक्लचतुर्दशी नृसिंहजयंती । सा चास्तमयकालव्यापिनी ग्राह्या । वैशाखशुक्लपक्षस्य चतुर्दश्यां विवस्वति । अस्तंगामिनि सर्वेषां पुरःस्तंभस्य[1] मध्यतः । प्रबभूव महाविष्णुर्नरसिंहाकृतिर्नृप । तस्यां व्रतं नरैः कार्यं महाविष्णोरतिप्रियं । इति

---

१ 'पुरतःस्तंभमध्यतः'.

नृसिंहप्रसादोदाहृतनृसिंहपुराणवचनात्। दिनद्वयेऽस्तमयकाव्याप्त्यभावव्याप्तौ चोत्तरैव। संकल्पकालोपक्रमकालसत्वात्। इति वैशाखचतुर्दशी।

**हेमाद्रौ ब्राह्मे**—आषाढे मासि भूताह्नि शिवं संपूज्य मानवः। सर्वपापविनिर्मुक्तः सर्वसंपदमाप्नुयात्। इति शिवपूजोक्ता। तत्र चतुर्दशी पूर्वविद्धा ग्राह्या। रुद्रव्रतेष्विति वचनात्। **पवित्रारोपणं हेमाद्रौ कालोत्तरे**—आषाढांते चतुर्दश्यां नभस्यनभसोस्तथा। पवित्रारोपणं कार्यं न तु कालांतरे स्थिरं। नित्यमित्यर्थः। अत्र यद्यपि शिवपवित्रारोपणे मासत्रयं प्रतीयते तथापि श्रावणशुक्लचतुर्दश्येव मुख्या वक्ष्यमाणवचनात्। विष्णुपवित्रारोपणकालस्तु **हेमाद्रौ विष्णुरहस्ये**—श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे। द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतं। तथा—शरद्वर्षासु कुर्वीत पवित्रारोपणं शुभं। द्वादश्यां श्रावणे वापि पंचम्यामथवा द्विज। अन्यदेवपवित्रारोपणकालः। प्रतिपद्धनदस्योक्ता द्वितीया च श्रिये मता। तृतीया पार्वतीदेव्याश्चतुर्थी विघ्नहारिणः। पंचमी शशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु। सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी स्मृता। मातॄणां नवमी प्रोक्ता वासवे दशमी स्मृता। एकादशी मुनीनां च द्वादशी चक्रपाणिनः। त्रयोदशी त्वनंगस्य शिवस्योक्ता चतुर्दशी। पौर्णमासी सुरश्रेष्ठ पितुर्मे कथिता तिथिः। यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य तु। सर्वेषामेव देवानां कार्यं तासु यथाविधि। इति।

पवित्रनिर्माणप्रकारस्तु—हेमरौप्यताम्रक्षौमसूत्रैः कौशेयपद्मजैः। कुशैः काशैश्च कार्पासैर्ब्राह्मण्यावर्तितैः शुभैः। कृत्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत्। तत्रोत्तमं पवित्रं तु षष्ट्या सह शतैस्त्रिभिः। सप्तम्या सहितं द्वाभ्यां शताभ्यां मध्यमं स्मृतं। साशीतिना शतेनैव कनिष्ठं तत्समाचरेत्। साधारणपवित्राणि त्रिभिः सूत्रैः समाचरेत्। उत्तमं तु शतग्रंथि पंचाशद्ग्रंथि मध्यमं। कनिष्ठं तु पवित्रं स्यात्षट्त्रिंशद्ग्रंथिशोभितं। षड्विंशच्च चतुर्विंशद्द्वादशेन च केचन। चतुर्विंशद्द्वादशाष्टावित्येके मुनयो विदुः। इति। एतच्च नित्यं। न करोति विधानेन पवित्रारोपणं तु यः। तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम। इति। अधिवा-

सनं तु पूर्वेद्युस्तद्दिने वा कार्यं । गोदोहांतरिते काले पूर्वेद्युर्वाधिवासनं । इति वचनात् । गौणकाल उक्तो हेमाद्रौ मंत्रतंत्रप्रकाशे—अथ चेद्विघ्नयोगेन मुख्यकालो न लभ्यते । कन्यायां चापि कुर्वीत यावन्नोत्तिष्ठते हरिः ।

शिवपवित्रनिर्माणप्रकारस्तु तत्रैव शैवागमे—एकादशभिर्वा सूत्रैस्त्रिंशता चाष्टयुक्तया । पंचाशता वा कर्तव्यं तुल्यग्रंथ्यंतरालकं । द्वादशांगुलमानानि व्यासादष्टांगुलानि वा । लिंगविस्तारमानानि चतुरंगुलकानि वा । इति । मंत्रस्तु—देवदेव नमस्तुभ्यं गृहाणेदं पवित्रकं । पवित्रकरणार्थाय वर्षपूजाफलप्रदं । पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतं । शुद्धो भवाम्यहं देव त्वत्प्रसादान्महेश्वर । इत्यनेन तत्तद्देवतामूलमंत्रसंपुटितेन दद्यात् । इति पवित्रारोपणमुक्तं । तत्र रुद्रव्रतेषु सर्वेष्विति मधोः श्रावणमासस्येत्युदाहृतवचनेन पूर्वविद्धा चतुर्दशी ग्राह्या । इति श्रावणचतुर्दशी ।

अथ भाद्रपदशुक्लचतुर्दशी भविष्योत्तरविहितानंतव्रतेपि परयुतैव । पूर्वोदाहृतनिगमादिभिः सामान्यवचनैः—तथा भाद्रपदस्यांते चतुर्दश्यां द्विजोत्तम । पौर्णमास्याः समायोगे व्रतं चानंतकं चरेत् । मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी । संपूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययं । इति निर्णयामृतोदाहृतभविष्योत्तरस्कंदपुराणवाक्याभ्यां च । अत्र मुहूर्तपदश्रवणात् मुहूर्तमात्रसत्वेपि परेति न मंतव्यं । आदित्योदयवेलायां या स्तोकापि तिथिर्भवेत् । पूर्णा सा त्वेव मंतव्या प्रभूता नोदयं विना । इति बौधायनीये । अत्रोदयकालिकयाः संपूर्णत्वाभिधानं परविद्धोपादेयविषयमिति । उदिते दैवतमिति वाक्ये उदयोत्तरमुहूर्तद्वयव्यापिनी तिथिर्हव्ये ग्राह्येति हेमाद्र्युक्तेः बौधायनीयाद्येकवाक्यत्वार्थं चापिशब्दयुक्तं मुहूर्तपदं कैमुतिकन्यायेन मुहूर्तद्वयादिपरं । तेनोदयोत्तरं मुहूर्तद्वयादिव्यापिनी परैव । यदा पूर्वसूर्योदयमारभ्य प्रवृत्ता तादृशी तदा संपूर्णत्वेन संदेहाभावात् अर्धमात्मनि भोजनमिति व्रतांगैकभक्तमध्याह्नकालसत्वाच्च पूर्वैव । अतएव त्रिमुहूर्तेति मुख्यः कल्पः । द्विमुहूर्तेत्यनुकल्प इति माधवः संगच्छते । नन्वेवं मध्याह्ने भो-

१ 'सुपूजितं'.

कालव्याप्तिशास्त्रविरोधः । नच मध्याह्ने भोज्यवेलायामिति लिंगस्यार्थवादगतत्वेन विध्यनुमापकत्वासंभवान्न मध्याह्नः कर्मकाल इति माधवे कालतत्त्वविवेचनादौ च सिद्धांतितत्वादुपेक्ष्य एवार्थवाद इति युक्तं । प्रतिपदोक्तमध्याह्ने इतीतिहासस्य पूर्वाह्णे दैविकमित्यादिसामान्यविधानात्सर्वथा बाधायोगात् । अतएव वैश्वदेवशब्दः कर्मनामधेयं यद्विश्वेदेवाः समयजंतेत्यर्थवादरूपतत्प्रख्यशास्त्रादेवेति मीमांसैकदेशिमतं संगच्छते । न चार्थवादिकविधिकल्पने ददर्श शीला सा स्त्रीणां समूहमित्यंतेन स्त्रीणामेवाधिकारकल्पनापत्तिरिति स्मृतिकौस्तुभोक्तदूषणापत्तेर्न मध्याह्नविधिकल्पनमित्यपि युक्तं ।–पठिष्यति नरो यस्तु कुर्वन्व्रतमिदं शुभं । सोऽचिरात्पापनिर्मुक्तः इत्यादिना कथायामेव पुंसोऽप्यधिकारोक्तेः स्त्रीसमूहेनैवेदं कार्यमित्यापत्तेरयुक्तत्वात् । तस्मात् प्रतिपदोक्तेतिहासान्मध्याह्नविधिकल्पने दूषणाभावात्कथं पूर्वोक्ता व्यवस्थेति चेन्न । पूर्वाह्णे दैविकमिति सामान्यविधेरेतदपवादकत्वासंभवेऽपि मुहूर्तमपि चेद्भाद्रे इति प्रतिपदोक्तविधिविरोधेनार्थवादिकविध्युन्नयनासंभवात् । नचैवमप्यर्थवादस्य निर्विषयत्वापत्तौ आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति सिद्धांतविरोध इति वाच्यं । भर्त्रनुज्ञयैव स्त्रीणां व्रताद्यधिकारेण भर्तृकार्यव्यापृतत्ववशेन पूर्वाह्णातिक्रमेऽपि व्रतांगभूतैकभक्तकाले मध्याह्नेऽप्यनुष्ठानसंभवेन निर्विषयत्वाभावात् । ततश्च केनचिन्निमित्तेन पूर्वाह्णेऽननुष्ठाने गौणकालतया मध्याह्नोपि स्वीकार्य इत्येव मध्याह्ने भोज्यवेलायामितीतिहासात्सिध्येन्नतु पूर्वाह्णबाधकतया मध्याह्नविधिकल्पनेति दिक् ।

यत्तु मध्याह्नेति कथायां श्रवणात्–पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति वचनात्, मध्याह्नव्यापिनी ग्राह्येति दिवोदासीये प्रतापमार्तंडे चोक्तं तत्पूर्वोक्तरीत्या गौणकालाभिप्रायेण नेयं । मध्याह्नव्यापिनीति वाक्यस्य कालांतरविधायकप्रतिपदोक्तवचनशून्यऋषिपंचम्यादौ सावकाशत्वेन प्रकृते तत्प्रवृत्त्यसंभवात् । मध्याह्ने भोज्यवेलायामित्यस्य गौणकालपरत्वाच्चेति । तत्सिद्धं पूर्वसूर्योदयोत्तरं प्रवृत्ता द्वितीयसूर्योदयोत्तरं

मुहूर्तद्वयाद्यवच्छेदेन विद्यमानानंतचतुर्दशी उत्तरा पूर्वसूर्योदयमारभ्य प्रवृत्ता तादृश्यपि पूर्वेति । इत्यनंतचतुर्दशी ।

दीपावलीचतुर्दशी तु—कार्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये । तिलतैलेन कर्तव्यं स्नानं नरकभीरुभिः । इति चतुर्दशीप्रकरणे **मदनरत्नाद्युदाहृतभविष्योत्तरे** । **तैलस्नानमुक्तं निर्णयामृते**—कार्तिककृष्णचतुर्दशी प्रेतचतुर्दशी । तत्रोषस्यभ्यंगं कृत्वा यमतर्पणादिकं कार्यमित्युक्त्वा इदं वचनमुदाहृतं अमाप्रकरणे **भविष्योत्तरे** । पुरा वामनरूपेण प्रार्थयित्वा धरामिमां । ददावतिथिरिंद्राय बलिं पातालवासिनं । कृत्वा दैत्यपतेर्दत्तमहोरात्रत्रयं नृप । सरहस्यं तदेतत्ते कथयामि शृणुष्व मे । इत्यादिना श्रावितयुधिष्ठिरप्रश्नानंतरं—कार्तिके कृष्णपक्षे तु चतुर्दश्यां दिनोदये । अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः । इत्यत्र च दिनोदये उदयासन्नपूर्वकाले इत्यर्थः । विधूदय इति पूर्ववाक्यैकवाक्यत्वात् । तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा । यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते । इष्टबंधुजनैः सार्धमेतत्स्नानं समाचरेत् । ततो मंगलवासांसि परिधायात्मभूषणं । कृत्वा च तिलकं धृत्वा कार्तिकस्नानमाचरेत् । इति **सनत्कुमारसंहितायां** त्र्यशीतितमेऽध्याये कार्तिकमाहात्म्ये सूर्योदयात्पूर्वमेवाभ्यंगविधानात् । नच पश्चिमे यामे इत्यनेन चंद्रोदयात्पूर्वमपि स्यादिति शंक्यं । अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः । तस्याब्दिकभवो धर्मो नश्यत्येव न संशयः । इति भविष्यनाम्ना **दिवोदासोदाहृतसनत्कुमारसंहितावाक्ये** अरुणोदयकालस्यैव मुख्यत्वप्रतिपादनात् । केनचिन्निमित्तेनारुणोदयकालेऽतिक्रांते सूर्योदयोत्तरमप्यभ्यंगः कर्तव्यः । इषासितचतुर्दश्यामिंदुक्षयतिथावपि । ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् । तैले लक्ष्मीर्जले गंगा दीपावलितिथौ वसेत् । अलक्ष्मीपरिहारार्थमभ्यंगस्नानमाचरेत् । इंदुक्षयेपि संक्रांतावारे पाते दिनक्षये । तत्राभ्यंगमदोषाय प्रातः पापापनुत्तये । इति । ज्योतिर्निबंधे **नारदसंहितायां**—इषे भूते च दर्शे च कार्तिकप्रथमे दिने । मानवो मंगलस्नायी नैव लक्ष्म्या वियुज्यते । इति **सनत्कुमारसंहितायां** च लक्ष्मीकामस्य दिनत्रयेप्यभ्यंगविधानात् । **ब्रह्मपुराणे**—तैले लक्ष्मीर्जले गंगा

दीपावल्याश्चतुर्दशीं । प्राप्य वसतीति शेषः । प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यति । अपामार्गमथो तुंबीं प्रपुन्नाटमथापरं । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै । इति । भ्रामणं समंत्रकं त्रिवारं कार्यं । वारत्रयं त्रिवारं च पठित्वा मन्त्रमुत्तमं । सीतालोष्ठसमायुक्तसकंटकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः । इति **सनत्कुमारसंहितायां** वारत्रयमित्युक्तेः पुनः पुनरिति मंत्रलिंगाच्च सीतालोष्ठमपि ग्राह्यं लिंगादेव । प्रपुन्नाटश्चक्रमर्दकः तरवंटा (तरवड) इति भाषायामुच्यते । सीता लांगलपद्धतिः। कार्तिकस्नानानंतरं यमतर्पणं कर्तव्यं । तदुक्तं **सनत्कुमारसंहितायां**—स्नानांगतर्पणं कृत्वा यमं संतर्पयेत्ततः । यमाय धर्मराजाय मृत्यवे चांतकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुंबराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय ते नमः । चतुर्दशैते मंत्राः स्युः प्रत्येकं च नमोन्विताः । एकैकेन तिलैर्मिश्रान्दद्यात्त्रीनुदकांजलीन् । यज्ञोपवीतिना कार्यं प्राचीनावीतिनाथवा । देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता । जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः । नरकाय प्रदातव्यो दीपः संपूज्य देवताः । इति । नरकनिवृत्तये इत्यर्थः । अयं दीपः प्रातःपूजोत्तरमेव । **भविष्योत्तरे**—ततः प्रदोषसमये दीपान्दद्यान्मनोहरान् । ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च । प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च । मंदुरासु विचित्रासु हस्तिशालासु चैव हि । इति । प्रतोली वीथिः । निष्कुटो गृहारामः । **सनत्कुमारसंहितायां**—तस्मादेतद्बले राज्यमस्तु घस्रत्रयं तु मे । मद्राज्ये ये दीपदानं भुवि कुर्वंति मानवाः । तेषां गृहे तव स्त्रीयं सदा तिष्ठतु सुस्थिरा । इति विष्णुं प्रति बलिकृतवरयाचनं । महारात्रिपूजाप्युक्ता । महारात्रिः समुत्पन्ना चतुर्दश्यां मुनीश्वराः । अतस्तदुत्सवः कार्यः शक्तिपूजापरायणैः। इति । **निर्णयामृते लैंगे**—ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् । शैवान्विप्रान्धर्मपरान् शिवलोके महीयते । दानं दत्वा तु तेभ्यश्च यमलोकं न गच्छति । तथा—माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः । प्रेतचतुर्दशीकाले सर्वपापैः प्रमुच्यते । तथा—नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये । न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशं । इति । **हेमाद्रौ लिंगपुराणे**—कार्तिके

भौमवारेण चित्रा कृष्णचतुर्दशी । तस्यामाराधितः स्थाणुर्नयेच्छि वपुरं ध्रुवं । इति । उल्कादानमुक्तं सनत्कुमारसंहितायां तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नरा कुर्युः पितॄणां मार्गदर्शनं। इति । चतुर्दश्यामभ्यंगस्नानयमतर्पण दीपदानप्रदोपदीपदानोल्कादानशिवपूजामहारात्रिपूजानक्तभोजनानि विहितानि। अमावास्यायामपि ।—एवं प्रभातसमये त्वमाय च मुनीश्वराः । स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृतादिभिः । दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् । ततः प्रदोषसमये पूजयेदिंदिरां शुभां। दीपदानं ततः कुर्यात्प्रदोषे च तथोल्मुकम् । भ्रामयेत्स्वस्य शिरसि सर्वारिष्टनिवारणम् । दीपवृक्षास्तथा कार्याः शक्त्या देवगृहादिषु । ब्राह्मणान्भोजयित्वादौ संभोज्य च बुभुक्षितान् । अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना । इत्यादिना सनत्कुमारसंहितायां मदनरत्नोदाहृतादित्यपुराणे च अभ्यंगस्नानादि विहितं । तदुत्तरप्रतिपद्यपि—प्रतिपद्युदयेऽभ्यंगं कृत्वा नीराजनं ततः। सुवेषः सत्कथागीतैर्दानैश्च दिवसं नयेत् । तस्माद्द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः । तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं जयः । विशेषवच्च भोक्तव्यं प्रशस्तैर्ब्राह्मणैः सह । दयिताभिश्च सहितैर्नेया सा च भवेन्निशा । बलिमालिख्य दैत्येंद्रं वर्णकैः पंचरंगकैः । मंत्रेणानेन संपूज्य षोडशैरुपचारकैः। बलिराज नमस्तुभ्यं दैत्यदानवपूजित । इंद्रशत्रोऽमराराते विष्णुसांनिध्यदो भव । बलिमुद्दिश्य दीयंते दानानि मुनिपुंगवाः। यानि तान्यक्षयाण्याहुर्मयैतत्संप्रदर्शितं । यो यादृशेन भावेन तिष्ठत्यस्यां मुनीश्वराः । हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि । बलिपूजां विधायैवं पश्चाद्गोक्रीडनं चरेत् । इति । सनत्कुमारसंहितायां भविष्योत्तरे च—प्रतिपद्यप्यभ्यंगादि विहितं। तस्मादेतद्बले राज्यमस्तु घस्रत्रयं तु मे। मद्राज्ये ये दीपदानं भुवि कुर्वंति मानवाः । तेषां गृहे तव स्त्रीयं सदा तिष्ठतु सुस्थिरा । दीपैर्नीराजनादत्र सैषा दीपावलिः स्मृता । बलिराज्ये तु ये

लोकाः शोकानुत्सवकारिणः। तेषां गृहे सदा शोकः पतेदिति न चान्यथा। ये वैष्णवाऽवैष्णवा वा बलिराज्योत्सवं नराः। न कुर्वंति वृथा तेषां धर्माः स्युर्नात्र संशयः। बलिराज्यं समासाद्य यैर्न दीपावली कृता। तेषां गृहे कथं दीपाः प्रज्वलिष्यंति केशव। इति। वत्सरादौ वसंतादौ बलिराज्ये तथैव च। तैलाभ्यंगमकुर्वाणो नरकं प्रतिपद्यते। इत्यादि **सनत्कुमारसंहिता-वृद्धवसिष्ठादि**वचनैरकरणे अनिष्टस्य, करणे फलस्य च बोधनान्नित्यं काम्यं चेदं। तत्र चतुर्दश्यभ्यंगस्य रात्र्यंत्ययाममारभ्यारुणोदयात्पूर्वः कालो जघन्यः। तदुत्तरश्चंद्रोदयावधिर्मध्यमः। ततः सूर्योदयावधिरुत्तमः। तत्र यदारुणोदयमारभ्य चतुर्दशी प्रवृत्ता ततः पूर्वं वा प्रवृत्ता उत्तरदिने अस्तोत्तरं मुहूर्तादिपरिमिता चतुर्दशी तदा संदेह एव नास्ति। यदा पूर्वविद्धोत्तरत्रास्तात्पूर्वं समाप्ता तदा दीपदाननक्तादिषु प्रदोषव्याप्तैव। अभ्यंगे तूषःकालव्याप्ता ग्राह्या। पूर्वविद्धाचतुर्दश्यां कार्तिकस्य सितेतरे। पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः। इति **भविष्योत्तर-सनत्कुमारसंहितायां** वचनात्। पूर्वविद्धाशब्दः पूर्वोपलक्षकोऽपि। तेनास्तानंतरं प्रवृत्तापि तादृशी पूर्वैव। यदा सूर्योदयानंतरं प्रवृत्तारुणोदयात्पूर्वं समाप्ता तदारुणोदयात्पूर्वमपि चतुर्थयामे चतुर्दश्यामेवाभ्यंगः। अभ्यंगे चोदधिस्नाने तिथिस्तात्कालिकी स्मृता। इति पूर्वोदाहृतसाकल्यवचनापवादवचनात्, यामिन्याः पश्चिमे यामे इति प्रकृतोदाहृतवचनाच्च। अरुणोदयतोऽन्यत्रेति वचनं तु अरुणोदयगतायाः प्राशस्त्यपरं। यामिन्याः पश्चिमे यामे तात्कालिकीति वचनविरोधात् सूर्योदयात्पूर्वं केनचिन्निमित्तेन न जातश्चेत्सूर्योदयोत्तरगौणकालेपि चतुर्दश्यामेव कार्यः। यत्तु—त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी। रात्रिशेषे त्वमावास्या तदाभ्यंगे त्रयोदशी। इति केनचिल्लिखितं तदार्षं चेदौदयिकत्रयोदश्युपलक्षिताहोरात्रारुणोदयपरं उदाहृतवचनविरोधादिति बोध्यं। अमायामपि प्रातरभ्यंगः प्रदोषे दीपदानलक्ष्मीपूजादि विहितं। तच्चोत्तरदिने अस्तोत्तरं घटिकाद्यवच्छेदेन विद्यते तदा सैव ग्राह्या। दंडैकरजनीयोगे दर्शः स्यात्तु परेहनि। तदा विहाय पूर्वेद्युः परेह्नि सुखरात्रिके। इति भविष्यनाम्ना **तिथितत्त्वाद्युदाहृतसनत्कुमारसंहिता**वचनात्। यदा

सायाह्नमारभ्य प्रवृत्तोत्तरदिने किंचिदूनयामत्रयममावास्य तदुत्तरदिने यामत्रयमिता प्रतिपत्तदामावास्याप्रयुक्तदीपदानलक्ष्मीपूजादिकं पूर्वत्र । अमाप्रयुक्तोऽभ्यंग उत्तरदिने । प्रतिपत्प्रयुक्त दीपदानबलिपूजादिकममाविद्धप्रतिपदि । अभ्यंग उत्तरप्रतिपदि तत्रैव कर्मकालशास्त्रप्रवृत्तेः । यदा तु द्वितीयदिने यामत्रयममावास्या तदुत्तरदिने सार्धयामत्रयं प्रतिपत्तदा—त्रियामगादर्शतिथिर्भवेच्चेत्सार्धत्रियामा प्रतिपद्विवृद्धौ । दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोन्यथा पूर्वयुते विधेये । इति । वर्धमानतिथौ नंदा यदा सार्धत्रियामिका । द्वितीयावृद्धिगामित्वादुत्तरा तत्र चोच्यते । इति निर्णयामृतमदनरत्नोदाहृतपुराणसमुच्चयसनत्कुमारसंहितावाक्याभ्यां उत्तरयोरेव विधानात् विधिः पूज्यतिथं इति वचनादुत्तरत्रैव कर्मकालशास्त्रप्रवृत्तेः दिनद्वयेपि प्रातरभ्यंगं ज्योतिःशास्त्रप्रसिद्धतिथिलाभः स्पष्टः । प्रदोषे ज्योतिःशास्त्रप्रसिद्धतिथ्यभावेपि साकल्यवचनप्रतिपादिततिथिसत्वमादाय दीपदानलक्ष्मीपूजादिकं अमावास्योपलक्षितप्रदोषे एव कार्यं द्वितीयदिने दीपदानबलिपूजादिकं प्रतिपदुपलक्षिते प्रदोषे कर्तव्यमिति सिद्धः सर्ववाक्यैकवाक्यतयैव दीपोत्सवचतुर्दश्यादितिथित्रयनिर्णयः । यत्तु कालतत्वविवेचनकृत्यरत्नावल्यादिषु दिनद्वये चंद्रोदयकाले चतुर्दश्यभावे पूर्वैव चतुर्दशीत्युक्तं तत्सूर्योदयानंतरं प्रवृत्ता चंद्रोदयात्प्राक्तनारुणोदयकालव्यापिनी चतुर्दशी तत्र पूर्वारुणोदये अभ्यंगानुष्ठानापत्तौ उदाहृतानेकवचनविरोधादयुक्तं । यदपि स्मृतिकौस्तुभे चतुर्दशीक्षये परत्रैव स्नानं कार्यं । अमाया वृद्धिसत्वे तिथ्यादिषु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि । तावान्ग्राह्यः स पूर्वेद्युरदृष्टोपि स्वकर्मणि । इति वचसा चतुर्दश्यां तत्प्रक्षेपतया चंद्रोदयव्याप्तिसंभवात् । अमायां वृद्ध्यसत्वे चंद्रोदयव्यापिन्याममायां स्नानौचित्यात् । इषासितचतुर्दश्यामिंदुक्षयतिथावपि । इति वाक्ये अपिशब्देन चतुर्दशीस्थाने अमाया अनुकल्पत्वेनैव विधेरीदृशविषये एव प्रवृत्त्यौचित्यादित्युक्तं तदप्यनुचितं । चतुर्दशीनिमित्ते कर्मणि अमावास्यागतवृद्धिप्रक्षेपस्वीकारे दिनद्वये मुख्यकर्मकालैकदेशेपि ग्राह्यतिथ्यभावस्तत्र गौणकाले सत्वात्पूर्वत्रैव एकभक्तं । अस्माद्वचनादुत्तरदिने विद्यमानग्राह्यतिथिगत-

क्षयस्य पूर्वदिने अनुष्ठीयमाने स्वनिमित्तके कर्मणि प्रक्षेपे सति मध्याह्नकालेपि तत्तिथिलाभान्मध्याह्ने एवैकभक्तं कार्यमिति हेमाद्रिमदनरत्नादिविरोधापत्तेः। नच व्युत्पत्तिविरुद्धं वचनार्थमाश्रित्य एकभक्तादितिथेः कर्मकालव्याप्तिं वर्णयद्भ्यो नमः प्राचीनेभ्य इत्युक्त्या हेमाद्र्यादीनुपहसतो ग्रंथकृतो हेमाद्र्यादिविरोधो न दोष इति शंक्यं। स्वकर्मणीति स्वशब्दयुक्तवचनेन ग्राह्यतिथेर्दिनद्वयेपि कर्मकालसत्वे वचनांतरेण यत्र पूर्वा विहिता तत्र काले ज्योतिःशास्त्रप्रसिद्धतिथ्यभावात् कथमनुष्ठानमिति शंकाव्युदासाय साकल्यबोधकवचनवत्। अनेन वाचनिकी सत्ता प्रतिपाद्यते। उभयत्र सत्वे तु वचनांतरेणोत्तरा यत्र विहिता तत्र कर्मकालशाखात्पूर्वत्र कुतो नानुष्ठानमिति शंकाव्युदासार्थं पूर्वतिथावुत्तरदिनगतस्वीयवृद्धिप्रक्षेपेण ग्राह्यतिथ्यसत्वं प्रतिपाद्यत इत्येव वचनार्थः। तिथिनिर्णये त्वस्य व्यापाराभाव एव। अन्यथा ज्योतिःशास्त्रप्रसिद्धमेव तिथिमुपजीव्य निर्णयकालानेकवचनविरोधापत्तेः। अतोऽत्यंतप्रवीणव्युत्पत्तिलभ्यवचनस्वारस्यासिद्ध्यर्थं निर्णयद्भ्यो हेमाद्र्यादिभ्यो नमस्कार एव युक्तः। चतुर्दशीकार्ये चतुर्दश्याममागतवृद्ध्यादिप्रक्षेपेण कर्मकालव्याप्त्या निर्णयः कार्य इति स्मृतिकौस्तुभवचनार्थाज्ञानमूलत्वात्, ज्योतिःशास्त्रोपजीवनेन निर्णायकानेकवचनविरुद्धत्वादयुक्त एव। चतुर्दशीनिमित्तकस्नानस्यामावास्यायामौचित्योत्प्रेक्षा तु इंदुक्षयतिथावपीत्यस्य इषे भूते च दर्शे च कार्तिकप्रथमे दिने। मानवो मंगलस्नायी नैव लक्ष्म्या वियुज्यते। इत्याद्येकवाक्यतया समुच्चयार्थकत्वस्यैव युक्तत्वेनानुकल्पविधित्वासंभवाद्दुरुत्प्रेक्षैवेति दिक्। इति दीपावलीचतुर्दशीनिर्णयः।

**कार्तिकशुक्लचतुर्दशीच**—वर्षे वै हेमलंबाख्ये मासे श्रीमति कार्तिके। शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति। महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके। निवासस्थानतोऽभ्येत्य सार्धं विश्वगणेश्वरैः। स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत्। संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाकरोत्। स्वयमेव

हर्निशं । स्वयमेव स्वमात्मानं तत्रैवोवास शंकरः । ततः प्रभाते विमले कृत्वा पूजां महाद्भुतां । समस्तसारमेकस्थं कृत्वैवाद्भुतदर्शनं । दंडपाणेर्महाधाम्नि वनेऽस्मिन्कृतपारणः । इति सनत्कुमारसंहितायां विश्वेश्वरमाहात्म्ये षष्ठाध्याये विश्वेश्वरप्रतिष्ठांगतया श्रीविश्वेश्वरकर्तृमणिकर्णिकास्नानं पाशुपतव्रताचरणं अहोरात्रपूजां द्वितीयारुणोदयकालिकां महापूजां ततः प्रतिष्ठासमाप्तिमुक्त्वा पारणमुक्तं तत्र परकृतिरूपेणानेनार्थवादेन अन्योप्येवं कुर्यादिति विधिः कल्प्यते । तेन चतुर्दश्यामरुणोदयोत्तरं मणिकर्णिकायां स्नात्वा विश्वेशपूजां कृत्वोपवासं संकल्प्य रात्रौ पूजाजागरणे विधाय द्वितीयारुणोदये स्नात्वा अरुणोदये[1] महापूजां कृत्वा पारणं कुर्यात् । नच द्वितीयारुणोदयेपि पूजादौ मानाभाव इति शंक्यं । कस्मिन्वर्षे कदा मासे तिथौ कस्यां मुहूर्तके । विश्वेश्वरो महादेव्या विश्वेश्वरमपूजयत् । संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं कदाकरोत् । इति प्रश्नस्य—वर्षे वै हेमलंबाख्ये इत्यादिना प्रतिष्ठाख्यं तदाकरोदित्यंतेन सामान्यत उत्तरं दत्वा स्वयमेवेत्यग्रिमो ग्रंथ उत्तरवाक्यस्य प्रपंच इति निर्विवादं । तत्र पूजयंस्तमहर्निशमित्यादिना तत्रैवोवास शंकर इत्यंतेनेतिकर्तव्यतामुक्त्वा—ततः प्रभाते विमले कृत्वा पूजां महाद्भुतां । इत्यस्यैव प्रमाणत्वात् तत्रोपवासपूजादौ—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिरिति वचनात्पूर्वविद्धैव ग्राह्या । पूर्वविद्धाया अलाभे तु शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । इतिवचनादुत्तरैव ग्राह्या । एतेनोपवासादावरुणोदयव्यापिनी ग्राह्येति **निर्णयसिंधुः**, कृतोपवासजागरणेन तस्यामरुणोदयव्यापिन्यां विश्वेशमभ्यर्च्य पारणं कार्यमिति **स्मृतिकौस्तुभः**, उपवासश्चतुर्दशीयुक्तारुणोदयवत्यहोरात्रे कार्य इति **मयूखश्च** उपेक्ष्यः । अरुणोदयमारभ्य प्रवृत्तायां द्वितीयारुणोदयपर्यंतायां चतुर्दश्यां सत्यामपि त्रयोदश्यामुपवासापत्तेः । नचेष्टापत्तिः । उदाहृतवचनविरोधात् प्रमाणाभावाच्चेति दिक् । इति कार्तिकशुक्लचतुर्दशी ।

मार्गशुक्लचतुर्दश्यां—अथ शुक्लचतुर्दश्यां मार्गे मासि तपोनिधे । अत्र स्नानादिकं कार्यं पैशाच्यपरिमोचनं । मार्गशुक्ल-

1 'रुणोदयव्याप्तां'.

चतुर्दश्यां कपर्दीश्वरसंनिधौ । स्नात्वान्यत्रापि मरणान्न पैशाच्यमवाप्नुयात् । इमां सांवत्सरीं यात्रां ये करिष्यंति मानवाः तीर्थप्रतिग्रहात्पापात्ते तरिष्यंति मानवाः । पैशाचमोचने स्नात्वा कपर्दीशं समर्च्य च । कृत्वा तत्रान्नदानं च इहामुत्र च निर्भयः । पिशाचमोचने तीर्थे लोष्टाद्द्रोणं समुद्धरेत् । न पीड्यते परलोके स्वल्पयापि पिपासयेति । काशीतत्त्वप्रकाशिकायां स्कांदसनत्कुमारसंहितावचनैः पिशाचमोचनयात्रोक्ता । तत्र—पौर्वाह्णिकास्तु तिथयो देवकार्ये शुभप्रदाः । इति वचनात्पौर्वाह्णिकी चतुर्दशी ग्राह्या । इति मार्गशुक्लचतुर्दशी ।

अथ शिवरात्रिर्निर्णीयते । सा च जयंती शिवरात्रिश्च कार्ये भद्राजयान्विते । इति । कृष्णाष्टमी रोहिणी च शिवरात्रिस्तथैवच । पूर्वविद्धैव कर्तव्या तिथिभांते च पारणं । इत्यादिवचनैः पूर्वविद्धाविधानात् । तस्माद्रात्रौ हि मे पूजां यः करिष्यति मानवः । मंत्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति । इत्यादिवचनै रात्रावेव पूजाविधानात्पूर्वविद्धा ग्राह्या । तत्र रात्रौ वेधस्वीकारे । त्रिभिर्मुहूर्तैर्विध्यंतीत्यादिवचनविरोधापत्तेरुदयानंतरं अस्तात्पूर्वमेव वेध इति हेमाद्रिमाधवनिर्णयामृतादिभिरुक्तत्वाद्रात्रौ वेधो नास्ति । तथाप्यत्र—अष्टमी शिवरात्रिश्च अर्धरात्रादधो यदि । दृश्यते घटिकैका या पूर्वविद्धा प्रकीर्तिता । इति माधवोदाहृतवचनेनार्धरात्रात्पूर्वं प्रवृत्ताया अपि पूर्वविद्धात्वबोधनात् । अत्र घटिकाग्रहणस्य मुहूर्ते द्वादशी न स्यात्त्रयोदश्यां यदा मुने । तदानीं दशमीविद्धा ग्राह्यैवैकादशीतिथिः । इत्यादौ मुहूर्तग्रहणस्येव अर्धरात्रात्पुरस्ताच्चेज्जयायोग इत्येकवाक्यतया कलार्धसद्भावोपलक्षणत्वात् । रात्र्युत्तरार्धात्पूर्वं कलार्धमात्रेण प्रवृत्तापि पूर्वविद्धा भवति । व्याप्यार्धरात्रं यस्यां तु लभ्यते या चतुर्दशी । अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी । इत्यादिषु अर्धरात्रशब्देन रात्रिसंक्रमणे—अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया । पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः । इत्यादाविव मात्रापरिमितकाल एव ग्राह्यः ।

१ पलं च कुडवः प्रस्थ आढको द्रोण एव च । धान्यमानेषु बोद्धव्याः क्रम॰

अतएव संधौ यजेतेत्यादौ पंचदश्या अंत्यार्धमात्रा प्रतिपदश्चाद्यार्धमात्रेति मात्रापरिमितः संधिकालः इति हेमाद्रिमाधवादिभिः सिद्धांतितं तथा प्रकृतेपि पूर्वांधांत्यार्धमात्राद्वितीयार्धाद्यार्धमात्रा चेति मात्रात्मक एवाधरात्रकाल इति स्वीकर्तव्यं । तत्र यदा पूर्वास्तमयात्पूर्वं अस्तमयमारभ्य वा प्रवृत्ता तदोदाहृतपूर्वविद्धाविधायकवाक्यैः—त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः । जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी । इति प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् । इत्यादिभिश्च विधानात्सैव ग्राह्या । यदा पूर्वप्रदोषानंतरं प्रवृत्ता द्वितीयप्रदोषात्पूर्वं समाप्ता तदा पूर्वविद्धाविधायकवचनैः—अर्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् । पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैः । इति वचनाच्च पूर्वैव । यदा तु पूर्वप्रदोषानंतरं प्रवृत्ता द्वितीयदिने प्रदोषव्यापिनी तदाप्यर्धरात्रात्पुरस्तादिति वचनात्पूर्वैव । नन्वर्धरात्रादित्यस्य द्वितीयप्रदोषाव्याप्तौ सावकाशत्वाद्द्वितीयप्रदोषव्याप्तौ प्रदोषव्यापिनीत्यनेनोत्तराग्रहणमेव युक्तं । अतएव कालादर्शे—त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् । इति वचनाच्चतुर्नाड्यूर्ध्वं प्रवृत्ता द्वितीयदिनेऽधिकप्रदोषव्यापिनी उत्तरैव । माघासिते भूतदिने हि राजन्नुपैति योगं यदि पंचदश्याः । जयाप्रयुक्तां नतु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य । इति वचनात् । यानि तु—भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा । शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा । इत्यादिवचनानि तानि महानिशावेधोपि ग्राह्यः किमुत चतुर्नाडीवेध इत्येवंपराणीति न तद्विरोध इति सिद्धांतितं, निर्णयामृते ज्योतिर्निबंधादौ च तदेव पुरस्कृतमिति चेन्न । हेमाद्रिमाधवमदनरत्नतिथितत्त्वकाराद्युदाहृतार्धरात्रात्पुरस्तादिति पद्मपुराणवचनस्य माधवादितिथितत्वकारांतैरुदाहृतवचन—अर्धरात्रादधश्चोर्ध्वमित्यादीशानसंहितावचनानां च प्रदोषव्याप्तिस्तावकत्वस्य वक्तुमप्यसंभवेन तद्विरोधस्य दुष्परिहरत्वे—तथैव लौकिकं वाक्यं स्मृतिवाधे परित्यजेत् । इति वचनेनैव कालादर्शादीनां त्याज्यत्वाभिधानात् ।

हेमाद्रिणापि प्रकृते पूर्वैवेति सिद्धांतितं । तथाहि ननु यदा द्वितीयदिने एव प्रदोषव्यापिनी तदा किमर्धरात्रात्पुरस्ताच्चेदिति वचनात्पूर्वा ग्राह्या उत्तरप्रदोषव्यापिनीति वचनादुत्तरेति कथं निर्णय इति । उच्यते । यद्यप्यर्धरात्रादिति वचनं द्वितीयदिने प्रदोषव्यापित्वाभावेप्युपपद्यते प्रदोषव्यापिनीति वाक्यं चार्धरात्रादुपरि जयायोगेपि तथाप्येवंविधे विषये द्वितीयचतुर्दशीग्रहणे प्रागुदाहृतपूर्वविद्धाशिवरात्रिप्रतिपादकबहुवाक्यसंकोचप्रसंगः पूर्वशिवरात्रिग्रहणे तु तदभाव इति सैव ग्राह्या । किंच पूर्वा बहुकालव्यापिनी उत्तरा तु न तथेति सैव ग्राह्या । यत्तु माघासितेतिवचनं तदर्धरात्रात्पुरस्ताच्चेदिति वाक्यपर्यालोचनयार्धरात्रादुपरि जयायोगनिषेधकमिति । अत्र हेमाद्रिणापीशानसंहितावचनानुपन्यासात्पूर्वा ग्राह्येत्यत्र पूर्वाविधायकबहुवचनसंकोचप्रसंगाभावो हेतुत्वेनोपन्यस्तः । सतु दिवा रात्रौ व्रतं यच्च एकमेकतिथौ गतं । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती । यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण तु । आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमा । इत्याद्युत्तराविधायकानेकवचनसंकोचप्रसंगेन सत्प्रतिपक्षित इत्यस्वरसात्किंचेत्यनेन बहुकर्मकालव्यापित्वमेव हेतुरित्युक्तं । द्वितीयदिने एव प्रदोषमात्रव्यापिन्यप्युत्तरेत्यत्र प्रमाणत्वेनोपन्यस्तवचनविरोधमाशंक्य उत्तरदिने प्रदोषमात्रव्याप्तौ न तदर्धरात्रात्पूर्वं जयायोगनिषेधकमपि तु अर्धरात्रानंतरमिति समाहितम्, तत्तु माघासितेत्यनेनेति तस्माद्द्वितीयदिने प्रदोषमात्रव्याप्तौ पूर्वैव । यदा दिनद्वयेऽप्यर्धरात्रव्यापिनी तदा—शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् । इति निर्णयामृततिथितत्त्वाद्युदाहृतलिंगपुराणवचनेन निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा । इति माधवमदनरत्नाद्युदाहृतकामिकवचनेन चोत्तरार्धरात्रव्याप्तिमात्रविषयकेण उत्तरार्धरात्राव्याप्तौ सावकाशानां अर्धरात्रात्पुरस्ताच्चेदित्यादिवचनानां बाधेनोत्तराविधानात् प्रदोषव्यापिनीति । दिवारात्रौ व्रतं यच्चेति, यो यस्य विहितः काल इति, आदित्या-

कालव्यापिन्येव ग्राह्येति वदतो **हेमाद्रेः कालादर्शमाधवनिर्णयामृतज्योतिर्निबंधतिथितत्त्वादिग्रंथकारासंमत**त्वाच्च । यत्तु माघासितेति वचनमर्धरात्रादुपरि जयायोगनिषेधकमिति **हेमाद्रिणोक्तं** तद्द्वितीयदिने प्रदोषमात्रव्याप्तिविषयकमित्युक्तमेव । अन्यथोपवासपूजाजागरणानि शिवरात्रिव्रतशब्दवाच्यानीति सिद्धांतयतो हेमाद्रेर्द्वितीयार्धरात्रव्याप्तौ तत्रैवोपवासकलाधिकव्याप्तिसत्त्वेन । किंच पूर्वा बहुकर्मकालव्यापिनी उत्तरा तु न तथेति ग्रंथस्य सर्वथा असंगत्यापत्तेः । शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् । इत्यादिलिंगपुराणादिवचनविरोधेन–तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इति हेमाद्र्युदाहृतजाबालिवचनेन **हेमाद्रि**ग्रंथस्यैव त्याज्यत्वापत्तेः । **हेमाद्रिनिर्णीतकालसंकलीकरणार्थं** ममायमुद्योग इति प्रतिज्ञाय प्रवृत्तात्–निशीथद्वयव्यापिनी शिवरात्रिचतुर्दशी प्रदोषनिशीथोभयव्याप्तिलाभात्संकल्पकालमारभ्य सत्वादहोरात्रोभययोगाच्च परैवेति **माधवात्** । यदा तूत्तरदिने प्रदोषव्यापिनी न निशीथव्यापिनी पूर्वदिने निशीथव्यापिनी न प्रदोषव्यापिनी तदोत्तरस्याः प्रदोषव्यापित्वेपि पूर्वैव । अर्धरात्रात्पुरस्ताच्चेदिति **हेमाद्रि**निबंधस्मृत्यंतरवचनादिति **मदनरत्नाच्च** दिनद्वयेऽर्धरात्रव्यापिनी परैवेत्येव **हेमाद्रिसिद्धांत** इति निश्चयात् । तस्माद्दिनद्वयेर्धरात्रव्याप्तौ परैवेति सिद्धम् । एतेन युक्ता चेज्जयया निशीथसमयादूर्ध्वं तदांत्योदिता पूर्वैवापरथेति कालनिर्णयदीपिका । पूर्वा बहुकर्मकालव्यापिनी उत्तरा तु न तथेति हेमाद्रिग्रंथार्थज्ञानाभावप्रयुक्तत्वात् **कालादर्शमाधवनिर्णयामृतज्योतिर्निबंधतिथितत्त्वा**दिगौडग्रंथविरोधाच्चोपेक्ष्यैव । यत्तु **मदनरत्नेन** दिनद्वयेऽर्धरात्रव्यापिन्यपि पूर्वैवेति प्रतिज्ञाय अनेकवचनैः पूर्वविद्धाविधानात् । भवेद्यत्र त्रयोदश्यां भूतव्याप्तेति वचनात्–महतामपि पापानां दृष्टा वै निष्कृतिः परा । न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं त्विमां । इत्यनेनोत्तरानिषेधादिति हेतुत्रयमुपन्यस्तं तस्य त्रयस्यापि द्वितीयार्धरात्रव्याप्त्यभावे सावकाशस्य–शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् । इति–निशोदये[1] चतुर्दश्यां पूर्वा त्याज्या परा शुभा । इति निरवकाशेन वचनद्वयेन

---

१ 'निशाद्वये.'

बाधितत्वात्स्वरूपासिद्धत्वेन तत्साधकत्वासंभवात् प्रतिज्ञामात्रस्य साध्यसाधकत्वाभावात् कालादर्शहेमाद्रिमाधवनिर्णयामृतज्योतिर्निबंधतिथितत्त्वादिग्रंथविरोधाच्चायुक्तमेव । अत एव दिनद्वयेऽर्धरात्रिव्यापिनी पूर्वेति कालतत्त्वविवेचनं तदनुयायिकृत्यरत्नावल्यादयोऽप्युपेक्ष्याः । शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेदित्यादिवचनविरोधात् । अत एवोभयत्रार्धरात्रव्याप्तावुत्तरेति माधवस्तन्न सम्यगिति हेमाद्रिरिति स्मृतिकौस्तुभोऽप्ययुक्तः । हेमाद्र्यर्थाज्ञाननिबंधनत्वाच्च । अतएवात्र हेमाद्रिमाधवयोर्विप्रतिपत्तिरित्युपक्रम्य तस्मादुपेक्ष्यो हेमाद्रिकृतो निर्णय इत्युपसंहारयुक्तो द्वैतनिर्णयः । दिनद्वयेऽर्धरात्रव्याप्तौ हेमाद्रिमते पूर्वा माधवमते परेति अनुष्ठातृणां व्यामोहापादिका-निर्णयसिंधुमयूखकारभट्टोजिदीक्षितादीनामुक्तिरप्युपेक्ष्या । हेमाद्र्यर्थानवबोधप्रयुक्तत्वादिति विभावनीयं । यदा तु पूर्वदिने रात्रितृतीययाममारभ्य प्रवृत्ता द्वितीयास्तानंतरं षष्ठे पंचमे वा मुहूर्ते समाप्ता तदा पूर्वविद्धत्वाभावेन पूर्वविद्धाविधायकार्धरात्रात्पुरस्ताच्चेदित्यादिपूर्वविद्धाविधायकवचनानामप्रवृत्तेः प्रदोषव्यापिनी ग्राह्येत्याद्युदाहृतानेकवचनैरुत्तरस्या एव विधानादुत्तरैव । नच भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा । इति वचनात्पूर्वा कुतो न भवतीति शंक्यं । पूर्वविद्धाविधायकवचनविषये उपपन्नस्यास्य वचनस्य उत्तराविधायकानेकवचनानां विरोधेन तत्र प्रवृत्तेः शंकितुमप्यशक्यत्वात् कालादर्शहेमाद्रिमाधवनिर्णयामृतमदनरत्नादिग्रंथविरोधापत्तेश्च । यदा तूत्तरदिन एवार्धरात्रव्यापिनी तदा प्रदोषव्यापिनीत्यादिवचनेभ्यः । पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः । इतीशानसंहितावचनाच्च परैवेति निर्विवादमेवेति । तथाच सर्ववचनानां हेमाद्रिमाधवयोश्च एकवाक्यताप्रदर्शनपूर्वकं कृतस्य शिवरात्रिनिर्णयस्यायं संग्रहः । पूर्वदिने एवार्धरात्रव्यापिनी पूर्वा, उत्तरदिने एवार्धरात्रव्यापिनी दिनद्वयेप्यर्धरात्रव्यापिनी, दिनद्वयेप्यर्धरात्रास्पर्शिनी च उत्तरैवेति ज्ञेयं । विस्तरस्तु मत्कृते हेमाद्रिमाधवैकमत्यप्रदर्शनेऽनुसंधेयः । अस्यां रविवारादियोगे प्राशस्त्यमुक्तं स्कांदे-माघकृष्णचतुर्दश्यां रविवारो भवे-

यदा । भौमो वापि भवेद्देवि कर्तव्यं व्रतमुत्तमम् । शिवयोगस्य योगे वै तद्भवेदुत्तमोत्तमं । तथा–त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी । अंते चैव सिनीवाली त्रिस्पृश्यां रुद्रमर्चयेत् । इति । व्रतस्वरूपं तु उपवासपूजाजागरणरूपप्रधानत्रयसमुदायः । तदुक्तं हेमाद्रौ नागरखंडे–उपवासप्रसंगेन बलादपि च जागरात् । शिवरात्रेस्तथा तस्यां लिंगस्यापि प्रपूजनात् । अक्षयांल्लभते भोगान् शिवसायुज्यमाप्नुयात् । इति त्रयाणामपि फलसंबंधबोधनात् । स्कांदे—एवं द्वादश वर्षाणि शिवरात्रिमुपोषकः । यो मां जागरते रात्रिं मनुजः स्वर्गमारुहेत् । शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीं । मातुः पयोधररसं न पिबेत्स कथंचन । इति । हेमाद्रौ नागरखंडे—स्वयंभूलिंगमभ्यर्च्य सोपवासः सजागरः । अजानन्नपि निष्पापो निषादो गणतां गतः । इत्यादिवचनैस्त्रयाणामपि प्राधान्यप्रतिपादनात् । तथा–माघे कृष्णचतुर्दश्यां कर्तव्यं व्रतमुत्तमं । इत्युपक्रम्य–त्रयोदश्यां विशालाक्षि एकभक्तं समाचरेत् । उपोषितो वरारोहे चतुर्दश्यां वरानने । इत्यादिभिरंगपूजामुक्त्वा स वै शुध्यति पापेन त्रिविधेन वरानने । इति प्राशस्त्यमभिधाय–जागरं तत्र कर्तव्यं गीतवादित्रमंगलैः । कर्तव्या यामपूजा च स्नानं पंचामृतेन तु । इत्युक्तं तत्रापि त्रयाणां प्राधान्यं समानमेव । एवं सति न स्नानेन न वस्त्रेण न धूपेन न चार्चया । तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः । इति वचनादुपवास एव प्रधानमिति तिथितत्त्वमुपेक्ष्यं । उपवासप्राशस्त्यबोधकवचनस्य पूजादेः प्राधान्यबाधकत्वासंभवात् । अन्यथा न तथा बलिदानेन पुष्पधूपानुलेपनैः । यथा संतुष्यते मेषैर्महिषैर्विंध्यवासिनी । इत्यादीनामपि पूजादिप्राधान्यविघातकत्वापत्तेः । त्रयाणां प्राधान्यमिति हेमाद्रिमाधवविरोधाच्च । अतएव–अथवा शिवरात्रिं च पूजाजागरणैर्नयेत् । कश्चित्पुण्यविशेषेण व्रतहीनोपि यः पुमान् । जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् । इत्येवमादीनि केवलपूजाविधायकानि तान्यनुकल्पत्वादशक्तविषयाणीति हेमाद्रिमाधवादयः । इदं शिवरात्रिव्रतं संयोगपृथक्त्वन्यायेन नित्यं काम्यं च । तत्र नित्यत्वं–परात्परतरं नास्ति शिवरात्रिव्रतात्परं । न पूजयति

भक्त्येशं रुद्रं त्रिभुवनेश्वरं । जंतुर्जन्मसहस्रेषु भ्रमते नात्र संशयः । वर्षे वर्षे महादेवि नरो नारी पतिव्रता । शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् । माघकृष्णचतुर्दश्यां यः शिवं शंसितव्रतः । मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलं । अर्णवो यदि शुष्येत क्षीयेत हिमवानपि । मेरुमंदरलंकाश्च श्रीशैलो विंध्य एव च । चलंत्यंते कदाचिद्वै निश्चलं हि शिवव्रतं । इत्येवमादिषु हेमाद्रिमाधवयोः स्कंदपुराणादिवाक्येषु अकरणे प्रत्यवायश्रवणेन वीप्सानित्यनिश्चलशब्दैश्च नित्यत्वं निश्चीयते । शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीं। मातुः पयोधररसं न पिबेत्स कदाचन । मम भक्तस्तु यो देवि शिवरात्रिमुपोषकः । गणत्वमक्षयं दिव्यमक्षयं शिवशासनं । सर्वान्भुक्त्वा महाभोगान्मृतो भूयो न जायते । इत्यादिवाक्येषु फलश्रवणात्काम्यत्वं च । एवमेतद्व्रतं कुर्यात्प्रतिसंवत्सरं व्रती । द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वा । सर्वान्कामानवाप्नोति प्रेत्य चेह च मानवः । इतीशानसंहितायामपि फलश्रवणात् । वैष्णवादीनामपीदं नित्यं। शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः। सर्वं पूजाफलं हंति शिवरात्रिबहिर्मुखः । इति तत्वोदाहृतेश्वरसंहितावचनात् । तत्रैव यमं प्रतीश्वरवचः–वेदसारेण संपूज्य शिवरात्रौ महेश्वरं । शिवरात्रिव्रतं कृत्वा ब्रह्मा ब्रह्मत्वमागतः । विद्यासारेण मंत्रेण शिवरात्रौ महेश्वरं । शिवरात्रिव्रतं कृत्वा विष्णुर्विष्णुत्वमागतः । शिवरात्रौ शिवं पूज्य मृत्युमोचनविद्यया । कल्पायुरभवत्पूर्वं मार्कंडेयो महामुनिः । अष्टौ च वसवः पूर्वं रुद्रा एकादश स्मृताः। वेदसारेण मां पूज्य सर्वे देवत्वमागताः । बहुनात्र किमुक्तेन सारभूतं वचः शृणु । आचांडालं मनुष्याणां पापसंदहनक्षमं । इति ।

अस्मिन्व्रते अधिकार्युक्तो माधवे ईशानसंहितायां—शिवरात्रिव्रतं नाम सर्वपापप्रणाशनं । आचांडालं मनुष्याणां भुक्तिमुक्तिप्रदायकं। इति। उपवासस्वरूपं तु–उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । इत्याद्येकादशीप्रकरणोक्तं द्रष्टव्यं । अधिकारिनियमाश्च व्रतहेमाद्रौ माधवे च स्कांदे दर्शिताः–माघमासे तु या कृष्णा फाल्गुनादौ चतुर्दशी । सा च पुण्या तिथिर्ज्ञेया सर्वपा-

पप्रणाशिनी । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा । शांतात्मा क्रोधहीनश्च तपस्वी ह्यनसूयकः । तस्मै देयमिदं देवि गुरुपादानुगो यदि । अन्यथा यो ददातीदं स दाता नरकं व्रजेत् । इति ।

व्रतविधिमाह ईशानसंहितायां ईश्वरः—शृणु ब्रह्मन्व्रतविधिं शृणु विष्णो गदाधर । मम प्रियकरी चैषा माघकृष्णा चतुर्दशी । महानिश्यन्विता यत्र तत्र कुर्याद्व्रतं त्विदं । सा तिथिः सकला ज्ञेया दिवा वा यदि वा निशि । पूर्वेद्युरेकदाश्नीयाद्दंतधावनपूर्वकं । अद्रोहेणान्वितः कुर्याद्ब्रह्मचर्यव्रती व्रतं । ब्राह्मे मुहूर्ते चोत्थाय कृतशौचविधिक्रियः । संध्यामुपास्य विधिवत्प्रातःस्नानपुरःसरं । अभिवाद्य गुरुं भक्त्या तदनुज्ञामवाप्य च । शिवस्य संनिधिं गत्वा प्रणम्य वृषकेतनं । व्रतं संकलपयेत्तत्र स्वाचांतः सुसमाहितः । शिवरात्रिव्रतं देव करिष्ये शिवसंनिधौ । निर्विघ्नं कुरु देवेश भक्तिग्राह्य महेश्वर । एवं संकल्प्य विधिवच्छांतो भूत्वा हिते रतः । पूजोपकरणद्रव्यं सर्वं संपादयेत्ततः । मध्याह्नकाले संप्राप्ते नदीं गत्वा समुद्रगां । सरित्कुल्यादिकं गत्वा स्नायादेव विधानतः । नित्यदेवार्चनं कुर्याद्गृहमागत्य भक्तितः । शिवस्य यजनस्थानमलंकुर्यात्समाहितः । संमार्जनानुलेपाद्यैः शोधयेन्मध्यमेव च । वितानध्वजमाल्यैश्च फलपकान्नलंबितैः । अलंकुर्याच्चतुर्दिक्षु वस्त्रकांस्यादितोरणैः । अलंकृत्य सुचित्रेण सायंसंध्यामुपास्य च । पूजोपकरणद्रव्यमादाय सुसमाहितः । प्रक्षाल्य पादौ हस्तौ च कुर्यादाचमनं द्विजः । पूजागृहं प्रविश्याथ प्रणम्य शिवमीश्वरं । उपविश्यासने शुद्धे प्राणानायम्य वाग्यतः । वामहस्ते विनिक्षिप्य भसितं सितमुत्तमं । दक्षिणेन स्पृशेद्भस्म जपन्नग्न्यादिसप्तकं । क्षिपेच्च भस्म शिरसि मंत्रितेप्यथ भस्मनि । शिवं देवं च संस्मृत्य विमृज्यांगानि संस्पृशेत् । पुनर्भस्म समादाय वामपाणौ विनिक्षिपेत् । प्रणवेनाथ सावित्र्या देवीसूक्तेन वा पुनः । त्र्यंबकेन च मंत्रेण ततः संमृज्य पाणिना । त्रिपुंड्रं धारयेद्यस्तु ललाटादिष्वनुक्रमात् । मणिबंधे शिखास्थाने कंठे चैव विशेषतः । रुद्राक्षान्धारयेत्पश्चाद्व्रती नियतमानसः । मद्भक्तांश्च समाहूय दद्याद्यजनसाधनं । भक्तैः संभूय देवेशं पूजयेत्सुसमाहितः । स्वगुरू-

केन मार्गेण यजेद्देवं प्रयत्नतः । आसनं पाद्यमर्घ्यं च मधुपर्का-
दिकं ततः । पंचामृतेन संस्नाप्य स्नापयेच्च फलोदकैः । पुष्पो-
दकैर्गंधतोयैः स्नापयेत्कुंकुमांबुभिः । रत्नोदकैश्च देवेशं तथा
कर्पूरजांबुभिः । लेपयेद्यवचूर्णैश्च ह्यर्चयेद्बिल्वपत्रकैः । उष्णोद-
केन संस्नाप्य स्नापयेच्छीतलांबुभिः । वस्त्रं दद्याच्च देवाय सोप-
वीतं च भक्तितः । दद्यादाचमनं भक्त्या पाद्यमर्घ्यादिकं ततः ।
कर्पूरकुंकुमोपेतं गंधं दद्याच्छिवाय तु । भूषणैर्भूषयेद्देवं हेम-
रत्नादिनिर्मितैः । अखंडबिल्वपत्रैश्च मृदुकोमलपत्रकैः । पुष्पैः
संपूजयेद्देवं कमलोत्पलपूर्वकैः । मल्लिकामालतीभिश्च चंपकैः शत-
पत्रकैः । कुंदपुन्नागवकुलैः शिरीषाशोककिंशुकैः । अर्कपुष्पैरपा-
मार्गैर्बृहतीशमिपूर्वकैः । अन्यैर्नानाविधैः पुष्पैरर्चयेत्परमेश्वरं ।
घृताक्तं गुग्गुलं दद्याद्दीपमाज्येन योजयेत् । गोधूमपिष्टपचितं
पक्वान्नादि च संयुतं । लेह्यचोष्यादिसंयुक्तमाज्येनान्वितमाद-
रात् । नानाविधफलोपेतं दद्यान्नैवेद्यमास्तिकः । कर्पूरकस्तूरीयुक्तं
दद्यात्तांबूलमास्तिकः । ततो नीराजयेद्दिव्यैर्भक्त्या कर्पूरदीपकैः ।
चामरं व्यजनं दत्वा दर्पणं चापि दर्शयेत् । ततः प्रदक्षिणां
कुर्यात्सव्यासव्यविधानतः । शतमष्टोत्तरं चापि प्रणम्य च पुनः
पुनः । ततो वादित्रघोषैश्च गीतस्तोत्रादिपाठकैः । पुराणवचनै-
श्चैव कुर्याज्जागरणं व्रती । एवं द्वितीययामेपि पूजयेदंबिकापतिं ।
प्राणानायम्य विधिवद्रात्रौ संकल्पनं जपेत् । रात्रीमित्यादिमंत्राभ्यां
संकल्प्य सुसमाहितः । एवमेव यजेद्देवमुपचारैर्महानिशि । जागरं
चोपवासं च तस्मिन्कुर्याद्व्रती पुमान् । एवमेव तथा रात्रिं
पूजाजागरणैर्नयेत् । पूजांते च जपेत्स्तोत्रं नामभिश्चांजलिं क्षिपेत् ।
ऋषय ऊचुः—किं तत्स्तोत्रं महाभाग कानि नामानि सुव्रत ।
तत्सर्वं कथयास्माकं लोकानां हितकाम्यया । सूत उवाच । शृण्वंतु
ऋषयः सर्वे व्यासेनोक्तं वदाम्यहं । यस्य वै पाठमात्रेण व्रत-
स्यैव फलं लभेत् । नमः सकलकल्याणदायिने शूलपाणये । विष-
यार्णवमग्नानां समुद्धरणहेतवे । अतिस्नेहस्वरूपाय[1] वार्तातिक्रांत-
वर्तिने । स्वभावोदारधीराय चिद्रूपाय नमोनमः । यत्र सर्वं
यतः सर्वं यत्सर्वं तत्र संशयः । लोककल्लोलकलितं वंदे शंभुं
महोरगं । दैशिकेक्षणमारुह्य धीपद्मानि विकासयन् । उदितो

1 'अस्नेहस्नेहरूपाय'.

वामदक्षिणपार्श्वे तु संजाता हरिवेधसौ। यस्य देवस्य तं वंदे सर्वकारणकारणं। भवाभवपरिक्षीणमर्त्यानां स्मृतिमात्रतः। भवं हरति यो नित्यं वंदे भवभिषक्तमं। यस्मिन्सूर्यो न भातीशो चंद्रमा अनिलोपि वा। यस्य भासा विभातीदं तं वंदे शिवमव्ययं। आत्मारामं महात्मानं सर्वभूतहृदि स्थितं। चेतःसेव्यं स्वपदं महादेवं नमाम्यहं। एकोपि बहुधाभाति प्रतिदेहसमुद्भवः। हृदिस्थोपि हि यो दूरस्तं नमामि सदाशिवं। ब्रह्मविष्ण्वादिदेवेषु नृपक्षिमृगयोनिषु। योंतरे निवसत्येकस्तं नमामि सदाशिवं। भक्तानां सुलभोऽतीव विज्ञेयश्च विवेकिनां। दृश्यो ज्ञानदृशां नित्यं तं नमामि महेश्वरं। यत्पादपद्मपत्राणामल्पं विष्ण्वादिकं पदं। त्रसरेणूपमं प्राहुस्तं वंदे शिवमव्ययं। स्रष्टा त्वमेव लोकानां पालको जगतामपि। अंतकोसि त्वमेवेश नमामि त्वां महेश्वर। अपराधसहस्राणि क्रियंतेऽहर्निशं मया। पाहि मामपराधेभ्यः पिता पुत्रमिवौरसं। एतत्स्तोत्रं पठेद्यस्तु भक्त्या यस्तु शृणोति च। शिवरात्रिव्रतफलं प्राप्नुयात्सोपि मानवः। सूत उवाच—कथयामि मुनिश्रेष्ठ नामानीमानि यत्नतः। व्रतस्य परिपूर्णार्थं शिवप्रियकराणि वै। शिवो रुद्रः पशुपतिर्नीलकंठो महेश्वरः। हरिकेशो विरूपाक्षः पिनाकी त्रिपुरांतकः। शंभुः शूली महादेवो नामान्येतान्यनुक्रमात्। चतुर्थ्यंतं समुच्चार्य दद्यात्पुष्पांजलिं व्रती। एवमेव समुच्चार्य यामे यामे गते निशि। स्तोत्रैः स्तुत्वांजलिं बध्वा नमस्कुर्यात्तु नामभिः। प्रभाते समनुप्राप्ते शिवपूजां समाप्य च। स्नात्वा तु विधिवत्संध्यामुपास्य च यथाविधि। आगत्य देवसदनं शिवं संपूज्य भक्तितः। ब्राह्मणान्द्वादशाहूय पादौ प्रक्षाल्य भक्तितः। अभ्यर्च्य गंधपुष्पाद्यैर्द्वादशैश्चैव नामभिः। कुंभमेकैकशो दद्यात्तिलपक्वान्नसंयुतं। प्रत्येकं दक्षिणां दद्याच्छिवं स्मृत्वा विसर्जयेत्। प्रातः पूजां विधायैवं शिवाय विनिवेदयेत्। यत्कृतं मंत्रतो हीनं यच्च भक्त्या विना कृतं। यच्च दक्षिणया हीनं पूर्णं कुरु महेश्वर। समर्पयित्वा देवाय ब्राह्मणान्भोजयेत्ततः। तिथ्यंते पारणं कुर्यात् बंधुपुत्रादिसंयुतः। एवमेतद्व्रतं कुर्याद्व्रती संवत्सरं प्रति। सर्वा-

न्कामानवाप्नोति प्रेत्य चेह च मानवः। इति। इति शिवरात्रिव्रतविधिः।

अथोद्यापनं। एवमुक्तविधानेन व्रतं कुर्याद्विधानतः। चतुर्विंशति वर्षाणि यद्वा द्वादश वत्सरं। चतुर्विंशतिमे वर्षे कुर्यादुद्यापनं व्रती। अथवा द्वादशे वर्षे कुर्यादुद्यापनं बुधः। उमामहेश्वरस्यार्चां पलमात्रां हिरण्मयीं। श्रुताध्ययनसंपन्नान् शौचाचारसमन्वितान्। शिवभक्तिसमायुक्तान्द्वादश ब्राह्मणाञ्छुचीन्। आचार्यं वरयेदेकं भार्यापुत्रादिसंयुतम्। श्रुताध्ययनसंपन्नमात्मनिष्ठं जितेंद्रियम्। तस्मिन्नुद्यापने चैव ऋत्विग्वरणमिष्यते। मधुपर्कं ततः कुर्यात्तस्मिन्नहनि संयमी। तेषामाभरणं दद्याद्वस्त्रमंगुलिभूषणं। पूजोपकरणं सर्वं ततः संपादयेद्व्रती। नदीं गत्वा विधानेन कुर्यान्माध्याह्निकं ततः। उपास्य पश्चिमां संध्यां पूजोपकरणानि च। आदाय संयतो भूत्वा प्रविशेच्च शिवालयम्। आचार्येण च ऋत्विग्भिः सहितः शिवमर्चयेत्। पूजासाधनकं द्रव्यं तेभ्यो दद्यात्पृथक्पृथक्। कृतस्यास्य महादेव शिवरात्रिव्रतस्य च। उद्यापनं करिष्यामि निर्विघ्नं कुरु शंकर। मंत्रेणानेन संकल्प्य भस्म धृत्वा विधानतः। पूर्वोक्तेन विधानेन यजेद्देवं त्रियंबकं। शिवसूक्तजपैश्चैव रुद्रसूक्तजपैस्तथा। नृत्यगीतैस्तथा वाद्यैः पुराणश्रवणादिभिः। यामे यामे यजेद्देवं कुर्याज्जागरणं व्रती। प्रभाते समनुप्राप्ते शिवपूजां समाप्य च। प्रातः स्नात्वा विधानेन कुर्यादग्निमुखं व्रती। तस्मिन्नावाहयेद्देवं हरिब्रह्मादिवंदितं। शुक्लवर्णं त्रिनेत्रं च जटाचंद्रकलाधरं। मृगटंकधरं देवं वरदाभयपाणिनं। गंधपुष्पैः समभ्यर्च्य हुनेच्चैव विधानतः। कपिलायाः सवत्साया घृतमत्र प्रशस्यते। कृष्णधेन्वाः सवत्साया घृतं वा जुहुयाद्व्रती। कद्रुद्रायेति मंत्रेण आतेपितर इत्यपि। इमारुद्राय सूक्ताभ्यां प्रत्यृचं जुहुयाद्व्रती। तमुष्टुहीति मंत्रेण तथा वै त्र्यंबकेन च। वेदमात्राथ जुहुयादाज्यमष्टोत्तरं शतं। अष्टोत्तरशतं पश्चात्तिलैर्व्याहृतिभिर्हुनेत्। ततः स्विष्टकृतं हुत्वा प्रायश्चित्ताहुतीर्व्रती। ततोऽग्निं पूजयित्वा च तत्रस्थं भस्म धारयेत्। विसर्जयित्वा देवेशं ब्राह्मणान्पूजयेत्ततः। गंधपुष्पैः समभ्यर्च्य शिवं च विनिवेदयेत्। फलभक्ष्यसमायुक्तं तिलैरपि समन्वितं। तेषां च दक्षिणां दद्यात्प्रत्येकं निष्कमात्रतः। छत्रं चोपानहौ चैव दद्याच्च

करपत्रिकां । उमामहेश्वरस्यार्चां सर्वोपकरणैर्युतां । गां महीं हेम रत्नं च आचार्याय प्रकल्पयेत् । दत्वा तु दक्षिणां तस्मै ब्राह्मणान्प्रार्थयेत्ततः । भवंतो हि ब्रुवंत्वत्र व्रतं संपूर्णमस्त्विति । उद्यापनेन सहितं शिवरात्रिव्रतं त्विदम् । यत्कृतं भवता मेऽद्य परिपूर्णं तदस्तु मे । ततः संप्रार्थयेद्देवं कृतांजलिपुटः स्थितः । यत्कृतं मंत्रतो हीनं साधनैश्च विवर्जितं । भक्त्या दक्षिणया हीनं संपूर्णं कुरु शंकर । ब्रह्मत्वं प्राप्तवान्ब्रह्मा विष्णुर्विष्णुत्वमाप सः । त्वां समाराध्य देवेश देहि मे भक्तिमुत्तमाम् । एवं संप्रार्थ्य देवेशं व्रतं तस्मै निवेदयेत् । व्रतं शिवात्मकं त्वेतत्कर्ताहं च महेश्वरः । व्रतेनानेन सुप्रीतो भूयान्मम सदाशिवः । विसर्जयित्वा देवेशं ब्राह्मणान्भोजयेत्ततः । संबंधिबांधवैः सार्धं स्वयं कुर्यात्तु पारणं । इति । इति शिवरात्रिव्रतोद्यापनम् ।

अथ पारणनिर्णयः । तत्र यद्यप्यत्रेशानसंहितायां । जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्तव्या तिथिभांते च पारणं । इत्यादि पूर्वोक्तेषु वाक्येष्वपि तिथ्यंते पारणं प्रतीयते । तथापि—अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् । हन्यात्पुराकृतं कर्म उपवासार्जितं फलम् । इत्यादि निषेधस्याष्टम्यादाविव प्रकृते असंभवात् । तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीम् । इति माधवोदाहृतस्कंदवाक्ये पर्युदासात् । उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणं । कृतैः सुकृतलक्षैश्च लभ्यते यदि वा न वा । ब्रह्मा स्वयं चतुर्वक्त्रैः पंचवक्त्रैस्तथा ह्यहं । सिक्थे सिक्थे फलं तस्य शक्तो वक्तुं न पार्वति । ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै । संस्थितानि भवंतीह भूतायां पारणे कृते । इति माधवीये स्कांदवाक्यैः पुण्यातिशयप्रतिपादनात् । दिनमानप्रमाणेन या च रात्रौ चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया चतुर्दश्यां तु पारणम् । इति तिथितत्वोदाहृतगौतमीयेपि चतुर्दश्यां पारणविधानाच्च चतुर्दशीमध्ये एव पारणं प्रशस्ततरं । तत्र यदा नित्यकृत्यपूर्वकं पारणपर्याप्ता चतुर्दशी नास्ति येषां वा पार्वणादिश्राद्धप्रसक्तिस्तत्र संकटे विषमे इत्यादिवचनेन जलपारणप्रसक्तौ तिथ्यंते पारणविधायकानि वाक्यानीत्येव

जयंत्येकादशीपारणनिर्णयवत् निर्णयो न कृतः । स्कांदवचनान्यपि न लिखितानि किंतु यदा द्वितीयदिने पारणपर्याप्ता सायंकाले अमावास्या तदा पूर्वा नो चेत्परा । रात्रौ भुक्त्वा तु पर्वणीत्यनेन रात्रौ भोजननिषेधात् । त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः । इति वाक्यात् दिवसभोजनानुरोधेन यस्यां त्रयोदश्यामुपोषितायां तिथ्यंते विहितं पारणं रात्रौ नोपपद्यते तत्र त्रयोदशी दिनभुक्तिप्रमाणत इत्यनेनोच्यत इति मतमुपन्यस्य । तदयुक्तं । भुक्तिशब्दस्य भोजनकालप्राप्तावपि तिथिनक्षत्रवारभुक्तिरित्यादिषु ज्योतिःशास्त्रनिरूढत्वात् । एवंच भुक्तिशब्देन भोजनग्रहणे अर्धरात्रात्पुरस्ताच्चेदिति संकोचप्रसंग इत्यादि तद्दूषणप्रस्तावे । अथ तिथ्यंते विहितं भोजनं यदा दिवा संभवति तदा पूर्वा प्राप्नोति । तन्न । लक्षणाप्रसंगात् रात्रिभोजनेपि बाधकाभावाच्च निषेधस्य रागप्राप्तभोजनविषयत्वाद्रागप्राप्तलाभे विधिस्पृष्टे निषेधाप्रवृत्तेरित्यंतेन तन्मतदूषणमात्रं कृतं तद्युक्ततरं । अन्यथा पूर्वसूर्यास्तमारभ्य प्रवृत्ता चतुर्दशी द्वितीयसूर्यास्तात्प्राक्क्षणे समाप्ता तत्रोत्तराग्रहणे अंगभूतपारणानुरोधेन प्रधानान्यथाकरणानौचित्यादिति । एवं सति निरवकाशशिवरात्रिमात्रविषयकस्कांदवचनविहितपारणस्वीकारे न हेमाद्रिविरोधः । एतेन व्रततिथेरंते निशीथेपि वाश्नीयादिति दीपिका तु—तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीं । इत्यादिस्कांदवाक्यैः—न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् । तत्र निश्यपि वा कुर्याद्वर्जयित्वा महानिशां । इति मदनरत्ने गौडनिबंधोदाहृतभविष्योत्तरवाक्येन च विरुद्धैव । यदा चतुर्दशी यामत्रयमतिक्रामति तदा चतुर्दशीमध्ये पूर्वाह्णे पारणं कुर्यादिति माधवग्रंथे श्राद्धादेरप्रसक्तौ इति शेषस्यावश्यकत्वात् । यदा यामत्रयादर्वागेव चतुर्दशी समाप्यते तदा तिथ्यंते पारणमिति पूर्वग्रंथेपि पार्वणश्राद्धादिप्रसक्ताविति शेषादिकल्पनायाः कथंचित्पूर्वोक्तार्थे एव तात्पर्यं कल्प्यं । अन्यथा—तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीम् । शिवरात्रिस्तु सा ज्ञेया चतुर्दश्यां तु पारणं । इति पूर्वोदाहृतस्कांदगौतमीयवचनविरोधापत्तेरिति बोध्यं । यत्तु यदोत्तरदिने

दिवैव चतुर्दशीसमाप्तिस्तदा तिथ्यंते पारणं, यदा तु रात्रौ तिथ्यंतस्तदा चतुर्दशीमध्ये प्रातरेव पारणं । सा त्वस्तमयपर्यंतव्यापिनी चेत्परेऽहनि । दिवैव पारणं कुर्यात्पारणान्नैव दोषभाक् । इति कालादर्शलिखितशिवरात्रिप्रकरणपठितस्मृतिवचनादिति मदनरत्ने कालतत्त्वविवेचनादौ चोक्तं तदुपेक्ष्यं । यतो यस्यामष्टम्यादितिथौ—अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् । इत्यादिनोपोष्यतिथिमध्ये पारणं निषिद्धं । सा त्वस्तमयपर्यंता तदा रात्रौ पारणे प्राप्ते तत्रापि । अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा । तामसे पारणं कुर्वन् तामसीं गतिमश्नुते । इत्यनेन रात्रौ तन्निषेधात्पारणस्य चावश्यकत्वाद्दिवैवेत्युक्तं न दोषभागिति च । अनेन यत्र दोषप्रसक्तिस्तत्रैवाभ्यनुज्ञाबोधनात्, शिवरात्रौ चतुर्दशीमध्ये पारणस्यातिप्राशस्त्यप्रतिपादनेनास्य वाक्यस्य शिवरात्रिविषयत्वासंभवेन प्रकरणाल्लिंगस्य प्राबल्येन च शिवरात्र्यन्यविषयत्वस्यैवौचित्यादिति दिक् ।

निर्णयसिंध्वादौ तु तिथ्यंते पारणमिदं शिवरात्रौ न संबध्यते । तस्मात्तिथिमध्ये एव पारणमित्युक्तं । तत्रैताः पूर्वयुताः कार्या इत्येकशेषेणोपस्थितासु मध्ये एकस्यामनन्वयस्य वक्तुमशक्यत्वात् , शिवरात्रिमात्रविषयकतिथ्यंते पारणमितीशानसंहितावाक्यविरोधाच्चोपेक्ष्यं । यच्च मयूखे उक्तं तिथ्यंते गौणकालः । स्वकालादुत्तरो गौण इति मंडनोक्तेरिति । तत्रोत्तरत्वं स्वकालत्वाश्रयनिरूपितं चेन्मुख्यकालांतर्गतोत्तरक्षणादीनां गौणत्वापत्तेः स्वोद्देशेन विहितकालत्वावच्छिन्ननिरूपितोत्तरत्वस्यैव वक्तव्यत्वात् । प्रकृते तिथ्यंतस्यापि अनेकवाक्यैर्विहितकालत्वात् गौणत्वोक्तेः कथमौचित्यमिति चिंतनीयं । तस्मात्कालद्वयस्य मुख्यत्वेपि चतुर्दशीमध्ये पारणे पुण्यातिशयश्रवणात्तस्य मुख्यतरत्वमित्येव स्वीकर्तुमुचितमिति बोध्यं । इति शिवरात्रिपारणनिर्णयः ।

यच्च—यदीच्छेद्विपुलान्भोगान्दिवि देवमनोरमान् । आगमोक्तविधिं कृत्वा प्राप्नोति सकलं फलं । आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा । गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् । निशि जागरणं कृत्वा दीपद्योतित-

दिङ्मुखः । गीतवाद्यविनोदेन पूजाजाप्यैः शिवे रतः । इत्यादिना स्कांदपुराणे शिवरात्रिप्रकरणमध्ये एव द्वादशस्वपि कृष्णचतुर्दशीषु शिवरात्रिव्रतवदेव काम्यं व्रतं विहितं । तत्राप्युपवासपूजाजागरणविधानाद्रात्रिप्राधान्यस्य सत्वाद्बहुरात्रिव्यापिनी चतुर्दशी ग्राह्या । यदा दिनद्वयेपि निशीथव्यापिनी तदा पूर्वोक्तरीत्योत्तरैव बहुकर्मकालव्यापिनी ग्राह्येति हेमाद्रिसिद्धांतादपि तथैव प्रतीतेः । एतेन साम्ये तु पूर्वा स्मृतेति दीपिका, साम्ये पूर्वैवेति हेमाद्रिरिति निर्णयसिंधुश्च हेमाद्रिविरुद्ध एव । यत्तु— चतुर्दशीमुपोषंति शिवभक्ता नराधिप । न तेषां गमनं भूप नरके दृश्यते क्वचित् । इत्यादि मार्कंडेयादिवचनैर्विहितं प्रतिमासं कृष्णचतुर्दश्यां शिष्टैरनुष्ठीयमानमुपवासमात्रं तत्—अखंडितव्रतो यो हि शिवरात्रिमुपोषयेत् । सर्वान्कामानवाप्नोति शिवेन सह मोदते । इत्यादिना नित्यशिवरात्रिव्रते अनुकल्पवत्काम्ये चतुर्दशीव्रतेऽनुकल्पासंभवात्स्वतंत्रमेव । तत्र चतुर्दशी—एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । इति वृद्धवसिष्ठवचनादमावास्याविद्धा प्राप्ता—कृष्णपक्षेष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्तव्या परविद्धा तु कस्यचित् । इति निगमवचनात्त्रयोदशीविद्धा प्राप्ता तत्र व्यवस्थामाह हेमाद्रिमाधवयोर्ब्रह्मवैवर्ते । रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत्।इति यथोद्दिष्टामुत्तरामित्यर्थः।तत्र संमुखीशब्दः—संमुखीनाम सायाह्नव्यापिनी या तिथिर्भवेत् । इति वचनात्पारिभाषिकः । तेन यदा पूर्वविद्धा लभ्यते तदा पूर्वैव नोचेदुत्तरैवेति विभाव्यतां सूरिभिः । इति शिवरात्रिनिर्णयः ।

अथ शिवरात्रिव्रतप्रयोगः । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा । शांतात्मा क्रोधहीनश्च तपस्वी ह्यनसूयकः । इति । गुणयुक्तस्त्रयोदश्यां एकभक्तं विधाय चतुर्दश्यां दंतकाष्ठवर्ज्यं जिह्वोल्लेखनपूर्वकं मुखं प्रक्षाल्य स्नानसंध्यादिनित्यक्रियां विधाय कृताचमनः देवसंनिधौ गत्वा शिवं नमस्कृत्य—शिवरात्रिव्रतं देव करिष्ये शिवसंनिधौ । निर्विघ्नं कुरु

वृक्षोक्तेर्द्वितीयप्रहरे विल्वपत्रपुष्पादिपूजोपयोगि सर्वं संपादयेत् । आदित्यपुराणे—विल्वपत्रैरखंडैश्च सकृत्पूजयते शिवं । सर्वपापविनिर्मुक्तः शिवलोके महीयते । पंचाक्षरेण मंत्रेण विल्वपत्रैः शिवार्चनं । करोति श्रद्धया यस्तु स गच्छेदैश्वरं पदं । दर्शनाद्विल्ववृक्षस्य स्पर्शनाद्वंदनादपि । अहोरात्रकृतं पापं नश्यत्येव हि नारद । अंतकाले नरो यस्तु विल्वमूलस्य मृत्तिकां । आलिप्य सर्वगात्राणि मृतो याति परां गतिं । विल्वपत्रैरखंडैस्तु पूजयेदिंदुशेखरं । कृष्णाष्टम्यां संयतात्मा ब्रह्महत्यां व्यपोहति । मातृहा पितृहा वापि युक्तो वा सर्वपातकैः । माघकृष्णचतुर्दश्यां पूजयेदिंदुशेखरं । भक्त्या विल्वदलैर्मौनी शिवनाम जपन्निशि । सर्वपापविनिर्मुक्तो याति शैवं परं पदं । शुष्कैः पर्युषितैर्वापि पत्रैर्विल्वस्य नारद । पूजयेद्गिरिजानाथं मुच्यते सर्वपातकैः । शिवरहस्ये—नित्यं सार्द्रैरनार्द्रैर्वा विल्वपत्रैः सदाशिवं । पूजयस्व महादेवं तस्मान्मा प्रमदो भव । विल्वपत्राणि शुद्धानि स्वतः पर्युषितान्यपि । शंकरार्चनयोग्यानि भवंतीत्यस्ति हि श्रुतिः । सुवर्णं विल्वपत्रं च रत्नं च रजतं तथा । नहि पर्युषितं यस्माच्छुद्धमेव स्वयं ततः । अर्पितान्यपि विल्वानि प्रक्षाल्य च पुनः पुनः । शंकरायार्पणीयानि न नवानि यदि क्वचित् । शुष्कं खण्डितमार्द्रं वा विल्वपत्रं शिवप्रियं । पाद्मे शिवगीतायां—विल्वमूलमृदा यस्तु शरीरमुपलिंपति।अंतकालेंतकजनैः स दूरीक्रियते नरः । विल्ववृक्षं समाश्रित्य यो मंत्रान् विधिवज्जपेत् । एकेन दिवसेनैव पुरश्चर्या कृता भवेत् । ब्रह्मोत्तरखंडे—माघमासे महापुण्या या सा कृष्णचतुर्दशी । शिवलिंगं विल्वपत्रं दुर्लभं हि चतुष्टयं । इति । लैंगे—मणिमुक्ताप्रवालैस्तु रत्नैरप्यर्चनं कृतं । न गृह्णामि विना देवि विल्वपत्रैर्वरानने । भविष्ये—सर्वकामप्रदं विल्वं दारिद्र्यस्य विनाशनं । विल्वपत्रात्परं नास्ति येन तुष्यति शंकरः । इति विल्वमहिमानं ज्ञात्वा—अमृतोद्भव श्रीवृक्ष महादेवप्रियः सदा । गृह्णामि तव पत्राणि शिवपूजार्थमादरात् । इति मंत्रेण वृक्षं नमस्कृत्य विचिनुयात् । शिवपूजायां प्रशस्तपुष्पाणि भविष्यपुराणे उक्तानि—कर-

कर्णिका । तथा काशस्य पुष्पाणि मंदारश्चापराजिता । शमीपुष्पाणि वन्यानि कुब्जकः षंढिनी[1] तथा । अपामार्गस्तथा पद्मं जातीपुष्पं[2]मशोककं। चंपकोशीरतगरास्तथा वै नागकेसरं । पुन्नागं किंकिरातश्च द्रोणपुष्पं तथा शुभं । शिंशश्चोदुंबरश्चैव जपा मल्ली तथैव च । पुष्पाणि यज्ञवृक्षस्य तथा बिल्वं प्रियं शुभे । कुसुंभस्य च पुष्पाणि तथा वै कुंकुमस्य च । नीलं च कुमुदं चैव तथा रक्तोत्पलानि च । सुरभीणि च पुष्पाणि तत्तत्कालोद्भवानि च । पुष्पैरेतैर्यथालाभं सततं पूजयेच्छिवं । इति । **लैंगे**—श्वेतार्ककुसुमे साक्षाच्चतुर्वक्त्रः प्रजापतिः । कर्णिकारस्य कुसुमे मेधा साक्षाद्व्यवस्थिता । करवीरे गणाध्यक्षो वके नारायणः स्वयं । सुगंधिषु च सर्वेषु नगात्मजा व्यवस्थिता । बिल्वपत्रे स्थिता लक्ष्मीर्देवी लक्षणसंयुता । नीलोत्पलेंबिका साक्षादुत्पले षण्मुखः स्वयं।पद्मे गणैर्महादेवः सर्वदेवपतिः स्वयं । तस्मात्सर्वप्रयत्नेन श्रीपत्रं न त्यजेद्बुधः । नीलोत्पलं चोत्पलं च कमलं च विशेषतः । **स्कांदे**—चतुर्णां पुष्पजातीनां गंधमाघ्राति शंकरः । अर्कस्य करवीरस्य बिल्वस्य चंपकस्य चेति । **भविष्ये**—तपःशीलगुणोपेते पात्रे वेदान्तपारगे । दत्वा सुवर्णशतकं[3] तत्फलं कुमुदस्य च।अर्कपुष्पे तथैतस्मिञ्शिवाय विनिवेदिते । दश दत्वा सुवर्णस्य यत्फलं तदवाप्नुयात् । अर्कपुष्पसहस्रेभ्यः करवीरं विशिष्यते।करवीरसहस्रेभ्यो बिल्वपत्रं विशिष्यते।बिल्वपत्रसहस्रेभ्य एकं धत्तूरकं शुभं।धत्तूरकसहस्रेभ्यः शमीपुष्पं विशिष्यते । शमीपुष्पसहस्रेभ्यः श्रीमन्नीलोत्पलं वरं। सर्वासां पुष्पजातीनां प्रवरमृषिभिः स्मृतं। नीलोत्पलसहस्रस्य यो मालां संप्रयच्छति । शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु । कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेच्छिवपुरे श्रीमान् शिवतुल्यपराक्रमः । धत्तूरकैस्तु यो लिंगं सकृत्पूजयते नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते । बृहतीकुसुमैर्भक्त्या यो लिंगं सकृदर्चयेत् । गोलक्षस्य फलं प्राप्य ततः शिवपुरं व्रजेत् । करवीरसमा ज्ञेया जाती वकुलपाटला । श्वेतमंदारकुसुमं सितपद्मं च तत्समं । नागचंपकपुन्नागा धत्तूरकुसुमाः स्मृताः । कनकानि कदंबानि रात्रौ देयानि शंकरे । **मदनरत्ने**—

१ 'शिष्टियी'. २ 'सवोकनं'. ३ 'शकलं'.

केतकानि कदंबानीति पाठः । दिवा शेषाणि देयानि दिवा रात्रौ च मल्लिका । भविष्ये—प्रहरं तिष्ठते जाती करवीरमहर्निशं । तुलस्यां बिल्वपत्रेषु सर्वेषु जलजेषु च । न पर्युषितदोषोऽस्ति मालाकारगृहेपि च। जाती प्रहरात्। करवीरं अहोरात्रात्। पश्चाद्देवादुत्तराणीयमित्यर्थः । हेमाद्रौ कामिककारणयोः—बिल्वपुष्पं शमीपुष्पं करवीरं च मालती । उन्मत्तकं चंपकं च सद्यः प्रीतिकरं मम । चंपकाशोकपुन्नागाः सकह्लारास्तथा मम । सा हृष्टा द्विजशार्दूल ये चान्ये बहुगंधिनः । एतैर्हि पूजितो नित्यं प्रीतिं शीघ्रं व्रजाम्यहं । यैः कैर्वापीह कुसुमैर्जलस्थलरुहैः[1] शिवं। संपूज्य तोषितैर्भक्त्या शिवलोके महीयते । अभावेन हि पुष्पाणां पत्राण्यपि निवेदयेत् । पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् । तत्रैव स्कांदे—अभावे पुष्पपत्राणामन्नाद्येनापि पूजयेत् । शालितंदुलगोधूमैर्यवैर्वापि समर्चयेत् । गाणपत्यमवाप्नोति रुद्रलोके वसेच्चिरं । इति । शिवधर्मोत्तरे निषिद्धान्युक्तानि—सर्जबंधूकपुष्पाणि कुंदं[2] यूथी मदंतिका । केतकी चातिमुक्तश्च श्वेता चैवापराजिता । कपित्थं बकुलं तर्की[3] शिरीषं च बिभीतकं । धातकीं निंबपत्रं च गृंजनं च विवर्जयेत् । अत्र कुंदनिषेधो माघातिरिक्तकाले । तदुक्तं हेमाद्रौ देवीपुराणे—वैशाखे मासि कर्तव्या पूजा पाटलया तथा । सर्वान्कामानवाप्नोति ज्येष्ठे पद्मार्चनात्तथा । आषाढे बिल्वकह्लारैरीप्सितं लभते फलं । नवमल्लिकया पूजा नभोमासि महाफला । कदंबैश्चंपकैरर्चा नभस्ये सर्वकामदा । पूजा पंकजमालत्या इषेऽभ्युदयदायिनी । शतपत्रिकया पूजा कार्तिके सार्वकामिकी । मार्गे नीलोत्पलैः पूजा पौषे स्यात्कुब्जकैः शुभा । माघे च कुंदकुसुमैर्मरुबकेन फाल्गुने । शतपत्रैस्तथा चैत्रे यः कुर्यात्सुरसत्तम । लभते सर्वयज्ञानां सर्वदानफलं तथा । एवं मासानुरूपेण यस्तु पुष्पं प्रकल्पयेत् । शिवाय स भवेद्वत्स शिवस्थानरतस्तथा । इति माघे कुंदपुष्पविधानात् । कुंदपुन्नागबकुलशिरीषाशोककिंशुकैः । इतीशानसंहितायां शिवरात्रौ बकुलशिरीषयोर्विधानात् नि-

१ 'जलजस्थलजैः शिवं'. २ 'कुंदो'. ३ 'तर्सें'.

षेधस्तद्व्यतिरिक्तकाले । येषां तु कालविशेषपुरस्कारेण विधानं नास्ति किंतु सामान्येन विधानं निषेधोपि तथैव तेषां विकल्प इति बोध्यं । मुकुलैर्नार्चयेद्देवं चंपकैर्जलजैर्विना । इति वचनात् चंपक-जलजभिन्नमुकुलैर्नार्चयेत् । मध्यमानामिकांगुष्ठैः पुष्पं संगृह्य पूज-येत् । अंगुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् । अपनीतं च निर्माल्यं चंडेशाय निवेदयेत् । अशून्यमस्तकं लिंगं सदा कु-र्वीत पूजकः । इति वचनादनामिकामध्यमांगुष्ठैः पुष्पाद्य-र्पणं कुर्यात् । तच्च पुष्पादिकं—पत्रं पुष्पं फलं चैव यथोत्पन्नं तथार्पयेत् । इति वचनात्स्वाभिमुखमुत्तानमर्पयेत् । बिल्वपत्रं तु—वामपत्रे वसेद्ब्रह्मा पद्मनाभस्तु दक्षिणे । मध्यपत्रे स्थितः साक्षात्सांबः सर्वार्थदायकः । इन्द्रादयो लोकपाला वृंताग्रे परि-कीर्तिताः । पृष्ठभागे स्थिता यक्षा अभक्तानां निषेधकाः । पूर्व-भागेऽमृतं न्यस्तं देवैर्ब्रह्मादिभिः पुरा । तस्माद्वै पूर्वभागेन पूजये-द्गिरिजापतिं । इति शिवरहस्यवचनादभ्यग्रं न्युब्जमर्पयेत् । अगरुं शतसाहस्रं द्विगुणं चासितागरुं । गुग्गुलं घृतसंयुक्तं साक्षाद्गृ-ह्णाति शंकरः । इति । घृतदीपं तु यो दद्याद्वसेच्छिवपुरे तु सः । तैलेनापि हि यो दद्याद्घृताभावे तु मानवः । तेन दीपप्रभावेन शिववद्भ्राजते भुवि । इति । अथ भक्त्या शिवं पूज्य नैवेद्यमुप-कल्पयेत् । यद्यदेवात्मनः श्रेयस्तत्तदीशाय कल्पयेत् । एक-माम्रफलं पक्वं यः शंभोर्विनिवेदयेत् । वर्षाणामयुतं भोगैः क्रीडते स शिवे पुरे । एकं मोचाफलं पक्वं यः शिवाय निवेदयेत् । वर्षलक्षं महाभोगैः शिवलोके महीयते । मोचा कदली । शिवरहस्ये—प्रदक्षिणाप्रकारस्तु द्विविधो वेदसंमतः । सव्या-पसव्यः सव्यश्च तत्राद्ये विधिरुच्यते । वृषं चंडं वृषं चैव सोम-सूत्रं पुनर्वृषं । चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषं । प्रा-ग्द्वारं देवदेवस्य वृषस्थानं प्रकीर्तितं । ईशानभागे विज्ञेयं चंड-स्थानं द्विजोत्तम । उपविश्य वृषस्थाने संकल्प्य विधिपूर्वकं । कृतांजलिपुटो मौनी चंडस्थानं व्रजेत्ततः । पुनर्वृषेशमागत्य सोम-सूत्रं व्रजेत्ततः । पुनर्वृषेशमागत्य चंडस्थानं व्रजेत्ततः । ततो वृषेशं संप्राप्य सोमसूत्रं व्रजेद्द्विजः । सोमसूत्रमनुल्लंघ्य चंडस्थानाद्वृषं व्रजेत् । इति । सव्यं सव्येन कर्तव्यं तदपि श्रुतिचोदितम् । इति । देवीपुराणे—सव्यं व्रजेत्ततोऽसव्यं प्रणालं नैव लंघयेत् ।

क्रीभूतमहारुद्रे यः कुर्यात्त्रिःप्रदक्षिणं । छिन्नस्तेन भवग्रंथिर्न
स्य पुनरुद्भवः । इति प्रकारांतरमुक्तं । चरलिंगे तु सव्येनै-
ति बोध्यं । उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
द्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टांग उच्यते । दंडवत्प्रणमे-
त इति वचनात् दण्डवद्वा नमस्कारः । लैंगे—गंधधूपनम-
कारैर्मुखवाद्यैश्च सर्वशः । यो मामर्चयते भक्त्या तदा तुष्या-
हं सदा । इति । एवं बिल्वपत्रपुष्पादि पूजोपकरणं संपाद्य
ध्याह्नस्नानादि कुर्यात् । पूजोपकरणद्रव्यं सर्वं संपादयेत्ततः ।
ध्याह्नकाले संप्राप्ते स्नायादेव विधानतः । नित्यदेवार्चनं कुर्या-
द्गृहमागत्य भक्तितः । इत्युदाहृतव्रतविधौ मध्याह्नस्नानाद्यनंतरं
त्यदेवार्चनमुक्तं । देवार्चनस्य नित्यत्वं पराशरेणाप्युक्तं—ष-
कर्माभिरतो नित्यं देवतातिथिपूजकः । हुतशेषं तु भुंजानो
ह्मणो नावसीदति । संध्या स्नानं जपो होमो देवतानां च
र्चनं । आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने । इति ।
त्र दिने दिन इति वीप्सया नित्यत्वबोधनात्—वरं प्राणपरि-
गः शिरसो वापि कर्तनं । नत्वसंपूज्य भुंजीत भगवंतं त्रिलो-
नं । इति मदनरत्नोदाहृतभविष्यपुराणवचनेन—वरं प्राणप-
त्यागः शिरसो वापि कर्तनं । न चैवापूज्य भुंजीत शिवलिंगे
ईश्वरं । इति शूलपाणिनाप्युदाहृतलैंगवचनेन लिंगपूजां
ना भोजनेऽनिष्टप्रतिपादनाच्च—लिंगार्चनं रुद्रजपो व्रतं शिव-
नत्रये । वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा । इति । यः
द्याद्गवां लक्षं दोग्ध्रीणां वेदपारगे । एकाहं योऽर्चयेल्लिंगं तस्य
ण्यं ततोऽधिकं । सकृत्पूजयते यस्तु भगवंतमुमापतिं । तस्या-
मेधादधिकं फलं भवति भूसुराः । इति । यस्तु पूजयते
त्यं शिवं त्रिभुवनेश्वरं । स स्वर्गराज्यमोक्षाणां शीघ्रं भवति
जनं । नहि लिंगार्चनात्किंचित्पुण्यमभ्यधिकं क्वचित् । इति
स्माद्य यत्नेन पूजनीयः सदाशिवः । इति हेमाद्रिमाध-
मदनरत्नोदाहृतविष्णुधर्मोत्तरनंदिकेश्वरभविष्यपु-
णवचनैर्निःश्रेयसादिहेतुत्वप्रतिपादनाच्च लिंगार्चनं नित्यं
र्तव्यं । तदनंतरं—शिवस्य यजनस्थानमलंकुर्यात्समाहितः ।
तानध्वजमाल्यैश्च फलपक्वान्नलंबितैः । अलंकृत्य सुचित्रेण

सायंसंध्यामुपास्य च । पूजागृहं प्रविश्याथ प्रणम्य शिवमीश्वरम् । इत्यत्रापि शिवादिशब्देन लिंगमेव ग्राह्यं न प्रतिमादिकं । लिंगेषु च समस्तेषु स्थावरेषु चरेषु च । संक्रमिष्याम्यसंदिग्धं वर्षं पापविशुद्धये । इत्युदाहृतवाक्येषु–माघकृष्णचतुर्दश्यामुपवासो हि दुर्लभः । तत्रापि दुर्लभं मन्ये रात्रौ जागरणं तथा । अतीव दुर्लभं तत्र शिवलिंगस्य दर्शनं । लभ्यते वा पुनस्तत्र विल्वपत्रार्चनं विभोः । वर्षाणामयुतं येन स्नातं गंगासरिज्जले । सकृद्विल्वार्चनेनैव तत्फलं लभते नरः । एकेन विल्वपत्रेण शिवलिंगार्चनं कृतं । त्रैलोक्ये तस्य पुण्यस्य को वा सादृश्यमिच्छति । इत्यादि ब्रह्मोत्तरखंडादिवाक्येषु च लिंगपूजाया एव प्रतीतेश्च लिंगे एव पूजा कर्तव्या ।

तच्च लिंगं द्विविधं स्थावरं चरं च । तच्च पंचसूत्रं कार्यं । पंचसूत्रलक्षणमुक्तं गौतमीतंत्रे–लिंगमस्तकविस्तारो लिंगोच्छ्रायसमो मतः । परिधिस्तत्रिगुणितस्तद्वत्पीठं व्यवस्थितं । प्रणालिका तथैव स्यात्पंचसूत्रविनिर्णयः । इति । पीठलक्षणं वृद्धवासिष्ठे लैंगे–वृत्तं वा चतुरस्रं वा मध्ये कंठसमन्वितं । द्विगुणं लिंगनाहाच्च कंठनाहं समाचरेत् । त्रिमेखलमधश्चोर्ध्वं समं वाथ द्विमेखलं । लिंगमस्तकविस्तारं षड्भागं विभजेत्ततः । मेखलामेकभागेन कुर्यात्खातं च तत्समं । लिंगदैर्घ्यसमं कुर्यात्प्रणालं पीठबाह्यतः । विस्तारं तत्समं मूले तदर्धं च तदग्रतः । जलमार्गः प्रकर्तव्यस्तस्य मध्ये त्रिभागतः । कुर्यात्पीठार्धदीर्घं वा प्रणालं च शिवोदितं । इति । अयमर्थः–लिंगोच्चताप्रमाणसूत्रसमानसूत्रं लिंगमस्तकं कृत्वा त्रिगुणिततत्सूत्रवेष्टनार्हं लिंगस्थौल्यं स्थौल्यसूत्रपरिमितं पीठोच्चत्वं पीठविस्तारं च कृत्वा त्रिगुणिततत्सूत्रवेष्टनार्हं पीठस्थौल्यं पीठोच्चतासूत्रतृतीयांशेन पीठोच्चतामध्यप्रदेशे लिंगस्थौल्यद्विगुणस्थौल्यं एकवप्रं द्विवप्रं त्रिवप्रं समं वा पीठकंठं कृत्वा पीठस्योत्तरदिग्भागे लिंगोच्चतासमदीर्घपीठार्धदीर्घं वा मूले तत्समविस्तारं अग्रे तदर्धविस्तारं गोमुखाकारं प्रणालं कुर्यात् । लिंगमस्तकविस्तारषष्ठांशेन पीठस्य प्रणालषष्ठांशेन प्रणालस्य च समंताडुपरितनबहिर्भागं त्यक्त्वा

१ 'नृणां'.

आसमंतात्तत्परिमाणकं खातं कुर्यादिति । पंचसूत्रविधानं च पार्थिवे न विचारयेत्। यथा कथंचिद्विधानं रमणीयं तु कारयेत्। पक्कजंबूफलाकारं सर्वकामप्रदं शिवं । इति वचनात्पार्थिवलिंगातिरिक्तलिंगे पंचसूत्रविधानमावश्यकमिति बोध्यं । अखंडं स्थावरं लिंगं द्विखंडं चरमेव च । ये कुर्वंति नरा मूढा न पूजाफलभागिनः। इत्यादिवचनात्स्थावरं द्विखंडमेव, चरलिंगमखंडमेव कार्यं । तत्र देवादिभिः प्रतिष्ठापिते ज्योतिर्लिंगादौ स्त्रीशूद्रादिभिः स्पृष्टेपि । अर्चकस्य तपोयोगात्पूजनस्यातिशायनात् । आभिरूप्याच्च बिंबानां देवः सान्निध्यमृच्छति । इत्यादिवचनात्सर्वदा देवसान्निध्यात् । यस्तु पूजयते लिंगे देवादिं मां जगत्पतिं । ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मत्परायणः । तस्य प्रीतः प्रदास्यामि शुभाँल्लोकाननुत्तमान्। इति-ब्राह्मणस्यैव पूज्योहं शुचेरप्यशुचेरपि । पूजां गृह्णामि शूद्राणां पुनः स्वाचारवर्तिनां । तिथितत्त्वे स्कांदे-शूद्रकर्माणि यो नित्यं स्वीयानि कुरुते प्रिये । तस्याहमर्चां गृह्णामि चंद्रखंडविभूषिते । इति । सूतसंहितायां-ब्रह्मचारी गृहस्थो वा वानप्रस्थश्च सुव्रते । एवं दिने दिने देवं पूजयेदंबिकापतिं । संन्यासी देवदेवेशं प्रणवेनैव पूजयेत् । नमोंतेन शिवेनैव स्त्रीणां पूजा विधीयते । विरक्तानां तु शूद्राणामेवं पूजा प्रकीर्तिता । इत्यादिवाक्येभ्यः चतुर्वर्णैः पूजा कार्या । लिंगं गृही यतिर्वापि संस्थाप्य तु यजेत्सदा । इत्यादिवचनात्पुरुषप्रतिष्ठापितलिंगे तु-यदा प्रतिष्ठितं लिंगं मंत्रविद्भिर्यथाविधि । तदाप्रभृति शूद्रश्च योषिद्वापि न संस्पृशेत्। स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर। स्थापने नाधिकारोस्ति विष्णोर्वा शंकरस्य च । शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोपि वा । केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते । यः शूद्रेणार्चितं लिंगं विष्णुं वा प्रणमेन्नरः । न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि । नमेद्यः शूद्रसंस्पृष्टं लिंगं वा हरिमेव वा । स सर्वयातनाभोगी यावदाचंद्रतारकम् । पाखंडिपूजितं लिंगं नत्वा पाखंडितां व्रजेत् । आभीरपूजितं लिंगं नत्वा नरकमश्नुते । योषिद्भिः पूजितं लिंगं विष्णुं वापि नमेत्तु यः । स कोटिकुलसंयुक्तमाकल्पं रौरवं व्रजेत् । यः शूद्रसंस्कृतं लिंगं विष्णुं वापि नमेत्तु यः । इहैवात्यंतदुःखानि

पश्यत्यामुष्मिके किमु । इत्यादिवाक्येभ्यः ब्राह्मणादिस्थापितलिंगे शूद्रादिस्पर्शानंतरं शूद्रादिस्थापितलिंगे वा पूजा अनिष्टावहत्वान्न कार्या । चरलिंगेषु यद्यपि–रत्नलिंगसहस्रस्य पूजया यत्फलं भवेत् । ततः शतगुणं पुण्यं धातुलिंगस्य पूजने । धातुलिंगेष्वपि श्रेष्ठं हेमलिंगं श्रुतिश्रुतं । तत्र संपूजितः शंभुः प्रसीदति न संशयः । धातुलिंगसहस्रस्य पूजया यत्फलं भवेत् । ततः शतगुणं पुण्यं मृत्तिकालिंगपूजने । मृल्लिंगानां सहस्रस्य पूजया यत्फलं भवेत् । ततः शतगुणं पुण्यं बाणलिंगस्य पूजने । अनंतबाणलिंगानां पूजया यत्फलं लभेत् । ततोनंतगुणं पुण्यं रसलिंगस्य पूजने । रसलिंगसमं लिंगं नास्ति न श्रूयतेपि वा । इति । शिवरहस्ये पारदलिंगं श्रेष्ठमित्युक्तं तथापि केवलपारदलिंगस्य दुर्लभत्वात्–सप्तकृत्वस्तुलारूढं वृद्धिमेति न हीयते । बाणलिंगमिति प्रोक्तं शेषं नार्मदमुच्यते । इति लक्षणलक्षितबाणलिंगस्यातिदुर्लभत्वात् सुवर्णादिलिंगे पंचसूत्रसंपादनस्यावश्यकत्वात्तस्य च दुःसंपादकत्वात्–कृते रत्नमयं लिंगं त्रेतायां हेमसंभवं । द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे । इति वचनेन कलियुगे पार्थिवस्यैव श्रेष्ठत्वप्रतिपादनात् । तत्र पंचसूत्रत्वाभावेपि दोषाभावाच्च आयुष्मान्बलवान् श्रीमान्पुत्रवान्धनवान्सुखी । वरमिष्टं लभेल्लिंगं पार्थिवं यः समर्चयेत् । तस्मात्तु पार्थिवं लिंगं ज्ञेयं सर्वार्थसाधकं । इति तिथितत्त्वादिष्वप्युदाहृतनंदिपुराणे प्राशस्त्यप्रतिपादनात् । पार्थिवलिंगपूजनं प्रशस्ततरं । तत्प्रकारश्च अरण्यतडागनदीतीरादिशुद्धस्थानमभिलक्ष्योक्तं–गत्वा स्थानं नमस्कुर्यान्मन्त्रमेतं समुच्चरेत् । सर्वाधार धरादेव त्वद्रूपां मृत्तिकामिमां । लिंगार्थं तु प्रगृह्णामि प्रसन्नो भव मे प्रभो । इति मंत्रेण मृत्तिका ग्राह्या । मृत्तिकापरिमाणं तु—यावत्स्यादात्मनः शक्तिर्मृदं तावत्समुद्धरेत् । तदर्धं वाथ तस्यार्धं तदर्धं वा तदर्धकं । एवं पलद्वयान्न्यूनं न तु कुर्यात्कदाचन । इति । शक्त्यनुसारेण मृदमानीय तदुपरि आर्द्रतार्थं जलं दत्वा । ॐ सद्योजातं प्रपद्यामि इति मंत्रेण मृदं हस्ते गृहीत्वा । ॐ वामदेवाय नमो ज्येष्ठायेति मंत्रेण मृदि जलं निषिच्य । ॐ अघोरेभ्योथघोरेभ्य इति मंत्रेण पीठं कृत्वा । ॐ तत्पुरुषाय विद्महे इति उपरिभागस्थमृदा उपरितनपीठमध्यदेशे जलबुद्बुदमस्त-

काकारमस्तकं सति संभवे पंचसूत्रलक्षणयुक्तं तदसंभवे अतिरमणीयं लिंगं कुर्यात् । ततः ॐ ईशानः सर्वविद्यानां इति मंत्रेण लिंगमस्तके अक्षतानर्पयित्वा पूजापीठे बिल्वपत्रं निधाय तदुपरि लिंगं स्थापयेत् । ततः अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ऋग्यजुःसामानि छंदांसि चिद्रूपिणी प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रों कीलकं अस्मिन्पार्थिवलिंगे सांबशिवप्राणप्रतिष्ठापने विनियोगः । ततः लिंगमस्तकोपरि पाणितलं कृत्वा ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंहंसः सांबशिवप्राणा इह प्राणाः सांबशिवजीव इह स्थितः सांबशिवसर्वेंद्रियाणि सांबशिव वाङ्मनश्चक्षुःश्रोत्रत्वक्जिह्वाघ्राणानि इहागत्य सुखं चिरं तिष्ठंतु स्वाहा । इति त्रिवारं पठेत् । ततः—कर्पूरगौरं करुणावतारं संसारपारं भुजगेंद्रहारं । सदा रमंतं हृदयारविंदे भवं भवानीसहितं नमामि । इति ध्यात्वा वक्ष्यमाणमूलमंत्रेण मानसैः पंचोपचारैः संपूज्य उत्तानहस्ताग्रेण लिंगं स्पृशन् अस्मिंल्लिंगे ॐ भूः पुरुषं सांबशिवमावाहयामि ॐ भुवः पुरुषं सांबशिवमावा० ॐ स्वः पुरुषं सांबशिवमा० ॐ भूर्भुवः सुवः पुरुषं सांबशिवमावाहयामि । इति पठित्वा चैतन्यविग्रहं देवं स्थितं हृदयपंकजे । श्वासमार्गेणागतं तं चिंतयेत्कुसुमांजलौ । इति वचनात् मूलमंत्रं पठन्कुसुमांजलावागतं तं संचिंत्य—स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकं । तावत्त्वं प्रीतिभावेन लिंगेऽस्मिन्सन्निधिं कुरु । इति मंत्रेणांजलिस्थपुष्पाणि लिंगमस्तके स्थापयेत् । ततः—गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने । श्रेयो नमः शिवायेति मंत्रः सर्वार्थसाधकः । सर्वमंत्राधिकश्चायं प्रतिपाद्यः षडक्षरः । इति नंदिपुराणादिवचनात् । ॐ नमः शिवाय इति मूलमंत्रांते ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः । सांबशिवायासनं समर्पयामीत्यासनं दद्यात् । एवं पाद्याद्युपचारेष्वपि मूलमंत्रपाठानंतरं वक्ष्यमाणमंत्रांतरं पठित्वोपचारान्दद्यात् । यस्मिन्नुपचारे मंत्रांतरं नास्ति तत्र मूलमंत्र एवेति बोध्यं । ॐ भवेभवेनातिभवेभवस्वमां इति पाद्यं । ॐ भवोद्भवायनमः इत्यर्घ्यं । ॐ वामदेवायनमः इत्याचमनीयं । ॐ ज्येष्ठायनमः इत्यंते ॐ आपोष्ठेति तिसृभिः ॐ हिरण्यवर्णाः शुचयः पावका इति चतसृभिः सति सामर्थ्ये

पवमानःसुवर्जन इत्यनुवाकेन रुद्राध्यायेन पुरुषसूक्तेन
षिच्य । आचमनं दत्वा ॐ भवंदेवं तर्पयामि ॐ शर्वंदेवं
ॐ ईशानंदेवं त० ॐ पशुपतिंदेवं त० ॐ उग्रंदेवं त०
देवं त० ॐ भीमंदेवं त० ॐ महांतंदेवं त० ॐ भव
पत्नीं त० ॐ शर्वस्यदेवस्यपत्नीं तर्पया० ॐ ईशानस्यदे
त० ॐ पशुपतेर्देवस्यपत्नीं त० ॐ उग्रस्यदेवस्यपत्नीं त
द्रस्यदेवस्यपत्नीं त० ॐ भीमस्यदेवस्यपत्नीं त० म
स्यपत्नीं त० इति तर्पयित्वा । ॐ श्रेष्ठाय नमः इतिवस्त्र
नीयं । ॐ रुद्रायनमः इत्युपवीतं आचमनीयं । ॐ का
इति गंधं । ॐ कलविकरणायनमः इत्यक्षतान् । ॐ बल
यनमः इति पुष्पाणि । ॐ बलायनमः इति धूपं । ॐ
थनायनमः इति दीपं । ॐ सर्वभूतदमनायनमः इति
ॐ मूलेनफलं । ॐ मनोन्मनायनमः इति तांबूलं । ॐ
नीराजनं । ॐ ईशानःसर्वविद्यानामिति मंत्रेण पुष्पांजलिं
ॐ शर्वाय क्षितिमूर्तये नमः इति लिंगस्य पूर्वदिग्भागे ।
भवाय जलमूर्तये नमः इतीशान्यां । ॐ रुद्रायतेजोमूर्तये
त्युत्तरस्यां । ॐ उग्रायवायुमूर्तयेनमः इतिवायव्यां । ॐ
आकाशमूर्तयेनमः इति पश्चिमायां । ॐ पशुपतये यज
र्तये नमः इति नैर्ऋत्यां । ॐ महादेवाय सोममूर्तयेनम
दक्षिणस्यां । ॐ ईशानाय सूर्यमूर्तये नमः इत्याग्नेय्यां ।
दिक्षु वेद्यां अष्टमूर्तिपूजां कृत्वा । ॐ भवायदेवाय नमः
र्वायदेवाय नमः ॐ ईशानायदेवाय नमः ॐ पशुपत
नमः ॐ उग्रायदेवाय नमः ॐ रुद्रायदेवाय नमः ॐ
देवाय नमः ॐ महतेदेवायनमः इति लिंगमस्तके आष्टौ पु
र्पयित्वा । लिंगवामभागे ॐ भवस्यदेवस्य पत्न्यै नमः ॐ
देवस्य पत्न्यै नमः ॐ ईशानस्य देवस्य पत्न्यै नमः ॐ
पतेर्देवस्य पत्न्यै नमः ॐ उग्रस्य देवस्य पत्न्यै नमः ॐ
देवस्य पत्न्यै नमः ॐ भीमस्य देवस्य पत्न्यै नमः ॐ म
स्य पत्न्यै नमः इत्यभितोष्टौ पुष्पाणि दद्यात् । ॐ अघोर
त्यारभ्य मंत्रत्रयं दशवारं जप्त्वा अष्टोतरसहस्रं शतं वा
चाष्टौ वा जप्त्वा–गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं

१ 'मूलमंत्रं च जप्त्वा'.

सिद्धिर्भवतु देवेश त्वत्प्रसादान्महेश्वर । इति मंत्रेण देवाय जपं समर्प्य पंचप्रदक्षिणा नमस्कारांश्च कृत्वा उपविश्य पुनः प्रणम्य च ॐ ईशानः सर्वविद्यानामिति मंत्रेण लिंगमस्तकस्थं पुष्पमादाय शिरसि धृत्वा हृदि प्रविष्टं देवं संचिन्त्य मूलेन मानसैः पंचोपचारैः संपूज्य । कृतेन पार्थिवलिंगपूजनेन श्रीपरमेश्वरः प्रीयतामितीश्वरायार्पयेत् । इति बौधायनकल्पवृद्धवासिष्ठलैंगानुसारी पार्थिवलिंगपूजाविधिः ।

विस्तरेण पूजाकरणासामर्थ्ये स्त्रीशूद्राणां पूर्वोक्तवैदिकमंत्रेषु अनधिकारात्पुराणानुसारी पार्थिवपूजाविधिः । ॐ हरायनमः इति मृदं गृहीत्वा ॐ महेश्वरायनमः इति लिंगं कृत्वा ॐ शूलपाणयेनमः इति प्रतिष्ठाप्य—ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नं । पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रं । इति ध्यात्वा । ॐ पिनाकधृषेनमः श्रीसांबशिवेहागच्छेह तिष्ठेह सन्निहितोभवेत्यावाहनं । अत्र सर्वत्र मूलमंत्रसमुच्चयः । ततः मूलेनैव ॐनमः शिवायेत्यासनं पाद्यं अर्घ्यं आचमनं पशुपतयेनमः इति ॐ नमःशिवायेति स्नानं वस्त्रं आचमनीयं । उपवीतं आचमनं । गंधं अक्षतान् पुष्पाणि धूपं दीपं नैवेद्यं फलं तांबूलं नीराजनं मंत्रपुष्पांजलिं दत्वा ॐ शर्वाय क्षितिमूर्तये नमः इत्यादिपूर्वोक्ताष्टमूर्तिपूजां कृत्वा यथाशक्ति मूलमंत्रजपं कृत्वा प्रदक्षिणाः नमस्कारान्कृत्वा ॐ महादेवायनमः इति विसर्जयेत् स्त्रीभिः शूद्रैश्च प्रणवरहितः शिवायनमः इत्येव सर्वमंत्रः पठितव्यः । नमोंतेन शिवेनैव स्त्रीणां पूजा विधीयते । विरक्तानां तु शूद्राणामेवं पूजा प्रकीर्तिता । इति सूतसंहितावचनात् । इति पार्थिवपूजा ।

आस्तामिदमेव प्रासंगिकं । प्रकृते सायंसंध्यां विधाय—विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः । इति भविष्यवचनेनाप्यावश्यकत्वबोधनात्—धृतत्रिपुंड्ररुद्राक्षमालः पूर्वमलंकृतं स्थानं गत्वा योग्यासने शुचिरासीनो मौनी निश्चलोदङ्मुख इति गौतमीयाच्चो-

१ 'मयि स्थिरा.' २ 'माघ्राय.'

दङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य शिवरात्रौ प्रथमयामे पूजां करिष्ये इति संकल्प्य मूलमंत्रस्य नंदिकेश्वरमताद्युक्तसर्वन्यासकरणाऽसामर्थ्ये षडंगन्यासं कुर्यात्। तथाहि–अस्य श्रीशिवपंचाक्षरमंत्रस्य वामदेवऋषिः अनुष्टुप्छंदः श्रीसदाशिवो देवता न्यासे पूजने जपे विनियोगः। शिरसि वामदेवायऋषयेनमः। मुखे अनुष्टुप्छंदसेनमः हृदये। श्रीसदाशिवदेवतायै नमः तर्जन्योः। ॐ नंतत्पुरुषायनमः मध्यमयोः। ॐ मं अघोरायनमः कनिष्ठिकयोः। ॐ शिं सद्योजातायनमः अनामिकयोः। ॐ वांवामदेवायनमः अंगुष्ठयोः। ॐ यंईशानायनमः मुखे। ॐनंतत्पुरुषायनमः हृदये। ॐ मंअघोरायनमः पादयोः। ॐ शिंसद्योजातायनमः गुह्ये। ॐ वां वामदेवायनमः मूर्ध्नि। ॐ यंईशानायनमः मुखे। ॐ नंतत्पुरुषाय प्राग्वक्त्रायनमः दक्षिणकर्णे। ॐ मंअघोराय दक्षिणवक्त्रायनमः चूडाधः। ॐ शिंसद्योजाताय पश्चिमवक्त्राय० वामकर्णे। ॐ वां वामदेवायोत्तरवक्त्रायनमःमूर्ध्नि। ॐ यंईशानायोर्ध्वचक्रायनमः। ॐ सर्वज्ञधाम्नेहृदयायनमः। ॐनंनित्यतृप्तिधाम्नेशिरसेस्वाहा। ॐ मंअनादिबोधधाम्ने शिखायैवषट्। ॐ शिंस्वतंत्रशक्तिधाम्नेकवचायहुं। ॐ वां अलुप्तशक्तिधाम्नेनेत्रत्रयाय०। ॐ यंअनंतशक्तिधाम्नेअस्त्रायफट्। ॐ नमोस्तुस्थाणुरूपाय ज्योतिर्लिंगामृतात्मने। चतुर्मूर्तिवपुःस्थाय भसितांगाय[1] शंभवे। इति मंत्रेण मूर्धादिपादपर्यंतं व्यापकं न्यसेत्। इति न्यासं कृत्वा ध्यायेन्नित्यं महेशं० इति ध्यात्वा पार्थिवलिंगे पूजनं चेत् उक्तप्रकारेण आवाहनपर्यंतं कृत्वा स्थावरलिंगे पूर्वसंस्कृतचरलिंगे च आवाहनं वर्जयित्वा—दिनांते स्नपनं कुर्याच्छिवनाम्ना प्रपूजयेत्। द्वितीये प्रहरे चैव नाम्ना शंकरमर्चयेत्। तृतीये प्रहरे देवं नाम्ना माहेश्वरं तथा। यामे चतुर्थे संप्राप्ते रुद्रनाम्ना तु पूजयेत्। इति स्कांदात्। प्रथमप्रहरे श्रीशिवायासनं समर्पयामि इति वाक्येनैव सर्वोपचारान्दद्यात्। तथाच–ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः ॐ नमः शिवाय श्रीशिवाय आसनं समर्पयामि। स्त्रीशूद्रश्चेत् श्रीशिवायनमः इति मंत्रेण सर्वोपचारान्दद्यात्। ॐ भवेभवेनातिभवेभवस्वमां ॐ नमःशिवायश्रीशिवाय पाद्यं। ॐ भवोद्भवायनमः ॐ नमः

1 'भासितांगाय'.

शिवाय श्रीशिवाय अर्घ्यं । ॐ वामदेवायनमः ॐ नमः शिवाय श्रीशिवाय आचमनं । ॐ ज्येष्ठायनमः ॐ नमः० स्नानं । तत अनेन मंत्रेण मंत्रांतरेण च पंचामृतेन च संस्नाप्य । आपोहिष्ठेतितिसृभिः हिरण्यवर्णाइतिचतसृभिः पवमानः सुवर्जनइत्यनुवाकेन एकादशावृत्त्या एकावृत्त्या वा रुद्रेण पुरुषसूक्तेन च यथासंभवं चंदनकुंकुमकर्पूरवासितजलेनाभिषिच्य । ॐ नमःशिवाय श्रीशिवाय स्नानांते आचमनीयं इत्याचमनं दत्वा ॐ भवंदेवं तर्पयामि ॐ ॐ शर्वंदेवं त० ॐ ईशानंदेवं त० ॐ पशुपतिंदेवं त० ॐ उग्रंदेवं त० ॐ रुद्रंदेवं त० ॐ भीमंदेवं त० ॐ महांतंदेवं त० । ॐ भवस्यदेवस्यपत्नीं त० ॐ शर्वस्यदेवस्यपत्नींत० ॐ ईशानस्य देवस्यपत्नीं त० ॐ पशुपतेर्देवस्यपत्नीं त० ॐ उग्रस्यदेवस्यपत्नीं त० ॐ रुद्रस्यदेवस्यपत्नीं त० ॐ भीमस्यदेवस्यपत्नीं त० ॐ महतोदेवस्यपत्नीं त० ॐ श्रेष्ठाय ॐ नमः शिवायश्रीशिवायवस्त्रं मूलेनाचमनं । ॐ रुद्राय नमः ॐ नमः शिवायश्रीशिवायोपवीतं मूलेनाचमनं । ॐ कालायनमः चंदनं ॐ कलविकरणायनमः अक्षतान् ॐ बलविकरणायनमः पुष्पाणि । अष्टोत्तरसहस्रंशतंयथासंभवं वा बिल्वपत्राणि सहस्रनाम्ना मूलेन वा दद्यात् । ॐ बलायनमः धूपं । ॐ बलप्रमथनायनमः दीपं । ॐ सर्वभूतदमनायनमः नैवेद्यं । मूलेनाचमनीयं तेनैव फलं । ॐ मनोन्मनायनमः तांबूलं । मूलेन वैदिकमंत्रेणनीराजनं । ॐ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तु सदाशिवोम् ॐनमःशिवायश्रीशिवायनम इति मंत्रपुष्पांजलिंदत्वा । पार्थिवलिंगेचेत्पूजा तदा ॐ शर्वायक्षितिमूर्तये नमः इत्यष्टमूर्तिपूजांकुर्यादितिविशेषः।ततः ॐभवायदेवायनमः ॐशर्वायदेवाय० ॐ ईशानायदेवाय० ॐपशुपतयेदेवाय० ॐउग्रायदेवाय० ॐ रुद्रायदेवाय० ॐ भीमायदेवाय० ॐ महतेदेवाय० । ॐ भवस्यदेवस्यपत्न्यै नमः ॐ शर्वस्यदेवस्यपत्न्यै नमः ॐ ईशानस्यदेवस्यपत्न्यै नमः ॐ पशुपतेर्देवस्यपत्न्यै नमः ॐ उग्रस्यदेवस्य० ॐ रुद्रस्यदेवस्यपत्न्यै० ॐ भीमस्यदेवस्यपत्न्यै० ॐ महतोदेवस्यपत्न्यै० इति पूजयित्वा । अष्टोत्तरसहस्रंशतंवामूलमंत्रंजप्त्वा । ॐ नमः सकलकल्याणदायिने शूलपाणये । इत्यादिपूर्वोदाहृतस्तोत्रंपठित्वा । ॐ शिवायनमः ॐ

हरिकेशाय० ॐविरूपाक्षाय० ॐपिनाकिनेनमः ॐत्रिपुरांतकाय० ॐ शंभवेनमः ॐ शूलिनेनमः ॐ महादेवायनमः इति द्वादशनामभिः द्वादशपुष्पांजलीन्दत्वा । प्रदक्षिणानमस्कारान् कृत्वा । कृतेनशिवरात्रौप्रथमयामपूजनेनश्रीसांबशिवःप्रीयतामितिसमर्प्य अवशिष्टकालंतत्कथाश्रवणादिना नयेत् ।

द्वितीयप्रहरे प्राप्ते पूर्ववत् । शिवरात्रौ द्वितीययामपूजां करिष्य इति संकल्प्य प्रथमयामपूजावत्पूजां कुर्यात् । एतावान्विशेषः। श्रीशिवायेदमासनमित्यादिसर्वोपचारेषु श्रीशंकरायेदमासनमित्यादिशिवनामस्थानेशंकरनामप्रयोगं कुर्यादिति द्वितीययामपूजां समाप्य प्राणायामंकृत्वा ॐ रात्रींप्रपद्येजननीं सर्वभूतनिवेशिनीं । भद्रां भगवतीं कृष्णां विश्वस्यजगतो निशां । संवेशिनीं संयमिनीं ग्रहनक्षत्रमालिनीं । प्रपन्नोहं शिवां रात्रीं भद्रे पारमशीमहि भद्रे पारमशीमह्योन्नमः । इति जपेत् । ततो महानिशि शिवपूजांकरिष्ये इति संकल्प्यैवमेव पूजां कुर्यात् । ततः तृतीययामपूजां करिष्ये इति संकल्प्य ॐ सद्योजातं प्रपद्यामीत्याद्यंते श्रीमहेश्वरायेदमासनमित्यादितत्तन्मंत्रांते माहेश्वरनामप्रयोगेण पूजां कुर्यात् । ततश्चतुर्थयामेपि संकल्पपूर्वकं तत्तन्मंत्रांते श्रीरुद्रायेदमासनमित्यादिरुद्रनामप्रयोगेण पूजां कुर्यात् । पूजांते पूर्वोक्तस्तोत्रपाठं द्वादशनामभिः पुष्पांजलिं च सर्वपूजासु कुर्यात् ।

ततः प्रभाते पूजां समाप्य प्रातःस्नानं संध्यां च कृत्वा पुनर्देवं संपूज्य पूर्वोक्तशिवो रुद्र इत्यादिभिर्द्वादशनामभिः द्वादशब्राह्मणान् अशक्तावेकं वा संपूज्य तिलपक्वान्नपूरितान्द्वादश कुम्भानेकं वा दत्वा दक्षिणां दद्यात् । ततः—यत्कृतं मंत्रतो हीनं यच्च भक्त्या विना कृतं । यच्च दक्षिणया हीनं पूर्णं कुरु महेश्वर । इति पठित्वा । कृतेन शिवरात्रिव्रतेन श्रीसांबसदाशिवः प्रीयतामिति ईश्वरार्पणं कृत्वा यथाशक्ति ब्राह्मणान्भोजयित्वा सतिसंभवे चतुर्दशीमध्ये असंभवे तिथ्यंते पारणं कुर्यात् । इतिशिवरात्रिव्रतानुष्ठानप्रयोगः।

अथशिवप्रसादग्रहणनिर्णयः । शिवतीर्थप्रसादादिग्रहणे तु परस्परं । विरुद्धानि पुराणेषु दृश्यंते वचनानि वै । तद्विरोधं पराकर्तुं यत्नोयं विष्णुशर्मणा । क्रियते शिवसंप्रीत्यै विदुषां संशयच्छिदे । तत्र बृहज्जाबालोपनिषदि रुद्रभुक्तं

भुंजीयाद्रुद्रपीतं पिबेद्रुद्राघ्रातं जिघ्रेदिति । ब्रह्मोत्तरखंडे-आरोग्यज्ञानमैश्वर्यं वर्धते सर्वदेहिनां । रुद्राध्यायेन ये देवं स्नापयंति महेश्वरं । तज्जलैः कुर्वते स्नानं ते मृत्युं संतरंति च । इति। तत्रैव प्रकरणांतरे-नृत्यवादित्रगीतादि यथावत्परिकल्पयेत् । नमस्कृत्वाथ विधिवत्प्रसादं धारयेत्ततः । अग्रेपि-तावद्भवनमद्राक्षं न दग्धमिव सुस्थितं । अधुना देवं पूजांते प्रसादं लब्धुमागते । इति । स्कांदे-शिवस्वामिकमेवान्नं शिवाय विनिवेदयेत् । विनियोगोपचारेण संतुष्यति सदाशिवः । सर्वलोकैकनाथस्य शंभोः कः किं प्रयच्छति । उपचारप्रियः शंभुस्तेनैवायं प्रसीदति । शिवोपभुक्तस्रग्गंधमन्नपानादिकं तथा । निवेदितमिति प्रोक्तं सर्वपापहरं परं । पत्रं पुष्पं फलं तोयमन्नपानाद्यमौपधं । अनिवेद्य न भुंजीत यदाहाराय कल्पितं । तथा पादोदकं पुत्र पत्रं पुष्पं सुखावहं । तथैव धूपशेषश्च दीपशेषो न संशयः । निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः । राजसूयस्य यज्ञस्य फलं प्राप्नोति निश्चितं । इति । तिथितत्त्वेप्युदाहृतस्कांदे-ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् । तस्य पापमहं शीघ्रं नाशयिष्ये महाव्रत । इति । शिरसा धारयेद्भक्त्या यो निर्माल्यमलोभतः । अहमेव धृतस्तेन तेन सोमकलाधरः । इत्यादीनि विधायकानि । निषेधाश्च-स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः । इति । कालिकापुराणे स्कांदे-शिवनिर्माल्यभोक्तारः शिवनिर्माल्यलंघकाः । शिवनिर्माल्यदातारः स्पर्शस्तेषां हि पुण्यहृत् । लोभान्न धारयेच्छंभोर्निर्माल्यं नच भक्षयेत् । न स्पृशेदपि पादेन लंघयेन्नापि नारद । इति । शैवे-अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलं । मह्यं निवेद्य तत्सर्वं कूप एव विनिक्षिपेत् । मक्षिकापादमात्रं यः शिवस्वमुपजीवति । मोहाल्लोभात्स पच्येत कल्पांतं नरके नरः । इति । सूतसंहितायां यज्ञवैभवखंडे षोडशाध्याये-विशिष्टमन्नं भुंजीत चित्तशुद्ध्यर्थमात्मनः । निर्माल्यं च निवेद्यं च विशेषेण विवर्जयेत् । इति । एतट्टीकायां माधवीयायां आगमे सर्वज्ञानोत्तरे-विसर्जितस्य देवस्य गंधपुष्पनिवेदनं । निर्माल्यं तद्विजानीयाद्स्रजं वस्त्रविभूषणं । अर्चयित्वा तु

१ 'घोषादि.'

तद्भूयश्चंडेशाय निवेदयेत् । **कालोत्तरे**–स्थिरे चरे तथा रत्ने सिद्धलिंगे स्वयंभुवि । लोहे चित्रमये बाणे स्थितश्चंडो नियामकः । सिद्धांते नोत्तरे तंत्रे न वामे नच दक्षिणे । चंडोद्रव्यं गुरुद्रव्यं देवद्रव्यं तथैव च । रौरवे ते तु पच्यंते मनसा ये तु भुंजते । इति सिद्धांतमतपर्यालोचनया गंधपुष्पादेर्नैवेद्यस्य च चंडद्रव्यत्वेन सर्वथा वर्ज्यत्वावगतेः तन्न भुंजीतेत्यर्थः। वामदक्षिणादितंत्रांतरमते तु यत्र चंडाधिकारो नास्ति तत्र निर्माल्यस्वीकारेपि दोषो नास्ति । तथा चोक्तं–बाणलिंगे चरे लोहे सिद्धलिंगे स्वयंभुवि । प्रतिमासु च सर्वासु न चंडोऽधिकृतो भवेत् । इति । **त्रैविक्रम्यां प्रतिष्ठापद्धतौ** तु–बाणलिंगे च लोहे चेति प्रथमचरणपाठः । अयमेव युक्तः । बाणलिंगस्य पृथगुपादानात् । **पुरुषार्थप्रबोधे भविष्ये**–लिंगे स्वयंभुवे बाणे रत्नजे रसनिर्मिते । सिद्धप्रतिष्ठिते चैव न चंडाधिकृतिर्भवेत् । यत्र चंडाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः । चंडाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः । इति । **परिशिष्टे**–अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलं । शालग्रामशिलासंगात्सर्वं याति पवित्रतां । **तिथितत्त्वे भविष्ये**–दत्त्वा नैवेद्यवस्त्रादि नाददीत कथंचन । त्यक्तं यच्छिवमुद्दिश्य तदादाने न तत्फलं । इति । **स्मृत्यर्थसारे**–शैवसौरनिर्माल्यनैवेद्यभक्षणे चांद्रं । अभ्यासे द्विगुणं । अत्यंताभ्यासे सांतपनं । अन्यनिर्माल्येप्यनापद्येवमिति । **अपरार्के** गोग्रासदानानंतरं **ब्रह्मपुराणे**–विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितं । वैष्णवं सात्वतेभ्यश्च भस्मांगेभ्यश्च शांभवं । सौरं मृगेभ्यः शाक्तेभ्यो देवीभ्यो यन्निवेदितं । स्त्रीभ्यश्च देयं मातृभ्यो यत्किंचिन्निवेदितं । भूतप्रेतपिशाचेभ्यो यत्तद्भूमौ निधापयेत् । इति । **स्मृतिसारे**–विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितं । वैष्णवं सात्वतेभ्यश्च भस्मांगेभ्यश्च शांभवं । सौरं मृगेभ्यः शाक्तेभ्यस्तापिने यन्निवेदितं । तापी बौद्धावतारः । देयं कुमार्यै मातृभ्यो यत्किंचिद्विनिवेदितं । वाडवेभ्यस्तु तद्देयं गणेशाय निवेदितं । भूतप्रेतपिशाचेभ्यो यत्तद्दीनेषु निक्षिपेत् । इति । यद्योनिदानं नैवेद्यं दातुश्चानवधानतः । दाता तद्योनिमाप्नोति तस्माद्देयं तदुत्तमः । इति । सर्वे-

देवनैवेद्यप्रतिपत्तिरुक्ता । तच्च निर्माल्यं षड्विधं । तदुक्तं सिद्धांतशेखरादौ–देवस्वं देवताद्रव्यं निवेद्यं च निवेदितं । चंडद्रव्यं बहिः क्षिप्तं निर्माल्यं षड्विधं स्मृतं । देवस्वं ग्रामभूम्यादि दासीदासचतुष्टयं । हेमरूप्यकरत्नादि देवद्रव्यमिति स्मृतं । यत्संकल्पितं देवाय पत्रं पुष्पं फलं जलं । अन्नपानादि तत्सर्वं निवेद्यमिति कीर्तितं । शिवोपभुक्तस्रग्गंधमन्नपानादिकं तथा । निवेदितमिति प्रोक्तं सर्वपापहरं परं । स्थापितं विधिना लिंगं सिद्धैर्देवर्षिभिस्तथा । एतत्त्रिविधनिर्माल्ये चंडेशोऽधिकृतः शिवः । बहिःक्षिप्तमनर्हं स्यादन्यद्रव्यत्वकारणात् । पिशाचानां च सर्वेषामधिकारोऽत्र सर्वदा । इति । षड्विधनिर्माल्यस्य विहितप्रतिषिद्धत्वेनैच्छिकविकल्पस्वीकारे–श्रुतिद्वैधं तु यत्र स्यादुभौ धर्मावपि स्मृतौ । स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् । इति वचनविरोधापत्तेर्व्यवस्थितविकल्पकल्पनयैव विरोधः परिहर्तव्यः । तत्र व्यवस्थापकाकांक्षायां वायुसंहितायां श्रीकृष्णं प्रति च उपमन्युना शिवपूजाद्यभिधायोक्तं–ततः स्वयं च भुंजीत शुद्धमन्नं यथासुखं । निवेदितं यद्देवेश तच्छेषं चातिशुद्धये । श्रद्दधानो न लोभेन चंडाय[1] विनिवेदितं । गंधमाल्यादि यच्चान्यत्तत्राप्येष समो विधिः । इति । अनेन लोभशून्यस्य श्रद्धावतोऽधिकारिणोऽतिशुद्धिप्राप्तये चंडनिवेदितभिन्ननिवेदितसंज्ञितनिर्माल्यविशेषस्य विधानात् । एतद्विषयायैव रुद्रभुक्तं न भुंजीयादिति– आरोग्यं ज्ञानमैश्वर्यं वर्धते सर्वदेहिनां । रुद्राध्यायेन ये देवं स्नापयंति महेश्वरं । तज्जलैः कुर्वते स्नानं इत्यादीन्युदाहृतवचनानि । अतएव–येषां पुनर्भवच्छेदं चिकीर्षति महेश्वरः । लिंगार्चने भवेद्बुद्धिस्तेषामेवात्र भास्कर । सर्वतीर्थाभिषेकः स्याल्लिंगस्नानांबुसेवनात् । इति काशीखंडोत्तरार्धैकपंचाशत्तमाध्याये । तत्रैव त्रिपंचाशदध्याये–स्नापयित्वा विधानेन यो लिंगस्नपनोदकं । त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति । लिंगस्नापनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनं । गंगास्नानफलं तस्य जायतेऽत्र विपाप्मनः । तस्यास्तदेकयानीतं रत्नेशस्नपनोदकं । तदुक्षणात्क्षणादेव तन्मूर्च्छा विरराम ह । श्रद्धावतां स्वभक्ता-

1 'न चंडाय निवेदितम्'.

नामुपसर्गे महत्यपि । नोपायांतरमस्त्येव विनेशचरणोदकं । ये व्याधयो हि दुःसाध्या वहिरंतःशरीरिणां । श्रद्धयेशोदकस्पर्शात्ते नश्यंत्येव नान्यथा । सेवितं येन सततं भगवच्चरणोदकं । तं बाह्याभ्यंतरशुचिं नोपसर्पंति दुर्गतिः । आधिभौतिकतापं च तापं चाप्याधिदैवतं । आध्यात्मिकं तथा तापं हरेच्छ्रीचरणोदकं । इत्यादिकाशीखंडवचनान्यपि स्वारस्येन संगच्छंते । बाणलिंगे स्वयंभूते चंद्रकांते हृदि स्थिते । चांद्रयणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणं । पादोदकं दधद्यस्तु लिंगमूर्तेः शिवस्य तु । प्रक्षालयति तत्तोयं ब्रह्महत्यादिपातकं । इत्यादिभविष्यादित्यपुराणवचनानि च । तथाचलोभशून्यश्रद्धायुक्तस्य शुद्ध्यादिप्राप्तये निवेदितसंज्ञितनिर्माल्यविशेषस्यैव विधानात् निवेदितभिन्नपंचविधनिर्माल्ये निषेधवचनानां प्रवृत्तेः सुवर्णादेर्दानाद्येव । लोभयुक्तस्य तु—लोभान्न धारयेच्छंभोर्निर्माल्यं न च भक्षयेत् । इत्यादिभिर्निवेदितस्यापि निषेधात्तस्यापि दानमेव । इदं नैवेद्यग्रहणं चरलिंगे एव । स्थावरलिंगे तु स्वयं निवेदितेऽप्यन्नादौ देवलकादिदेवसेवकानामेव स्वत्वात्तद्ग्रहणे स्वतो नाधिकारः । देवलकादिना प्रसादत्वेन दत्तं चेत्तदपि ज्योतिर्लिंगस्यैव नैवेद्यस्य भक्षणं नान्यस्य । ज्योतिर्लिंगं विना लिंगं यः पूजयति सत्तमः । तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकं । इति निषेधाद्भक्षणार्हं न ग्राह्यं किंतु धार्यं पुष्पाद्येव ग्राह्यं । तीर्थं तु श्रद्धायुक्तेन सर्वत्र स्वयमपि ग्राह्यं । स्नापयित्वा विधानेन यो लिंगस्नापनोदकं । यः पिबेदित्यादीनां सर्वलिंगविषयत्वात् प्रायश्चित्तवचनान्यपि विहितातिरिक्तनिर्माल्यविषयाणि । नन्वेवं चरलिंगे सर्वत्र नैवेद्यादेर्ग्राह्यत्वे—अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलं । शालग्रामशिलासंगात्सर्वं याति पवित्रतां । इति वचनविरोधो दुष्परिहर एवेति चेन्न । शैवे जैमिनिः—अनर्हं मम नैवेद्यं पत्रांबु कुसुमं जलं । इतीश्वरेण कथितमिति केचिन्महर्षयः । वदंति तत्कथं स्वामिन्यथार्थं कथयस्व मे । व्यास उवाच । देवदेवस्य वचसो विषयोऽयं हि जैमिने । ये वीरभद्रशापिताः शिवभक्तिपराङ्मुखाः । शंभोरन्यत्र देवेषु ये भक्ता ये न दीक्षिताः । तेषामनर्हमीशस्य तत्प्रसादचतुष्टयं । इत्यनेन त्रिविधानामेषां शिवप्रसादग्रहणानर्हत्वं प्रतिपादितं

तदेव अग्राह्यमिति पूर्वार्धेनाम्नानात् । य एतैरपि यदा पंचायतनपूजादौ शालग्रामेण सह शिवपूजा क्रियते तदा तैरपि ग्राह्यमिति शालग्रामेत्युत्तरार्धेन बोध्यते इति विषयभेदान्न विरोधशंकापीति । तस्माल्लोभशून्येन श्रद्धावता पूजकेन शुद्ध्यादिफलप्राप्तये चंडांशातिरिक्तनैवेद्यादेर्ग्रहणं कार्यमिति सर्ववाक्याविरोधेनैव सिद्धमिति विपश्चितो विदांकुर्वंतु । यत्तु—ब्रह्महापि शुचिर्भूत्वेति वचने शुचिः स्नानादिनेत्यर्थः । एवं च स्पृष्ट्वा रुद्रस्येति वचनमशुचिविषयं । अनुपनीतदत्तविषयमिति श्रीदत्तः । अग्राह्यं शिवनिर्माल्यं इति वचनात्पंचायतनपूजायामेव ग्राह्यमिति तिथितत्वे उक्तं । तद्दृष्ट्वा कालतत्वविवेचननिर्णयसिंध्वाद्यर्वाचीनग्रंथेपि तथैवोक्तं तत्र प्रथमपक्षे स्नातस्य लुब्धस्यापि यथेच्छाचारापत्तौ लोभान्न धारयेच्छंभोर्निर्माल्यमित्यादिवचनवैयर्थ्यापत्तिः । द्वितीयपक्षे उपनीतस्य सर्वस्य यथेच्छाचरणापत्तौ निर्माल्यग्रहणादौ प्रायश्चित्तवचनवैयर्थ्यापत्तिश्च । अनुपनीतस्य कामचार—कामवाद—कामभक्षस्याभ्यनुज्ञानात्तद्विषयत्वासंभवात् । तृतीयपक्षे केवलशिवपूजायां विनियुक्तनैवेद्यादिविधायकोदाहृतानेकवचनवैयर्थ्यमिति बोध्यं । इति श्रीशिवरात्रिपूजाशिवप्रसादग्रहणनिर्णयः ॥

**अथ पूर्णिमा निर्णीयते** । सा च सावित्रीव्रतातिरिक्तोपवासादौ परैव ग्राह्या । तदुक्तं **हेमाद्रौ माधवानुदाहृतविष्णुधर्मोत्तरे**—एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । इति । भूतविद्धा न कर्तव्या दर्शः पूर्णा कदाचन । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् । इति तदुदाहृतब्रह्मवैवर्तवचनेन पूर्वविद्धानिषेधाच्च । सावित्रीव्रते तु पूर्वविद्धैव ग्राह्या । चतुर्दश्या च पूर्णिमेति युग्मवाक्यात् । पूर्वविद्धा तु कर्तव्या सप्तमी व्रतिभिर्नरैः । पौर्णमासी महीपाल पुराणे निश्चयं गता । इति । बृहत्तपास्तथा रंभा सावित्री वटपैतृकी । कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः। इति सावित्रीव्रतसंबंधिनी पूर्णिमा वटपैतृकी वटसावित्रीव्रतसंबंधिन्यमावास्येत्यर्थः । कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी । अनंगत्रयोदशी रंभा उपोष्याः पूर्वसंयुताः । इति हेमाद्र्युदाहृतपाद्मस्कांदनैगमवाक्यैश्च

पूर्वविद्धाया एव विधानात् । प्रतिपत्पंचमीभूतसावित्रीवटपूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः । इति निर्णयामृतमदनरत्नोदाहृतब्रह्मवैवर्तेन—षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी । पूर्णिमा परविद्धा च नोपोष्यं चैव पंचकं । इति । हेमाद्रौ मदनरत्नोदाहृतपाद्मेन चोत्तरविद्धानिषेधाच्च—अवटापूर्णिमा चामा परान्विता सदा पूज्या । सावित्र्यमा पूर्णिमासी उपोष्या पूर्वसंयुता । इति कालादर्शहेमाद्रिनिर्णयामृतमदनरत्नेषु चेत्थमेव व्यवस्थापितं । एवं सति सावित्रीव्रते पूर्णमासी पूर्वविद्धा ग्राह्या । व्रतांतरे तु पूर्वविद्धा न कर्तव्या किंतु परविद्धैव कर्तव्येति परस्परविरुद्धस्य विष्णुधर्मोत्तरपद्मपुराणवचनस्य व्यवस्था । यदा तु चतुर्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यं । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिं । इति स्मृतेः अमावास्यायामपि सावित्रीव्रते पूर्वदिने व्रतांतराण्युत्तरदिने पौर्णमासीवदेव व्यवस्था । अत्र प्रमाणं पूर्वविद्धा न कर्तव्येति ब्रह्मवैवर्तवचनं । स्कंदपुराणेपि—भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् । वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन । इति । एवंच सति युग्मशास्त्रं वटसावित्रीव्रतव्यतिरिक्तव्रतेषु द्रष्टव्यं । प्रचेता अपि—नागविद्धा तु या षष्ठी सप्तम्या च युताष्टमी । दशम्यैकादशी विद्धा त्रयोदश्या चतुर्दशी । भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुंगव । उत्तरोत्तरविद्धास्ताः कर्तव्याः काठकी श्रुतिः । पाद्मे—षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी । एताः परयुताः कार्याः पराः पूर्वेण संयुताः । यत्तु नारदीयपुराणे—दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनं । पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते । इति तत्सावित्रीव्रतविषयमिति । माधवग्रंथस्तु यथाश्रुतः परस्परव्याघातादबोधक एव । तथाहि यदात्वित्यादिस्मृतेरित्यंतग्रंथांतरात् अष्टादशनाडीचतुर्दशीसत्त्वे सावित्रीव्रतमप्युत्तरविद्धायां कर्तव्यमिति प्रतीयते । तत्स्वीकारे सावित्रीव्रतं पूर्वविद्धायां व्रतांतरमुत्तरविद्धायामिति व्यवस्थाप्रतिपादकपूर्वग्रंथ उत्तरग्रंथश्चासंगतः स्यात् । तत्स्वीकारे मध्यमग्रंथोऽसंगतः । एवं व्याघातादबोधकत्वप्राप्तौ तत्परिहारार्थमेकस्य यथाश्रुतार्थपरत्व-

क्षायां व्यवस्थायां अनेकवाक्यानुग्रहात् विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सद्धर्मत्वमिति न्यायात् व्यवस्थाग्रंथ एव यथाश्रुतार्थक इति निश्चयसिद्धम्। यदा तु चतुर्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यं एतदग्रे किमुत व्रतांतरमिति शेषपूरणेन कैमुतिकन्यायेन सावित्रीव्रतभिन्नव्रतविषयत्वेनैव योज्यः। एवं सति सर्ववचनैः सर्वनिबंधैश्च **माधवस्यैकवाक्यता** भवतीत्यत्रैवार्थे **माधव**तात्पर्यमिति बोध्यम्। पूर्वविद्धैव सावित्रीव्रते पंचदशी तिथिः। नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परेऽहनि। इति **मा**धवसंग्रहवाक्येपि भूतस्याष्टादशनाड्यश्चेत्स्युः तथापि परेहनि सावित्रीव्रतांगतया विहिते इष्टे पूर्वेऽहनीत्यर्थः। परशब्दस्येष्टपरत्वस्यापि विप्रतिषेधे परमिति सूत्रे **महाभाष्ये** उक्तत्वात्। ननु बृहत्तपा इत्यादिस्कांदादीनां उत्सर्गत्वकल्पनया भूतोष्टादशनाडीभिरित्यस्यापवादकत्वकल्पनया **माध**वग्रंथस्य बोधकत्वं सूपपन्नमेव। अतएव पूर्वविद्धयोः पंचदश्योः कर्तव्यत्वेनोक्तमपि सावित्रीव्रतं नवमुहूर्तचतुर्दशीविद्धयोर्न कर्तव्यं भूतोऽष्टादशनाडीभिरिति वचनादिति **माधव** इति **कालतत्त्वविवेचना**दिनवीनग्रंथाः संगृह्णत इति चेन्न। **स्कांदा**दीनां प्रतिपदवाक्यत्वेन भूतोष्टादशेत्यस्य सामान्यवाक्यतया **स्कांदा**द्यपवादकत्वस्य **माधवे**न वक्तुमशक्यत्वात्। नच प्रतिपदवाक्यानां **माधवे**नानुपन्यासान्नानुपपत्तिरिति शंक्यं। सावित्रीव्रतस्याप्युत्तरविद्धायां स्वीकारे **ब्रह्मवैवर्त**स्य व्यवस्थापकत्वासंभवेन परस्परविरोधे सति या व्यवस्था सा **ब्रह्मवैवर्ते** दर्शितेति ग्रंथस्य प्रतिपद्यप्यमावास्येति शास्त्रं सावित्रीव्रतातिरिक्तविषयमिति ग्रंथस्य चासंगत्यापत्तेः। तस्मात्सर्ववाक्यानां **हेमाद्रिमाधवा**दीनां चैकवाक्यतयैव सावित्रीव्रते पूर्णिमा पूर्वविद्धा व्रतांतरे उत्तरेति निर्णयः सिद्धः। एतेन यद्भूत उत्तरां तिथिं दूषयति तदष्टादशनाडीभिरिति यत्र पूर्वविद्धा निषिद्धा तत्रैवायं विशेषविधिः। इति भूतविद्धा न कर्तव्येत्यस्य शेषो लाघवादिति सावित्रीव्रते एतस्य प्रवृत्तिर्न युक्ता। किंत्वितरत्र व्रतेष्वेव त्रिमुहूर्तसामान्यवेधबाधेनेति **कालतत्त्व**-

विवेचनोक्तं माधवदूषणमुपेक्ष्यं । माधवतात्पर्यार्थपर्यालोच-नमूलत्वात् । व्रतांतरे उत्तरविद्धाविधानेनैव पूर्वविद्धासामान्यनि-वृत्तेरार्थिकत्वाद्विशेषोपादानस्य वैयर्थ्यात् । अतएवाष्टादशदंड-चतुर्दशीसत्वे सावित्रीव्रते माधवेनापवाद उक्तो नतु हेमा-द्रिणा । अस्यां विप्रतिपत्तौ माधवमतमयुक्तमिति द्वैतनिर्णयो निरालंबन एव । माधवतात्पर्यार्थपर्यालोचने विप्रतिपत्तेरेवा-भावादिति दिक् । इति पूर्णिमासामान्यनिर्णयः ।

संवत्सरकृतार्चायाः साफल्यायाखिलान्सुरान् । दमनेनार्च-येच्चैत्र्यां विशेषेण सदाशिवं । इति वायुपुराणे चैत्र्यां दमनेन पूजोक्ता । तत्र देवकार्यत्वात् पौर्वाह्णिकास्तु तिथय इत्युदाहृत-वचनात्पौर्वाह्णिकी पूर्णिमा ग्राह्या । इति चैत्री ॥ ज्येष्ठपूर्णि-मायां—ज्येष्ठमासे तु संप्राप्ते पौर्णमास्यां पतिव्रता । स्नात्वा चैव शुचिर्भूत्वा वटं सिंचेद्वहूदकैः—इत्यादिना स्कांदे पूर्णिमायां । अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् । अशक्तौ तु त्रयोदश्यां नक्तं कुर्या-ज्जितेंद्रिया । अयाचितं चतुर्दश्याममायां समुपोषणं । इति । भविष्ये—अमायां च सावित्रीव्रतमुक्तं । तत्र पूर्णिमामा-वास्ये पूर्वविद्धे ग्राह्ये । बृहत्तपा तथा रंभा सावित्री वटपैतृकी । कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः । इत्याद्युदाहृ-तवचनात् । इति ज्येष्ठी ॥ आषाढ्यां भारभूतेश्वरया-त्रोक्ता काशीखंडे—उदीच्यां भारभूतेशमाषाढेशं समर्चयेत् । आषाढ्यां पंचदश्यां वै न पापैः परितप्यते । कृत्वा सांवत्सरीं यात्रामनेना जायते नरः । इति । तत्र पूर्णिमा पौर्वाह्णिकी । एकरात्रं वसेद्ग्रामे पत्तने तु दिनद्वयं । पुरे दिनद्वयं भिक्षुर्नगरे पंचरात्रकं । वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजनान्विते । आत्म-वत्सर्वभूतानि पश्यन् भिक्षुश्चरेन्महीं । इति संन्यासपद्धतौ । आषाढ्यां पौर्णमास्यां च कारयेद्वपनं यतिः । चातुर्मास्यस्य मध्ये तु वर्जयेद्वपनं यतिः । इत्यादिभिः संन्यासिनां क्षौरं मासचतुष्टयं मासद्वयं वा एकत्रावस्थानसंकल्पः व्यासपूजा-दिकमुक्तं । तत्राप्यौदयिकी पूर्णिमा ग्राह्या । त्रिमुहूर्ता-दिकं ग्राह्यं पर्व क्षौरप्रमाणयोः । इति विश्वेश्वर्यामुदाहृ-तवचनात् । इत्याषाढी ॥ श्रावण्यां—ततोऽपराह्णसमये रक्षापो-

टलिकां शुभां । कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितां । वस्त्रै-र्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः । विचित्रग्रंथिग्रथितां स्थापयेद्भाजनोपरि । उपलिप्ते गृहे चैव सुचतुष्के न्यसेद्भुवि । तस्योपरि विशेद्राजा सामात्यः सपुरोहितः । पुरोधा नृपते रक्षां बध्नीयान्मंत्रतः सुधीः । मंत्रश्च—येन बद्धो बली राजा दानवेंद्रो महाबलः । तेन त्वामनुबध्नामि रक्षे माचल माचल । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः । कर्तव्यो रक्षिकाचारो द्विजा-न्संपूज्य यत्नतः । अनेन विधिना यस्तु रक्षिकाबंधमाचरेत् । स सर्वदोषरहितः सुखी संवत्सरं नयेत् । इति निर्णयामृताद्यु-दाहृतभविष्योत्तरे रक्षाबंध उक्तः । अत्रापराह्णसमय इत्युक्तत्वा-दपराह्णो मुख्यः कालः । तत्रोभयदिने अपराह्णसत्वे—पूर्वविद्धा न कर्तव्या दर्शः पूर्णा कदाचन । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्र-तमुत्तमम् । इति । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिं । इत्याभ्यां पूर्वानिषेधात् । कर्मणो यस्य यः काल इत्यस्मादुत्तरा ग्राह्या । यदा द्वितीयापराह्णात्पूर्वं समाप्ता तदापि श्रावणी दुर्गा-नवमीति वचनं पवित्रारोपणविषयमिति निर्णयामृतमदन-रत्नादिभिरुक्तत्वात् । भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी । इति भद्रा-यां निषेधादुत्तरैव । तत्र तिथ्यनुरोधेनापराह्णात्पूर्वमनुष्ठाने-ऽपराह्णस्य सर्वथाबाधापत्तेः । अपराह्णे ज्योतिःशास्त्रप्रसिद्धतिथ्य-सत्वेपि साकल्यवाक्यबोधिततिथिसत्वात्तत्रैवानुष्ठानम् । यदा तूत्तरत्र मुहूर्तद्वयमध्ये किंचिन्न्यूना पौर्णमासी तदापराह्णे सर्वथा तदभावात् प्रदोषपश्चिमौ यामौ दिनवत्कर्म चाचरेदिति पराशरात् भद्रांते प्रदोषयामेऽनुष्ठानम् । न चानुपादेयांगकाल-बाधो न युक्त इति शंक्यम् । भद्रांतर्गतस्य निषिद्धत्वेनांगत्वा-भावात् अंगभूतकालबाधस्यैवायुक्तत्वात् । एतेनोभयत्रापराह्ण-व्याप्तौ पूर्वेति कृत्यरत्नावलिः । भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी । इति निषेधादुपेक्ष्या । श्रावणपौर्णमास्यामपि पवित्रारोपणमुक्तं हेमाद्रौ शिवधर्मभविष्यपुराणयोः—पौर्णमास्यां तथा

---

१ 'तत्रापराह्णात्पूर्वमनुष्ठाने अपराह्णस्य सर्वथा बाधः । अपराह्णे च साकल्यवच-नापादितायां अप्यभावात्' इति पाठः.

षष्ठ्यां शिवं संपूज्य यत्नतः । उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् । पुनरेव च कार्तिक्यां पूज्य शंभुं क्षमापयेत् । यतिभ्यो दक्षिणां दद्यात्सूत्रवस्त्रादिपूर्विकां । यः कुर्यात्सकृदप्येवं चातुर्मास्यं पवित्रकं । कल्पकोटिशतं दिव्यं रुद्रलोके महीयते । इति । हेमाद्रौ शिवरहस्ये—पवित्रारोपणं शंभोः कुर्यान्नभसि वा शुचौ । चतुर्दश्यामथाष्टम्यामधिवास्य विधानतः । श्रावण्यां प्रोष्ठपद्यां वा पवित्रारोपणं तु यः । कुरुते ना पवित्रं स्यात्तस्य संवत्सरांतरा । शंभोः पवित्रमारोप्य रिक्तः संपूर्णतामियात् । पवित्रं तु पवित्राख्यं सान्वयं भृगुनंदन । अपवित्रं पवित्रं स्यादेहकर्माखिलं नृणां । इति । तत्र कर्मणो यस्य यः काल इति वचनात् पूजाकालव्यापिनी पौर्णमासी ग्राह्येति । अत्रैव च श्रावण्यां श्रवणाकर्मेत्याश्वलायनेन श्रवणाकर्मोक्तं । तत्र अस्तमिते स्थालीपाकं श्रपयित्वेत्युक्तत्वात्पूर्वदिन एवास्तमयव्याप्तौ पूर्वा अन्यथा उत्तरेति । केचित्तु पूर्णिमाशब्दस्य अंत्यक्षणोपलक्षणत्वात्तदुपलक्षितेऽहोरात्रे कार्यमितिवदंति तत्रोपलक्षणत्वे प्रमाणं चिंत्यं ।

## अथोपाकर्मकालनिर्णयः ।

तत्र याज्ञवल्क्यः । अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु । हस्तेनौषधिभावे वा पंचम्यां श्रावणस्य तु । इति । अधीयंत इत्यध्यायाः वेदास्तेषां उपाकर्म प्रारंभः । श्रावण्यां श्रावणमासस्य पौर्णमास्यां श्रवणेन युक्तायां कस्यांचित्तिथौ हस्तयुक्तायां तत्पंचम्यां वा कार्यः । औषधिप्रादुर्भावे श्रावणस्येति च सर्वत्र संबध्यते । एतेषां कालानां स्वगृह्यानुसारेण ग्राह्यत्वं बोध्यं । तत्राश्वलायनगृह्यं—अथातोध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पंचम्यां हस्तेन वेति। तत्कालमाह ओषधीनामिति । श्रावणमासस्य श्रवणेन कर्तव्यं ।ओषधीनामिति वचनं यदा श्रावणे प्रादुर्भावो न स्यात्तदा भाद्रपदे श्रवणेन कर्तव्यमित्येवमर्थं । श्रावणात्पूर्वं वृष्ट्यपकर्षे भाद्रपदादूर्ध्वमुत्कर्षे वा उपाकर्मापकर्षोत्कर्षशंका न कार्या । तद्वार्षिकमित्याचक्षत इति वक्ष्यमाणसमाख्याबलात् । पंचम्यामित्यत्रापि श्रावणस्येति संबध्यते । मध्यगतत्वात् प्रयोजनवत्त्वाच्च । श्रावणमासस्य पंचमी यदा हस्तेन युज्यते तदा वेत्यर्थः । एवंच कालत्रयमुक्तं भवति तत्तु वृत्तिग्रंथात् । यद्यपि कालत्रयस्य साम्यं प्रतीयते तथापि—

मासीहस्तानामेव प्रतीतेर्बह्वृचादीनां श्रवणादयो मुख्यतरा इति बोध्यम् ।( कारिकापि—अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु । तन्मासे हस्तयुक्तायां पंचम्यां वा तदिष्यते । अवृष्ट्यौपधयस्तस्मिन्मासे तु न भवंति चेत् । तदा भाद्रपदे मासि श्रवणेन तदिष्यते । इति ।) श्रावणस्तु मासप्रकरणोक्तमेषादिस्थे सवितरीत्यादिवचनात्सिंहस्थे सवितरि समाप्तदर्शकः शुक्लादिर्बोध्यः । तत्रापि संपूर्णं श्रवणं न कर्मकालः । किंतु पूर्वाह्णे दैविकं कर्मेत्यादिपूर्वोदाहृतसामान्यवाक्यात्—भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु । ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः । इति हेमाद्रौ बार्हस्पत्यप्रचेतसात्—संप्राप्ते श्रावणस्यांते पौर्णमास्यां दिनोदये । स्नानं कुर्वीत मतिमाञ्श्रुतिस्मृतिविधानतः । ततो देवानृषींश्चैव तर्पयेत्परमांभसा । उपाकर्मादि चैवोक्तमृषीणां चैव तर्पणम् । कुर्वीत ब्राह्मणैः सार्धं वेदानुद्दिश्य शक्तितः । इति भविष्योत्तराच्च उपाकर्मणः पौर्वाह्णिकत्वनिश्चयात् । पूर्वाह्णस्तु यद्यपि चतुर्विधः पूर्वमुक्तस्तथापि योयं कालमपेक्ष्य सूक्ष्मः स तस्मात्प्रशस्त इति पंचधाविभागपक्षादन्ये अनुकल्पत्वेन ग्राह्या इति हेमाद्रिमाधवादिभिः सिद्धांतितत्वात् मुहूर्तत्रयात्मकः प्रातःकाल एव मुख्यः पूर्वाह्णः । तदवच्छिन्नस्यैव मुख्यं कर्मकालत्वं । तत्र यदा पूर्वसूर्योदयमारभ्य श्रवणं प्रवृत्तं द्वितीयसूर्योदयोत्तरं मुहूर्तत्रयपरिमितं भवति तदा यद्यपि—पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्हस्तर्क्षे सामवेदिनः । इति गोभिलवाक्यं—पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रांतिवर्जिते । इति बह्वृचपरिशिष्टवाक्यं च उभयत्र समानपक्षपाति । तथापि तत्र पूर्वत्रानुष्ठाने—धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् । तत्कर्म सफलं विद्यादुपाकरणसंज्ञितं । धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितं । श्रावणं कर्म कुर्वीरन्नृग्यजुःसामपाठकाः । इति व्यासपरिशिष्टवाक्ययोर्निर्विषयत्वापत्तेरुत्तरत्रैवानुष्ठानं । न चात्रैव यदा पूर्वसूर्योदयं विहाय श्रवणप्रवृत्तिस्तत्रानयोः सावकाशतेति शंक्यं । तत्र पूर्ववाक्या-

भ्यामुत्तरत्रैव विधानेनानयोरसाधारणविषयलाभसंभवात्। नच संपूर्णत्वात् गौणकालसत्वाच्च पूर्वदिने एव भवत्विति शंक्यं। प्रातःकालावच्छिन्नस्यैवांगत्वेन संपूर्णत्वस्य प्रकृतानुपयोगात् गौणकालव्याप्तेर्विरुद्धवचनाभावे उपष्टंभकत्वेपि प्रकृते धनिष्ठासंयुतमित्यादिवचनविरोधेनोपष्टंभकत्वासंभवात्। अतएव श्रवणे आदौ घटिकाचतुष्टयमभिजिन्नक्षत्रांशं वर्ज्यमिति स्मृत्यर्थसारः संगच्छते। यदा सूर्योदयमारभ्य प्रवृत्तं द्वितीयदिने किंचिन्न्यूनं मुहूर्तत्रयं भवति तदा मुहूर्तत्रयस्यैव मुख्यत्वात्तस्योत्तरत्राभावात्पूर्वदिने संपूर्णत्वसंभवे अनुकल्परूपमुहूर्तद्वयसत्वमादाय धनिष्ठासंयुतमित्यादेरप्रवृत्तेः पूर्वदिने एवानुष्ठानं। एवं यदा मुहूर्तत्रयानंतरं प्रवृत्तं द्वितीयदिने नास्ति तत्रापि—उपाकर्म प्रकुर्वन्ति क्रमात्सामर्ग्यजुर्विदः। ग्रहसंक्रांत्ययुक्तेषु हस्तश्रवणपर्वसु। इति हेमाद्र्युदाहृतवचनात्तत्रैव। नच पूर्वाह्णे श्रवणाभावात्कथमनुष्ठानमिति शंक्यं। तन्नाक्षत्रमहोरात्रं यस्मिन्नस्तमियाद्रविः। यस्मिन्नुदेति सविता तन्नाक्षत्रं भवेद्दिनं। इति माधवोदाहृतमार्कंडेयवचनापादितस्य सत्वात्। यदा तु पूर्वदिने मुहूर्तानंतरं प्रवृत्तं द्वितीयदिने मुहूर्तद्वयपरिमितं श्रवणं तत्रापि—उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ। द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः। इति बौधायनप्रोक्तविष्णुधर्मोत्तरयोः वचने उदिते भानौ सत्युत्तरकाले अह्नो मुहूर्तद्वयं दैवं देवदैवत्यं तस्मिंश्चास्तमिते तत्पूर्वकाले अह्नो मुहूर्तत्रयं पित्र्यं पितृदैवत्यं। अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमाद्धव्यकव्ययोर्ग्राह्येति हेमाद्रिमाधवाभ्यां (उदयद्विमुहूर्तव्यापिन्यां दैवकर्म अस्तमयत्रिमुहूर्तव्यापिन्यां पित्र्यं कर्म कार्यमिति निर्णयामृतेन। इदंचोदयास्तमयकालिकतिथेः संपूर्णत्वाभिधानं यदोदयादूर्ध्वं मुहूर्तत्रयं मुहूर्तद्वयं वा विहिततिथिर्भवति अस्तात्प्राक्मुहूर्तत्रयं तदावगंतव्यमिति मदनरत्नेन) सिद्धांतितत्वात्तिथिवन्नक्षत्रस्यापि निर्णेयत्वात् कर्मकालव्याप्तिवचनानुग्रहसाम्ये व्यवस्थापकप्रवृत्तेर्युक्तत्वात् धनिष्ठासंयुतमित्यादिवचनैरुत्तरदिन एव। अतएव श्रवणं धनिष्ठासंयुतं प्रयोगपर्याप्तं ग्राह्यमिति स्मृत्यर्थसारे प्रयोगपर्याप्तिपर्यंतानुधावकं सार्थकं इति। नन्वेवं पूर्वदिने मुहूर्तद्वयानंतरं प्रवृत्तं श्र-

वणं द्वितीयदिने मुहूर्तमात्रं विद्यते तत्राप्युत्तरग्रहणापत्तिः । उदयव्यापिनीत्वेव विष्णवृक्षे घटिकाद्वयं । तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनंतकं । इति प्रयोगपारिजातोदाहृतवचनादिति चेन्न । व्रतोपवासनियमे घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके । इत्यादीनामिवास्यापि कैमुतिकन्यायेन द्विमुहूर्तादिव्याप्तिस्तावकत्वेन विधायकत्वासंभवात् । अन्यथा व्रतोपवासेत्यादीनामपि तथात्वापत्तौ सर्वोपप्लव एव स्यादिति दिक् । एवं पूर्णिमापि यदा पूर्वसूर्योदयमारभ्य प्रवृत्ता तदा संदेह एव नास्ति । यदा पूर्वदिने मुहूर्ताद्यनंतरं प्रवृत्ता द्वितीयदिने मुहूर्तद्वयादिपरिमिता भवति तदा–धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितं । श्रावणं कर्म कुर्वीरनृग्यजुःसामपाठकाः । इति वचनादुत्तरदिने एव सर्वेषां प्राप्तं तत्र–पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रांतिवर्जिते । इति बह्वृचगृह्यपरिशिष्टवचनात्तैत्तिरीयकैरुत्तरदिने तैत्तिरीयकभिन्नयाजुषैः पूर्वदिने कर्तव्यमिति । हेमाद्रिणापि नैतद्युज्यते पर्वण्यौदयिके यदुपाकर्म तैत्तिरीयका एव कुर्युरिति वक्तुं, विशिष्टानुवादे वाक्यभेदप्रसंगादिति मतमुपन्यस्य, तदयुक्तं, उद्देश्यविशेषणविवक्षायां हि सः नतु विशिष्टोद्देशे । प्रपंचितं चैतद्भवदेवेन । योऽत्र विप्रतिपद्यते तं प्रति विशिष्टविध्याश्रयणेन परिहारो वक्तव्य इति । अपिच पूर्वोदाहृतवचनैरौदयिके पर्वण्युपाकर्मप्राप्तेरनुवादोपपत्तेः कर्मण्यपि च कर्तृविधिरुपपन्नः अप्राप्तविषयत्वाद्विधेः । नच संबंधद्वयविधानाद्वाक्यभेदः विशिष्टविध्याश्रयणात् ग्रंथकर्तृभेदेन पौनरुक्त्यपरिहारात् अन्यथा सर्वस्मृत्युच्छेदापत्तेरित्यादिना परिहृत्य तस्मादेवं व्यवस्था । यदैकस्मिन्नेव दिने कर्मकालव्यापि पर्व तदा सर्वेषां तत्रोपाकर्म । यदा तु दिनद्वयेपि कर्मकालव्यापि नवा तदा तैत्तिरीयाणामौदयिके पर्वण्युपाकर्म अन्येषां त्वन्यत्रेत्युपसंहृतं । तत्र श्रावणपौर्णमास्याः सूर्योदयमारभ्य प्रवृत्ताया द्वितीयदिने मुहूर्तत्रयसत्त्वस्यासंभवात् दिनद्वये संपूर्णकर्मकालव्यापिनीति नार्थः किंतु द्वितीयेपि प्रयोगपर्याप्तमित्यर्थः । नवेति पूर्वदिने मुहूर्तानंतरं प्रवृत्तं द्वितीयदिने मुहूर्तद्वयपरिमितं वेत्यर्थः । यथाश्रुतार्थपरत्वे पूर्वदिने मुहूर्तत्रयानंतरं प्रवृत्तं

ह्रासवशाद्द्वितीयदिने नास्ति तत्राप्युत्तरत्रापत्तौ यदैकस्मिन्दिने कर्मकालव्यापि तदा सर्वेषां तत्रैवेत्यसंगतं स्यादिति । एतेन द्व्यहगा तु कर्मसमयं व्याप्नोति सा चेन्नवा कार्या तित्तिरिशाखिभिः परदिने पूर्वेतरैर्याजुषैः इति दीपिका यथाकथंचिदुक्तार्थपरतया नेया यथाश्रुता त्वसंगतेति बोध्यं । तथाच कर्मकालव्याप्तिवाक्यानुग्रहसाम्ये धनिष्ठेति वाक्यविहितं यत्प्रतिपद्युक्तौदयिके पर्वण्युपाकर्म तत्तैत्तिरीयका एव कुर्युरिति वाक्यार्थे सिद्धे अन्येषां—उपाकर्म प्रकुर्वंति क्रमात्सामर्ग्यजुर्विदः । ग्रहसंक्रांत्ययुक्तेषु हस्तश्रवणपर्वसु । इति वचनात्पूर्वदिन एवेति व्यवस्था युक्तेत्याशयः । एतेन तैत्तिरीयकातिरिक्तैर्यजुःशाखीयैः पूर्वविद्धैव पौर्णिमासी ग्राह्या श्रावणी दुर्गनवमीतिवचनादिति **मदनपारिजात** उपेक्ष्यः उदाहृतोदाहरिष्यमाणवचनहेमाद्र्यादिविरुद्धत्वात् । अतएव तैत्तिरीयेतरयाजुषाणां तु पूर्वविद्धमेव पर्व श्रावणीतिवचनादिति **द्वैतनिर्णयः** । अन्ये याजुषाः पूर्वविद्धे एव श्रावणीति वचनादिति हेमाद्रिरिति **मयूखः** । श्रावणीतिवचनं तैत्तिरीयकभिन्नयाजुषपरमिति **भट्टोजिदीक्षितोक्तिः** । वाजसनेयिभिः पूर्वविद्धपौर्णमास्यामिदं कार्यमिति हेमाद्रिरिति **स्मृतिकौस्तुभादयश्च** हेमाद्रितात्पर्यार्थाज्ञानमूलकत्वादुपेक्ष्या एव । यत्तु **मदनरत्ने** बह्वृचकारिकाकारस्य बह्वृचसंबंधिधर्मविधानार्थमेव प्रवृत्तत्वात् बह्वृचाः श्रावणे इत्युत्तरार्धमेव विधायकं । पर्वण्यौदयिक इति पूर्वार्धे तु बह्वृचैः प्राशस्त्यलाभात् श्रवणपरित्यागेन पर्वमात्रग्राहीत्येतदर्थमनुवाद इति तद्वत् तैत्तिरीयपदं सर्वयाजुषाणामुपलक्षणं । तेन दिनद्वयेपि कर्मकालव्याप्तावव्याप्तौ च सर्वैरपि यजुर्वेदिभिरौदयिके पर्वण्युपाकर्म कर्तव्यं । श्रावणीति वाक्यं तु पवित्रारोपणादिविषयमित्युक्तं । तत्—धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् । तत्कर्म सफलं—इत्यादिवाक्येन तद्बह्वृचविहितश्रवणे प्राशस्त्यबोधनात् श्रवणत्यागेन पर्वग्रहणशंकाया असंभावितत्वेन अनुवादवैयर्थ्यापत्तेश्चिंत्यं । अतएव तैत्तिरीयग्रहणं सर्वयाजुषाणामुपलक्षणमिति कालतत्वविवेचनमप्युपेक्ष्यं । तस्माद्धेमाद्रिसिद्धांतस्यैव युक्तत्वात्पूर्वसूर्योदयानंतरं मुहूर्तादूर्ध्वं प्रवृत्ता पौर्णमासी द्वितीयोदयानंतरं मुहूर्तद्वयादिपरिमिता

भवति तत्र तैत्तिरीयैरुत्तरा तैत्तिरीयान्ययाजुषैः पूर्वा ग्राह्येति सिद्धम्। यदा द्वितीयदिने मुहूर्तषट्कपरिमिता पौर्णमासी तदा तैत्तिरीयभिन्नैरप्युत्तरैव ग्राह्या। श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्पण्मुहूर्तकैः। विद्धा स्याच्छंदसां तत्रोपाकर्मोत्सर्जनं भवेत्। इति कालादर्शमदनरत्नोदाहृतनिगमवचनात्—श्रावणी पौर्णिमासी तु संगवात्परतो यदि। तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्। इति माधवोदाहृतगार्ग्यवचनाच्च। अनेनापि संभावितमध्याह्नस्पर्शाविधानात्। यत्तु—उदये संगवस्पर्शे श्रुतौ पर्वणि चार्कभे। कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात्। इति चंद्रोदयोदाहृतस्यार्षत्वेपि नियामकत्वस्वीकारे मध्याह्नमारभ्य प्रवृत्तं द्वितीयदिने मुहूर्तत्रयं पर्व श्रवणं च भवति तत्रापि पूर्वदिनेऽनुष्ठानापत्तौ पूर्वोक्तविरोधापत्तेः। तपो हंत्युत्तराषाढा उपाकर्मणि वैष्णवे। श्रवणेन तु यत्कर्म उत्तराषाढसंयुतं। संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति। धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत्। तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम्। इत्यादिवाक्यविरोधापत्तेश्च। किंतु धनिष्ठेत्यादिवाक्यविषयैकदेशो प्रपंचभूतमेव (पर्वण्यौदयिकत्वे विशेषमाहेति) माधवस्याप्यत्रैव तात्पर्यं कल्पनीयम्। अन्यथा असंगतिप्रसंगात्।

इत्थं सर्ववाक्याविरोधेन संपन्नस्य उपाकर्मकालनिर्णयस्यायं संग्रहः—पूर्वसूर्योदयमारभ्य प्रवृत्तं श्रवणं द्वितीयदिने मुहूर्तत्रयात्किंचिन्न्यूनं भवति तदा पूर्वदिने एवानुष्ठानम्। यदा तु तादृशं द्वितीयदिने संपूर्णं मुहूर्तत्रयं तदा, यदा वा पूर्वदिने मुहूर्तार्धाद्यनंतरं प्रवृत्तं द्वितीयदिने मुहूर्तद्वयादिपरिमितं भवति तदोत्तरदिने एव, मुहूर्तद्वयान्न्यूनं चेत्पूर्वदिने एवेति। पूर्णिमापि यदा पूर्वसूर्योदयमारभ्य प्रवृत्ता तदा पूर्वैव सर्वेषाम्। यदा तु पूर्वदिने मुहूर्ताद्यनंतरं प्रवृत्ता द्वितीयदिने मुहूर्तद्वयादिपरिमिता भवति तदा तैत्तिरीयैरुत्तरा ग्राह्या तद्भिन्नयाजुषैः पूर्वेति व्यवस्था। यदा द्वितीयदिने षण्मुहूर्तपरिमिता तदा सर्वेषामुत्तरैव। यदा पूर्वदिने मुहूर्तानंतरं प्रवृत्ता द्वितीयदिने मुहूर्तद्वयान्न्यूना तदा सर्वेषां पूर्वैवेति। हस्तनक्षत्रमपि यदा दिनद्वये संपूर्णापराह्णव्यापि साम्येन वैषम्येण वा तदेकदेशव्या-

---

१ 'दिने षण्मुहूर्ते'.

पि दिनद्वयेप्यपराह्णस्पर्शि वा तदोत्तरमेव । यदा पूर्वदिने एवा-पराह्णव्यापि तदा पूर्वमेवेति कर्मकालव्याप्त्यैव निर्णय इति स्मृत्यर्थसारहेमाद्रिप्रभृतिभिः सिद्धांतितत्वादिति । एवंच सति औदयिकानि च पर्वादीनि प्रातःसंगवात्मकषण्मुहूर्त-व्यापीनि ग्राह्याणीत्यादिकालतत्वविवेचनादिनवीनग्रंथा उ-पेक्ष्या एव । पूर्वदिने मध्याह्नमारभ्य प्रवृत्तं श्रवणादिकं द्वितीय-दिने मुहूर्तपंचकपरिमितं भवति तदा पूर्वदिनेनुष्ठानापत्तौ पूर्वो-दाहृतानेकवचनस्मृत्यर्थसारहेमाद्र्यादिनिबंधविरोधापत्तेरि-ति बोध्यम्। एतेन सामगानां त्वपराह्णोपाकर्मिणां वचनात्तत्का-लव्यापिनमपि पूर्वहस्तं बाधित्वोत्तरदिने एवानुष्ठानमिति का-लतत्वविवेचनमुपेक्ष्यं। उदाहृतवचनानां कर्मकालव्याप्तिशास्त्रा-विरोधेनैवोपपत्तौ कर्मकालबाधस्यानुचितत्वात्। अतएव—षण्मु-हूर्तोत्तराषाढायुक्तः[1] स्याच्छ्रवणो यदि । तदासौ श्रवणस्त्याज्यो गृह्यते श्रवणोऽपरः। षट्क्षणा चोत्तराषाढा संगवात्परतो यदि । तदासौ श्रवणस्त्याज्यो गृह्यते श्रवणोऽपरः । इत्यादिप्रयोगपा-रिजातनाम्ना परस्परविरुद्धार्थकवचनं कल्पयन् गोविंदा-र्णव उपेक्ष्यः। वचनानां पारिजाते अभावादिति ज्ञेयं । ग्रहसंक्रां-तिवर्जितेत्यत्र पर्वादिशब्दोत्तरसप्तम्याः पर्वादिगताधिकरणत्व-परतया पर्वादिषु जायमानयोर्ग्रहसंक्रांत्योर्दूषकत्वं उत—यदि दैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयं। इत्यादिष्वेकादश्यादिशब्दा-नामिव पर्वादिशब्दानामनुष्ठानयोग्यपर्वाद्युपलक्षिताहोरात्रपर-तयोपाकर्माधिकरणाहोरात्रे जायमानयोरिति । तत्र तावदुपल-क्षणत्वे प्रमाणाभावात् पर्वादिगतयोरेव दूषकत्वं न पूर्वोत्तर-तिथ्यादिगतयोः। अन्यथा ग्रहसंक्रांतियोगश्च यस्मिन्दिने उपाकर्म तद्दिनार्धरात्रात्पूर्वमेवोक्तेषु कालेषूपजायमानस्तेषां दूषको न तु तस्मात्परस्तादिति कालतत्वविवेचनस्य। पर्वश्रवणगतयोरेव ग्र-हणसंक्रांत्योः पर्युदासप्रयोजकता तत्सामानाधिकरण्येन श्रुतत्वात् न तिथ्यंतरनक्षत्रांतरगतयोरपि । तेन चतुर्दशीप्रतिपदुत्तराषाढा-धनिष्ठादौ ग्रहणे संक्रांतौ वा पर्वणि श्रवणे चोपाकर्म कार्यमेवेति मयूखस्य ग्रहसंक्रांतियोगश्चोपाकर्मसंबंधिन्यहोरात्रे भाव्यर्धरा-त्रात्पूर्वं नक्षत्रपर्वणोर्विद्यमानस्तयोर्दूषको न त्वर्धरात्रात्परस्ताद्

---

१ 'युक्ता स्याच्छ्रवणे'.

विद्यमानः । नाप्युपाकर्मांगभूततिथिनक्षत्रयोः पूर्वोत्तरकालीने तिथ्यंतरे नक्षत्रांतरे वा विद्यमान इति स्मृतिकौस्तुभस्य चासंगत्यापत्तेरिति चेन्न। अर्धरात्रात्पूर्वं संगवादिकाले धनिष्ठादौ जायमाने संक्रांत्यादावपि प्रातःकालानुष्ठानापत्तौ अर्धरात्रादधस्तादित्युदाहरिष्यमाणवचनस्य—संक्रांतौ ग्रहणे चैव सूतके मृतके तथा। गणस्नानं न कुर्वीत नारदस्य वचो यथा। इति हेमाद्र्याद्युदाहृतवचनस्य च कस्मिंश्चिद्दिने ग्रहसंक्रांतिवर्जिते कार्यमिति स्मृत्यर्थसारस्य विरोधपरिहारार्थं उदाहृतवाक्यगतपर्वादिशब्दानां पर्वाद्युपलक्षिताहोरात्रपरतयोपाकर्माधिकरणाहोरात्रगतयोरेव ग्रहसंक्रांत्योर्दूषकत्वं नतु पर्वादिगतयोरेवेत्यत्रैव तात्पर्यस्य कल्पनीयत्वात्। तेन पूर्वाहोरात्रगतश्रवणादौ संक्रांत्यादिसत्त्वेपि द्वितीयदिनद्वयगतश्रवणादेर्न दुष्टत्वमिति बोध्यम्। संक्रांतौ ग्रहणे चैवेत्यनेनोपाकर्माधिकरणाहोरात्रे संक्रांतौ ग्रहणे चोपाकर्म न कर्तव्यमित्युक्तं। तत्र विशेषमाह गार्ग्यः—अर्धरात्राद्धस्ताच्चेत्संक्रांतिर्ग्रहणं तथा। उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्। इति प्रयोगपारिजाते कात्यायनो वृद्धमनुश्च। यदार्धरात्रादर्वाक्चेद्ग्रहः संक्रम एव च। नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेपि च। इति। अत्र श्रावणीग्रहणं आषाढीप्रौष्ठपद्योः, श्रवणग्रहणं पंचमीहस्तयोरुपलक्षणमित्यवगंतव्यं। यत्तु वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ। उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके। इति—नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके। कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे। इति माधवेनोपन्यस्तं वचनद्वयं तत्राद्यं छंदोगविषयं प्रोष्ठपदीं हस्तेनोपाकरणमिति सूत्रेण, सिंहे रवौ तु पुष्यर्क्षे इति गार्ग्येण च तेषां सिंहस्थे एव विधानात्। श्रावण्यां श्रावणीकर्म यथाविधि समाचरेत्। उपाकर्म तु कर्तव्यं कर्कटस्थे दिवाकरे। इति हेमाद्रौ निगमवचनेन विरोधाच्च। द्वितीयेन तु येन विधि श्रावण्यां प्रोष्ठपद्यां वोपाकृत्यार्धपंचमासानधीयीरन् इति कौशिकगृह्यादिषु श्रावणीप्रोष्ठपद्योर्विहिते तत्र कर्कटस्थश्रावणीव्यावृत्तिरेव क्रियते। सापि नर्मदोत्तरदेश एव नतु तद्दक्षिणे इति चिंतनीयम्। एतेन नर्मदोत्तरभागार्यावर्तनिवासिनां शिष्टानां कर्कटस्थे रवावप्युपाकर्मानुष्ठानप्रामाण्यम्।

अस्मिन्वचनद्वये अनाश्वासात् । आश्वासे तु निषेध एवेति कालतत्त्वविवेचनसिद्धांतिता अव्यवस्थापि परिहृता । अत एवेदं वचनद्वयं छंदोगविषयमेव । तेन नर्मदादक्षिणदेशे कर्कटस्थे रवावेव छंदोगैरुपाकर्म कर्तव्यमिति द्वैतनिर्णयनिर्णयसिंधुमयूखसिद्धांत उपेक्ष्यः । प्रोष्ठपदीं हस्तेनोपाकरणमिति सूत्रे-सिंहे रवौ इत्यादिवचनविरोधात् । अत इदं सर्वशाखासाधारणमिति केचित् । छंदोगविषयमित्यन्ये इति भट्टोजिदीक्षितोक्तिरपीति बोध्यं । श्रवणापक्षे ओषधीषु जातासु हस्तेन पौर्णमास्यां वाध्यायोपाकर्मेति हिरण्यकेशिसूत्रात्तैत्तिरीयकैः श्रावण्यां हस्ते वा कार्यं । श्रवणायुक्तः पक्षः श्रावणशुक्लपक्ष इत्यर्थः । अत्र पौर्णमासी मुख्यः कालः । पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । इत्यादिवाक्येषु तस्या एवोपादानात् । खंडत्वे निर्णयस्तु पूर्वोक्तोऽवगंतव्यः । संक्रांतिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पंचम्यां कार्या वाजसनेयिभिः । इति वाक्ये हेमाद्रिणा तैत्तिरीयगृह्ये पंचम्युपादानाभावात्तैत्तिरीयकैः प्रौष्ठपद्यां कार्यमित्युक्तं तत् हस्तनक्षत्रासंभवे इति बोध्यं । तेषां गृह्ये हस्तस्योपादानात् । एतेन तैत्तिरीयाणां प्रौष्ठपद्यामिति हेमाद्रिमतमयुक्तं । हिरण्यकेशिसूत्रे पंचम्युपादानात्तैः पंचम्यां कार्यं हिरण्यकेशिभिन्नतैत्तिरीयाणां प्रौष्ठपद्यामिति द्वैतनिर्णयो हेमाद्रिदूषणसंरंभप्रयुक्त एव । हिरण्यकेशिसूत्रे पंचमीग्रहणाभावादिति । उपाकरणोत्सर्जनयोः पौर्णमासीहस्तरोहिणीनक्षत्राणि षण्मुहूर्तान्युदयव्यापीनि ग्राह्याणीति महेशभट्टोक्तिरुपेक्ष्या । मध्याह्नमारभ्य प्रवृत्तानि पौर्णमास्यादीनि द्वितीयदिने किंचिन्न्यूनषण्मुहूर्तपरिमितानि भवंति तत्र पूर्वदिनेऽनुष्ठानापत्तौ धनिष्ठाप्रतिपद्युक्तमित्यादिपूर्वोदाहृतानेकवचनस्मृत्यर्थसारहेमाद्र्यादिविरोधापत्तेरिति । श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत सिंहस्थे सवितरि याऽमावास्या तदंते चांद्रमासे या मध्यवर्तिनी पौर्णमासी सा श्रावणी । श्रवणयोगस्तु भवतु मा वा तस्यामध्यायमुपाकृत्य गृह्योक्तेन विधिनोपाकर्म कृत्वा स्वाध्यायमधीयीत । अधीयंश्च मासमेकं प्रदोषे प्रथमे रात्रिभागे नाधीयीत । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोष इति हरदत्तवि-

च्युतादापस्तंबसूत्रादापस्तंबैः श्रावणपौर्णमास्यामुपाकर्म कार्यं । खंडत्वे निर्णयस्तु द्वितीयसूर्योदयोत्तरं मुहूर्तत्रयादिपरिमितोत्तरा अन्यथा पूर्वैवेति पूर्वोक्तोऽवगंतव्यः ।

अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां पंचम्यां हस्तेन वेति कात्यायनसूत्रे ओषधीप्रादुर्भावे श्रवणे च पौर्णमास्या विशेषणे तयोः तत्र प्रायशः संभवात् । तस्माद्विशेषणाभावे पौर्णमास्यां भवति । एवं पंचम्यां हस्तोपि प्रायशः संभवतीत्युपन्यस्तः । अतः श्रावणी पौर्णमासी पंचमी वा विशिष्टाऽविशिष्टा वोपाकर्मकालः । एवं स्वमतेन व्याख्याय परमतमुदाजहार । श्रवणेन वा पौर्णमास्यां वा हस्तेन वेति हरिहरेण कर्कोपाध्यायाशयस्य वर्णितत्वात्कातीयैः श्रवणयुक्तश्रावण्यां केवलायां वा हस्तयुक्तपंचम्यां केवलायां वोपाकर्म कार्यं । खंडत्वे निर्णयस्तु पूर्वोक्तो वेदितव्यः । प्रौष्ठपदीं हस्तेनोपाकरणमिति गोभिलसूत्रे प्रौष्ठपदीमिति द्वितीया प्रतिशब्दाध्याहारार्था । तेन प्रतिवर्षमुपाकर्म कर्तव्यमिति ज्ञायत इति तद्भाष्योक्तेः । प्रौष्ठपदीं प्राप्येत्यर्थ इति हेमाद्रावपि प्रौष्ठपदमाससंबंधिनीं कांचित्तिथिं प्राप्य हस्तनक्षत्रे उपाकरणं कार्यमित्यर्थः । तत्र संक्रांत्यादिदोषे श्रावण्यामुपाकृत्य भाद्रपदशुक्लहस्तनक्षत्रपर्यंतं न पठेयुः । श्रावण्यामेके उपाकृत्यैतं आसावित्रात्कालं कांक्षंत इति गोभिलसूत्रात् । सावित्रं हस्तनक्षत्रम् । सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः । छंदोगा मिलिताः कुर्युरुत्सर्गं सर्वछंदसां । शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम् । इति गार्ग्येण सिंहस्थरवावेवोत्सर्जनोपाकरणयोर्विधानात् । तत्रापि यदा सिंहस्थे सूर्ये हस्तनक्षत्रात्पूर्वः पुष्यः कर्कटे सूर्यो भवति तदा—मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा । तदा तु श्रावणे कुर्यादुत्सर्गं छंदसां द्विजः । इति छंदोगपरिशिष्टेन श्रावणगतपुष्ये उत्सर्जनविधानस्य सौरमासपरत्वं विनानुपपन्नत्वादत्र प्रौष्ठपदश्रावणशब्दौ मीनादिसौरमासाभिप्रायेणेति मदनरत्नादिभिरुक्तत्वात् सामगानामुत्सर्जनोपाकरणयोः सौरमास एव ग्राह्यः । तथा च छंदोगैः सिंहस्थे कर्कटस्थेपि वा रवौ पुष्यनक्षत्रे उत्सर्जनं कृत्वा सिंहस्थे एव सूर्ये हस्तनक्षत्रे उपाकर्म कर्तव्यं । हस्तनक्षत्रस्य खंडत्वे निर्णयः पू-

र्वोक्तो ग्राह्यः। श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य छंदांस्यधीयीतेति बौधायनवचनात् बौधायनैः श्रावण्यां कार्यं। तत्र दोषादिसंभावनायामाषाढ्यां कर्तव्यं। (तत्रापि मिथुनस्थः सूर्यश्चेन्न कार्यमिति पूर्वमेवोक्तं)। द्वितीयदिने मुहूर्तत्रयादिपरिमिता चेदुत्तरदिने, मुहूर्तत्रयान्न्यूना चेत्पूर्वदिने एवानुष्ठानमिति निर्णयः पूर्वोक्त एवेति।

इदं चोपाकर्म श्रावणे ओषधिप्रादुर्भावाभावे भाद्रपदे कर्तव्यं। तदुक्तं बह्वृचकारिकायां–अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवंति चेत्। तदा भाद्रपदे मासि श्रवणेन तदिष्यते। इति। अत्र श्रवणग्रहणं भाद्रपदगतपंचमीहस्तपर्वणामुपलक्षणं। तद्वार्षिकमित्याचक्षत इति सूत्रात् वर्षाकाले भवं वार्षिकमित्येषा समाख्या। वर्षाकालश्च श्रावणभाद्रपदौ तत्रैतत्समाख्यावचनं अनन्यार्थं सत् श्रावणे साक्षाद्विधानेनैव सिद्धे भाद्रपदविधानार्थम्। मासे च विहिते तत्र कस्मिन्दिने इत्याकांक्षायां पूर्वत्र कृतश्रवणपंचमीहस्तानां पूर्ववद्ग्रहणं। श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छंदांस्यधीयीत मासान्विप्रोर्धपंचमान्। इति मनुवचनाच्च। ओषध्यनुत्पत्तिग्रहणं चाशौचादीनामुपलक्षणम्। तेन येन केनचिन्निमित्तेन श्रावणातिक्रमेपि अपेक्षितविधिलाभादेव भाद्रपदगताः श्रवणाद्य एव काला इति बोध्यम्। अतएव गुरुशुक्रास्ते निषेधेन श्रावणातिक्रमः। तत्राप्यपेक्षितविधिबलादेव भाद्रपदगतश्रवणपर्वादिग्रहणं। तथा प्रथमोपाकरणेप्यपेक्ष्याया अविशेषात्प्रवृत्तिर्निर्बाधैव।

ननु गौणकाले कथमारंभ इति चेन्न। सर्वेषां कालानां स्मृतिषु विधानमस्ति। तत्र केवलं व्यवस्थैवापेक्षिता वचनांतरेण क्रियत इति न तेषां गौणत्वशंकापि। तेन श्रावणश्रवणादौ संक्रांत्यादिदोषे तत्पंचमीविधिः प्रथमोपाकर्मण्यपि यथा प्रवर्तते एवं भाद्रपदश्रवणादिविधिरपि अस्तादिना श्रावणातिक्रमेपि प्रवर्तत इति बोध्यं। अस्तादिनिषेधश्च–शुक्रे मूढेप्युपाकृत्य विद्यावित्तविनाशनं। आयुःक्षयमवाप्नोति तस्मात्तत्कर्म वर्जयेत्। इति प्रयोगपारिजाते मनुवचनात्। गुरुशुक्रतिरोधाने वर्जयेच्छ्रुतिचोदनात्। इत्याह भगवानत्रिः श्रावणं तु विशेषतः। इति तत्रैव काश्यपाच्च। अयं निषेधः प्रथमोपाकरणविषय इति–

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेपि वा । तथाधिमाससंसर्पम-लमासादिषु द्विज । प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् । इति संग्रहकारोक्तेः प्रतीयते । तथाप्यार्षवचनानुपालंभाद्दि-तीयादिप्रयोगेपि सति संभवे बोध्यः । अतएव श्रावण्यां प्रौष्ठ-पद्यां वा शुक्रास्तमयादिप्रतिबंधस्तदानीमाषाढ्यां कार्यमिति माधवः मलमासप्रकरणगतहेमाद्र्यादिग्रंथाश्च संगच्छंते । अ-धिमाससंसर्परूपौ मलमासौ । आदिशब्देन सिंहस्थगुरुशुक्रा-तिचारादिग्रहणं । मलमासे उपाकर्मनिषेधमाह हेमाद्रौ का-त्यायनः—उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि । अभिषे-कादिवृद्धीनां नतूत्कर्षो युगादिषु । ज्योतिःपराशरोपि—उ-पाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः । मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकं । इति । प्रसवाहोत्सवो वर्धापनं । यत्तु दशहरा सु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्ममहाषष्ठ्योर्हतदिष्टं वृषादितः । इति ऋष्यशृंगवचनमनुत्कर्षविधायकं तत्सामग-विषयं । तेषां पूर्वोक्तरीत्या सिंहार्के एवोपाकर्मविधानात् । यत्तु कालादर्शे—अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः । बह्वृ-चाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद्यदि । असिंहार्के प्रौष्ठपद्यां श्रवणेन व्यवस्थया । इत्युक्तं तत्—उपाकर्म तु कर्तव्यं कर्कटस्थे दिवाकरे । आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम् । श्रा-वण्यां पौर्णमास्यां आषाढ्यां वोपाकृत्येति निगमकूर्मपुराण-बौधायनादिवचनविरुद्धमिति स्पष्टमेव । माधवे कार्ष्णा-जिनिः—उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च । ऋषीन्द-र्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः । इति । बौधायनोपि— गौ-तमादीनृषीन्सप्त कृत्वा दर्भमयान्पुनः । पूजयित्वा यथाशक्ति तर्पयेदृचमुच्चरन् । इति ।

अथोत्सर्जनकालः । तत्र याज्ञवल्क्यः—पौषमासस्य रोहिण्यामष्टकायामथापि वा । जलांते छंदसां कुर्यादुत्सर्गं विधिवद्बहिः । पौषमासस्य रोहिण्यां कृष्णाष्टम्यां वा जलस-न्निधौ ग्रामाद्बहिर्वेदानामुत्सर्जनं कुर्याद्येन प्रकारेणोपाकर्मप्रभृति अध्ययनं कृतं तं प्रकारमिदानीं परित्यजेन्न तु सर्वात्मनेत्यर्थः । मनुः—पुष्ये तु छंदसां कुर्याद्बहिरुत्सर्जनं द्विजः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि । श्रावण्यां चेदुपाकर्म तदा पौ-

घशुक्लप्रतिपदि पूर्वाह्णे। यदा प्रौष्ठपद्यामुपाकर्म तदा माघशुक्लप्रतिपदीति व्यवस्थितो विकल्पः। श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छंदांस्यधीयीत मासान्विप्रोर्धपंचमान्। इति उपाकर्मोत्तरं शुक्लकृष्णपक्षद्वयसाधारण्येन सार्धचतुर्मासपर्यंतमध्ययनमुक्त्वोत्सर्जनानंतरं अध्ययनप्रकारमाह मनुः—अतः परं तु छंदांसि शुक्लेषु नियतः पठेत्। अंगानि च रहस्यं च कृष्णपक्षेषु वै पठेत्। इति। आश्वलायनगृह्ये—मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वापोभ्यवयंत्येता एव देवतास्तर्पयंत्याचार्यानृषीन्पितृंश्चैतदुत्सर्जनमिति। अत्र वृत्तिकृता मध्यमाष्टकाग्रहणं षण्मासांतलक्षणार्थं। तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थ इत्युक्तं। छंदोगानां तु सिंहे रवावित्यादिनोक्तं। तत्र यदा सिंहस्थार्कहस्तात्पूर्वं पुष्यनक्षत्रं कर्कटस्थे रवौ भवति तदा तत्रैवोत्सर्गः। तदुक्तं छंदोगपरिशिष्टे—मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा। तदा तु श्रावणे कुर्यादुत्सर्गं छंदसां द्विजः। इति प्रौष्ठपदश्रावणशब्दौ चात्रत्यौ सिंहकर्करूपसौरमासपरावित्युक्तं प्राक्। यदि वर्षपर्यंतमपि अध्येतव्यमिति बुद्धिस्तदा संवत्सरांते प्रागुपाकरणादुत्सृजेत्। यत्स्वाध्यायमधीतेब्दमिति श्रुतेरिति माधवः। वर्षं वाधीत्य उपाकर्मदिने उत्सर्जनं कार्यं न वा। तर्पणं तु कार्यमेवेति स्मृत्यर्थसारः। उपाकर्मोत्सर्जने प्रशंसति कात्यायनः—प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः। क्रियते छंदसां तेन पुनराप्यायनं भवेत्। अयातयामैश्छंदोभिर्यत्कर्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम्। इति। उत्सर्जनं च वेदानामुपाकरणकर्म च। अकृत्वा वेदजाप्यस्य फलं नाप्नोति मानवः। इति प्रयोगपारिजाते वचनांतरं। नन्विदं ब्रह्मचारिधर्म एव उपाकृत्याधीयीतेति तस्य ग्रहणाध्ययनांगत्वप्रतीतेः। ग्रहणाध्ययने च ब्रह्मचारिण एव। वेदमधीत्य स्नायादिति स्नानात्प्राचीनत्वावगमात्। अतः कथं गृहस्थधर्मत्वमिति चेन्न। अधीयीतेत्यनुवृत्तौ समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येके इत्याश्वलायनसूत्रे गृहस्थस्यापि ग्रहणाध्ययनेधिकारदर्शनात्। अस्यार्थः येन नियमविशेषेण युक्तो ब्रह्मचारी अधीते तेनैव नियमेन समावृत्तोऽप्यधीयीत। समावृत्तादितरे ब्रह्मचा-

माणोध्याप्यैरन्वारब्ध इति सूत्रे अध्याप्यपदसमभिव्याहारादध्येष्यमाणपदमध्यापकपरमिति गृहस्थधर्मोऽप्युपाकर्म । अत एव बह्वृचकारिका—अन्वारब्धोऽधुना शिष्यैः स्वयमेव न संति चेत्। इति शिष्याभावे स्वयं कर्तव्यतोक्तेरिति दिक्। इति पुरुषार्थचिंतामणौ कालखंडे उपाकर्मोत्सर्जनकालनिर्णयः ।

अथ भाद्रपदपौर्णमास्यां—नांदीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमस्यां तु कर्तव्यं वराहवचनं यथा । इति ब्रह्मपुराणे नांदीमुखसंज्ञकानां प्रतिवर्षं श्राद्धं विहितम् । तत्र कन्याराशिस्थरव्यधिकरणकपौर्णमासीस्वीकारे यदा भाद्रपदीमतिक्रम्य कन्यासंक्रांतिस्तदा आश्विन्यां तदापत्तौ, यदा च पौर्णमासीद्वयमपि कन्यागते रवौ भवति तदा विकल्पापत्तौ प्रौष्ठपद्यामेव कर्तव्यमिति हेमाद्रिमदनरत्नप्रयोगपारिजातादिविरोधापत्तेः । यदा एकापि श्राद्धयोग्या पौर्णमासी कन्यारवौ न भवति तदा श्राद्धलोपापत्तेश्च कन्यागतसूर्यसमासदर्शांतभाद्रपदपौर्णिमास्येव ग्राह्या । एतेन यदा भाद्रपद्याः कन्यार्कयोगाभावस्तदाश्वयुज्यां कन्यार्कयुक्तायां कार्यम् । हेमाद्र्युक्तस्य भाद्रपद्युपलक्षणत्वस्यायुक्तत्वादिति कृत्यरत्नावल्येवायुक्ता । आश्विनस्याधिकत्वे तत्रैव श्राद्धापत्तेश्चेति बोध्यम् । के नांदीमुखा इत्यपेक्षायां—ये स्युः पितामहादूर्ध्वं ते स्युर्नांदीमुखास्त्रयः । प्रसन्नमुखसंज्ञास्तु मंगलीया यतस्तु ते । अत्र पितामहशब्देन प्रपितामहो विवक्षितः । पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः । तेभ्यः पूर्वे त्रयो ये तु ते तु नांदीमुखाः स्मृताः । इत्यग्निब्रह्मपुराणवचनेन लेपभाक्षु नांदीमुखशब्दसंकेतबोधनात्त एवात्र देवताः नतु जनकादयः लेपभाजां नांदीमुखसंज्ञाविधानवैयर्थ्यापत्तेः । नच वृद्धिश्राद्धोपयोगित्वान्न संज्ञाविधानवैयर्थ्यमिति शंक्यं । नांदीमुखानां प्रत्यब्दमिति प्रौष्ठपदीनिमित्तकश्राद्धविध्येकवाक्यतापन्नवाक्यबोधितसंज्ञायाः प्रकरणांतरे विहितवृद्धिश्राद्धोपयोगित्वासंभवात् । अपिच—कर्मण्यथाभ्युदयिके मांगल्ये चातिशोभने । जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नांदीमुखान्नाम तर्पयेद्विधि-

पूर्वकम् । इति प्रकरणांतरबोधकाथशब्दयुक्ताग्रिमवाक्यविहि
भ्युदयिकश्राद्धे । तस्मात्पूर्वेद्युः पितृभ्यः क्रियते उत्तरमहदे
न्यजंत इत्यादिश्रुतौ अमायां पितृभ्यो दद्यात् पितृंस्तर्पयो
स्मृतौ च पितृशब्दस्य जनकादिष्वेवानादिशक्तेः पितृश०
सामानाधिकरण्यात्–मातृश्राद्धं तु पूर्वं स्यात्पितृणां तदनंतर
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् । इति शात
पवचनाच्च । अत्र नांदीमुखशब्दस्यापि जनकादिष्वनादिसंके
प्रथमोपस्थितजनकादय एवात्र देवता इति वाक्यार्थबोध
वसाने पुनर्नांदीमुखशब्दाल्लेपभागुपस्थित्यसंभवेन तेषामत्र
वतात्वसंभावनाया अप्यसंभवात् मात्रादिष्वपि नांदीमुखश
संकेतस्यानादित्वेन विश्वेषां देवानामित्यादाविव संज्ञात्वाभाव
नखमुखात्संज्ञायामिति निषेधाप्रवृत्तेः स्वांगाच्चोपसर्जनादि
वैकल्पिको ङीप् भवत्येव । नच पुंयोगादाख्यायामिति नित्य
ङीपस्त्विति शंक्यं । नांदीमुखशब्दस्य-दिव्यपितृषु–ऊर्ध्ववक्त्र
ये तत्र ते नांदीमुखसंज्ञिताः । इति हेमाद्र्युदाहृतवाराहव
नाज्जनकादिषु शक्तिग्राहकवचनाभावेन पितृशब्दपरतंत्रत्व
मातरश्च पितरश्च पितर इत्येकशेषेण पितृशब्दादुपस्थितपितृ
मातॄणां च नांदीमुख्यश्च नांदीमुखाश्च नांदीमुखा इत्येकशे
नांदीमुखत्वरूपेण शक्त्यैव बोधकत्वात् पुंवाचकशब्दस्य पुंयोग
त्स्त्रियां प्रवृत्तौ विधीयमानस्य ङीषोऽत्रासंभावितत्वात् । अन्य
प्रथमोपस्थितपित्रादिभिरेव विधिनैराकांक्ष्ये पश्चादुपस्थितम
तॄणां तत्रान्वयासंभवात् मातृश्राद्धं तु पूर्वं स्यादित्यादीनां वै
र्थ्यापत्तेः । अतएव प्रपितामहीपर्यंता नांदीमुख्यश्च मातर इति
अथ नांदीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तमं इति हेमाद्र्युदा
तब्रह्मपुराणे नांदीमुखीभ्य इति निर्देशः । मातृपितामहीप्र
तामह्यः नांदीमुखा इति पद्धतिकाराणां निर्देशश्च संगच्छते इत्य
स्तां प्रासंगिकम् । तस्माल्लेपभाजां वृद्धिश्राद्धे देवतात्वासंभवा
तेषां प्रौष्ठपदीश्राद्धे एव देवतात्वं न वृद्धिश्राद्धे । नवा जन
कादीनां प्रौष्ठपदीश्राद्धे देवतात्वं लेपभाजां नांदीमुखसंज्ञावि
धानवैयर्थ्यापत्तेः । अतएव–तेभ्यः पूर्वं त्रयो ये तु ते तु नांदीमुख
स्मृताः । इति नांदीमुखवचनस्य नांदीमुखानां प्रत्यब्दमिति प्रौ
ष्ठपदीनिमित्तकश्राद्धविधिनैकवाक्येनोपात्तत्वात् । श्राद्धांत

नांदीमुखशब्देन प्रपितामहात्परतरे न ग्राह्या इति हेमाद्रिसिद्धांतः संगच्छते । एतेन यत्तु ब्रह्मपुराणे लेपभाजां नांदीमुखत्वमुक्तं तज्जीवत्पित्रादित्रिकस्य श्राद्धकर्तुर्वृद्धिश्राद्धे देवतात्वसिद्ध्यर्थं । मत्स्यपुराणादिषु पित्रादीनां नांदीमुखदेवतात्वमुक्तं ब्रह्मपुराणे लेपभाजामुक्तमतः परस्परविरोधपरिहारः पूर्वोक्तविषयभेदेन घटते नान्यथा । ततश्च ध्रियमाणपित्रादित्रयस्यापि वृद्धौ नांदीश्राद्धमावश्यकमिति गम्यते न पार्वणादि श्राद्धं । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यादिति विष्णुना निषेधात् । एवंच यत्कैश्चिदुक्तं पित्रादिषु त्रिषु ध्रियमाणेषु न पितृवर्गनांदीमुखश्राद्धं एवं मातृश्राद्धादिष्वपीति, तत् ब्रह्मपुराणवचनापरिज्ञाननिबंधनमित्युपेक्षणीयमिति मदनपारिजात एवोपेक्ष्यः । नांदीमुखानां प्रत्यब्दमिति प्रौष्ठपदीश्राद्धविधायकब्रह्मपुराणवचनापरिज्ञाननिबंधनत्वात् । लेपभाजां नांदीश्राद्धान्वयासंभवस्योक्तत्वात् जीवत्पित्रादित्रिकस्य न जीवत्पितृकः कुर्यादिति निषेधेन पार्वणश्राद्धाप्रसक्तेः । नैव कुर्यादिति विष्णुवचनस्य न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः । पितामहेष्वेवमेव कुर्याज्जीवति साग्निकः । साग्निकोपि न कुर्वीत जीवति प्रपितामहे । इति कालादर्शमदनरत्नाद्युदाहृतवृद्धिश्राद्धमात्रविषयसुमंतुवचनस्य हेमाद्र्यादिनिबंधानां च विरोधापत्तेश्च । अतएव विष्णूक्तो निषेधो दर्शादिविषय इति कल्पतरुः । अत्र विष्णुवचने जीवत्पित्रादित्रिकस्य यः श्राद्धनिषेधः स वृद्धिश्राद्धव्यतिरिक्तविषय इति मदनरत्नश्चोपेक्ष्यः । पूर्वोक्तदोषापत्तेः । अतएव-पितरो यत्र पूज्यंते तत्र मातामहा अपि । इत्यत्र पितृशब्दस्य जनकपरत्वे बहुवचनानुपपत्तेः सपिंडीकरणानंतरपितृभावापन्नानामेव वाचकः पितृशब्दस्तेन चतुर्थ्याद्युद्देशकप्रौष्ठपदीश्राद्धे पितामहा अपि कार्या इति निर्णयसिंधुस्मृतिकौस्तुभभट्टोजीदीक्षितोक्तयः अयुक्ता एव । पितृशब्दस्य पितृभावापन्नपरत्वकल्पने सपिंडीकरणे तत्पूर्वभाविश्राद्धेषु च मातामहानां प्रसक्त्यभावात् । कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् । प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिः । इति कात्यायनवाक्ये षोडशश्राद्धपर्युदासासंगत्यापत्तेः । किंच पितृभावापन्नपरत्वे मातामहानामपि पितृभावापन्न-

त्वात् पितृभ्यो दद्यादित्यनेनैव सिद्धौ पितरौ यत्र पूज्यंते स्यैव वैयर्थ्यापत्तेश्च । तस्माज्जनकाद्युद्देशेन क्रियमाणश्र मातामहा अप्युद्देश्या इत्येव वचनव्यक्तेः लेपभागुद्देश्यक मातामहाः कार्या इत्युक्तेः वचनार्थाज्ञाननिबंधनत्वात् । व चनस्य तु-वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः । प्रपिता स्तथादित्याः श्रुतिरेषा सनातनी । इति वसून्वदंति तु तॄन्रुद्रांश्चैव पितामहान् । प्रपितामहांस्तथादित्यान्श्रुति सनातनी । इति मन्वादिवाक्यगतबहुवचनवत्पूजार्थत्वेः पपत्तेश्च । अतएव वृद्धिश्राद्धोद्देश्या अपि प्रौष्ठपदीश्राद्धे दे इति गोविंदार्णवोप्ययुक्त इति दिक् । तत्सिद्धं लेपभा ग्रोद्देश्यकस्य प्रौष्ठपदीश्राद्धस्य पार्वणश्राद्धत्वादपराह्णव्यापि तत्र पौर्णमासी ग्राह्येति । अत्रापि कुलस्तंभयात्रोक्ता का तत्वप्रकाशिकायां स्कांदे-नभस्यपंचदश्यां च कुल समर्चयेत् । दुःखं रुद्रपिशाचत्वे न भवेत्तस्य पूजनात् । इ इति भाद्रपदपूर्णिमा ॥

आश्विनपौर्णिमास्यां च अक्षैर्जागरणं निशि । कौमुदी समाख्याता कार्या लोकविभूतये । कौमुद्यां पूजयेल्लक्ष्मीमिंद्रमै वते स्थितं । सुगंधैर्निशितैः सर्वैः साक्षैर्जागरणं भवेत् । इति हे द्रौ लिंगपुराणे रात्रौ लक्ष्मींद्रयोः पूजा जागरणं अक्षैः क्री च विहिता । तिथितत्वे तु सुगंधिर्निशि सद्वेषो ह्यक्षैर्जाग चरेत् । इति पाठः । तिथितत्वे लैंगे-निशीथे वरदा लक्ष् को जागर्तीति भाषिणी । तस्मै वित्तं प्रयच्छामि अक्षैः क्री करोति यः । नालिकेरैश्चिपिटकैः पितॄन्देवान्समर्चयेत् । बंधू प्रीणयेत्तेन स्वयं तदशनो भवेत् । चिपिटकाः पृथुकाः । तत्रैव दित्यपुराणे-पाशाक्षमालिकांभोजसृणिभिर्याम्यसाम्ययोः । आसनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरम् । गौरवर्णां सुरूपां सर्वालंकारभूषितां । रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु । दक्षि णोर्ध्वकरे पाशाक्षमालाभ्यां वामे पद्मांकुशाभ्यां भूषितां वामा करे हेमपद्मं दक्षिणे वरं दधतीमित्यर्थः । इति ध्यात्वा ॐ लक्ष्म नमः इति मंत्रेण षोडशोपचारैः संपूज्य । नमस्ते सर्वदेवानां व दासि हरिप्रिये । या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् इति पुष्पांजलिं दत्त्वा प्रणमेत् । चतुर्दंतसमारूढो वज्रपाणि

पुरंदरः। शचीपतिश्च ध्यातव्यो नानाभरणभूषितः। इति ध्यात्वा ॐ इंद्राय नमः इति मंत्रेण संपूज्य—विचित्रैरावतस्थाय भास्वत्कुलिशपाणये। पौलोम्यालिंगितांगाय सहस्राक्षाय ते नमः। इति पुष्पांजलिं दत्त्वा प्रणमेत्। सनत्कुमारसंहितायां—नवसप्ततितमेध्याये कार्तिकमाहात्म्ये—आश्विने शुक्लपक्षे तु भवेद्या चैव पूर्णिमा। तद्रात्रौ पूजनं कुर्याच्छ्रियो जागृतिपूर्वकम्। नालिकेरोदकं पीत्वा अक्षक्रीडां समारभेत्। निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि यो जागर्ति महीतले। इत्युपक्रम्येतिहासमभिधायांते—बहुरात्रिव्यापिनी या सात्र पूर्णा विशिष्यते। एवं लक्ष्मीव्रतं कृत्वा न दरिद्रो न दुःखभाक्। इति उपसंहारात् बहुरात्रिव्यापिनी ग्राह्येत्युक्तेः पूर्वदिने एव निशीथव्याप्तौ पूर्वा, उत्तरदिने एव दिनद्वयेपि वा निशीथव्याप्तौ दिनद्वयेपि निशीथस्पर्शाभावेप्युत्तरैवेति सिद्धम्। एतेन यदा पूर्वदिने निशीथव्याप्तिः परदिने प्रदोषव्याप्तिस्तदा परेद्युस्तत्कृत्यं प्रधानपूजाकालव्याप्त्यनुरोधादिति तिथितत्वं। एतन्मूलिका कृत्यरत्नावलिश्च बहुरात्रव्यापिनीति वचनविरोधात्—तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः। इति वाक्येन क्रीडाजागरयोरेव फलसंबंधबोधनात्तदपेक्षया पूजायाः प्राधान्ये प्रदोषस्यैव पूजाकालत्वे च प्रमाणाभावाच्च चिंत्येति दिक्।

नित्यमाश्वयुजे मासि पूर्णिमायां गणेश्वर। ऐरावतसमारूढः शक्रो लोकानुकंपया। परिभ्रमति लोकांस्त्रीन्पश्यन्भक्तवरप्रदः। को जागरविधानेन मामाराधयतीत्युत। तेन कोजागरं नाम व्रतं लोकेषु विश्रुतम्। विधानं तस्य वक्ष्यामि शृणुष्वैकाग्रमानसः। पौर्णिमाश्वयुजे मासि कौमुदी परिकीर्तिता। तत्राराध्य महालक्ष्मीमिंद्रं[1] चैरावतस्थितं। उपवासं प्रकुर्वीत दीपान्दद्याच्च भक्तितः। लक्षं तदर्धमयुतं सहस्रं शतमेव वा। घृतेन दीपयेद्दीपांस्तिलतैलेन वा व्रती। रात्रौ जागरणं कुर्यान्नृत्यगीतपुरःसरं। यथाविभवतो देयाः पुरवीथ्यासु दीपकाः। ततः प्रभाते सुस्नातः संपूज्य च शतक्रतुं। ब्राह्मणान्भोजयेच्चान्नं शर्कराघृतपायसैः। वासोभिर्दक्षिणाभिश्च ततस्तान्पूजयेद्द्विजान्। यथाशक्ति च दातव्या दीपाः स्वर्णविनिर्मिताः। एवं निर्वर्त्य

---

१ 'मिंद्रमैरावते स्थितं'.

विधिवत्ततः पारणमुच्यते । व्रतस्यास्य विधानेन कल्पान्वै दीपसंख्यकान् । अप्सरोभिः परिवृतः सूर्यलोके महीयते । इह चायुष्यमारोग्यं पुत्रपौत्रादिसंपदः । भवंति व्रतमाहात्म्यात्कुलश्रेष्ठ्यं गणेश्वर । इति निर्णयामृतोदाहृतस्कंदपुराणोक्तं कोजागरव्रतं । तत्र जागरोपवासयोर्विधानादुपवासस्य चाहोरात्रसाध्यत्वात्तत्र ज्योतिःशास्त्रप्रसिद्धतिथ्यभावे साकल्यवचनापादिततिथेरावश्यकत्वात्पूर्वविद्धपूर्णमासीलाभे एव पूर्वा अन्यथोत्तरैव ग्राह्या ।

आश्वयुज्यां पौर्णमास्यां निकुंभो वालुकार्णवात् । आयाति सेनया सार्धं कृत्वा युद्धं सुदारुणम् । तस्मात्तत्र नरैर्मार्गाः स्वगेहस्य समीपगाः । शोधितव्याः प्रयत्नेन भूषितव्याश्च मंडनैः । वेश्मानि भूषितव्यानि नानारंगैर्विशेषतः । सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः । दिवा तत्र न भोक्तव्यं मानुषैश्च विवेकिभिः । स्त्रीवृद्धमूर्खबालैश्च भोक्तव्यं पूजितैः सुरैः । इत्थंभूतलक्षणे तृतीया । तेन पूजितसुरैरित्यर्थः । पूज्याश्च सफलैः पुष्पैस्तथा द्वारोर्ध्वभित्तयः । द्वारोपांते प्रदीपस्तु संपूज्यो हव्यवाहनः । यवाक्षतघृतोपेतैस्तंदुलैस्तु सुतर्पितः[1] । संपूजितव्यः पूर्णेंदुः पयसा पायसेन च । रुद्रः सभार्यः स्कंदश्च तथा नंदीश्वरो मुनिः । गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः । रौरभ्रवद्भिर्वरुणो[2] गजवद्भिर्विनायकः । पूज्यः साश्वैश्च रेवंतो यथाविभवविस्तरैः । ततः पूज्यो निकुंभश्च समांसैस्तिलतंदुलैः । सुगंधिभिर्घृतोपेतैः कासराक्षैश्च भूरिभिः । कासराक्षो माहिषाख्यो गुग्गुलः । ब्राह्मणान्भोजयित्वा तु भोक्तव्यं मांसवर्जितं । निर्णयामृते ब्रह्मपुराणे—अस्तोत्तरं चंद्रादिनिकुंभांतं देवपूजोत्तरं भोजनमुक्तं तत्र पूर्वदिने एव चेत् प्रदोषव्यापिनी पौर्णमासी तदा पूर्वा । दिनद्वयेपि प्रदोषव्याप्तौ प्रदोषस्पर्शाभावे वोत्तरैव ग्राह्या । अस्यां—शरद्याग्रयणं कार्यं पर्वणि स्यात्तदुच्यते । इति शौनकेन आग्रयणमुक्तं । तच्च पर्वांशे इष्टौ पूर्णिमायामिष्टेः पूर्वं कर्तव्यं । प्रतिपदीष्टौ पूर्वदिने पूर्णिमायां कर्तव्यं । अमायां चेदिष्ट्युत्तरमेव कार्यमितीष्टिप्रकरणे वक्ष्यते । अत्रैवाश्वयुजीकर्मेति आश्वलायनेनाश्वयुजीकर्मोक्तं तदपि पर्व-

१ 'समर्पितः'. २ 'औरभ्रवद्भिः'.

णीष्टौ तदुत्तरं प्रतिपदीष्टौ पूर्वदिने पर्वणि कार्ये । आश्वयुज्यामश्विनीगते चंद्रमसि घृतपूर्णभाजनं सुवर्णयुतं विप्राय दत्त्वा दीप्ताग्निर्भवतीति विष्णूक्ते दाने पौर्वाह्णिकी पौर्णमासी ग्राह्येति । अस्यामपि कार्तिकस्नानव्रतारंभ उक्तो हेमाद्रावादित्यपुराणे-पूर्ण आश्वयुजे मासि पौर्णमास्यां समाहितः । मासं समग्रं परया च भक्त्या समाप्यते कार्तिकपौर्णमास्यां । इति । इत्याश्विनीपूर्णिमा ।

अथ कार्तिकी । तस्यां—पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा । ततश्चंद्रोदये पूज्यास्तापस्यः कृत्तिकास्तु षट् । कार्तिकेयस्तथा खड्गो वरुणश्च हुताशनः । धान्यैः सशूकैर्द्वारोर्ध्वं भूषितव्यं निशागमे । माल्यैर्गंधैस्तथा धूपैर्भक्ष्यैरुच्चावचैस्तथा । परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः । एवं देवांस्तु संपूज्य दीपो देयो गृहाद्बहिः । दीपोपांते तथा गर्तश्चतुरस्रो मनोहरः । चतुर्विंशांगुलः कार्यः सिक्तश्चंदनवारिणा । गवां क्षीरेण संपूर्णः समंतात्परिरक्षितः । तत्र हेममयो मत्स्यो मुक्तानेत्रमनोहरः । प्रक्षेप्तव्यो विधानेन नमोस्तु हरये पठेत् । ब्राह्मणायाथ योग्याय दद्यात्तं क्षीरसागरं । इति निर्णयामृते ब्रह्मपुराणे क्षीरसागरदानमुक्तं । तत्र चंद्रोदये इति निशागमे इत्युक्तत्वात्प्रदोषव्यापिनी पौर्णमासी ग्राह्या । कार्तिक्यां तु वृषोत्सर्गो विवाहः पुण्यलक्षणः । कार्यः कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा । राज्ञा च रथदानं च घृतधेन्वादयस्तथा । प्रदेयाः पुण्यकृद्भिस्तु तासां सकलदेवताः । इति । भविष्योत्तरे-कार्तिक्यां तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतं । इति मात्स्येपि काम्यवृषोत्सर्गो विहितः । तत्र भविष्योत्तरोक्तवृषोत्सर्गादौ पौर्वाह्णिकी पौर्णमासी ग्राह्या । मात्स्योक्ते वृषोत्सर्गे तु—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति वचनात्पूर्वविद्धा ग्राह्या । यदा तु पूर्वविद्धा नास्ति द्वितीयदिने तु दिवैव समाप्ता तदा पूर्वाह्णे एव पौर्णमास्यां वृषोत्सर्गं कृत्वा अंगभूतं नक्तं प्रदोषे प्रतिपद्यपि कार्यम् । नच तस्यांगत्वे नक्तं समाचरेदिति प्राधान्येन निर्देशोऽनुपपन्न इति शंक्यम् । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्रेवोपपन्नत्वात् । नीलं च वृषभं दद्याच्चतुर्वत्सतरीयुतं । सर्वसस्यचरं रम्यं

यावंति तस्य रोमाणि शरीरे संति संख्यया । तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः । पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः । भोक्तव्यं गोरसप्रायं स्वप्तव्यं स्थंडिले ततः । इति ब्रह्मपुराणे नीलवृषदानमुक्तम् । तत्र पौर्वाह्णिक्येव पौर्णमासी । नीलवृषलक्षणं तु —लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते । इति बोध्यम् ।

अस्यां त्रिपुरदाहोत्सवो भविष्ये—पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रैपुरोत्सवः । दद्यादनेन मंत्रेण प्रदीपांश्च सुरालये । कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरंति जीवाः । दृष्ट्वा प्रदीपं नच जन्मभागिनो भवंति नित्यं श्वपचा हि विप्राः । इति । अत्र पूर्णिमा प्रदोषव्यापिनी ग्राह्या । दिनद्वये प्रदोषव्याप्तावव्याप्तौ वा परैव ग्राह्या । अस्या महत्त्वमुक्तं हेमाद्रौ पाद्मे—आग्नेयं हि यदा ऋक्षं कार्तिक्यां तु भवेत्कचित् । महती सा तिथिर्ज्ञेया स्नानदानादिषूत्तमा । आग्नेयं कृत्तिका । यदा तु याम्यं भवति ऋक्षं तस्यां तिथौ क्वचित् । तिथिः सापि महापुण्या ऋषिभिः परिकीर्तिता । याम्यं भरणी । प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप । सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा । प्राजापत्यं रोहिणी । ब्रह्मपुराणे—पुण्या महाकार्तिकी स्याज्जीवेंद्वोः कृत्तिकास्थयोः । इति कार्तिकी ।

मार्गशीर्षपौर्णमास्यां । पौर्णमास्यां तु तस्मात्तं पूजयेत्तत्र सर्वदा । शुक्लैः पुष्पैश्च पयसा श्रद्धया परया युतः । रत्नैर्दीपैश्च बहुभिर्होमैर्ब्राह्मणतर्पणैः । गोभ्यश्च लवणं देयं तस्मिन्नहनि सर्वदा । यस्मात्तु लवणं चंद्राद्दक्षशापाद्विनिःसृतम् । कांतं रूपं भवेत्स्त्रीणां पूर्णेंदोः पूजनात्सदा । इति निर्णयामृते स्कांदे चंद्रपूजोक्ता । तत्र चंद्रोदयव्यापिनी ग्राह्या । मार्गशीर्षे शुक्लपंचदश्यां मृगशिरोयुतायां चूर्णितलवणस्य सुवर्णेन प्रस्थमेकं चंद्रोदये ब्राह्मणाय प्रतिपादयेत् । अनेन कर्मणा रूपसौभाग्यलाभो जायते इति विष्णुनोक्तं सुवर्णसहितचूर्णितलवणदानं । तत्रापि चंद्रोदयव्यापिन्येव ग्राह्या । मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वेति आश्वलायनेनोक्तं तत्पौर्णमास्यां चतुर्दश्यां वा कार्यम् ।

अथ पौष्यां पुष्यनक्षत्रयुक्तायां—इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः। पुरंदरश्च सोमश्च तथा पुष्यबृहस्पती। पंचैते पुष्ययोगेण पौर्णमास्यां तपोबलात्। अलंकृतं पुनश्चक्रुः सौभाग्योत्सवलक्ष्मभिः। तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये। गौरसर्षपकल्केन समालभ्य स्वकां तनुं। कृतस्नानैस्ततः कार्यमलक्ष्मीनाशनं परं। उद्वर्त्य देवं च तथा सर्वौषधियुतैर्जलैः। स्नापयित्वा नवं वस्त्रं गृहीत्वाछादनं ततः। द्रष्टव्यं मंगलशतं धूपस्रङ्माल्यशोभितं। ततो नारायणः शक्रश्चंद्रः पुष्यबृस्पती। संपूज्या धूपपुष्पैश्च नैवेद्यैश्च पृथक् पृथक्। प्रशस्तैर्वैदिकैर्मंत्रैः कृत्वाग्निहवनं शुभं। धनैर्विप्रांश्च संतर्प्य नवैर्वस्त्रैश्च शोभितान्। ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसं। पुष्ययोगे तु कर्तव्यं राज्ञा स्नानं तु सर्वदा। इति ब्रह्मपुराणे अलक्ष्मीनाशकं स्नानादिकमुक्तं। तत्र पौर्वाह्णिकी पौर्णमासी ग्राह्येति पौषी। कुष्टं मांसी हरिद्रे द्वे मुरा शैलेयचंदनं। वचा कचोरं मुस्ता च सर्वौषध्यो दश स्मृताः। इति सर्वौषध्यः। पूर्णिमांतमाघमुपक्रम्य तिथितत्वे स्कांदे—पितृणां देवतानां च मूलकं नैव दापयेत्। दद्न्नरकमाप्नोति भुंजीत ब्राह्मणो यदि। ब्राह्मणो मूलकं भुक्त्वा चरेच्चांद्रायणव्रतं। अन्यथा याति नरकं क्षत्रविट्शूद्र एव च। इति।

अथ माघ्यां—माघे मासि तु संप्राप्ते पौर्णमास्यामुपोषितः। ब्राह्मणेभ्यस्तिलान्दत्वा सर्वपापैः प्रमुच्यते। इति हेमाद्रौ संवर्तेन तिलदानमुक्तं। अत्र दानं पौर्णमास्यां विधीयते प्राधान्यात्। ततश्चार्थाच्चतुर्दश्यामुपवास इति हेमाद्रिः। निर्णयामृते भविष्योत्तरे—माघ्यां मघासु तु तिलैः संपूज्य पितृदेवताः। तिलपात्राणि देयानि तिलैः सपललौदनं। पललं तिलपिष्टं। कार्पासदानमत्रैव धेनुदानं तु शस्यते। कंबलाजिनरत्नानि कंचुकौ पापमोचकौ। उपानद्दानमत्रैव कथितं सर्वकामदं। इति—तिलाः स्वर्णसमायुक्ता दुरितक्षयकारकाः। विष्णुप्रीतिकरा नित्यमतः शांतिं प्रयच्छ मे। इति तिलदानमंत्रः। देवदेव जगन्नाथ वांछितार्थफलप्रद। तिलपात्रं प्रदास्यामि तवांगे संस्थितेरहं। इति तिलपात्रमंत्रः। और्णपट्टमनुध्येयं स्वर्णबीजं तव प्रभो। दत्तं गृहाण देवेश पापं संहर सत्वरं। इति कंबलमंत्रः। निर्णयामृते भविष्योत्तरे—पौर्णमास्यां तु यो माघे पूजयेद्विधिवच्छिवं। सोऽ-

श्वमेधमवाप्येह शिवलोके महीयते। इति दानादिकं विहितं तत्र पौर्वाह्णिकी पौर्णमासी ग्राह्या। माघी मघायुता चेत्स्यात्तस्यां तिलैः श्राद्धं कृत्वा पूतो भवतीति विष्णूक्तेः। श्राद्धे त्वापराह्णिकी ग्राह्या। अस्यां स्नानादिकमावश्यकमित्युक्तं भविष्योत्तरे—वैशाखी कार्तिकी माघी तिथयोतीव पूजिताः। स्नानदानविहीनास्ता न नेयाः पांडुनंदन। इति माघी पौर्णमासी।

अथ फाल्गुन्यां फाल्गुनी फल्गुनीयुता चेत्स्यात्तस्यां ब्राह्मणाय संस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्यां मनोरमां पक्षवतीं द्रविणवतीं चाप्नोति नार्यपि भर्तारमिति विष्णूक्तं शयनदानं। अत्र मंत्रस्तु—यस्मादशून्यं शयनं केशवस्य शिवस्य च। शय्या ममाप्यशून्यास्तु तस्माज्जन्मनि जन्मनि। अशून्यं शयनं नित्यमन्यूनां श्रियमुन्नतिं। सौभाग्यं देहि मे नित्यं शय्यादानेन केशव। इति। कृत्यचिंतामणौ ब्राह्मे—नरो दोलागतं दृष्ट्वा गोविंदं पुरुषोत्तमं। फाल्गुन्यां संयतो भूत्वा गोविंदस्य पुरं व्रजेत्। इति। अत्र पौर्वाह्णिक्येव पौर्णमासी ग्राह्या। अत्रैव होलिकोत्सवः कर्तव्यः। तदुक्तं मदनरत्नोदाहृतभविष्यपुराणे युधिष्ठिरेण पृष्टः कृष्ण उवाच—शृणु राजन्प्रवक्ष्यामि विस्तरेण पुरातनं। चरितं होलिकायास्तु पारंपर्येण चागतम्। आसीत्कृतयुगे पार्थ रघुर्नाम नराधिपः। इत्याद्युपक्रम्य—नाधर्मरुचयः पौरास्तस्मिन् शासति पार्थिवे। तस्यैवं शासतो राज्यं क्षत्रधर्मरतस्य वै। सर्वे पौराः समागम्य त्राहि त्राहीति चाब्रुवन्। पौरा ऊचुः। अस्माकं तु गृहे काचित् ढुंढा नामेति राक्षसी। दिवा रात्रौ समागम्य बालान्पीडयते बलात्। रक्षया दंडकेनापि भेषजैर्वा नराधिप। मंत्रज्ञैः परमाचार्यैः सा नियंतुं न शक्यते। इति तेषां वचः श्रुत्वा पुरोहितमथाब्रवीत्। ढुंढेति राक्षसी केयं किंप्रभावा द्विजोत्तम। कथमेषा नियंतव्या मया दुष्कृतकारिणी। वसिष्ठ उवाच। ढुंढानामेति विख्याता राक्षसी मालिनः सुता। तया चाराधितः शंभुरुग्रेण तपसा पुरा। इत्यादिना वरप्रार्थनानंतरं—एवमस्त्विति तामुक्त्वा पुनः प्रोवाच शूलभृत्। उन्मत्तेभ्यः शिशुभ्यश्च प्रभवस्ते भविष्यति। प्रभवः पराभव इत्यर्थः।

पीडयते बालान् संस्मृत्य हरभाषितम् । एतत्ते सर्वमाख्यातं ढुंढायाश्चरितं मया । सांप्रतं कथयिष्यामि येनोपायेन हन्यते । अद्य पंचदशी शुक्ला फाल्गुनस्य नराधिप । शीतकालो विनिष्क्रांतः प्रातर्ग्रीष्मो भविष्यति । अभयं त्वद्य लोकानां दीयतां पुरुषर्षभ । यथा ह्यशंकिता लोका रमंति च हसंति च । दारुजानि च खड्गानि गृहीत्वा समरोत्सुकाः । योद्धार इव निर्यांतु शिशवः संप्रहर्षिताः[५] । संचयं शुष्ककाष्ठानामुपलानां च कारयेत् । तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मंत्रविस्तरैः । ततः किलकिलाशब्दैस्तालशब्दैर्मनोरमैः । तमग्निं त्रिः परिक्रम्य गायंतु च हसंतु च । तेन शब्देन सा पापा होमेन च निराकृता । भयेन तेन सा रंडा पलायेल्लज्जिता सती । मरिष्यति न संदेहो भस्मीभूता तु पूतना । तस्य तद्वचनं श्रुत्वा स नृपः पांडुनंदन । सर्वं चकार विधिवद्यदुक्तं तेन धीमता । गता सा राक्षसी नाशं तेन चोग्रेण कर्मणा । ततःप्रभृति लोकेऽस्मिन् होलिका ख्यातिमागता । सर्वदुष्टापहो होमः सर्वरोगोपशांतिदः । क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका स्मृता । अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे । गोमयेनोपलिप्ते च सचतुष्के गृहांगणे । आकारयेच्छिशुप्रायान्बहुव्यग्रकरान्नरान् । ते काष्ठखड्गैः संस्पृश्य गीतैर्हास्यकरैः शिशून् । रक्षंति तेभ्यो दातव्यं गुडपक्वान्नमेव च । एवं ढुंढेति राक्षस्याः स दोषः प्रशमं व्रजेत् । बालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे । उपलाः शुष्कगोमयानि । सुचतुष्के सुचतुरस्रे । शिशुप्रायाः शिशुबहुलाः । ते काष्ठेति शिशुभिन्ना नरा इत्यर्थः । रक्षोघ्ना मंत्राः रक्षोहणं वाजिनमित्यादयो वैदिका होमे । पूजामंत्रस्तु—असृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः । अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव । इति । ज्योतिर्निबंधे—फाल्गुने मासि संप्राप्ते शुक्लपक्षे सुखास्पदे । पंचमीप्रमुखास्ताः स्युस्तिथयोनंतपुण्यदाः । दश स्युः शोभनास्तासु काष्ठस्तेयं विधीयते । अपत्यैर्वाथ वृद्धैर्वा युवभिर्वा दिनात्यये । प्राप्तायां पूर्णिमायां तु कुर्यात्तत्काष्ठदीपनम् । चंडालसूतिकागेहाच्छिशुहारितवह्निना । भद्रामुखं परित्यज्य होलाया दीपनं शुभं । स्नात्वा राजा शुचिर्भूत्वा स्वस्तिवाचनतत्परः । दत्त्वा दानानि

---

५ 'संप्रकर्षिताः'.

भूरीणि दीपयेद्धोलिकाचितिं । ग्रामाद्बहिश्च मध्ये वा तू
समन्वितं । दीपनमंत्रः—दीपयाम्यद्य ते घोरां चितिं रा
त्तमे । हिताय सर्वजगतां प्रीतये पार्वतीपतेः । ततोभ्युक्ष्य
सर्वां साज्येन पयसा सुधीः । गंधपुष्पैः समभ्यर्च्य कृत
प्रदक्षिणां । नालिकेराणि देयानि बीजपूराफलानि च । द्रा
दलादीनि फलानि च समर्पयेत् । अर्चयित्वाक्षतैः रक्तैः
सुसंस्कृतैः । गीतैर्वाद्यैस्तथा नृत्यै रात्रिः सा नीयते जनै
मग्निं त्रिःपरिक्रम्य शब्दैर्लिंगभगांकितैः । तेन शब्देन स
राक्षसी तृप्तिमाप्नुयात् । इत्युक्तं । अयं होलिकोत्सवो भ
तपूर्णिमायां प्रदोषे कर्तव्यः । अस्यां निशागमे पार्थ
शिशवो गृहे । बालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे
तद्विधानोक्तलिंगात् तत्र भद्रासत्वे—भद्रायां दीपिता होली
भंगं करोति वै । नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत् । इ
णसमुच्चये भद्रायां निषेधात् । प्रदोषादूर्ध्वं निशीथ
भद्रासमाप्तिश्चेत्तदा प्रदोषादूर्ध्वमपि निशीथात्प्राक् भद्रा
वेव कर्तव्यः । दिनार्धात्परतोपि स्यात्फाल्गुनी पूर्णिमा
रात्रौ भद्रावसाने तु होलिकां तत्र दीपयेत् । इति निर्णय
मदनरत्नाद्युदाहृतपुराणसमुच्चयवचनात् । होलिका
कर्म जनारोग्योत्सवाय च । त्यक्त्वा भद्रां निशीथेपि
भद्राग्निदाहकृत् । इति ज्योतिर्निबंधे नारदवचनाच्च
तु निशीथादूर्ध्वं भद्रासमाप्तिः चतुर्थप्रहरमारभ्य पूर्णिमा
स्तदा निशीथादूर्ध्वं तदनुष्ठाने नारदवाक्ये निशीथेपीत्
यर्थ्यापत्तेः । राकायामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत्
भद्रावसाने च निशीथांतेपि दीपयेत् । इति भविष्य
वाक्ये यामद्वयादित्यस्य वैयर्थ्यापत्तेः । प्रहरद्वयात्परतः प
पूर्णिमा यदा । होलिका तु तदा पूज्या रात्रौ भद्राव
इति ज्योतिर्निबंधोदाहृतवाक्यवैयर्थ्यापत्तेश्च । प्रदोष
ग्राह्या पूर्णिमा फाल्गुनी सदा । तस्यां भद्रामुखं त्यक्त्व
होला निशामुखे । इति ज्योतिर्निबंधे नारदवचनेन
मुखोत्तरं भद्रायामेव प्रदोषे एव तद्विधानात्तत्रैव कार्यः
परिमाणमुक्तं नारदसंहितायां—मुखे पंच गले त्वेका
कादश स्मृताः । नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छ

डिकाः। इति इदं पंचनाडीपरिमितं मुखं आदिभागे एव निशामुखसाहचर्यात्। दिनमुखमित्यादौ तथैव निश्चयात् निषिद्धस्य सर्वस्य त्यागासंभवे—प्रतिपद्याश्विने मासि भावो वैधृतिचित्रयोः। आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम्। इत्यादौ आदिभागत्यागस्यैव दर्शनात्। यत्तु—पंचद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसदिति मुहूर्तचिंतामणावुक्तं तत्—जलशिखिशशिरक्षःशर्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः। नियतमृषिभिराशासंख्ययामक्रमेण स्फुटमिह परिहार्यं मंगलेष्वेतदेव। इति रत्नमालोक्तेर्मंगलकार्यविषयकमेव न हुताशनीविषयम्। तद्विषयत्वे पूर्णिमायां चतुर्थप्रहरे विष्टिमुखस्वीकारे प्रदोषव्यापिनीति नारदवाक्यस्य निर्विषयत्वापत्तेः। नच यदा चतुर्दशी प्रहरमात्रं तदा पूर्णिमाप्रवृत्तिः ततः प्रदोषे तन्मुखसंभवात् सावकाशं वचनमिति वाच्यं। निशीथांतात्पूर्वं भद्रावसानसंभवे—होलां भद्रावसाने तु निशीथांतेपि दीपयेत्। इति नारदवचनांतरेणावसाने एव तद्विधानेनास्य वैयर्थ्यात्। नच निशीथादनंतरं भद्रासमाप्तिस्थले सावकाशमिति शंक्यं। तत्रापि प्रदोषे मुखप्रसक्त्यभावेन वैयर्थ्यस्य स्पष्टत्वात्। तस्मान्मंगलादिविषयकमेव तन्मुखं न हुताशनीविषयमिति सिद्धं। अतएव तदेतदावश्यककार्यसंभवे सति मुखदिङ्मुखयात्रानिषेधकमिति तट्टीका संगच्छते इति दिक्। नचैवं—प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा। संवत्सरं च तद्राष्ट्रं पुरं दहति सा द्रुतं। इति भद्रानिषेधकनारदपूर्ववाक्यविरोधः। उत्तरवाक्येन मुखोत्तरं भद्रायामेव तद्विधानात्। विधिस्पृष्टे निषेधायोगात्पूर्ववाक्यगतभद्राशब्दस्य मुखपरत्वस्यावश्यकत्वेन तद्विरोधाभावात्। अतएव—त्यक्त्वा भद्रां निशीथेपीत्यादि नारदादिवाक्याविरोधार्थं वाक्यांतरगतरात्रिशब्दस्य पूर्वार्धपरत्वस्यावश्यकत्वात् रात्रौ भद्रावसाने त्विति पुराणसमुच्चयवचनस्यापि निशीथादूर्ध्वं विधायकत्वासंभवात् न तस्मादपि तत्र प्राप्तिः। अतएव च—हुताशनीं फाल्गुनपौर्णमास्यां निशीथपूर्वं ज्वलयेच्छुभार्थी। पश्चात्तमी तज्ज्वलने दिवा वा नृपश्रियं हंत्यपि पक्षतिर्वा। इति ज्योतिर्विदाभरणे रात्र्युत्तरार्धस्यानिष्टकारकत्वबोधककालिदासोक्तिःसंगच्छते। नारदादिवचनमूलकत्वात् विष्टिस्तदा नित्यतया न दोषकृदिति

कालिदासोक्तिरपि विष्टिशब्दस्य विष्टिमुखोत्तरविष्टि
संगतैव । भद्रायां विहितं कार्यं होलिकायाः प्रपूजनं ।
मध्यरात्रिमतिक्रम्य विष्टिपूर्तिर्यदा भवेत् । प्रदोषे ज्वाल
सुखसौभाग्यदायकं । प्रदोषान्मध्यरात्रांतं होलिकापूजनं शु
द्वैतनिर्णयमयूखोदाहृतवचनमपि संगतमेव । प्रदो
रत्नलोपपंचम्यां नारदादिवाक्यसंवादितत्वात् । एवं सती
लमिति द्वैतनिर्णयः अनाकरमिति मयूखश्चोपेक्ष्यः ।
दिवचनार्थापर्यालोचनमूलकत्वात् । एतेन राका यामद्वय
वचनात् निशीथात्परमपि कार्यमिति द्वैतनिर्णयः । शेषः
द्यः स्मृत इति पारिभाषितसूर्योदयात्पूर्वं भद्रावसाने का
स्मृतिकौस्तुभः कृत्यरत्नावलिः, पूर्वेद्युरेव रात्रौ
विहाय कार्येति मयूखश्च नारदादिवचनकालिदासाद्यु
क्तिविरुद्धत्वादुपेक्ष्या एव । यदा पूर्वप्रदोषो भद्रामुख
उत्तरत्रास्तात्पूर्वमेव पूर्णिमा समाप्ता प्रतिपदश्च वृद्धिर्नास्ति
प्रदोषानंतरमपि निशीथात्प्रागेव भद्रामुखोत्तरं कर्तव्यः ।
व्यापिनी न स्यात्तदा पूर्वदिने भवेत् । भद्रामुखं वर्जयित्वा
कायाः प्रदीपनं । इति ज्योतिर्निबंधे नारदवचनात्
यदा पूर्वरात्रौ भद्रारहितः कालो न लभ्यते तदा भद्र
कार्यं । पृथिव्यां यानि कर्माणि शुभानि त्वशुभानि च ।
सर्वाणि सिद्ध्यंति विष्टिपुच्छे न संशयः । इति वचन
द्वैतनिर्णयाद्यः सर्वे नवीनग्रंथा उपेक्ष्याः । नारद
विरुद्धत्वात् । असिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चि
सर्पिण्यास्तु मुखं त्याज्यं वृश्चिकयाः पुच्छमेव च । इति वाक्य
नमूलत्वाच्च । यदा पूर्वत्र प्रदोषे भद्रामुखोत्तरकाललाभेपि
यदिने सार्धयामत्रयपरिमिता ततोऽधिका वा पूर्णिमा प्रति
वृद्धिः तदा–सार्धयामत्रयं वा स्याद्द्वितीये दिवसे यदा ।
पद्वर्धमाना तु तदा सा होलिका स्मृता । इति निर्णयामृत
नरत्नाद्युदाहृतनिरवकाशभविष्योत्तरवचनादुत्तरदिन
तत्र मुख्यप्रदोषानुरोधेन प्रतिपदि तदनुष्ठाने प्रतिपद्भूत
यार्चिता होलिका दिवा । इति नारदवाक्यस्य होलि
प्रतिपदं वर्जयेदित्यर्थकवह्नौ वह्निं विवर्जयेदिति निर्णयामृ
दनरत्नाद्युदाहृतपुराणसमुच्चयवाक्यस्य च विरोधाप

पूर्णिमांत्यभागे सायाह्ने एवानुष्ठानं । नच तत्रापि यार्चिता होलिका दिवेति नारदवाक्यविरोधो दुष्परिहर इति शंक्यम् । सायाह्ने होलिकां कुर्यात्पूर्वाह्ने क्रीडनं गवां । दीपं दद्यात्प्रदोषे तु एष धर्मः सनातनः । इति निर्णयामृतज्योतिर्निबंधाभ्यां बलिराजप्रतिपत्प्रकरणे मदनरत्नेन च निरवकाशपुराणसमुच्चयवचनेन सायाह्ने तद्विधानात् विधिस्पृष्टे निषेधायोगात् दिवाशब्दस्य सायाह्नभागातिरिक्तदिवसपरत्वकल्पनस्यावश्यकत्वेन तद्विरोधाभावात् । अतएव -सूर्यास्तकालावधिरेव पूर्णिमाधिकोनगा वा कलया तदा कृते । श्राद्धे च तत्र ज्वलिता हुताशनी नंदातिथौ स्याद्व्रजउत्सवः श्रियै । इत्यापराह्णिकश्राद्धोत्तरं सायाह्ने अनुष्ठानबोधकज्योतिर्विदाभरणे कालिदासोक्तिः संगच्छते । सायाह्ने होलिकावचनमूलकत्वात् । एतेन प्रदोषे प्रतिपद्येव कार्येति द्वैतनिर्णयो मयूखो निर्णयसिंधुः स्मृतिकौस्तुभः कृत्यरत्नावल्यादयश्चोपेक्ष्याः । नारदवचनपुराणसमुच्चयवचनादिविरुद्धत्वात् । अतएव वह्नौ वह्निं परित्यजेदिति वचनं सायंकाले भद्रारहितपूर्णिमासंभवे तामतिक्रम्य प्रतिपदि न कर्तव्येत्येतत्परमिति निर्णयामृतः संगच्छत इति दिक् । इत्थं सर्ववाक्याविरोधेन कृतस्य होलिकानिर्णयस्यायं संग्रहः । यदा पूर्वदिने निशीथांतात्प्राक् भद्रावसानोत्तरकाललाभस्तदा तत्रैव होलिका दीपनीया । यदा निशीथानंतरं भद्रासमाप्तिस्तदा भद्रामुखोत्तरं भद्रायामपि प्रदोषे एव । यदा प्रदोषो भद्रामुखव्याप्तस्तदा प्रदोषानंतरमपि भद्रामुखोत्तरमेव । यदा तु द्वितीयदिने सार्धयामत्रयं पूर्णिमा प्रतिपदश्च वृद्धिस्तदा पूर्णिमांत्यभागे सायाह्नकाले एव दीपनीया । इति होलिकानिर्णयः ।

चैत्रादिमासर्क्षयुक्ताश्चैत्र्यादयोऽतिप्रशस्ताः । तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे—पौर्णमासीषु सर्वासु मासर्क्षसहितासु च । दत्तानामिह दानानां फलं दशगुणं भवेत् । तत्रैव स्कांदे—यस्यां पूर्णेंदुना योगं याति जीवो महाबलः । पौर्णमासी तु सा ज्ञेया महापूर्वा द्विजोत्तम । स्नानं दानं तथा जप्यमनंतफलदं स्मृतम् । ऐंद्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठीति कीर्तिता । ऐंद्रं ज्येष्ठा । प्राजापत्यं रोहिणी । तत्रैव ब्रह्मपुराणे—मेषराशौ यदा सौरिः सिंहे चंद्रबृहस्पती । भास्करः

श्रवणर्क्षे स्यान्महामाघीति सा स्मृता । शालग्रामे महाचैत्री कृता पुंसां महाफला । गंगायां चैव वैशाखी ज्येष्ठी वै पुरुषोत्तमे । आषाढी वै कनखले केदारे श्रावणी तथा । महाभाद्री बदर्यां च कुब्जायामेव चाश्विनी । पुष्करे कार्तिकी कान्यकुब्जे मार्गशिरी तथा । अयोध्यायां महापौषी कृताः स्युः सुमहाफलाः । महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा । इति । स्थलांतरेष्वेताः प्रशस्ताः । तदाह **निर्णयामृते गार्ग्यः**–आसु यत्क्रियते श्राद्धं यच्च दानं यथाविधि । उपवासादिकं यच्च तदनंतफलं स्मृतं । इति । इति पुरुषार्थचिंतामणौ कालखंडे पौर्णमासीनिर्णयः ।

**अथामावास्या निर्णीयते**। साच सावित्रीव्रतातिरिक्तव्रतोपवासादौ उत्तरविद्धैव ग्राह्या । प्रतिपद्यप्यमावास्येति युग्मवाक्यात् । **हेमाद्रौ पद्मपुराणेपि**–षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी । एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा । इति । **प्रचेताः**–नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी । दशम्यैकादशी विद्धा त्रयोदश्या चतुर्दशी । भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुंगव । उत्तरोत्तरविद्धास्ताः कर्तव्याः काठकी श्रुतिः । **मदनरत्ने वृद्धवसिष्ठो हेमाद्रौ पद्मपुराणं च**–एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । इति । सावित्रीव्रते तु पूर्वैव–भूतविद्धा न कर्तव्या दर्शः पूर्णा कदाचन । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् । इति **ब्रह्मवैवर्तात्**। भूतविद्धा ह्यमावास्या न कर्तव्या कदाचन । वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन । इति **हेमाद्रौ स्कांदाच्च** । कृष्णा षष्ठी बृहत्तपा सावित्री वटपैतृकी । अनंगत्रयोदशी रंभा उपोष्याः पूर्वसंयुताः । इति **निगमाच्च** । व्रतविधिस्तु **निर्णयामृतमदनरत्नोदाहृतभविष्योत्तरे**–अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् । अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया । अयाचितं चतुर्दश्याममायां समुपोषणं । इत्यादिनोक्तः । अत्र पूर्णिमांतज्येष्ठमासस्यामावास्या पूर्वविद्धा ग्राह्या । तदनुरोधेन त्रयोदशीचतुर्दश्यौ ग्राह्ये । इति ज्येष्ठामावास्या ।

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः । इति **हारीतेन** दर्भसंग्रह उक्तः ।

मासे नभस्येऽमावास्या तस्यां दर्भोच्चयो मतः। इति मरीचिवाक्येन नभस्यो भाद्रपदः। दर्शांते तस्मिन्महालयान्तर्गतामावास्येति लभ्यते इति केचित्। वस्तुतस्तु दर्शांतः पूर्णिमांतो वेति चांद्रस्य द्वैविध्याज्जन्माष्टम्यादौ व्यवहारद्वैविध्येप्येकैव जन्माष्टमीति सिद्धांतः। तथा प्रकृतेपि दर्शांताभिप्रायेण हारीतवचनं, पूर्णिमांताभिप्रायेण मारीचमिति जन्माष्टम्युत्तरैकैवामावास्येति युक्तं। तत्र—समित्पुष्पकुशादीनां द्वितीयः प्रहरो मतः। इति द्वितीयप्रहरे विधानात्तद्व्यापिनी ग्राह्या। अस्यां कुलस्तंभयात्रोक्ता काशीतत्वप्रकाशिकायां लैंगे—कपालं पतितं तत्र स्नातस्य मम सुंदरि। तस्मिन्स्नातो वरारोहे ब्रह्महत्यां व्यपोहति। कपालेश्वरनामानं तस्मिंस्तीर्थे व्यवस्थितं। अश्वमेधमवाप्नोति दर्शनात्तस्य सुंदरि। तस्यैव चोत्तरे पार्श्वे तीर्थं त्रैलोक्यविश्रुतं। तत्र स्नात्वा वरारोहे ऋणैर्मुक्तो भवेन्नरः। ऋणमोचनकं नाम्ना विख्यातं भुवि सुंदरि। त्रीणि लिंगानि तिष्ठंति तत्रैव मम सुंदरि। तानि दृष्ट्वा तु सुश्रोणि नश्यते त्रिविधं ऋणम्। तस्मात्सीतोदकं नाम लोके ख्यातिं गमिष्यति। मयापि चात्र स्नातव्यं ब्रह्मणा विष्णुना सह। सीतोदकं पापमोचनं। यत्र स्तंभे सदा देवि अहं तिष्ठामि सुंदरि। तत्र गत्वा तु यः पूजां मम देवि करिष्यति। सर्वपापविनिर्मुक्तो गच्छेच्च परमां गतिं। कुलस्तंभस्य मूलेऽन्नं दद्यादामलकोन्मितं। परलोकेष्वशेषेषु क्षुधया नैव पीड्यते। तत्र वैतरणी नाम दीर्घिका पश्चिमोन्मुखी। तस्यां स्नातो वरारोहे नरकं नैव गच्छति। इति।

महालयगतामावास्या हस्तनक्षत्रयोगे गजच्छायाभिधा। तदाह बौधायनः—हंसे करस्थिते या तु अमावास्या करान्विता। सा ज्ञेया कुंजरच्छाया इति बौधायनोऽब्रवीत्। इति। कार्तिकामावास्यानिर्णयस्तु दीपावलीप्रकरण एवोक्तः। अमायां माघमासस्य पूजयित्वा पितामहं। सावित्र्या सहितं देवं वेदवेदांगभूषितं। नवनीतमयीं धेनुं फलैर्नानाविधैर्युतां। सहिरण्यां सवस्त्रां च ब्राह्मणाय निवेदयेत्। इति निर्णयामृते ब्रह्मपुराणे नवनीतधेनुदानमुक्तं। तत्र दैविकत्वात्पौर्वाह्णिकी ग्राह्या। हेमाद्रौ विष्णुपुराणे—माघासिता पंचदशी कदाचिदुपैति योगं यदि

वारुणेन । ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ । वारुणमृक्षं शततारका । **निर्णयामृते विष्णुपुराणे**—तत्रैव चेद्भाद्रपदस्तु पूर्वः काले तदा यत्क्रियते पितृभ्यः । श्राद्धं परं तृप्तिमवाप्नुवंति युगान्सहस्रं पितरश्च तेन । इति । पूर्वाभाद्रपदायोगोपि प्रशस्त उक्तः । धनिष्ठायोगोतिप्रशस्तः । तदुक्तं **निर्णयामृते भारते**—काले धनिष्ठा यदि नाम तस्मिन्भवेत्तु भूपाल तदा पितृभ्यः । दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः । इति ।

अस्यां रविवारश्रवणनक्षत्रव्यतीपातयोगे **अर्धोदयनामको** योगो भवति । तदुक्तं **निर्णयामृतमदनरत्नयोर्महाभारते**—अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः । इति । **निर्णयामृते तिथितत्वे** च अस्य शेषः—दिवैव शस्तो योगोऽयं ननु रात्रौ कदाचन । इति पठ्यते । एतेन रात्रावपि कदाचनेत्यर्वाचीनोदाहृतपाठोऽयुक्तत्वादुपेक्ष्यः । **मदनरत्ने स्कांदमपि**—माघामायां व्यतीपाते आदित्ये विष्णुदैवते । अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समं । तथा—माघमासे कृष्णपक्षे पंचदश्यां रवेर्दिनं । वैष्णवेन तु ऋक्षेण व्यतीपातस्तु दुर्लभः । इति । **निर्णयामृते स्कांदे** अर्धोदये तु संप्राप्ते सर्वं गंगासमं जलम् । शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसंमिताः । यत्किंचित्क्रियते दानं मेरुसंनिभमिष्यते । चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत् । चत्वारिंशात्पलं वापि पंचविंशतिमेव वा । निधाय पायसं तत्र पद्ममष्टदलं लिखेत् । पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम् । तदभावे तदर्धं वा तदर्धं वापि धारयेत् । कृत्वा तु तंदुलैः शुद्धैः पद्ममष्टदलं शुभं । अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् । तेषां प्रीतिकरार्थाय श्वेतमाल्यैः सुशोभनैः । वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत् । **मंत्रः**—सुवर्णपायसामत्रं यस्मादेतत्त्रयात्मकं । आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम । इति । समुद्रमेखला पृथ्वी सम्यक् दत्तस्य यत्फलं । तत्फलं लभते मर्त्यः कृत्वा दानममत्रकं । इति । इत्यर्धोदयः ।

आर्द्रादिनक्षत्रयुक्ता सामावास्या श्राद्धेऽतिप्रशस्ता । तदुक्तं **हेमाद्रिनिर्णयामृतयोर्विष्णुपुराणे**—अमावास्या यदा मैत्रविशाखास्वातियोगिनी । **श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवा-**

र्षिकी । अमावास्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ । द्वादशाब्दीं तदा तृप्तिं प्रयांति पितरोऽर्चिताः । इति । हेमाद्रौ शातातपः—अमावास्या भवेद्वारे यदा भूमिसुतस्य वै । जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत् । तत्रैव महाभारते—अमा सोमे तथा भौमे गुरुवारे यदा भवेत् । तत्तीर्थं पुष्करं नाम सूर्यपर्वशताधिकम् । श्रावणाश्विधनिष्ठार्द्रा नागदैवतमस्तकैः । अमा चेद्रविवारेण व्यतीपातः स उच्यते । तत्र दत्तं हुतं जप्तं सर्वं कोटिगुणं भवेत् । इति । शंखः—अमावास्या तु सोमेन सप्तमी भानुना सह । चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी । चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसंनिभाः । स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् । इति । इति पुरुषार्थचिंतामणौ कालखंडे अमावास्यानिर्णयः ।

अथेष्ट्युपयोगिपर्व[1] निर्णीयते । तत्र पर्व द्विधा । पौर्णमासी अमावस्या चेति । तयोः स्वरूपं गोभिलेन दर्शितं—यः परमो विप्रकर्षः सूर्याचंद्रमसोः सा पौर्णमासी, यः परमः संनिकर्षः सा अमावास्येति । तत्र पूर्णिमानिर्वचनं मत्स्यब्रह्मांडपुराणयोः—कलाक्षये व्यतिक्रांते दिवा पूर्णौ परस्परम् । चंद्रादित्यौ पराह्णे तु पूर्णत्वात्पूर्णिमा स्मृता । इति । अपराह्णे सूर्यास्तमयकाले यथादित्यः संपूर्णमंडलः सन्नस्तमेति यथोत्तरक्षणे चंद्रः संपूर्णमंडलः सन्नुदेतीति दृष्टांतदार्ष्टांतिकभावविवक्षया आदित्यचंद्रयोरुपन्यासः । अमावास्यानिर्वचनं मत्स्यवायुब्रह्मांडपुराणेषु—अमावसेतामृक्षे तु यदा चंद्रदिवाकरौ । एषा पंचदशी रात्रिरमावास्या ततस्तु सा । इति । शतपथब्राह्मणे तु—ते देवा अब्रुवन् अमा वै नोद्य वसु वसति यो नः प्रावात्सीदित्यादिना देवेंद्रसमागमनिमित्तकमपि निर्वचनं । एवमादिबहुविधं हेमाद्र्यादौ तत्प्रकृतानुपयोगान्न लिखितं । ते च पौर्णमास्यमावास्ये द्विविधे । तयोः स्वरूपं कठशाखायामैतरेयब्राह्मणे च—या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूरिति । तल्लक्षणमुक्तं बृहद्वसिष्ठेन—राका संपूर्णचंद्रा स्यात्कलोनानुमतिः स्मृता । पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता । रात्रिदृष्टे पुनस्तस्मिन्सैव

---

1 'अथैतदुपयोगि'.

राकेति कीर्तिता । दृष्टचंद्राममावास्यां सिनीवालीं प्रचक्षते । एतामेव कुहूमाहुर्नष्टचंद्रां महर्षयः । इति । तत्र कुहूभिन्नानां तिसृणां लघ्वक्षरोच्चारणपरिमितः कालः संधिरित्युच्यते । कुह्वास्त्वक्षरद्वयपरिमितः । तदुक्तं हेमाद्रौ भगवतीपुराणे—अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना । एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता । इति । लवस्वरूपं माधवे स्मृत्यंतरे—लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते । त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयं । तथाच लवद्वयं लघ्वक्षरं भवतीति लघ्वक्षरपरिमिते काले एकः पर्वणो भागो द्वितीयः प्रतिपदः तदुभयं मिलितं संधिर्भवति । कुहूप्रतिपदोः संधिस्तु द्विगुणः । हेमाद्रौ मत्स्यब्रह्मांडपुराणयोः—कुहिति कोकिलेनोक्ते यावान्कालः समाप्यते । तत्कालसंज्ञिता चैषा अमावास्या कुहूः स्मृता । इति । इति संधिस्वरूपे ज्ञाते संधौ यजेतेति श्रुतेः संधौ यागः कर्तव्यः । तस्य चातिसूक्ष्मत्वेन कर्मानुष्ठानायोग्यत्वात्संधिशब्दः संधिपार्श्वद्वयं लक्षयति । तथाच संधिपार्श्वद्वये संधौ यजेतेति श्रुतिर्यागं विधत्ते । अतएव श्रुत्यंतरं संधिमभितो यजेतेति । हेमाद्रौ बौधायनोपि—सूक्ष्मत्वात्संधिकालस्य संधेर्विषय उच्यते । सामीप्यं विषयं प्राहुः पूर्वेणाथ परेण वा । इति । अत्र पूर्वापरशब्दाभ्यां संधेः प्राचीनं पूर्वदिनं उत्तरं प्रतिपद्दिनं चाभिधीयते । तत्र व्यवस्थामाह श्रुतिः—पूर्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवसतीति । अन्वाधानं नाम इध्माबर्हिःसंपादनं अग्निपरिग्रहः उपस्तरणं चेत्येवमादिः प्रयोगप्रारंभः स पूर्वेद्युः कर्तव्यः । शातपथेपि—पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्यजतीति । अत्राग्निग्रहणं नामाध्वर्युणा आहवनीयगार्हपत्यदक्षिणाग्निषु ममाग्ने वर्च इत्यादिमृग्भिः समिदाधानलक्षणेन्वाधाने क्रियमाणे पार्श्ववर्तिना यजमानेन अग्निं गृह्णामि इत्यादिमंत्रपठनं । तदिदं पर्वदिने क्रियते प्रतिपद्दिने तु कर्मणे वां देवेभ्यः शकेयमित्यादिभिरध्वर्युर्हस्तप्रक्षालनतंडुलनिर्वापपुरोडाशप्रदानादिलक्षणं प्रयोगं करोति । तदिदं यजनं । एतदेवाभिप्रेत्य गोभिलः—पक्षांता उपवस्तव्याः पक्षादयोभियष्टव्याः इति । अत्रोपवासशब्देनाग्न्युपस्तरणादिर्विवक्षितः ।

त्तिरीयब्राह्मणे—उपास्मिञ्छ्वोयक्ष्यमाणे देवता वसंति य एवं विद्वानग्निमुपस्तृणातीति । लौगाक्षिणात्र विशेषो दर्शितः । त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः । द्वावंशावुत्सृजेदंत्यौ यागे च व्रतकर्मणि । इति । औपवस्तस्याग्न्यान्वाधानादेः त्रीनंशान्विदुः । यागस्य चतुरोंशान्विदुः । अंत्यावंशौ पंचदशीप्रतिपत्संबंधिनौ उत्सृजेत्परित्यजेत् । पंचदश्या अंत्यमंशं व्रतकर्मणि प्रतिपदंत्यं यागे इत्यर्थः । तत्रापि पर्वचतुर्थांशत्यागः सद्यस्कालातिरिक्तविषयः । तत्र चतुर्थांशे एव सद्यो वा सद्यस्कालायामित्यादिना तद्विधानात् । ते के चत्वार इत्याकांक्षायां यज्ञपार्श्वः- पंचदश्याः परः पादः पक्षादेः प्रथमास्त्रयः । कालः पार्वणयागे स्यादन्यथा तु न विद्यते । कात्यायनः—न यष्टव्यं चतुर्थंशे यागे प्रतिपदः क्वचित् । रक्षांसि तद्विलुंपंति श्रुतिरेषा सनातनी । तथा—प्रतिपदंशास्त्रयो भूताः पादश्चैकश्च तिष्ठति । यातयामः स विज्ञेयो न हि भस्मनि हूयते । नच पर्वचतुर्थांशादि स्मार्ते यागकाले गृह्यमाणे संधौ यजेतेत्यादिश्रुतिविरोधः । संधेरतिसूक्ष्मत्वेन तत्र सांगप्रयोगानुपपत्तेः । संध्यादिश्रुत्यपेक्षितसंधिसामीप्यावधिविषयत्वात्स्मृतेः । यथा स्वयंविशेषाक्षेपासमर्थोपि अक्ताः शर्करा उपदधातीति विधिः वाक्यशेषोपस्थापितं घृतं, यथा वा पशुना यजेतेति विधिः मंत्रवर्णप्रापितं छागं स्वीकरोति तथा संधौ यजेतेति श्रुतिः स्मृतिवाक्यप्रापितं पर्वचतुर्थांशादिकं संधिपरिच्छेदकं स्वीकरोत्येव । पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति श्रुतिद्वयमुक्तसंधिपरं पर्वचतुर्थांशपरं वा बोध्यं । तत्राप्यहन्येव यागः । पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्यजतीत्यहर्विधानात् । तत्रापि पूर्वाह्ण एव । पूर्वाह्णो वै देवानामिति श्रुतेः । तत्रापि प्रातरेव । पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः । इति । वृद्धशातातपवचनात् प्रातर्यजध्वमिति मंत्रलिंगाच्च । तथा अंगिरसोमास्य यज्ञस्य प्रातरनुवाकैरवंत्विति श्रुतेश्च । अत्र प्रातरिति विशेषणात्सूर्योदयोत्तरं मुहूर्तत्रयं यागकाल इत्युक्तं भवति, न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यादिति प्रातःकालस्यैव यागसंबंधावगमाच्च । कात्यायनेनापि सद्यो वा प्रातरिति प्रातःकाल एवोक्तः । हेमाद्रौ श्रुत्यंतरेपि—तत्र

यजेत यत्रैनं पश्चादस्तमितं पुरस्तादादित्योऽभ्युदेतीति । आदित्योदयकाल एव यजेतेत्यवगम्यते । उदिते आदित्ये पौर्णमास्यास्तंत्रं प्रब्रवीमीत्युदयानंतरमेव यागानुष्ठानमापस्तंबेनोक्तं । प्रागुदयादमावास्याया इत्यत्रोदयात्पूर्वमुपक्रम एव न त्विष्टिः अहर्विधानविरोधात् । हेमाद्रौ स्मृत्यंतरं च–पूर्वोदिते कलाहीने चंद्रे पूर्वां विचक्षणः । उपावसेदिति शेषः । तदेवं पर्वण्यन्वाधानं प्रतिपदि चेष्टिरिति संधिपार्श्वयोः प्रारंभसमाप्ती । यदा रात्रौ पर्वसमाप्तिस्तदा व्यवस्थिते एव सर्वेषां । दिवा संधौ तु उदितानुदितहोमवत्तत्तच्छाखोक्तविशेषानुरोधेनैव व्यवस्था वक्तव्या । तत्र तावद्बौधायनमतानुसारिणां रात्रिसंधौ तदहरन्वाधानमुत्तरेद्युर्यागः दिवा संधौ पूर्वेद्युरुपवासस्तदहर्यागः । तदाह कर्मांतसूत्रे **बौधायनः**–अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थानावाचार्या ब्रुवते । अत्रोदाहरंत्यूर्ध्वमर्धरात्रात्पौर्णमास्यां चंद्रमाः पूर्यते स एतं चापररात्रं पूर्णो भवति सर्वं चाहरुत्तरस्याश्च रात्रेरामध्यरात्रादमावास्याया उपवसथीये[1]ऽहन्यूर्ध्वं मध्यंदिनाच्चंद्रमसमादित्यो लभते स एतं चापराह्णं लब्धो भवति सर्वां च रात्रिं उत्तरस्य चाह्न आमध्यंदिनादेतं संधिमभियजेतेति रात्रिर्ह पौर्णमास्यां संधेया भवत्यहरमावास्यायां द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वां पूर्वां पौर्णमासीमुत्तरामुत्तराममावास्यामिति । अत्रोदाहरंति श्रुतिमिति शेषः । पौर्णमास्यामिति विषयनिर्देशः । ऊर्ध्वं मध्यरात्राच्चंद्रमाः पूर्यते पौर्णमासी प्रवर्तत इत्युक्तं भवति । सैतमपररात्रमनंतरं च सर्वमहरुत्तरस्यां रात्रेरामध्यरात्रादनुवर्तते ततो विच्छिद्यते सोयं रात्रिसंधिरुक्तः । अथामावास्याविषये औपवसथीये[2]हनि यागदिनात्पूर्वेद्युरूर्ध्वं मध्यंदिनाच्चंद्रमसमादित्यो लभते अमावास्या प्रवर्तते सैतमपराह्णमनंतरां सर्वां रात्रिमुत्तरस्याह्न आमध्यंदिनादनुवर्तते ततः प्रतिपद्भवति स एष दिवासंधिरुक्तः । एतं रात्रिसंधिमभिलक्ष्य संधेः पूर्वेद्युरग्नीनन्वाधायोत्तरेद्युर्यजेत । तथा एतं दिवासंधिमभिलक्ष्य तदहर्यजेतेति । एवं श्रुतिमुदाहृत्य तद्गतौ मध्यरात्रमध्यंदिनशब्दौ रात्रिसंधिदिवासंध्ययोरुपलक्षकौ विवक्षिताविति प्रतिपादितं भवति । अनयोश्च पौर्णमास्यमावास्याविषयश्रुत्योः प्रदर्शनार्थत्वं

---

१ 'उपवसनीये'. २ 'औपवसनीये'.

वक्तुमुत्तरसूत्रे द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वा पूर्वां पौर्णमासी-मुत्तरामुत्तराममावास्यामित्यस्यायमर्थः । रात्रिसंधिदिवासंधि-मत्यौ द्वे पौर्णमास्यौ दिवासंधिरात्रिसंधिमत्यौ च द्वे अमावास्ये। तत्र दिवासंधिः पूर्वा अमावास्या पौर्णमासी वा । रात्रिसंधिस्तूत्तरा। अत्र पूर्वामावास्योक्ता न तु पौर्णमासी तामुपमाव्याजेनाह पूर्वां पौर्णमासीमिति । अयमर्थः—पूर्वाममावास्यामिव पूर्वां पौर्ण-मासीं जानीयादिति । ततश्च दिवासंधिमत्यां पौर्णमास्यां यागः पूर्वेद्युरुपवास इति सिद्धं । तथा उत्तरा पौर्णमास्युक्ता न त्वमा-वास्या। तां पौर्णमासीं निरूपयन्नाह—उत्तरामुत्तराममावास्यामिति उत्तरां पौर्णमासीमुक्तामिवोत्तराममावास्यां जानीयादिति । त-तश्च रात्रिगतामावास्यां प्रतिपत्संधिमुपवासयागयोर्मध्ये कुर्या-दित्यर्थः । इति हेमाद्रिणेत्थं व्याख्यानात् । नन्वेवं ग्रीष्मकाले सूर्यास्तासन्नसंधिमद्दिने प्रातःकाले पर्वद्वितीयांशतृतीयांशयोर्या-गानुष्ठानं प्राप्नोति । तच्च पर्वणो यश्चतुर्थांश इत्यादिस्मृतिवि-रुद्धम् । भवतु तर्हि पर्वचतुर्थांशे संधिसमीपेऽनुष्ठानं । तस्यापि प्रातर्यजध्वमिति श्रुतिविरुद्धत्वात् । अतएव एतादृशविषये माधवाचार्यैः—संधिर्यत्रापराह्णे स्याद्यागं प्रातः परेऽहनि। कुर्वा-णः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति। इत्यनेन उत्तरत्रैवेत्युक्तम् । इदमपि उदाहृतबौधायनसूत्र—उदाहरिष्यमाणानेकवचनविरुद्ध-मेव । यदपि निर्णयामृतमदनरत्नाभ्यां कैश्चिदाधुनिकैश्च सं-धिर्यत्रापराह्णे स्यादिति वचनमेव निर्णायकत्वेन पुरस्कृतं तत्तु-तरामेव । कालतत्त्वविवेचने च उत्तरदिने प्रतिपच्चतुर्थांशेपि पौर्णिमास्यां शातातपवचनाद्याग इति माधवादिबहूनां संमतं । हेमाद्रेस्त्वस्य वचनत्वासंमतेरुत्तरत्र प्रतिपत्तृतीयांशसत्वे एव या-गोऽन्यथा तु पूर्वत्रैवेत्युक्तं । इदमपि सर्वं तथैव। नच प्रातर्यज-ध्वमिति मंत्रलिंगात्प्रातःकाल एवादर्तव्य इति युक्तं । अप्राकर-णिकमंत्रलिंगात्संधौ यजेतेति श्रुतेर्बलवत्त्वात् । अतएव प्रायश्चि-त्तप्रदीपे—पर्वण्यस्तमयात्पूर्वं सप्ताष्टनाडिकापरिमितः प्रविष्ट-स्तस्मिन्नहनि यागः पूर्वेद्युरन्वाधानं । यथाह भवस्वामी—इष्टप्रयोगपर्याप्ते प्रविष्टे प्रतिपत्तिथौ । यद्यव्यमपराह्णेपि नालं चे-दुत्तरेहनि । गोपालकारिकायामपि—अन्यो दिनांते रात्र्यां वा प्राह्णेऽपि संधियागयोः । संनियानमतस्तेन काले होमोऽप्यना-

इतः । इत्युक्तं । नच तत्तत्स्मृत्युक्तं तत्तत्स्मृतिकर्तृसंबंधिनामेवावश्यकं नान्येषामिति न तद्विरोध इति वाच्यम् । अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यादिति सूत्रे प्रथमे स्मृत्याचाराणां सर्वसाधारण्यव्यवस्थानात् परकृतिपुराकल्पमिति सूत्रे षष्ठे वृष्णिकर्तृको ह्यत्र माषपाकः स्तूयते । तस्मात्तद्गोत्रैरेव कर्तव्य इति पूर्वपक्षे माषपाकमात्रं विधीयते । तत्त्वविशेषात्सर्वपुंसां धर्म इति तंत्ररत्ने सिद्धांतितत्वाच्च । नच बौधायनशाखोक्तं कर्म भिन्नमेव । तत्र—बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् । इति बैजवापवचनान्न दोष इति वाच्यम् । एकं वा संयोगरूपचोदनाख्याविशेषादिति सूत्रे द्वितीये—सर्वत्र प्रत्यभिज्ञानात्संज्ञारूपगुणादिभिः । एककर्मत्वविज्ञानं न शाखास्वपगच्छति । इति वार्तिकेनैव शाखाभेदेन कर्मभेदस्य निरस्तत्वात्, बैजवापवचनस्य तु सर्वशाखोक्तांगोपसंहारेण कर्तुमसमर्थेनापि स्वशाखोक्तमात्रमप्यवश्यं कर्तव्यमेवेत्यत्र तात्पर्यात् । यदि च शिष्टाकोपाधिकरणोक्तरीत्या अप्रकरणाधीतस्मार्तदक्षिणाचारादेरिवाप्राकरणिकबोधितस्यापि प्रातःकालस्य न दुर्बलत्वमित्युच्यते तथापि श्रुतिद्वयस्यापि प्रवृत्तिस्वीकारे अष्टदोषदुष्टविकल्पापत्तेः अप्रतिपत्तिर्वोभयोः इति महाभाष्योक्तरीत्या प्रकृते परस्परविरोधात् श्रुतिद्वयस्याप्रवृत्तौ व्यवस्थापकप्रवृत्तेर्निर्बाधत्वात् । तस्मात्तत्र प्रातःकाले पर्वचतुर्थांशादिकालाभावात् प्रातर्यागानुष्ठानं स्मृतिविरुद्धमेवेति चेन्न । श्रौतानां कर्मणां क्लृप्तिः कल्पसूत्रं तदुच्यते । तथैव गृह्यकल्पानां स्मार्तानां तूपसंग्रहः । शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न लक्ष्यते । इति संस्कारपारिजाते हेमाद्रौ पौलस्त्यवचनेन स्मृतेः सूत्रस्य बलवत्त्वप्रतिपादनात् सूत्रोक्तेपि प्रातःकाले यागानुष्ठाने स्मृतिविरोधो न दोषावहः । बौधायनोदाहृतश्रुतिविहिते प्रातःकालानुष्ठाने तु तत्संभावनैव न । वस्तुतस्तु बौधायनसूत्रे दिवासंधिः पौर्णमास्यां—यज्ञकालस्तिथिद्वैधे षट्कलो यदि लभ्यते । पर्व तत्रोत्तरं कार्यं हीने पूर्वमुपक्रमेत् । इत्यादिहेमाद्र्युदाहृतगार्ग्यादिवाक्यैकवाक्यतया उत्तरदिने षट्घटिकान्यूनप्रतिपत्तृतीयांशे यागप्रसंजको ग्राह्यः ।

अमावास्यायां दिवासंधिस्तु उत्तरदिने त्रिमुहूर्तद्वितीयायुक्तप्रतिपदि यागप्रसंजको बोध्यः । द्वितीयात्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी । इत्यादिवाक्यैरेकवाक्यत्वात् । पर्वणो यश्चतुर्थांश इदं तु गार्ग्यादिवाक्याविरुद्धे विषये सावकाशमिति न कस्यापि विरोध इति बोध्यम् । अतएव—श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्तथा । स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् । इति चतुर्विंशतिमतबैजवापवचनयोर्न विरोधः । अतएव—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् इति सूत्रे प्रथमे—स्वातंत्र्येण प्रमाणत्वं स्मृतेस्तावन्न संमतम् । वेदमूलानुमानं च प्रत्यक्षेण विरुध्यते । इति मीमांसकसिद्धांतः संगच्छते । नचैतावतापि बौधायनमतानुसारिभिर्दिवा पर्वसंधौ संधिदिने यागः कर्तव्य इत्येव सिद्धं, परंतु प्रातःकाले उतापराह्णे संधिसमीपे इत्यत्र विनिगमनाविरहेण घट्टकुटीप्रभातन्यायापात इति वाच्यम् । अपराह्णस्य कथमपि प्रातरिति वक्तुमशक्यत्वेन तत्रानुष्ठाने हे मदीयाः पुरुषाः अश्विना अश्विनौ प्रातः प्रातरेव यजध्वं पूजयध्वं स्तुध्वं हिनोत प्रहिणुत हवींषि सायं सायंकाले हविः देवयाः देवगामि नास्ति देवाः न स्वीकुर्वंतीत्यर्थः । अजुष्टं असेव्यं तद्भवति इत्येतदर्थक—प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टं इति श्रुतिविरोधः स्पष्ट एव । ननु न सायमस्तीत्यनेन सायंकालस्यैव निषिद्धत्वेन विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वादपराह्णोऽपि नात्यंतं निषिद्ध इति चेन्न । एकस्य वाक्यस्योभयपरत्वे वाक्यभेदप्रसंगादेकमेव विधेयं इतरांशे नित्यानुवाद इत्येव स्वीकार्यं । तत्र निषेधतात्पर्यं सायंकालभिन्नाश्चत्वारोपि कालाः पाक्षिकत्वेन यागे प्राप्नुवंतीति प्रातःकालस्य नित्यवद्यागसंबंधानुवादो नोपपद्यते । विधितात्पर्यं तु प्रातःकालातिरिक्तानां सर्वेषां निषेधात्सायंकालनिषेधो नित्यानुवाद इति संगच्छते इति विध्यंशे एव तात्पर्यकल्पनात् । प्रातर्यागानुष्ठाने तु संधिशास्त्रस्य सामीप्यपरत्वात् सामीप्यस्य चापेक्षिकत्वात् प्रातःकालोऽप्यन्यापेक्षया समीप इति वक्तुं शक्यत एवेति । तत्रानुष्ठाने संधिश्रुतिविरोधाभावात्, किंचापराह्णे यागानुष्ठाने पूर्वाह्णप्रातःकालतंत्रोपक्रमकाला अपि बा-

ध्येरन्, प्रातरनुष्ठाने तु न कस्यापि बाध इति प्रातरेव यागानुष्ठानं कर्तव्यम्। एतेन यष्टव्यमपराह्णेपीति भवस्वामिमतम्। अन्योऽह्निांते राव्यां वा प्राहेष्टिं संधियागयोः। इति गोपालकारिकोक्तमतांतरमपि प्रातर्यजध्वमिति श्रुतिविरुद्धमेवेति वेदितव्यम्। अत एव पर्वणो द्वितीयांशेपि इष्टिः कर्तव्या। तथाच हेमाद्रौ आश्वलायनवचनं—पर्वणोंशे द्वितीये तु कर्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्माद्दूषयत्याश्वलायनः। इति प्रयोगपारिजातः संगच्छते। अतएव यः पूर्वः पूर्वो यष्टा भवति स वनीयान् देवानां संभजनीयः संभाव्यो भवतीत्यर्थकपूर्वः पूर्वो यजमानो वनीयानिति श्रुतिरप्यनुकूलिता भवति। अतएवैतदेव बौधायनमतमुपोद्बलयति श्रुतिः। यस्मिन्नहनि पुरस्तात्पश्चात्सोमो न दृश्यते तदहर्यजेतेति माधवग्रंथः—अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते। तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः। यदहःपश्चाच्चंद्रमा अभ्युदेति तदहर्यजन्निमाँल्लोकानभ्युदेति एषा वै सुमना नामेष्टिर्यमद्येजानं इति श्रुतिद्वयं बौधायनमतानुसारिव्यतिरिक्तविषयं। एतदेवाभिप्रेत्य प्रतिपच्चतुर्थांशे याग उदाहृतः इति माधवग्रंथश्च संगच्छते। द्वितीयात्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी। अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्। चतुर्दशी चतुर्यामा अमावास्या न दृश्यते। श्वोभूते प्रतिपच्चेत्स्यात्पूर्वा तत्रैव कारयेत्। चतुर्दशी च संपूर्णा द्वितीया क्षयकारिणी। चरुरिष्टिरमायां स्याद्भूते कव्यादिकी क्रिया। इत्यादिमाधवोदाहृतबौधायनादिवचनानामपि उदाहृतश्रुतिमूलकत्वमेवोचितं। निशायां प्रथमे भागे दृश्यते पूर्णिमा तथा। तद्व्यत्ययो दिवा नास्ति तत्र यागः परेहनि। इत्यादिवचनाद्रात्रिसंधौ परदिने एवेति हेमाद्रिसिद्धांतात्। एतेन—हेमाद्रिस्तु निशासंधावप्यत्यंतापचये तिथेः। द्वितीयाप्रभृतेर्ब्रूते पूर्णे दर्शे यजेः क्वतिं। इति कालतत्वविवेचनमयुक्तं हेमाद्रिसिद्धांताज्ञानमूलकत्वादिति बोध्यं। नच चंद्रदर्शनदिने इष्टिनिषेधविरोध इति शंक्यं। गतिविशेषवशात्कदाचित्प्रतिपच्छेषेपि चंद्रदर्शनस्य जायमानत्वेन तादृशस्थले पूर्वत्र रात्रिसंधिमद्दिने यागविधायकाभावेन यागलोपापत्तिभिया संधौ यजेतेत्यादिश्रुतिबोधिते काले यागेनुष्ठिते पश्चात्कदाचिच्चंद्रदर्शनेपि क्षतिविरहात्। नच यजनीयेह्नि

सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दंडं दद्याद्द्विजातये । इति कात्यायनवचनं निर्विषयं स्यादिति वाच्यम् । प्रायश्चित्तस्य पुरुषापराधनिमित्तकत्वेन पुरुषापराधप्रयुक्तचंद्रदर्शनदिनयागस्यैव तद्विषयत्वात् । नच तथापि—प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः । इति गार्ग्यवचनविरोधः । अन्वाधानादिब्राह्मणभोजनांतव्यापारसमुदायरूपयागस्य ब्राह्मणभोजनरूपांतिमपदार्थस्य—आवर्तनेथवा तत्प्राग्यदि पर्व समाप्यते । तत्र पूर्वाह्ण एव स्यात्संधेरूर्ध्वं द्विजाशनम् । इति कात्यायपरिशिष्टवचनात्प्रतिपद्येव कर्तव्यत्वेन तद्विरोधाभावात् । नच तथापि संधिगर्भत्वसंपत्त्यर्थं कस्यचित्पदार्थस्योत्कर्षावश्यकत्वे प्रयोगवचनबोधितनैरंतर्याबाधार्थं अन्वाधानाद्यतिरिक्तव्यापारस्तोमस्यैवोत्कर्ष उचित इति वाच्यम् । प्रयोगवचनेनार्थादाक्षिप्यमाणनैरंतर्यस्य स्पष्टविधिबोधितपूर्वाह्णप्रातःकालतंत्रोपक्रमकालबाधकत्वानौचित्यात् । तस्माद्बौधायनसूत्रानुसारिभिर्द्वितीयदिने, मुहूर्तत्रयपरिमितप्रतिपत्तृतीयांशलाभे पौर्णिमास्यां अमावास्यायां तु प्रतिपदि सायंकाले मुहूर्तत्रयान्न्यूनद्वितीयाप्रवेशे एव द्वितीयदिने अन्यथा दिवासंधौ पर्वद्वयेपि पूर्वेद्युरन्वाधानं कृत्वा संधिदिने यागः कर्तव्य इति सिद्धम् । अभ्युदयेष्टिदर्शनादकालोपक्रमे दोषः । उपसत्समासदर्शनादकालापवर्गे दोषः । तस्मात्तथा यतितव्यं यथोपक्रमापवर्गौ न नश्यतः । अन्यथा—दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः । विप्राणां कर्मदोषैस्तैः प्रजानां जायते भयं । इति स्मृत्युक्तो दोष इति ज्योतिषभाष्यं संगच्छते । आश्वलायनानामपि तच्छाखायामाध्वर्यवादेरनुक्तत्वेन शाखांतरोक्तस्यैव ग्राह्यत्वे—तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् । इति वचनाद्बौधायनोक्तस्यैव कर्तव्यत्वेन तेषामपि बौधायनमतानुसारित्वादयमेव निर्णयः । यैरपि तत्र बौधायनं ग्राह्यमिति वचनमनादृत्य आपस्तंबोक्तमाध्वर्यवादिकं स्वीकृतं तेषामपि—यः स्वशाखां परित्यज्य परशाखां समाचरेत् । अप्रमाणमृषिं कृत्वा सोंधे तमसि मज्जति । इति हेमाद्र्युदाहृतलौगाक्षिवचनात्स्व-

शाखाप्रवर्तकऋष्युक्ताविरुद्धस्यैव परकीयस्य ग्राह्यत्वेन प्रकृते पर्वणोंशे द्वितीये तु कर्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्मा-द्दूषयत्याश्वलायनः। इति हेमाद्रिप्रयोगपारिजातोदाहृताश्वलायनाचार्यवचनबोधितस्यैव कालस्य ग्रहणौचित्यात्। नच तथापि। अध्वर्युप्रत्ययं तु व्याख्यानं कामकालदेशदक्षिणानामित्याश्वमिकाश्वलायनसूत्रेणापस्तंबानुयायिनामापस्तंबोक्तकालस्यैव बोधनात्तद्विरोध इति वाच्यं। अध्वर्युप्रत्ययानामस्मिन्शास्त्रे यदभिधानं तस्येदं प्रयोजनं। यद्यस्मिन् शास्त्रे विशेषविधिस्तेषां सामान्यविधिस्तदास्मदीय एव विधिर्ग्राह्य इत्येवमर्थमिति वृत्तिकृता तदाशयस्य वर्णनात्प्रकृते आश्वलायनाचार्यवचनानां निरवकाशत्वात्तदुक्तकालग्रहणस्यैवोचितत्वात्। तस्माद्बह्वृचैरपि पूर्वदिनेन्वाधानं कृत्वा बौधायनवत्संधिमद्दिने एव यागः कर्तव्य इति सिद्धम्। अन्यथा—उदितो यदि वा हीनो दृश्यते यदि चंद्रमाः। प्रतिपत्सु न कार्यः स्याद्विश्वेदेवाः पराङ्मुखाः। इत्यादि हेमाद्र्युदाहृतवचनैस्तन्मूलभूतोदाहृतश्रुत्या—यस्तु न प्रारभेतेष्टिमंत्यांशे पर्वणो द्विजः। प्रतिपद्या चतुर्थांशात्प्राग्यश्च न समापयेत्। कृता वाप्यकृतैवेष्टिस्तयोः स्यान्नात्र संशयः। पुनरेवाचरेदिष्टिं शुभेऽहनि यथाविधि। इति प्रयोगपारिजातोदाहृताश्वलायनवचनैश्च सह विरोधः स्पष्ट एवेति दिक्।

आपस्तंबानां तु यदहः पुरस्ताच्चंद्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् श्वः पूरितेति वा खर्विकां तृतीयां वाजसनेयिनः समामनंति यदहर्न दृश्यते तदहरमावास्यायां श्वो न द्रष्टार इति वेति। खर्विकामल्पिकामिति यावत्। अल्पत्वं च दिनार्धव्यापित्वाभावात् यदहः पुरस्ताच्चंद्रमाः पूर्ण उत्सर्पेत् यदहर्न दृश्येतेति सूत्रद्वयस्यायमर्थः। सर्वदा तावद्राकाकुह्वोरेव चंद्रमसः पूर्णत्वमदर्शनं चेति ज्योतिःशास्त्रप्रसिद्धम्। यत्र यस्मिन्पुरस्ताच्चंद्रमाः पूर्ण उत्सर्पेत् उदियात् न दृश्येत वा यत्रापराह्णे रात्रौ वा पर्वसंधिस्तदा तां पौर्णमासीममावास्यां चोपवसेदिति श्वः-पूरिता श्वो न द्रष्टार इति वेति सूत्रद्वयस्यायमर्थः। यदा तु पूर्वाह्णे मध्यंदिने वा पर्वसंधिस्तदा तस्मिन्नहनि चंद्रमाः पूरिता पूर्णा भवति यस्य वा न द्रष्टारो नेक्षितारो भवेयुः तामनुमतिं सिनीवालीं चोपवसेदिति। लौगाक्षिरपि—पूर्वाह्णे वाथ म-

ध्याह्ने यदि पर्व समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते । अपराह्णेथवा रात्रौ यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते । इति । संधिनिर्णयस्तु–परेह्नि घटिकान्यूनास्तथैवाभ्यधिकाश्च याः । तदर्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् । तिथेः परस्या घटिकाश्च याः स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासां । अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तत् । इति कात्यायनलौगाक्ष्यादिवचनादुत्तरदिने प्रतिपदो यावत्यो घटिकाः पूर्वदिने पर्वघटिकापेक्षयाधिकाः न्यूना वा भवंति तदर्धं वृद्धौ पूर्वदिने पर्वणि संयोज्य-ह्रासे च वियोज्य ज्ञेयः । एतेन पंचदशीभोगापेक्षया प्रतिपदो-ह्रासवृद्धिकल्पनेति स्मृतिकौस्तुभो मयूखश्चोपेक्ष्यः । पूर्वतिथिभोगापेक्षयोत्तरतिथिभोगस्य सपादघटिकापेक्षया न्यूनाधिकभावस्य प्रसिद्धत्वेन परेह्नि घटिका इत्यादिबहुवचनासंगतेः । एवमुक्तरीत्या पूर्वाह्णे मध्याह्ने वा यदा पर्वसंधिर्भवति तदा पर्वद्वयेपि संधिदिने एव यागः । कालशास्त्रपूर्वाह्णादिशास्त्रोभयानुग्रहात् अपराह्णसंधावपि यदोत्तरदिने प्रतिपत्तृतीयांशस्तदा पौर्णमास्यां तत्रैव यागः, यदा तु ह्रासवशादुत्तरदिने प्रतिपच्चतुर्थांशस्तदापराह्णसंधिशास्त्राच्चतुर्थांशे परदिने यागः प्राप्नोति कालशास्त्राच्च पूर्वेद्युस्तत्र पर्वणो यश्चतुर्थांश इत्यादिबोधितकालस्य यागान्वयावगतेस्तदनादरेण कालांतरे यागानुष्ठाने–अकाले यत्कृतं कर्म विधिशौचविवर्जितं । अकृतं तद्विजानीयात्पुनरिज्याश्रुतेर्बलात् । इति हेमाद्र्युदाहृतवचनात्–प्रतिपद्याचतुर्थांशात्प्राग्यश्च न समापयेत् । कृता वाप्यकृतैवेष्टिस्तयोः स्यान्नात्र संशयः । इति प्रयोगपारिजाते आश्वलायनवचनाच्च संधिदिने एव यागो युक्तः । नन्वेवं तर्हि अपराह्णसंधावुत्तरेद्युर्यागव्यवस्थापकलौगाक्षिवचनविरोध इति चेत् अत्र हेमाद्रिः–यत्रापराह्णे पर्वसंधौ उत्तरेद्युः प्रतिपच्चतुर्थांशे यागो न भवति तथाभूतस्यैवापराह्णस्यात्र ग्रहणमित्यविरोधः । युक्तं चैतत् । अन्यथा हेमंतकाले अतिखर्वं तदहस्तत्र किंचिदूने चतुर्दशघटिकामात्रे आवर्तनं भवति तदा तत्रैव तिथिवृद्धौ षोडशघटिकोपि पर्वचतुर्थांशस्तत्रावर्तनादुपरिघटिकामात्रे संधावुत्तरेद्युर्यागः प्रसज्येत । नच तद्युक्तं । तत्र विहितकालाभावात् न यष्टव्यमिति निषेधाच्चात्रापराह्णशब्दसं-

कोच एव ज्यायानिति स्वीकृत एवायमर्थोऽपराह्णसंधौ चतुर्थस्येष्टावप्राप्तत्वादिति सिद्धांतयद्भिर्माधवाचार्यैरपि । यत्तु अपराह्णसंधौ प्रतिपच्चतुर्थांशेपि याग इत्युक्तं तत् सर्ववचनानां हेमाद्रिसिद्धांतस्य च संबाधे तद्ग्रंथविरोधात् प्रौढिवाद इति बोध्यं । नचैवं–संधिर्यत्रापराह्णे स्याद्यागं प्रातः परेहनि । कुर्वाणः प्रतिपद्भागे चतुर्थेपि न दुष्यति । इति माधवोदाहृतशातातपवचनविरोध इति वाच्यं । चतुर्थेपि कुर्वाणो न दुष्यति किमुत तृतीये इति कैमुतिकन्यायेन तृतीयभागस्यैव प्राशस्त्यबोधकत्वेन विरोधाभावात् । अन्यथा विधिविभक्तिशून्यवर्तमानापदेशरूपवचनस्य विधिशब्दघटित–न यष्टव्यमिति श्रुतिबाधकत्वापत्तेः । इष्टापत्तिस्तु सर्वशास्त्रविरुद्धैव । अतएवास्य वचनस्य प्रतिपच्चतुर्थांशविधायकत्वसमर्थनार्थप्रवृत्तत्रिकांडमंडनेन पर्वणो यश्चतुर्थांश इत्यपि प्रसिद्धशातातपवचनस्य शातातपीयत्वाप्रतिसंधानात् याज्ञिककारिकैवेयमित्युक्तं । पूर्वाह्णापराह्णादिपर्वसंधिसाधारणस्य न यष्टव्यमिति पर्युदासस्यापराह्णसंधिशास्त्रं प्रति विशेषशास्त्रता न संभवतीत्युक्त्वा पर्युदासशास्त्रस्य श्रुतित्वेन प्राबल्यमाशंक्य भाष्यकारेण चतुर्थांशनिषेधः कात्यायनवचनादित्युक्त्वा न यष्टव्यं चतुर्थेशे इति श्लोकः पठितः । तस्माच्छ्रुतिमूलत्वाच्छ्रुतिरित्युक्तमिति तद्ग्रंथः संगच्छते । स्मृत्या श्रुतिबाधने त्वयं ग्रंथोऽसंगत एव स्यात् । भवतु तर्हि त्रिकांडमंडनमतमेवेति चेन्न । परंतु तदेतत्त्रिकांडमंडनमतमन्ये नानुमन्यंते । कस्मात्पूर्वाह्णापराह्णसंध्योरुभयोरप्युपवासे द्वितीयेहनि च यागे अनुष्ठीयमाने पक्षादेः प्रतिपच्चतुर्थांशस्य च संभवात् पक्षादयोभियष्टव्याः, न यष्टव्यं चतुर्थेशे इति शास्त्रद्वयस्याप्यनुग्राह्यत्वान्मध्याह्नसंधावेकमपराह्णसंधावपरमिति व्यवस्थायां प्रमाणाभावात् । नच लौगाक्षिवचनद्वयं प्रमाणं । तस्य पूर्वोत्तरदिनयागव्यवस्थापरत्वेन विधिनिषेधव्यवस्थायां तात्पर्याभावात् । यत्तु प्रतिपच्चतुर्थांशनिषेधस्य श्रुतित्वमसिद्धमित्युक्तं तन्न । कात्यायनेन श्रुतिरेषा सनातनीत्यभिधानात् । यत्तु भाष्यकारेण कात्यायनवचनादित्युक्तं तच्छ्रुतित्वेप्यविरुद्धम् । श्रुतिरेषा सनातनीत्यस्य कात्यायनवचनत्वादित्यादिना हेमाद्रिणैव दूषितत्वात् । किंच मत्पक्षे संधिसामीप्यं भवत्पक्षे तन्नास्तीत्यपरो विशेषः ।

तस्मान्न प्रतिपच्चतुर्थांशे यागो युक्तः। ननु पूर्वदिने प्रातः पर्वचतुर्थांशसत्वे भवतु तद्दिने यागः। यदा तु प्रातः पर्वतृतीयांशस्तदा तस्य विधायकाभावात् प्रतिपच्चतुर्थांशे एव याग इति चेन्न। न यष्टव्यमिति श्रुत्या तस्य निषिद्धत्वात्। पर्वणोंशे द्वितीये तु कर्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्माद्वर्णयत्याश्वलायनः। इत्यादिहेमाद्र्युदाहृतानेकवचनानां विधायकानां सत्वात्पूर्वदिने एव यागः। एवं सति विधित्वकल्पनाविरोधिकैमुतिकन्यायप्रवृत्तत्वद्योतकापिशब्दघटितस्य विधिविभक्तिशून्यस्य वर्तमानापदेशरूपस्य–संधिर्यत्रापराह्णे स्याद्यागं प्रातः परेहनि। कुर्वाणः प्रतिपद्भागे चतुर्थेपि न दुष्यति। इति वृद्धशातातपनाम्ना माधवोदाहृतस्य केवलं मणिमंत्रादिन्यायेन संधौ यजेत संधिमभितो यजेत पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेत यस्मिन्नहनि पुरस्तात् परतः सोमो न दृश्यते तदहर्यजेत तत्र यजेत तत्रैनं पश्चादस्तमितं पुरस्तादादित्योभ्युदेति–यदहश्च न दृश्येत संपूर्णश्च यदा भवेत्। स एव कालो यागस्य एतेन हविषा यजेत्। यावत्पूर्वस्य हीनत्वं यावन्नास्तमितोदयः। औपवस्तं च यागं च तावद्विदुरिति श्रुतेः। विप्रकर्षे परे यागः संनिकर्षे परे तथा। शोपकेन्द्वोः समाख्यातो मुनिभिस्तत्त्वदर्शिभिः। आदित्येऽस्तमिते चंद्रः प्रक्षीण उदियाद्यदा। प्रतिपद्यतिपत्तिः स्यात्पंचदश्यां यजेत्तदा। न यष्टव्यं चतुर्थेशे–उदितो यदि वा हीनो दृश्यते यदि चंद्रमाः। प्रतिपत्सु न कार्यः स्याद्विश्वेदेवाः पराङ्मुखाः। अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते। तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः। पंचदश्याः परः पादः पक्षादेः प्रथमास्त्रयः। कालः पार्वणयागः स्यादन्यथा तु न विद्यते। द्वावंशावुत्सृजेदंत्यौ यागे च व्रतकर्मणि। यजनीयेह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते। तत्र व्याहृतिभिर्हुत्वा दंडं दद्याद्द्विजातये। प्रतिपद्या चतुर्थांशात्प्राग्यश्च न समापयेत्। कृता वाप्यकृतैवेष्टिस्तयोः स्यान्नात्र संशयः। पुनरेवाचरेदिष्टिं शुभेहनि यथाविधि। इत्यादिपूर्वोदाहृतविधिनिषेधरूपानेकश्रुतिस्मृतिवचनानां बाधकत्वकल्पनात्यंतानुचितैव। नच–एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चंद्रमा अभ्युदेत्य-

१ 'यदि दृश्यते'.

स्मिन्नेवास्मै लोकेर्धुकं भवतीत्यादिश्रुतिसत्वाच्चंद्रदर्शनदिने यागेपि न दोष इति वाच्यम् । द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयामिति सूत्रेणोक्तो दर्शपूर्णमासयोर्गुणविकृतिरूपः काम्यप्रयोगः स एवानादृत्य तत् द्वे एव यजेतेत्यादिना सिद्धांतयित्वा द्वितीयायां क्रियमाणद्वितीयप्रयोगस्यैव एषा वै सुमना नामेत्यादिना स्तुतिः कृतेति प्रकृते दर्शपूर्णमासविषयतैवास्य नास्तीत्यवधेयम् । अतएव द्वितीयायां इष्टवंतं यजमानमभिलक्ष्य पश्चाच्चंद्रमा अभ्युदेति तस्येयमिष्टिः नाम्ना सुमना इत्युच्यते । वर्धिष्णुचंद्रोदयस्य सौमनस्यहेतुत्वादिति वेदभाष्यं माधवीयं संगच्छते । नच तथापि तस्माद्यदेवैनं न पुरस्तान्न पश्चात्पश्येत्तर्हीवोपवसेदिति श्रुतिश्चंद्रादर्शनदिनेन्वाधानं विदधती अर्थाच्चंद्रदर्शनदिने यागविधानमाक्षिपतीति वाच्यम् । यस्मिन्नहनि पुरस्तात्परतः सोमो न दृश्यते तदहर्यजेतेत्यनया श्रुत्या यागस्यापि चंद्रादर्शनदिन एव विधानात् । तत्र संपूर्णामावास्याप्रतिपत्स्थले दिनद्वयेपि चंद्रदर्शनाभावादुभयानुग्रह एव । यदा त्वेकस्मिन्नेव दिने चंद्रादर्शनं तदा एकत्रावश्यंभाविनि चंद्रदर्शने अंगगुणविरोधे च तादर्थ्यादिति न्यायेन चंद्रादर्शनदिनस्य यागे एवान्वयात् । अर्थात्पूर्वस्मिन् चंद्रदर्शनदिनेप्यन्वाधानस्य युक्तत्वादनेकश्रुतिविरोधाच्च चंद्रदर्शनदिने विध्याक्षेपकत्वासंभवात् । अतएव तद्धैके दृष्ट्वोपवसंतीति श्रुत्यंतरं न निर्विषयमित्यलं बहुना ।

अमावास्यायामपि यदा परदिने त्रिमुहूर्तद्वितीयाप्रवेशाभावः तदा यदहर्न दृश्येतेति सूत्रात्संधिदिनेन्वाधानं उत्तरदिने यागः । यदा तु परदिने द्वितीयाप्रवेशेन चंद्रदर्शनं तदा तत्र यागस्य— इंदौ निरुप्ते हविषि पुरस्तादुदिते विधौ । यद्वैगुण्यं हुते तस्मिन्पश्चादपि हि तद्भवेत् । इत्यादिवसिष्ठादिवचनैर्निषिद्धत्वात् श्वो न द्रष्टार इति सूत्रात्पूर्वदिनेऽन्वाधानं संधिदिने एव याग इत्येव युक्तमिति विपश्चित एव विदांकुर्वंतु । यत्तु मदनरत्ननिर्णयामृतादिषु स्मृतिकौस्तुभादिनवीनग्रंथेषु च अपराह्णसंधौ शातातपवचनात्परदिने प्रतिपच्चतुर्थांशे याग इ-

वादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः । इति वैकल्पिकीयं सद्यस्कालता । सद्यो वा सद्यस्कालायां सर्वं क्रियते इत्यापस्तंबसूत्रात् वाजसनेयिनां यद्यपि खर्विकां तृतीयां वाजसनेयिनः समामनंति इत्यापस्तंबेनोक्तं—मध्यंदिने स्यादहनीह यस्मिन्प्राक्पर्वणः संधिरियं तृतीया । सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याथ परेद्युरिष्टिः । इति भाष्यार्थसंग्रहकारेणोक्तं तदनुसारेण—आवर्तनादधः संधिर्यद्यन्वाधाय तद्दिने । परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः । इति कालादर्शे—यस्तु वाजसनेयी स्यात्तस्य संधिदिनात्पुरा । न क्वाप्यन्वाहितिः किंतु सदा संधिदिने भवेत् । इति माधवेनाप्युक्तं तथापि—आवर्तनेथ वा तत्प्राग्यदि पर्व समाप्यते । तत्र पूर्वाह्ण एव स्यात्संधेरूर्ध्वं द्विजाशनम् । इति कातीयगृह्यपरिशिष्टवचनात्—यजनीयेह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दंडं दद्याद्द्विजातये । इति कात्यायनेन चंद्रदर्शनदिने यागे प्रायश्चित्तविधानात् अपराह्णे पिंडपितृयज्ञश्चंद्रादर्शनेमावास्यायामिति सूत्रे कर्कभाष्ये चंद्रादर्शनेन परमः क्षयो लक्ष्यते । तस्मिन्क्षीणे ददातीति श्रुतेः । एवंच खर्विकामावास्यायां दृष्टेपि चंद्रमसि अपराह्णे परमक्षय इति क्रियत एव काले पिंडपितृयज्ञ इत्युक्तत्वात् । संमिश्रा या चतुर्दश्या अमवास्या भवेत्क्वचित् । खर्विकां तां विदुः केचिद्गताध्वामिति चापरे । इति छंदोगपरिशिष्टोक्ता दिवाचतुर्दशीयुक्तैव खर्विकाभिप्रेता नतु आवर्तनात्पूर्वं प्रतिपद्युक्ता । चंद्रक्षयः कस्मिन्काले इत्याकांक्षायामुक्तं परिशिष्टे—अष्टमेंशे चतुर्दश्याः क्षीणो भवति चंद्रमाः । अमावास्याष्टमेंशे तु पुनः किल भवेदणुः । इति । तस्मात्—यज्ञकालस्तिथिर्द्वैधे षट्कलो यदि लभ्यते । पर्व तत्रोत्तरं कार्यं हीने पूर्वमुपक्रमेत् । इति वचनाद्वाजसनेयिभिरपि पौर्णमास्यां द्वितीयदिने षट्घटिकादिप्रतिपत्तृतीयांशलाभे एवोत्तरदिने यागः । अन्यथा पूर्वदिने एव । अमायां तु द्वितीया त्रिमुहूर्ता चेदित्यादिवचनानुसाराद्द्वितीयदिने अस्तात्पूर्वं त्रिमुहूर्तान्यूनद्वितीयासत्वे दिवासंधौ संधिदिने एव, रात्रिसंधौ त्रिमुहूर्तन्यूनद्वितीयासत्वे च उत्तरदिने एवेष्टिः कर्तव्येति बोध्यं । साम-

---

१ 'यदि दृश्यते'. २ 'त्रिमुहूर्तादि'.

गानामपि दृश्यमानेप्येकदा गताध्वा भवतीति गोभिलसूत्रात् संमिश्रा या चतुर्दश्येति तत्परिशिष्टात् उत्तरस्यां चोपवासे यजनीयतिथौ पश्चाच्चंद्रदर्शनेन भवितव्यं तच्चानिष्टमिति तद्भाष्याच्च यज्ञकालस्तिथिद्वैधे इति वचनबोधितव्यवस्थैव युक्ता । तेन पौर्णमास्यां द्वितीयदिने षट्घटिकाप्रतिपत्तृतीयांशसत्वे एवोत्तरदिने यागोन्यथा पूर्वदिने एव । अमायां रात्रिसंधौ चंद्रदर्शने द्वितीय एव । दिवासंधौ तु द्वितीयदिने सायाह्ने त्रिमुहूर्तन्यूनद्वितीयासत्वे एव । द्वितीयदिने त्रिमुहूर्तादिद्वितीयायां पूर्वदिने एव । यत्तु तद्भाष्यकृताग्रे उक्तं—वर्धमानाममावास्यां लभेच्चेदपरेहनि । यामांस्त्रीनधिकां वापि पितृयज्ञस्तदा भवेत् । इति तद्द्वितीयदिने प्रतिपदोपि वृद्ध्या त्रिमुहूर्तन्यूनद्वितीयासत्वे एव बोध्यं । अन्यथोदाहृतवचनविरोधापत्तेरिति ।

इत्थं च सर्ववाक्यविरोधेन हेमाद्रिमाधवयोरेकार्थत्वप्रदर्शनेन च कृतस्येष्टिकालनिर्णयस्यायं संक्षेपः । आग्नेयोष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति अमावास्यायाममावस्यया यजेत पौर्णमास्यां पौर्णमास्या यजेत संधौ यजेत संधिमभितो यजेतेत्यादयः श्रुतयः पर्वप्रतिपदोर्यागं विदधते । तत्रान्वाधानादिब्राह्मणभोजनांतपदार्थसमुदायरूपयागस्य कः पदार्थः कानुष्ठेय इत्याकांक्षायां पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्यजति, पक्षांता उपवस्तव्याः पक्षादयोऽभियष्टव्याः इति श्रुतिकल्पाभ्यां व्यवस्थापितं । तत्रापि संपूर्णपर्वणोन्वाधाने संपूर्णप्रतिपदो यागेप्राप्ते—त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः । द्वावंशावुत्सृजेदंत्यौ यागे च व्रतकर्मणि । इति वचनेन पर्वचतुर्थांशस्य व्रते प्रतिपच्चतुर्थांशस्य यागे निषेधात्—न यष्टव्यं चतुर्थांशे इति श्रुत्या च प्रतिपच्चतुर्थांशस्य यागे निषेधात्—पंचदश्याः परः पादः पक्षादेः प्रथमास्त्रयः । कालः पार्वणयागे स्यादन्यथा तु न विद्यते । पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः । इत्यादिवचनानि संधिश्रुत्याकांक्षितकालपरिच्छेदकानीति चतुरंशांतर्गते प्रातःकालावच्छिन्ने काले याग इति सिद्धम् । तत्र रात्रिसंधौ परदिने एव यागः । मध्याह्ने तत्पूर्वकाले वा संधौ संधिदिने एव यागः । इति पर्वद्वयसाधारणमेव । अपराह्नसंधौ पौर्णमास्यां यदोत्तरदिने एवो-

शस्य प्रवृत्त्या पूर्वदिने एव तल्लाभस्तदा तत्रैव यागः । पूर्वोक्त-विषये सावकाशस्य व्यवस्थापकापराह्णशास्त्रस्य श्रुतिविहितका-लातिरिक्तकालविधायकत्वासंभवात्, पर्वचतुर्थांशेऽन्वाधाननि-षेधात्पूर्वेद्युरग्निं गृह्णातीति श्रुतिबाधप्रसंगाच्च । अत्रैव यदा पूर्व-दिने षोडशघटिका पूर्णिमा द्वितीयदिने विंशतिघटिकापरिमिता प्रतिपत्तदापि पूर्वदिने एव यागः । यज्ञकालस्तिथिद्वैधे षट्कलो यदि लभ्यते । पर्व तत्रोत्तरं कार्यं हीने पूर्वमुपक्रमेत् । इति गार्ग्यवचनात् । तस्मात्पौर्णमास्या उत्तरदिने षट्घटिकापरिमि-तप्रतिपत्तृतीयांशसत्वे एव परदिने यागोऽन्यथा तु संधिदिने एव। अमावास्यायामपराह्णसंधौ तु उत्तरदिने षण्मुहूर्तपरिमितप्रतिप-त्तृतीयांशसत्वे एवोत्तरदिने यागोऽन्यथा तु पूर्वदिने एव । यज्ञ-कालस्तिथिद्वैधे षण्मुहूर्तस्तु विद्यते । पर्व तत्रोत्तरं ग्राह्यं हीने पूर्वमुपक्रमेत् । इति हेमाद्र्युदाहृतपराशरवचनात्–त्रिमु-हूर्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् । इत्यादिवचनान्यपि पराशरवचनसमानविषया-ण्येव । चंद्रदर्शनशब्देन प्रतिपदि त्रिमुहूर्तादिपरिच्छिन्नापराह्णिक-द्वितीयोपलक्षणमेव । अन्यथा चंद्रदर्शनस्य कदाचित्प्रतिपच्छेषेपि जायमानत्वात् कदाचित्त्रिमुहूर्तद्वितीयायामप्यजायमानत्वादव्यव-स्थापत्तेः । एवं सति-प्रतिपद्या चतुर्थांशात्प्राग्यश्च न समापयेत् । कृता वाप्यकृतैवेष्टिस्तयोः स्यान्नात्र संशयः । पुनरेवाचरेदिष्टिं शुभेह्नि यथाविधि । इत्यादिसर्ववचनान्यनुकूलानि भवंति । सर्वै-कवाक्यता यत्र तत्र तत्त्वविनिर्णयः । नान्यथा हि कचिद्ब्रह्म-न्नूनं तत्त्वविनिश्चयः । इत्यादि वचनात्सर्वैकवाक्यतया लभ्य-मान एवार्थोऽनुष्ठेयः । तस्मादमावास्यायामपराह्णसंधौ पर-दिने षण्मुहूर्ततृतीयांशसत्वे एव परदिने यागोऽन्यथा तु पूर्वत्रै-वेति सिद्धमिति बोध्यं । पार्वणस्थालीपाककालस्यापीत्थमेव नि-र्णयः । अथ पार्वणः स्थालीपाकस्तस्य दर्शपूर्णमासाभ्यामुपवास इत्याश्वलायनगृह्यात् ।

अथ विकृतिकालः । विकृतयस्त्रिविधाः नित्या नैमि-

त्तिकाः काम्याश्च । तत्र नित्या आग्रयणचातुर्मास्यपश्वाद्याः । नैमित्तिकाः जातेष्टिगृहदाहेष्ट्यादयः । काम्याः सौर्याद्याः । तत्र यद्यपि दर्शपूर्णमासौ इष्टीनां प्रकृतिरित्यनेन दर्शपौर्णमासिकविध्यतिदेशात्तत्रापि पर्वचतुर्थांशादिलक्षण एव काल इति प्रतीयते तथापि य इष्ट्वा पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेत्यापस्तंबेन पुनः कालविधानात् पंचदश्यामेवानुष्ठानम् । तत्र यदा पंचदशी प्रतिपच्च संपूर्णा तदा पंचदश्यां विकृतिं समाप्य प्रकृतेरन्वयन्वाधानादि कार्यम् । खंडतिथौ तु यदा पूर्वाह्णे पर्वसंधिस्तदा पूर्वेद्युर्विहितकालासंभवादेकदेशे संभवेपि उपक्रमकाले संभवेन सांगप्रधानव्यापित्वासंभवात् सहांगैः प्रधानं देशे काले कर्तरि च निर्दिश्यत इत्यापस्तंबेन सांगस्यैव विहितकालसंबंधविधानात् उत्तरेद्युरपि अपूर्वमंते स्यादित्यापस्तंबेन प्रकृतेरनंतरमेव विकृतिविधानात् । प्रकृतेरुत्तरकाले एवातिदेशिकप्रतिपदाद्यभागत्रयरूपे काले विकृत्यनुष्ठानं । यदात्वपराह्णे रात्रौ वा पर्वसंधिः तदा य इष्ट्वा पशुनेत्यनेन पंचदशीरूपकालविधानात् पूर्वत्रैव विकृत्यनुष्ठानं । आवर्तनात्प्राग्यदि पर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः । तदेव यागः परतो यदि स्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युः । इति हेमाद्र्युदाहृतवचनमेतदभिप्रायकम् । अर्धादह्नो भवति नियतः पर्वसंधिः परस्तात्कृत्वा तस्मिन्नहनि च पशुं सद्य एव त्र्यहे वा । आरभ्याथ प्रकृतिरथ चेत्पर्वसंधिः पुरस्तात्कृत्वा तस्मिन्प्रकृतिमथ तु स्यात्पशुः सद्य एव । इति हेमाद्रौ वचनात्पशावप्ययमेव कालनिर्णयः । अयं च कालनिर्णयः अविहितविशेषकालासु विकृतिषु पशुषु च । यत्र तु कालविशेषो त्र्यहकालता वा श्रूयते तत्र तथैवानुष्ठानमिति हेमाद्रिः । पार्थसारथिना तु तंत्ररत्ने य इष्ट्वेति सांगाया विकृतेः पर्वकालत्वादावर्तनात्प्राक् पर्वसंधौ संधिमभितो यजेतेति प्रकृतेः प्रतिपदि समाप्तिनियमात्प्रकृत्यनंतरं प्रतिपदि विकृत्ययोगात्पूर्वेद्युर्विकृतिरित्युक्तं । तत्—पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । इत्यादिवचनैः प्रतिपदाद्यभागत्रयस्य यागे विधानात् तत्त्यागेनाविहितचतुर्दश्यां यागस्यानौचित्याच्चिंत्यम् ।

---

१ 'संधिकालः'

**आग्रयणेष्टौ** कालविशेषमाह **हेमाद्रौ श्रुतिः**—यस्मिन्कालेऽमावास्या संपद्यते तयेष्ट्वाथैतया यजेत यदि पौर्णमासी स्यात्तयेष्ट्वाथ पौर्णमासेन यजेतेति । यस्मिन्काले इत्यावर्तनात्पूर्वं तयेत्यमावास्यया एतयेत्याग्रयणेष्ट्या यदि पौर्णमास्यावर्तनात्पूर्वं सद्यस्काला स्यात्तदा तयाग्रयणेष्ट्याथ पौर्णमासेन यजेतेत्यर्थः । तदुक्तं **वार्तिककृता**—पौर्णमास्यां तु पूर्वः स्याद्द्वितीयेह्नि शशिक्षये । यजेत्पूर्वं पूर्णमासादूर्ध्वं दर्शेन चेद्यजेत् । इति । अत्रेज्याशब्देनाग्रयणेष्टिरिति **हेमाद्रिः** । उपवस्ताह्नि वर्ज्यानि **परिशिष्टे**—शाकं मांसं मसूरांश्च चणकान्कोरदूषकान् । माषान्मधु परान्नानि वर्जयेदौपवस्तके । इति । पर्वज्ञानोपायमाह **हेमाद्रौ गोभिलः**—अधीयीत तद्विद्भ्यो वा पर्वावगमयेदिति । इष्ट्यादिविकृतिः सर्वा पर्वण्येवेति निर्णयः । इति **माधवेनोक्तं** तत्पूर्वाह्नसंधिमत्पर्वभिन्नपर्वविषयं बोध्यं । अन्यथा पूर्वोक्तदोषापत्तेः । इति विकृतिकालः । इति पुरुषार्थचिंतामणौ कालखंडे इष्टिकालनिर्णयः ।

अथ **पिंडपितृयज्ञकालः** । तत्र यदा रात्रौ अमावास्यासंधिस्तदान्वाधानानंतरं सद्यः कार्यः । पक्षांतं कर्म निर्वर्त्य वैश्वदेवं तु साग्निकः । पिंडयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं भवेत् । इति **लौगाक्षिवचनात्** । पक्षांतं कर्म अन्वाधानं, अन्वाहार्यकं पिंडपितृयज्ञानंतरं क्रियमाणं दर्शश्राद्धमिति **हेमाद्रिमाधवादयः** । यदापि सायाह्नमारभ्य प्रवृत्ता द्वितीयदिने अपराह्णांतपर्यंता ततोधिका वामावास्या द्वितीयदिने अपराह्णे मुहूर्तत्रयाद्न्यूना द्वितीया तदापि द्वितीया त्रिमुहूर्ता चेदित्यादिभिर्विहितान्वाधानापकर्षस्याभावात्—वर्धमानाममावास्यां लभेच्चेदपरेहनि । यामांस्त्रीनधिकां वापि पितृयज्ञस्तदा भवेत् । इति **हेमाद्रौ हारीतवचनाच्चान्वाधानानंतरमेव** । यदा तु प्रतिपदि त्रिमुहूर्तद्वितीयाप्रवेशेन—द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यामित्यादिभिश्चतुर्दश्यामन्वाधानं तदा कातीयैर्यागदिनात्पूर्वेद्युः कार्यः । पूर्वांगत्वात्पिंडपितृयज्ञ इति तत्सूत्रात् पूर्व एव दर्शात्पिंडपितृयज्ञो न पश्चात् । कुतः अंगत्वात् । तथाच **श्रुतिः**—तस्मात्पूर्वेद्युः पितृभ्यः क्रियते उत्तरमह-

१ 'लक्षयेत्'.

देवान्यजंत इति कर्कभाष्यात् । अपराह्णे पिंडपितृयज्ञश्चं
र्शने अमावास्यायामिति कात्यायनसूत्रे । अत्रादर्शनशब्दे
द्रक्षय एवोक्तः । तस्मिन्क्षीणे ददातीति श्रुतेरिति कर्कोक्ते
पिंडान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते । वासरस्य तृ
शे नातिसंध्यासमीपतः । इति हेमाद्रौ कात्यायनेनैव
क्षीणे एव पिंडपितृयज्ञानंतरं दर्शश्राद्धविधानात् । सूत्रादि
युक्तः अदर्शनशब्दोपि क्षयपर एवेत्याह कात्यायन ए
दुक्तं यदहस्त्वेव दर्शनं नैति चंद्रमाः । तत्क्षयोपलक्ष
क्षीणे राजनि इत्यपि । यदुक्तं दृश्यमानेपि तच्चतुर्दश्यपे
अमावास्यां प्रतीक्षेत तदंते वापि निर्वपेत् । तदंते चतुर्द
अस्यां संध्यागतः सोमो मृणालमिव दृश्यते । अपराह्णे
स्यां पिंडानां करणं ध्रुवं । यदा चतुर्दशी यामं तुरीयमनुपू
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते । चंद्रक्षयका
स एव—चतुर्दश्यष्टमे भागे क्षीणो भवति चंद्रमाः । अ
स्याष्टमेंशे तु पुनः किल भवेदणुः । इत्यादिकात्यायनवच
पूर्वदिने एव तेषां पिंडपितृयज्ञः । यदैवैष न पुरस्तान्न पश्च
तेथ तेभ्यो ददातीत्यादिश्रुतिगतादर्शनशब्दस्य चंद्रक्षये ता
कात्यायनेनोक्तत्वाद्धेमाद्रिणापि तथैव सिद्धांतित
अर्धे चतुर्दशी यत्र अर्धे पंचदशी भवेत् । चतुर्दश्यवसाने
तृयज्ञं तु कारयेत् । चतुर्दश्याश्चतुर्यामे अमावास्या च
श्वोभूते प्रतिपद्यत्र भूते कव्यादिकी क्रिया । इति हे
दाहृतयज्ञपार्श्वबौधायनाभ्यामपि पूर्वदिने एव विध
अमावास्यायामपराह्णे पिंडपितृयज्ञ इत्याश्वलायनसूत्र
तृयज्ञं तु निर्वर्त्य विप्रश्चंद्रक्षयेऽग्निमान् । इति मनूक्तेश्च स
अयमेव पिंडपितृयज्ञकालो युक्तः । यथाश्रुतार्थानुसारेण
मावास्यायां यदहश्चंद्रमसं न पश्यंति तदहः पिंडपितृय
इत्यापस्तंबसूत्रे पिंडपितृयज्ञः कर्मांतरं न दर्शशेषः । 
क्ष्यति—पितृयज्ञः स्वकाले विधानादनंगं स्यादिति । तं 
श्चंद्रमसं न पश्यंति पंचदश्यां प्रतिपदि वा तदहः कुरु
स्तयोः संधिस्तदहरित्यर्थ इति रुद्रदत्तेन व्याख्यानात्,
तृयज्ञः संधिमदहोरात्रापराह्णे इति रामांडारोक्तेश्च

१ 'संध्यागते सोमे'. २ 'निर्वृत्य'.

श्वलायनसूत्रे अमावास्याशब्दः प्रतिपत्पंचदश्योः संधिवचनोप्यत्रापराह्णशब्दसमवायात्तद्वत्यहोरात्रे वर्तते। तस्यापराह्णे अह्नश्चतुर्थे भागे कार्यः। औपवसथ्ये यजनीये वाहनि। यदा त्वहोरात्रसंधौ तिथिसंधिः स्यात्तदौपवसथ्ये एवाहनि क्रियते इति नारायणवृत्त्याद्युक्तत्वादिष्टयुत्तरं वा आश्वलायनैः कार्यः। यत्तु प्रयोगपारिजाते—मुहूर्तमप्यमावास्या प्रतिपद्यपि चेद्भवेत्। तदानीमुत्तमं ज्ञेयं पर्वशेषस्तु पर्ववत्। इति हेमाद्रौ वचनं पिंडपितृयज्ञपरमित्युक्तं, तदिदं तुलापुरुषादिविषयं न पिंडपितृयज्ञादिविषयमिति हेमाद्रिसिद्धांतविरुद्धमिति ज्ञेयम्। इति पिंडपितृयज्ञकालः।

अथ **श्राद्धे अमावास्यानिर्णयः**। तत्र **शातातपः**—दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितं। अपराह्णे पितॄणां तु तत्प्रदानं प्रशस्यते। इति। नित्यं चेदं। न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः। इंदुक्षये मासि मासि प्रायश्चित्तीयते हि सः। इति व्याघ्रवचनात्। इदं च आहिताग्निभिरिष्टिदिनात्पूर्वदिने कार्यं। तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजंते इति श्रुतेः। पिंडान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते। वासरस्य तृतीयांशे नातिसंध्यासमीपतः। इति कात्यायनवचनात्। राजनि चंद्रे क्षीणे। त्रेधा विभक्तदिनतृतीयभागे अपराह्णे इति **हेमाद्रिः** सायाह्नात्प्राचीनोऽपराह्ण एवाभिप्रेतः। ईषन्न्यूनोऽपराह्णः सायाह्नसहितस्तृतीयांश इत्यनेनोच्यते। तत्र नातिसंध्यासमीपत इत्यनेन सायाह्ननिषेधादपराह्णः कर्मकालोऽवशिष्यत इति **माधवः**। सायाह्नादर्वाक्तन इति **मदनरत्नश्च**। एतेन यत्तु माधवेन सायाह्नप्राचीनोऽपराह्णो ग्राह्य इत्युक्तं तदयुक्तम्। अतिसंध्येतिशब्दस्वारस्यादिति **कालतत्त्वविवेचनमुपेक्ष्यम्**। सायाह्नस्त्रिमुहूर्तस्तु सर्वकर्मसु गर्हितः। इति वचनहेमाद्रिमदनरत्नादिविरोधात्। तत्रोपक्रमकाले अमावास्याया अप्रवृत्तावपि साकल्यप्रयुक्ततत्सत्त्वमादायाप्यनुष्ठानमित्यभिप्रायेण स एवाह—यदा चतुर्दशी यामं तुरीयमनुपूरयेत्। अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते। इति। यस्यां संध्यागतः सोमो मृणालमिव दृश्यते। अपराह्णे क्षयस्तस्यां पिंडानां करणं ध्रुवं। इति।

सायाह्नमारभ्य प्रवृत्तावपि तत्रैवेत्याह हेमाद्रौ वृद्धबौधा
चतुर्दशी चतुर्यामे अमावास्या न दृश्यते । श्वोभूते प्रति
भूते कव्यादिकी क्रिया । इति । संपूर्णे चतुर्थयामे न
किंतु सायाह्नमारभ्येत्यर्थ इति इष्टिप्रकरणे माधवः । त
साग्निकैः इष्टिदिनात्पूर्वदिने दर्शश्राद्धं कर्तव्यं । यानि तु—भू
द्धाममावास्यां मोहादज्ञानतोपि वा । श्राद्धकर्मणि ये कुर्यु
मायुः प्रहीयते । मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते ।
वाली तु सा ज्ञेया पितृकार्ये तु निष्फला । मध्याह्नाद्यत्वम
स्या परस्तात्संप्रवर्तते । भूतविद्धा तु सा ज्ञेया नच पंच
भवेत् । इति हेमाद्रौ कार्ष्णाजिनिबौधायनबृहस्प
वचनानि । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् । इ
वाक्यतयापराह्णे चतुर्दशीवेधनिषेधकानि तान्याहिताग्निभि
षयाणि । उदाहृतवचनविरोधात् ।—अपराह्णद्वयाव्यापी यदि
स्तिथिक्षये । आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ।
माधवाद्युदाहृतजाबालिवचनेनापराह्णास्पर्शेपि साग्नि
चतुर्दशीविद्धाया अपि सिनीवाल्या एव नियमाच्च । क
अपराह्णद्वयव्यापीति पाठः स लेखकप्रमादात् । संपूर्णाप
द्वयव्यापित्वस्य वृद्ध्येकसाध्यत्वेन तिथिक्षये इत्यस्य हेतुत्व
गतेः । अतएव दिनद्वयेप्यपराह्णं न स्पृशति तदा साम्य
व्यवस्थेति माधवः मदनरत्नश्च संगच्छते । तिथितत्त्वे
पराह्णद्वयाव्यापीत्येव पाठः । एतेनोभयत्रापराह्णव्यापिन्याम
ताग्निभिः पूर्वेत्यादिनिर्णयामृतादिरपपाठदर्शननिबंधनत
पेक्ष्यः । अमावास्या तु या हि स्यादपराह्णद्वये समा । क्षये
त्तरा वृद्धौ साम्येपि च परा स्मृता । इति माधवोदाहृता
राघवसंवादवचनविरोधात् उभयापराह्णसंबंधस्य साम्येपि
वेन विशिष्यक्षयोपादानवैयर्थ्यापत्तेश्च । अनेन वचनेन द्विती
राह्णस्पर्शाभावेपि तिथिक्षयेपि च निरग्न्यादीनामुत्तरस्या
नियमनात्तिथेः साम्ये वृद्धौ चोत्तराग्रहणमर्थसिद्धं । सिनी
द्विजैः कार्या साग्निकैः पितृकर्मणि । स्त्रीभिः शूद्रैः कुहूः
तथा चानग्निकैर्द्विजैः । दृष्टचंद्रा सिनीवाली कार्या विप्रैस्तु
ग्निकैः । नष्टचंद्रा कुहूः कार्या शूद्रैर्विप्रैरनग्निकैः । सिनी
कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि । साग्निकैस्तु सिनीवाली

कार्याण्यनग्निकैः । इति हेमाद्रिमाधवोदाहृतलौगाक्षिकात्या-
सबौधायनवचनैरपि तान्प्रति सामान्यत एवोत्तरानियमाच्च ।
अपिच–दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनं । पूर्वविद्ध-
मकुर्वाणो नरकं प्रतिपद्यते । इत्यनेन प्राप्तं दर्शस्य पूर्वविद्धत्वं ।–
न ह्यहर्व्यापिनी चेत्स्यान्मृताहे तु यदा तिथिः । पूर्वविद्धैव
कर्तव्या त्रिमुहूर्ता भवेद्यदा । इति मन्वादिवचनैर्मृततिथेरपराह्ण-
द्वयास्पर्शेपि पूर्वस्या एव विधानात् । अपराह्णद्वयव्यापिन्यतीतस्य
च या तिथिः । क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तथोत्तरा ।
इति माधवे बौधायनेन क्षये मृताहतिथेः पूर्वस्या एव वि-
धानात् । जाबालिना क्षयेपि अपराह्णास्पर्शेपि निरग्निकान्प्रति
दर्शस्योत्तरस्यैव विधानात्तस्य पूर्वविद्धत्वनियमः साग्निक-
विषयः । सोपि बह्वृचतैत्तिरीयभिन्नयजुर्वेदिनां नियत एव । सा-
मगानां वैकल्पिकः । त्रिमुहूर्तापि कर्तव्या पूर्वा खर्वा च
बह्वृचैः । कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः । पर्वणोंशे
द्वितीये तु कुर्यादिष्टिं द्विजातिभिः । द्वितीयासहितं यस्माद्रूपयंत्या-
श्वलायनाः । इति । सिनीवालीमुपोष्याथ कुर्वेष्टिं चापरेहनि ।
पितृयज्ञं तथा कुर्युः स्वकाले तैत्तिरीयकाः । इति हेमाद्र्यु-
दाहृतहारीतबौधायनवचनात् निरग्निकानां सर्वत्र भूतवि-
द्धानिषेधे प्राप्तेऽभ्यनुज्ञामाह हेमाद्रिमाधवयोर्जाबालिः–प्र-
तिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि । भूतविद्धैव सा कार्या
पित्र्ये कर्मणि सर्वदा । इति । प्रतिपदि यामद्वयपरिमितेत्यर्थः ।
अह्नो मुहूर्ता विख्याता दश पंच च सर्वदा । तत्राष्टमो मुहूर्तो
यः स कालः कुतपः स्मृतः । इति हेमाद्रौ मात्स्योक्तकुत-
पार्धपर्यंतेति यावत् । अतएव हेमाद्रिमाधवयोर्बौधाय-
नेन–घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा । भूतविद्धैव सा
ग्राह्या दैवे पित्र्ये च कर्मणि । इति कुतपोत्तरार्धव्यापित्वाभावे एव
भूतविद्धा विहिता । अतएव निरग्निकानां कुतपव्याप्त्यैव निर्णय-
माह हेमाद्रिमाधवयोर्हारीतः–भूतविद्धाप्यमावास्या प्रति-
पन्मिश्रितापि वा । पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी ।
इति । दिनद्वयेपि कुतपकालव्याप्तौ क्षये पूर्वा वृद्धिसाम्ययोः
परा । तदाह हेमाद्रौ प्रचेताः–सिनीवाली कुहूश्चैव श्रुत्युक्ते

१ 'कुर्यादिष्टिं द्विजा'.

श्राद्धकर्मणि । स्यातां ते चेत्तु मध्याह्ने श्राद्धादि स्यात्कथं तदा। तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता । साम्येपि च कुहूर्ज्ञेया वेदवेदांगवेदिभिः । इति । कात्यायनोपि—क्षीयमाणाममावास्यां प्रथमेऽहनि लक्षयेत्। वर्धमानाममावास्यां द्वितीयेऽहनि सर्वदा । इति । यदा एकादशघटिकानंतरं प्रवृत्ता चतुर्दशी द्वितीयदिने चतुर्दशघटिकापरिमिता तदनंतरं प्रवृत्तामावास्या प्रतिपदि षोडशघटिका भवति तदा त्रिषष्टिघटिकापरिमितचतुर्दश्यपेक्षया द्विषष्टिघटिकापरिमितामावास्यायाः क्षीयमाणत्वात्पूर्वा ग्राह्या । एवं तिथिप्रवृत्तिवैचित्र्यात्प्रकारांतरेणापि चतुर्दश्यपेक्षयामावास्याक्षयेपि बोध्यं । यदा तु द्वादशघटिकानंतरं प्रवृत्तोत्तरदिने चतुर्दशघटिका चतुर्दशी द्वितीयदिने षोडशघटिकामावास्या तदा तिथिसाम्यम् । यदा पूर्वदिने चतुर्दशघटिकापेक्षया किंचिन्न्यूना चतुर्दशी द्वितीयदिने षोडश किंचिदधिकषोडशघटिका वामावास्या तदा तिथिवृद्धिः । एवं प्रकारांतरेणापि वृद्धिसाम्ययोः कुहूरेवेत्यर्थः । कालादर्शे तु स्यातां ते चेत्तु मध्याह्नादिति पाठः । तत्र ल्यब्लोपे पंचमीति । मध्याह्नं व्याप्य स्यातामित्यर्थोत्तत्राप्युक्त एवार्थः । द्वितीयदिने कुतपानंतरममाया अभावात्कथं तत्र पार्वणश्राद्धानुष्ठानमिति शंकामपाकरोति हेमाद्रिमाधवयोर्हारीतः—पूर्वाह्णे चेदमावास्या अपराह्णे न चेद्यदा । प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः । इति साकल्यवचनापादितामावास्यायाः सत्वात्तत्रैवानुष्ठानमिति भावः ॥ अतएव मृताहश्राद्धतिथेः विहिताया अपराह्णे असत्वेपि साकल्यवचनापादिततिथिसत्वादपराह्ण एव श्राद्धानुष्ठानमिति सांवत्सरिकश्राद्धप्रकरणे हेमाद्रिमाधवादिसिद्धांतः संगच्छते । तस्मात् । भूतविद्धाममावास्यां मोहादज्ञानतोपि वा। श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते । इत्याद्युदाहृतकार्ष्णाजिन्यादिवचनैर्निरग्निकानां निषिद्धाया भूतविद्धायाः—प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि । भूतविद्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा । इत्यादिजाबाल्यादिवचनैरुत्तरदिने कुतपोत्तरार्धाव्यापित्वे एव पूर्वविद्धाभ्यनुज्ञानात् ।—पूर्वाह्णे चेदमावास्या अपराह्णे न चेद्यदा । इत्यादिवचनात् द्वेधाविभक्तदिनस्य कुतपोत्तरार्धादिरूपापराह्णव्यापिन्यमावास्या निरग्निकैः श्राद्धे ग्राह्येति सिद्धम् ।

यत्तु कालादर्शे तदनुयायिनिर्णयामृते च भूतविद्धामिति कार्ष्णाजिनिवचनं प्रतिपद्येवापराह्णेमावास्यासत्वे साग्निकानामपि भूतविद्धानिषेधकं प्रतिपद्यपराह्णासत्वे पूर्वापराह्णस्पर्शिनी चेत्सर्वेषां पूर्वैव । मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते । इति बौधायनवचनं त्रेधाविभक्तस्याह्नो मध्यात्परतो मध्यभागादूर्ध्वं सायंकाले चतुर्दश्यनुवृत्तिनिषेधकं । उभयत्रापराह्णसंबंधे त्वपराह्णद्वयव्यापीति जाबालिवचनात्तिथिक्षय एव साग्निकानां पूर्वा निरग्निकानामुत्तरैव । तिथिसाम्ये वृद्धौ च सर्वेषामुत्तरैव । सिनीवाली कुहूश्चैवेति प्रचेतोवाक्ये स्यातां ते चेत्तु मध्याह्नादिति पाठं धृत्वा मध्याह्नादूर्ध्वमपराह्णे स्यातामिति व्याख्यायेदमपि साग्न्यनग्निव्यवस्थापरमेव जाबालिवचनवदित्युक्त्वा उभयत्रापराह्णे स्पर्शाभावे तु भूतविद्धाप्यमावास्येति हारीतवचनात्कुतपकालव्यापिन्युत्तरैव सर्वेषां । तत्र कुतपे प्रारब्धस्य श्राद्धस्य प्रतिपदि समाप्तौ न दोषः । पूर्वाह्णे चेदमावास्या अपराह्णे न चेद्यदा । इति जाबालिवचनात् । पूर्वाह्णे चेत्प्रतिपदो भूता सायमसा यदि । प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः । इति गौतमवचनादिति सिद्धांतितं । तत्–चतुर्दशी चतुर्यामे अमा यत्र न दृश्यते । श्वोभूते प्रतिपच्चेत्स्यात्पूर्वा तत्रैव कारयेत् । इत्यादीनां पूर्वत्रापराह्णव्याप्त्यभावेपि आहिताग्नीनां पूर्वाविधायकबौधायनादिवचनानां निर्विषयत्वापत्तेः । मध्याह्नात्परत इत्येतस्मादूर्ध्वं तोयादशनाडीभिरित्यनेनैकवाक्यत्वादपराह्णस्यैव प्रतीतेस्तत्त्यक्त्वा सायंकालग्रहणे प्रमाणाभावात् । अपराह्णद्वयव्यापीति पाठस्त्वपपाठ इत्यनुपदमुपपादितत्वात् प्रचेतोवाक्ये स्यातां ते चेत्तु मध्याह्नादिति पाठेपि ल्यब्लोपपंचम्या मध्याह्ने इति पाठेन एकार्थत्वसंभवे तद्विरुद्धापराह्णे इत्यर्थकल्पनानौचित्येन तस्य जाबालिवाक्यैकवाक्यत्वासंभवात् । उभयत्रापराह्णस्पर्शाभावे कुतपव्यापिन्युत्तरैव साग्निकैर्ग्राह्येत्युक्तिः साग्निकानां सिनीवालीविधायकानेकवचनविरुद्धत्वात्–त्रिमुहूर्ता तु कर्तव्या पूर्वा खर्वा तु बह्वृचैः । कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः । इति शाखाभेदेन व्यवस्थाबोधकहारीतवचनविरोधाच्चोपेक्ष्यैव । माध-

१ 'स्याह्नो मध्यभागादूर्ध्वं.'

वीयेपि व्यवस्थापरत्रिमुहूर्तेति वाक्यमुपन्यस्य हेमाद्र्याद्युदाहृतस्य–अल्पापराह्ने त्याज्या सा ग्राह्या स्याद्याधिका भवेत्। इति शिवराघवसंवादवचनस्य सामगविषये सावकाशस्य सर्वविषयत्वमभिप्रेत्य साधारण्येनैव निर्णयमुपक्रम्य सामगविषये सावकाशं–अमावास्या तु या हि स्यादपराह्णद्वये समा। क्षये पूर्वा परा वृद्धौ साम्येपि च परा स्मृता। इति शिवराघवसंवादवचनमुपन्यस्य–सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि। स्यातां ते चेत्तु मध्याह्ने श्राद्धादि स्यात्कथं तदा। इति प्रथमवाक्यं त्यक्त्वा तस्योत्तररूपं–तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता। साम्येपि च कुहूर्ज्ञेया वेदवेदांगवेदिभिः। इति प्रचेतोद्वितीयवाक्यं शिवराघवसंवादवाक्यैकवाक्यतया संयोज्य अपराह्णद्वयास्पर्शे तिथिक्षयेऽप्यपराह्णद्वयाव्यापीति जाबालिवचनात्साग्निकानग्निकव्यवस्थेति सिद्धांतितम्। तत्र अमावास्या तु या हि स्यादित्यस्य निरग्निकविषयत्वस्वीकारे तिथिक्षये तेन निरग्निकानां पूर्वा प्राप्नोति। अनेन तूत्तरा इति विरोधः स्पष्ट एव। किंच सर्वाहिताग्निविषयत्वे त्रिमुहूर्ता त्विति हारीतेन–चतुर्दशी चतुर्यामे अमा यत्र न दृश्यते। इत्यादिभिरिष्टिप्रकरणे माधवेनाप्युदाहृतबौधायनाद्यनेकवाक्यैश्च विरोधोपि मध्याह्णव्याप्त्या व्यवस्थापकप्रचेतोवाक्यस्याहिताग्निविषयत्वे तिथेः क्षये पूर्वा, साम्ये वृद्धौ चाहिताग्नीनामप्युत्तराग्रहणापत्तौ उदाहृतानेकवाक्यविरोधः प्रसज्येत। यदपि विरुद्धवाक्ययोजनार्थं मध्याह्नाद्या त्वमावास्या परस्तात्संप्रवर्तते। भूतविद्धा तु सा ज्ञेया न सा पंचदशी भवेत्। इति बृहस्पतिवाक्ये मध्याह्नादूर्ध्वं–अपराह्णमतिक्रम्य परस्तात्संप्रवर्तते। इति व्याख्येयमित्युक्तं तन्मध्याह्नात्परस्तादित्यसात्स्वारस्याद्भूतोष्टादशनाडीभिरित्यनेनैकवाक्यत्वाच्चापराह्णस्यैव प्रतीतेः। अपराह्णमतिक्रम्येत्यादिव्याख्याने प्रमाणाभावात्। प्रतिपत्स्वप्यमावास्येति जाबालिवाक्ये पूर्वेद्युरपराह्णव्यापित्वाभावे साग्निकैरेव भूतविद्धा कार्येत्युक्त्या निरग्निकैः पूर्वाह्णव्यापिन्युत्तरेति परिशेषितं तत्–घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा। भूतविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि। इति बौधायनवाक्ये घटिकैकापि कर्मकालसंबंधिनी यदि न स्यादिति स्वोक्त्या–भूतविद्धाप्यमा-

मास्या प्रतिपन्मिश्रितापि वा । श्राद्धे कर्मणि विद्वद्भिर्ग्राह्या कुतु-पकालिकी । इति कुतुपोत्तरार्धव्यापिन्येव प्रतिपन्मिश्रिता कार्येति हारीतवचनेन च विरुद्धम् । यदप्यनेन वचनेन उभयत्रापराह्ण-स्पर्शाभावे निरग्निकानां कुतुपव्याप्त्या प्रतिपन्मिश्रा विधीयते । भूतविद्धकुतुपकालिक्युपादानं दृष्टांतार्थं । यथा कुतुपकालिकी भूतविद्धोपादेया तथा प्रतिपन्मिश्रापि कुतुपकालिकीत्युक्तम् । तत्र दृष्टांतोक्तिः—सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि । स्यातां ते चेत्तु मध्याह्ने श्राद्धादि स्यात्कथं तदा । तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता । साम्येपि च कुहूर्ज्ञेया वेदवेदांगवेदिभिः । इति प्रचेतोवचनविरोधादयुक्तैव । पूर्वाप-राह्णादूर्ध्वं प्रवृत्ताया द्वितीयदिने रौहिणमुहूर्तव्याप्तेरवश्यंभावि-त्वेन कुतुपोपादानवैयर्थ्यापत्तेश्च । तस्मात्कालादर्शानुसारेण निर्णयं कुर्वद्भिर्माधवाचार्यैः उपसंहारे हेमाद्रिकृतव्यवस्था-मनुसरद्भिर्यथा पराशरमाधवे भार्यायां रजोवत्यामपि श्राद्ध-तिथिदिने एव श्राद्धं कार्यमिति कालादर्शमते पंचमदिने कार्यमिति हेमाद्रिमतं चोपन्यस्य यदत्र युक्तं तद्ग्राह्यमित्युक्त्वा स्वस्योदासीनता स्पष्टोक्ता, तथा प्रकृते निर्णये सा ध्वनि-तेत्येव युक्तमिति विभावनीयं । अतएव माधवानुसारेणोपक्रम्य कालादर्शाद्यनुसारेणोपसंहरन् मदनरत्न उपेक्ष्यः । अतएव भूतविद्धेति हारीतवचनस्य उभयत्रापराह्णस्पर्शाभावे सावका-शस्य निरग्निकान्प्रति कुतुपव्याप्त्या निर्णायकत्वं न संभवति, तत्र भूतविद्धोपादानं दृष्टांतार्थं इति कालतत्त्वविवेचनमुपेक्ष्यम् । दृष्टांततासंभवात्तस्य वचनविरुद्धत्वात् । हेमाद्रिणा तु निरग्निकैः कुतुपकालव्याप्तैव ग्राह्येत्युक्तं तद्दूषणं कालतत्वविवेचने द्रष्ट-व्यमिति तदनुयायिरामभट्टोक्तिरप्युपेक्ष्या हेमाद्र्यर्थाज्ञाननि-बंधनत्वात्, उदाहृतानेकवचनविरुद्धत्वाच्च । तस्माद्बौधायन-बृहस्पतिहारीतप्रचेतोजाबाल्यादिवचनानां अप्रामाणि-केन मध्याह्नात्परमपराह्णमतिक्रम्येत्यादिव्याख्यानेनाहिताग्निसा-धारण्यस्य वक्तुमशक्यत्वात्तेषां निरग्निकविषयत्वमेव वक्तव्यम् । तच्च हारीतवचनस्य विधायकत्वे अन्येषां तदनुग्राहकत्वे एव संभवंतीति पूर्वोक्तव्यवस्थया कुतुपव्याप्त्यैव निरग्निकान्प्रत्यमा-वास्या निर्णेतव्येति सिद्धम् । अतएव एतच्चापराह्णव्यापिन्यां

सिनीवाल्यां श्राद्धविधानमग्निमद्विषयं। अनग्निकानां तु कुतुपकालव्यापिन्यां कुह्वामेव। अतएव बौधायनबृहस्पतिकार्ष्णाजिनिवाक्यैस्तेषां पूर्वविद्धा निषिध्यते। लौगाक्षिसौरपुराणव्यासबौधायनवाक्यैराहिताग्नीनां सिनीवाली निरग्निकानां कुहूरिति व्यवस्थयैव विधानम्। सा च कुहूः कुतुपकालव्यापिनी ग्राह्या भूतविद्धाप्यमावास्येति हारीतवचनात्। एवं सति दिनद्वयसंबंधिन्याममावास्यायां सत्यां या कुतुपकालव्यापिनी सैवानग्निकैर्ग्राह्येत्युक्तं भवति। यदोभयत्रापि कुतुपकालसंबंधाभावस्तदा घटिकैकेति बौधायन–प्रतिपत्स्वप्यमावास्येत्यादिजाबाल्यादिवचनैः पूर्वविद्धैव ग्राह्या। यदा तु दिनद्वयेपि कुतुपकालव्यापिनी तदा सिनीवाली कुहूश्चैवेति प्रचेतोवचनात्क्षये पूर्वा, वृद्धौ साम्ये चोत्तरा ग्राह्येति हेमाद्रिसिद्धांतः संगच्छते इति विभावनीयम्। एतेन निरग्निकानां दिनद्वये अपराह्णस्पर्शाभावे एव कुतुपकालव्यापिनीति प्रतिपादका यथाश्रुतमाधवाद्यनुसारेण प्रवृत्ताः कालतत्वविवेचनादयः सर्वेपि नवीनग्रंथा उपेक्ष्याः। उदाहृतानेकवचनविरोधात् हेमाद्रिविरोधाच्चेति बोध्यम्।

तथाच सर्ववाक्यैकवाक्यतया हेमाद्रिसंमततया च निर्णीताया अमावास्याया अयं निर्णयसंग्रहः—बह्वृचयाजुषैराहिताग्निभिः पूर्वदिने अपराह्णे सत्त्वे असत्त्वे वा इष्टिदिनात्पूर्वदिने एव दर्शश्राद्धं कार्यं। तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजंते इति श्रुतेः। पिंडयज्ञं तु निर्वर्त्य विप्रश्चंद्रक्षयेऽग्निमान्। पिंडान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्। इति मनूक्तेश्च—त्रिमुहूर्ता तु कर्तव्या पूर्वा खर्वा च बह्वृचैः। कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः। इति हारीतवचने अध्वर्युशब्दस्तैत्तिरीयपरः। सिनीवालीमुपोष्याथ कृत्वेष्टिं चापरेऽहनि। पिंडयज्ञं ततः कुर्युः स्वकाले तैत्तिरीयकाः। इति बौधायनवचनेन तैत्तिरीये उपसंहारात्। तत्र यदा कार्त्स्न्येनोभयापराह्णव्यापिनी अमा तदा प्रतिपद्दिने एवेष्टिरिति सर्वेषामुत्तरैव। एकदेशेनापराह्णद्वयव्याप्तावपि प्रतिपद्वृद्ध्या प्रतिपदि यागस्तदाप्युत्तरैव सर्वेषाम्। यदा तु द्वितीयदिने एवापराह्णव्याप्तावपि प्रतिपत्क्षयात्तद्दिनएवेष्टिस्तदा बह्वृचादीनां पूर्वा, तैत्तिरीयाणामुत्तरा, सामगानां पूर्वा उत्तरा वेति

साम्ये वृद्धौ चोत्तरा। यदा पूर्वदिनेऽधिकापराह्णव्याप्तिर्द्वितीयदिनेल्पापराह्णव्याप्तिस्तदा अल्पापराह्णे त्याज्येति वचनात्सामगानां वृद्धावपि पूर्वा तैत्तिरीयाणामुत्तरा। यदाप्युभयापराह्णस्पर्शाभावस्तदापि सामगानां पूर्वा तैत्तिरीयाणामुत्तरेति।—आहिताग्नेस्तु यो धर्मो गृह्याग्नेरपि स स्मृतः। इति वृद्धप्रवादात् गृह्याग्निमतामप्ययमेवामावास्यानिर्णयः। निरग्निकानां द्विजानां स्त्रीणां शूद्राणां च—घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा। पूर्वविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि। इति बौधायनादिवचनैर्द्वितीयदिने द्वेधा विभक्तदिनस्य उत्तरार्धाद्यर्धघटिकाव्याप्त्यभावे एव पूर्वविद्धाभ्यनुज्ञानात् द्वितीयदिने कुतुपोत्तरार्धव्याप्तौ तत्रैव श्राद्धम्। भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा। श्राद्धकर्मणि विद्वद्भिः कार्या कुतुपकालिकी। इति हारीतवचनात्। यदा दिनद्वयेपि कुतुपरूपमध्याह्नव्यापिनी तदा—सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि। स्यातां ते चेत्तु मध्याह्ने श्राद्धादि स्यात्कथं तदा। तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता। साम्येपि च कुहूर्ज्ञेया वेदवेदांगवेदिभिः। इति वचनात्पूर्वोक्तरीत्या चतुर्दशीभोगापेक्षयामावास्याभोगस्य न्यूनत्वे पूर्वा, आधिक्ये साम्ये चोत्तरेति संक्षेपः। अरुणोदयवेलायाममावस्या यदा भवेत्। स कालः परमो ज्ञेयः पितॄणां दत्तमक्षयम्। इति वृद्धवसिष्ठवचनं स्नानपितृतर्पणादिविषयं। अतएव हेमाद्रौ पाद्मे—अमा वा प्रतिपद्युक्ता सर्वपापहरा तिथिः। चंद्रसूर्यग्रहैस्तुल्या स्नानदानजपादिषु। इति। यानि तु—कन्यामकरमीनेषु तुलायां मिथुने तथा। पूर्वविद्धैव सर्वेषां पूज्या भवति यत्नतः। इत्यादीनि हारीतादिवचनानि तानि व्रतविषयाणि। तुलायां मिथुने मीने कन्यायां मकरेप्यमा। भूतविद्धा व्रते ग्राह्या शेषेषु प्रतिपद्युता। इति जाबालिवचनादिति हेमाद्रिमाधवादय इति। इति पुरुषार्थचिंतामणौ श्राद्धे अमावास्यानिर्णयः।

अथ ग्रहणं निर्णीयते—तत्र वृद्धगार्ग्यः—पूर्णिमाप्रतिपत्संधौ राहुः संपूर्णमंडलम्। ग्रसते चंद्रमर्कं च पर्वप्रतिपदंतरे।

इति । तत्र पुण्यकालमाह जाबालिः-संक्रांतौ पुण्यकालस्तु षोडशोभयतः कलाः । चंद्रसूर्योपरागे तु यावद्दर्शनगोचरे । इति अत्र दर्शनगोचरशब्दः-राज्यंत्ययामनाडी द्वे संध्यादिः काल उच्यते । दर्शनाद्रविरेखायास्तदंतो मुनिभिः स्मृतः । आमंडलदर्शनान्नक्षत्रं दृष्ट्वा वाचं विसृजीतेत्यादिवाक्येष्विव चाक्षुषज्ञानविषयतायोग्यपरः । तेन यावति काले चाक्षुषज्ञानयोग्य उपरागः तावान्कालः पुण्यकाल इत्यर्थः । दर्शनस्य विशेषणत्वे यदा मेघादिना रविरेखादेर्दर्शनाभावस्तदा संध्यासमाप्त्यभावेन होमादिकर्मांतरानुष्ठानाभावापत्तेः-रजसो दर्शने नारी त्रिरात्रमशुचिर्भवेत् । इत्यत्रांधस्त्रीणां सर्वदा, रात्राववलोकनाभावेन दर्शनकालपर्यंतमन्यासां च अशुचित्वं न स्यात् । उपरागदर्शनानंतरं मेघादिना दर्शनाभावे श्राद्धदानाद्यभावापत्तेः । नेक्षेतोद्यंतमादित्यं नास्तं यंतं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् । इति मनुना गृहस्थस्य ग्रस्तादित्यदर्शननिषेधात्तेषामंधस्य च स्नानाद्यभावापत्तेश्च । नच योग्यत्वविवक्षायां द्वीपांतरजातग्रहणस्य दर्शनयोग्यत्वानपायात्तत्रापि स्नानाद्यापत्तिरिति वाच्यम् । सूर्यग्रहो यदा रात्रौ दिवा चंद्रग्रहस्तथा । तत्र स्नानं न कुर्वीत दद्याद्दानं नच क्वचित् । इति हेमाद्रिमाधवाद्युदाहृतषट्त्रिंशन्मतवचनेनैव वारणात् । तथाच मेघादिवशाद्दर्शनाभावेपि दर्शनयोग्यतायाः सत्त्वाद्यावति काले उपरागो ज्योतिःशास्त्रान्निश्चितस्तावान्पुण्यकाल इति सिद्धम् । नचैवं द्वीपांतरजातोपरागस्य वचनेनैव वारणे दर्शनगोचर इत्यस्य वैयर्थ्यापत्तिः । अनादेश्यरूपच्छायाग्रहणव्यावृत्तये तस्यावश्यकत्वात् । अतएव हेमाद्रिणा चाक्षुषज्ञानविषयस्यैव निमित्तत्वात् चाक्षुषे एव ज्ञाने दर्शनपदस्य मुख्यत्वात्तेन मेघादिच्छन्ने स्नानादिकं न कार्यमिति केषांचिदुक्तिं दूषयित्वा मेघादिप्रतिबंधकेन दर्शननिषेधेन वा स्वस्य दर्शनाभावेपि दर्शनयोग्यतायास्तत्रापि सत्त्वात्तथैव शिष्टाचाराच्च मेघादिच्छन्नेपि स्नानदानादिकं कार्यमेवेति सिद्धांतितं । माधवाचार्यैरपि । ननु मेघाद्यंतर्धाने दर्शनं न संभवति इति चेन्न । दर्शनशब्देन शास्त्रीयज्ञानस्यैव विवक्षितत्वादित्युक्तं तेषामप्युक्तार्थे एव तात्पर्यात् । मदनरत्नेनापि चाक्षुषज्ञानयोग्यताया मेघाच्छन्नेपि सत्वात्तदापि स्नानादिकं कार्यमेव । हेमा-

द्र्यादिदाक्षिणात्यानामिदमेव मतम् । मेघादिवशाद्दर्शनाभावे स्नानादिकं न कार्यमिति कल्पतरुकारपक्षे सकृद्दृष्टस्य ग्रहणस्य मेघाद्यावरणेन पुनरदर्शने स्नानाद्यकरणापत्तेः सकलशिष्टव्यवहारविरोधापत्तेरिति कल्पतरुर्दूषितः । एतेनात्र दर्शनं चक्षुर्व्यापार एव नतु शास्त्रतोऽवगतिः । तथा सति रात्रौ सूर्यग्रहे दिवा चंद्रग्रहे च स्नानाद्यापत्तेः । तेन यस्य राशौ ग्रहणं भवति सोऽप्येकवारं दृष्ट्वा मत्स्यपुराणोक्तशांतिविधिना स्नायात् पुनर्न पश्येदिति निर्णयामृत उपेक्ष्यः । अल्पकालिकानादेश्यग्रहणवद्वीपांतरगतस्यापि तस्य एतद्वीपावस्थितपुरुषस्य दर्शनयोग्यताया एवाभावात्, सूर्यग्रहो यदा रात्रावित्यादिना निषेधाच्च । अतएव दर्शनपदाच्चाक्षुषज्ञानस्यैव निमित्तता विधीयते। तच्च चाक्षुषं स्नानादिकर्तृनिष्ठमेव निमित्तम्। अन्यथा पुत्रादिमुखदर्शने नांदीमुखं पितृगणं पूजयेदित्यत्रापि अन्यकर्तृकस्वपुत्रदर्शनज्ञानेपि नांदीश्राद्धं प्रसज्येतेति तिथितत्त्वादिगौडग्रंथा अप्युपेक्ष्याः।पितृकर्तृकपुत्रमुखकर्मकदर्शनस्य स्वरूपत एव निमित्तत्वस्वीकारे रात्र्यंधस्य पितुः रात्रौ, तस्मिन्काले कंचित्कालं रोगेण प्रतिबद्धदर्शनस्य पितुः दर्शनकालपर्यंतं अंधस्य पितुः कदापि पुत्रजन्मनिमित्तकनांदीश्राद्धाकरणापत्तौ रात्र्यादावेव तद्विधायकवचनविरोधात् । किंच तन्मुखदर्शनकाले श्राद्धस्य कर्तुमशक्यत्वात् तन्निमित्तकश्राद्धस्यैव लोपापत्तेः। मुक्तिं दृष्ट्वा तु भुंजीतेत्यादिहेमाद्र्युदाहृतविष्णवादिवाक्येष्वपि दर्शनस्यैव ग्राह्यत्वापत्तौ मेघवशाद्दर्शनाभावे भोजनाभावापत्तेश्च । तस्मादत्रापि दर्शनयोग्यताया एव निमित्तत्वमाश्रित्य श्राद्धस्यानुष्ठेयत्वात् । गतं प्रतिबंद्यापि दर्शनस्य निमित्तत्वसाधनप्रत्याशयेति विपश्चितो विदांकुर्वंतु । तत्सिद्धं दर्शनयोग्येप्युपरागे स्नानादिकं कार्यमिति । हेमाद्रौ मार्कंडेयपुराणे—चंद्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे । अक्षयं कथितं पुण्यं तत्रार्के तु विशेषतः । दृष्टे दर्शनयोग्ये इति हेमाद्रिः । व्यासः—रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा । चूडामणिरिति ख्यातस्तत्रानंतफलं लभेत् । वारेष्वन्येषु यत्पुण्यं ग्रहणे सूर्यचंद्रयोः । तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतं । इति । तत्रैव ब्रह्मवैवर्ते—त्रिदशाः स्पर्शसमये तृप्यंति पितरस्तथा । मनुष्या

मध्यकाले तु मोक्षकाले तु राक्षसाः । **वृद्धवसिष्ठः**– स्यादुपरागादौ मध्ये होमः सुरार्चनं । इति । ग्रस्यमाने भवे ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं यते । इति । **पाद्मे**–उपमर्दे लक्षगुणं ग्रहणे चंद्रसूर्ययोः । कोटिगुणं मध्ये मुक्तिकाले त्वनंतकम् । इति । **शातात** अयनादौ सदा देयं द्रव्यमिष्टं ग्रहे तु यत् । षडशीतिमुखे विमोक्षे चंद्रसूर्ययोः । विमोक्षे वर्तमाने इत्यर्थः । यावद्दर्शन इति वचनात् । **षट्त्रिंशन्मते**–सर्वेषामेव वर्णानां राहुदर्शने । सचैलं तु भवेत्स्नानं सूतकान्नं विवर्जये राहुसूतकान्नमित्यर्थः । ग्रहणे संक्रमे चैव न स्ना मानवः । सप्तजन्मनि कुष्ठी स्याद्दुःखभागी च जा इति वृद्धवसिष्ठवचनात् नित्यं चेदं स्नानम् । मुक्त दमावश्यकम् । विमुक्ते यदि न स्नानायाच्चंद्रसूर्यग्रहे तु तस्य तावदशौचं स्याद्यावत्स्यादपरो ग्रहः । इति ब्रह्म तात् । **दक्षः**–उषस्युषसि यत्स्नानं संध्यायामुदिते रवौ सूर्योपरागे च प्राजापत्येन तत्समम् । **विष्णुः**–अयने विषु चंद्रसूर्यग्रहे तथा । अहोरात्रोषितः स्नात्वा सर्वपापै च्यते । पूर्वस्मिन्दिने कृतोपवास इति केचित् । तन्न । च ग्रहसंबंध्यहोरात्रपरित्यागेनाहोरात्रांतरग्रहणे प्रमाणाभा **हेमाद्रिः** । युक्तं चेदम् । उषित इत्यत्रादिकर्मणि क्तः भूतकाले । सच गत्यर्थाकर्मकेति सूत्रेण कर्तरीति प्रारब्ध इति पर्यवसितोर्थः । अतः–ग्रहणे चंद्रसूर्ययोः । उपवासो र्तव्यो गृहिणा पुत्रिणा तथा । इति निषेधोप्युपपद्यते इति बो **ब्रह्मपुराणे**–नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः । र्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु । अहोरात्रोषितः स्नान दानं तथा जपम् । यः करोति प्रसन्नात्मा तस्य तस्याक्षयं **यमः**–अयने विषुवे चैव चंद्रसूर्यग्रहे तथा । कृतोपवा स्नायात्सर्वपापैः प्रमुच्यते । **लैंगे**–त्रिरात्रं समुपोष्यैव चंद्रसूर्ययोः । स्नात्वा दद्याच्च विधिवन्मोदते ब्रह्मणा इदं चोपोषणं पुत्रवतो निषिद्धम् । आदित्येऽहनि संक्रांत चंद्रसूर्ययोः । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही वचनात् । **कात्यायनः**–स्वर्धुन्यंभःसमानि स्युः सर्वा

भूतले । कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः । स्वर्धुनी गंगा । हेमाद्रौ व्यासः—सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गंगासमं तोयं राहुग्रस्ते दिवाकरे । इंदोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः । गंगातोये तु संप्राप्ते इंदोः कोटी रवेर्दश । गंगाकोटिसहस्रस्य यत्फलं लभते नरः । तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे । चंद्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीं । स स्नातः सर्वतीर्थेषु किमर्थमटते महीं । इति । ब्रह्मपुराणे—तिस्रो नद्यो महापुण्या वेणी गोदाथ जाह्नवी । गां हरीशांगतः प्राप्ता गंगा इति हि कीर्तिताः । इति । गां हरीशांघ्रिकात्प्राप्ता इति पाठांतरं । हरेश्चरणः ईशस्य शिरः तस्माद्गां प्राप्ता इत्यर्थः इति माधवः । गंगास्नानासंभवे नद्यंतरे स्नायात् । तदुक्तं महाभारते—गंगास्नानं तु कुर्वीत ग्रहणे चंद्रसूर्ययोः । महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि । इति । महानद्य उक्ता ब्रह्मपुराणे—गोदावरी भीमरथी तुंगभद्रा च वेणिका । तापी पयोष्णी विंध्यस्य दक्षिणे तु प्रकीर्तिताः । भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विंध्यस्योत्तरतस्तथा । इति । तदभावे तु शंखः—वापीकूपतडागेषु गिरिप्रस्रवणेषु च । नद्यां नदे देवखाते सरसीषूद्धृतांबुनि । उष्णोदकेन वा स्नायाद्ग्रहणे चंद्रसूर्ययोः । इति । अत्रोष्णोदकमातुरविषयम् । तदाह व्याघ्रः—आदित्यकिरणैः पूतं पुनः पूतं च वह्निना । अतो व्याध्यातुरः स्नायाद्ग्रहणेप्युष्णवारिणा । इति । अतएवोष्णोदकमारभ्य समुद्रजलपर्यंतेषूत्तरोत्तरप्राशस्त्यमाह मार्कंडेयः—शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् । भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् । ततोपि सारसं पुण्यं ततः पुण्यं नदीजलम् । तीर्थतोयं ततः पुण्यं महानद्यंबु पावनम् । ततस्ततोऽपि गंगांबु पुण्यं पुण्यस्ततोंबुधिः । इति ।

ग्रहणे मासविशेषेण नदीविशेषस्य प्राशस्त्यमुक्तं हेमाद्रौ देवीपुराणे—कार्तिके ग्रहणं श्रेष्ठं गंगायमुनसंगमे । गंगायमुनमिति सर्वो द्वंद्वो विभाषैकवद्भवतीत्येकवद्भावः । मार्गे तु ग्रहणं श्रेष्ठं देविकायां महामुने । पौषे तु नर्मदा पुण्या माघे संनिहिता शुभा । फाल्गुने वरुणा पुण्या चैत्रे चैव सरस्वती । वैशाखे तु महापुण्या चंद्रभागा सरिद्वरा । ज्येष्ठे तु कौशिकी

पुण्या आषाढे तापिका नदी । श्रावणे सिंधुनामा तु तथा भाद्रे तु गंडकी । आश्विने सरयूः श्रेष्ठा भूयः पुण्या तु नर्मदा । गोदावरी महापुण्या चंद्रे राहुसमन्विते । सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने । नर्मदातोयसंस्पर्शात्कृतकृत्या भवंति ते । ये सूर्ये सैंहिकेयेन ग्रस्ते रेवाजलं जनाः । स्पृशंति चावगाहंते न सा प्रकृति(र्मा)मानवी । स्मृत्वा शतक्रतुफलं[1] दृष्ट्वा गोदानजं फलं । स्पृष्ट्वा गोमेधतुल्यं तु पीत्वा सौत्रामणिं लभेत् । स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः । रविचंद्रोपरागे तु अयने चोत्तरे तथा । एवं गंगापि द्रष्टव्या तद्वदेव सरस्वती । तत्रैव **मात्स्ये**—गंगा कनखले पुण्ये प्रयागं पुष्करं तथा । कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे । **माधवे महाभारते**—सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु नास्तिक्यात्पंके गौरिव सीदति । **ऋष्यशृंगः**—चंद्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् । तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे । **विष्णुः**—राहुदर्शनदत्तं हि श्राद्धमाचंद्रतारकं । पुण्यं च सर्वकामीयं पितॄणामुपतिष्ठते । **शातातपः**—स्नानं दानं तपः श्राद्धमनंतं राहुदर्शने । आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् । **देवलः**—यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा । सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते । इति । **कौर्मे**—नैमित्तिकं तु कर्तव्यं ग्रहणे चंद्रसूर्ययोः । बांधवानां च मरणे नारकी स्यादतोऽन्यथा । अत्र श्राद्धं आमेन हेम्ना वा कार्यं । तथाच **हेमाद्रौ भविष्यत्पुराणं**—**माधवे बौधायनश्च**—अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि । हेमश्राद्धं ग्रहे चैव कुर्याच्छूद्रः सदैव हि । **शातातपः**—आपद्यनग्नौ तीर्थे च चंद्रसूर्यग्रहे तथा । आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा । इति । **प्रयोगपारिजाते गोभिलः**—दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् । अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः । इति । यानि तु—अन्नेनैवाब्दिकं कुर्याद्धेम्ना चामेन न क्वचित् । इत्यादिवचनानि तानि ग्रहणदिनातिरिक्तविषयाणि । यानि तु—ग्रहणात्तु द्वितीयेह्नि रजोदोषात्तु पंचमे । ग्रस्तोदये तु चंद्रस्य ग्रस्तास्ते च परे दिने । इति कैश्चिल्लिखितानि तानि निर्मूलान्येव । **प्रयोगपारिजातनिर्णयामृत**-

---

१ 'क्रतुशतफलं'.

मदनपारिजाताद्युदाहृतवचनविरोधात्। सूतकादौ विद्यमानेपि ग्रहणे स्नानश्राद्धदानानि कर्तव्यानि। तथाच **हेमाद्रौ लैंगे**–चंद्रसूर्यग्रहे स्नायात्सूतके मृतकेपि वा। अस्नायी मृत्युमाप्नोति स्नायी पापं न विंदति। सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते। इति। अत्र प्रथमवचनेनैव स्नाने विहिते द्वितीयवचनं दानादेर्विधानार्थं। **माधवे वृद्धवसिष्ठः**–सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावद्राहुर्न मुंचति। इति। **हेमाद्रौ स्मृत्यंतरे**–सूतके मृतके चैव यदि स्याद्राहुसूतकम्। तावत्तत्सूतकं नास्ति यावद्राहुर्न मुंचति। इति। **कालादर्शे अंगिराः**–सर्वे वर्णाः सूतकेपि मृतके राहुदर्शने। स्नात्वा श्राद्धं प्रकुर्वीरन्दानं शाठ्यविवर्जितम्। इति। **हेमाद्रिमाधवकालादर्शनिर्णयामृतमदनरत्नादि**ष्वपीत्थमेवोक्तम्। एतेन सूतके मृतके चैव न दोषो राहुदर्शने। स्नानमात्रं तु कर्तव्यं दानश्राद्धविवर्जितं।इति **संवत्सरप्रदीपादि**गौडग्रंथा उपेक्ष्याः। आहत्य श्राद्धदानविधायकांगिरोवचन–यावत्तावच्छब्दयुक्त–**लिंगपुराणादिवचनहेमाद्र्यादिनिबंधविरोधात्**। दानविषये सर्वे ब्रह्मसमा द्विजा इत्युक्तं तथापि–दातव्यमिति यद्दानं दीयतेऽनुपकारिणे। देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम्। इति वचनात्पात्रालाभविषयं तदिति बोध्यम्। तत्र **पात्रलक्षणमाह याज्ञवल्क्यः**–न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते। इति। पात्रतारतम्येन फलतारतम्यमाह **दक्षः**–सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। श्रोत्रिये शतसाहस्रं पात्रे त्वानंत्यमश्नुते। इति। **भारते**–भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितं। तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता। इति। ग्रहणकाले स्वापादिनिषेधः **शिवरहस्ये**–सूर्येंदुग्रहणं यावत्तावत्कुर्याज्जपादिकम्। न स्वपेन्न च भुंजीत स्नात्वा भुंजीत मुक्तयोः। इति। भोजनं तु ग्रहणपूर्वकाले ग्रस्तास्ते चोत्तरकालेपि निषिद्धम्। तदुक्तं **हेमाद्रौ मात्स्ये**–चंद्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा तु मुक्तयोः। अविमुक्तास्तगतयोर्दृष्ट्वा स्नात्वा परेहनि। तत्रैव **ब्राह्मे**–नाश्नीयादथ तत्काले ग्रस्तयोश्चंद्रसूर्ययोः। मुक्तयोस्तु कृतस्नानः पश्चाद्भुंज्यात्स्व-

वेश्मनि । अत्र स्ववेश्मनीत्युक्तया परान्ननिषेधो गम्यते । विष्णुधर्मोत्तरे-चंद्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव । ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया । नाचरेत्सग्रहे चैव तथैवास्तमुपागते । यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु । मुक्तं दृष्ट्वा तु भुंजीत स्नात्वा चैव यथाविधि । अत्र चंद्रग्रहे समस्तदिने भोजननिषेधो ग्रस्तोदयविषयः । ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् । इति वृद्धवसिष्ठैकवाक्यत्वात् । अर्धरात्रादधश्चोर्ध्वं यदा चंद्रग्रहो भवेत् । पूर्वं पूर्वत्र भोक्तव्यमुत्तरे चोत्तरेपि च । इति हेमाद्रौ पाद्माच्च । अर्धरात्रात्पूर्वं ग्रहणे पूर्वत्र पूर्वाह्ने अर्धरात्रादूर्ध्वं ग्रहणे उत्तरे अपराह्णेपि यामत्रयपर्यंतमित्यर्थः । नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् । ग्रहकाले च नाश्नीयात्स्नात्वाश्नीयात्तु मुक्तयोः । मुक्ते शशिनि भुंजीत यदि न स्यान्महानिशा । स्नात्वा दृष्ट्वा परेह्न्यद्याद्ग्रस्तास्तमितयोस्तयोः । यत्तु हेमाद्रौ स्कांदे-यदा चंद्रग्रहस्तात निशीथात्परतो भवेत् । भोक्तव्यं तात पूर्वाह्ने नापराह्णे कथंचन । पूर्वं निशीथाद्ग्रहणं यदा चंद्रस्य वै भवेत् । तदा दिवा न कर्तव्यं भोजनं शिखिवाहन । इति । अत्र प्रथमवाक्यं-चंद्रसूर्यग्रहे नाद्यादाद्यं यामचतुष्टयं । केचिन्नितयमित्याहुर्मुनयो भृगुनंदन । इति हेमाद्र्युदाहृतब्रह्मवैवर्तैकवाक्यात्पाक्षिकयामचतुष्टयवेधाभिप्रायम् । द्वितीयं तु-ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् । इत्याद्येकवाक्यत्वात् निशीथात्परत इति प्रथमवाक्ये निशीथशब्देन रात्रिपूर्वार्धस्यैव ग्रहणात्पूर्वं निशीथादित्युत्तरवाक्येपि तस्यैव ग्रहणम् । तेन तस्मात्पूर्वं दिनशेषे इत्यर्थात् ग्रस्तोदयाविषयमिति ज्ञेयम् । अत एव-ग्रहणं तु भवेदिंदोः प्रथमादधियामतः । भुंजीतावर्तनात्पूर्वं प्रथमे प्रथमादधः । आवर्तनं दिनमध्यं । सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयं । चंद्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना । इति मार्कंडेयवृद्धगौतमवाक्याभ्यां चंद्रग्रहात्पूर्वं यामत्रयमेव भोजनं निषिध्यते । अत एव यस्मिन्यामे चंद्रग्रहणं ततः पूर्वं यामत्रयं त्यक्त्वा भुंजीतेति हेमाद्र्यादिसकलनिबंधाः संगच्छंते । बालादिविषये त्वाह हेमाद्रौ मार्कंडेयः-सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनं । अपराह्णे न मध्याह्ने मध्याह्ने नतु संभवे । भुंजीत संगवे चेत्स्यान्न पूर्वं भोजनक्रिया ।

इति । ईषदसमर्थे प्रत्युक्तं हेमाद्रौ स्मृत्यंतरे—सायाह्ने संगवेऽश्नीयाच्छारदे संगवादधः । मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे । इति । शारदः अपराह्णः । गार्ग्यः-संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ । तदहर्नैव भुंजीत रात्रावपि कदाचन । सायंसंध्यायां सूर्यस्य ग्रस्तास्ते पूर्वस्मिन्नहनि उत्तरस्यां रात्रौ च न भोक्तव्यमित्यर्थः । प्रातःसंध्यायां चंद्रस्य ग्रस्तास्ते पूर्वस्यां रात्रौ उत्तरस्मिन्नहनि च न भोक्तव्यमित्यर्थः । समर्थस्य तु भोजने प्रायश्चित्तमुक्तं षट्त्रिंशन्मते—चंद्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति । तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति । इति । तस्मिन्दिने निषिद्धपूर्वोत्तरकालयोरित्यर्थः । मुक्त्यनंतरमपि ग्रहणतत्पूर्वकालपक्कं न भोक्तव्यं शृतमन्नं विवर्जयेदित्युदाहृतवचनात् । नवश्राद्धेषु यच्छिष्टं ग्रहपर्युषितं च यत् । इति मिताक्षरायां वचनाच्च ।

केषु केषुचित्पर्युषितत्वदोषो नास्तीत्याह ज्योतिर्निबंधे मेधातिथिः—आरनालं पयस्तक्रं दधि स्नेहाज्यपाचितम् । मणिकस्थोदकं चैव न दुष्येद्राहुसूतके । इति । मन्वर्थमुक्तावल्यां—अन्नं पक्वमिह त्याज्यं स्नानं सवसनं गृहे । वारितक्रारनालादि तिलदर्भैर्न दुष्यति । इति । जले पर्युषितत्वं गंगाजलातिरिक्तस्वल्पजलविषयं बोध्यम् । चंद्रग्रस्तास्ते विशेषमाह मदनरत्ने उशना—ग्रस्ते ह्यस्तंगते त्विंदौ ज्ञात्वा मुक्त्यवधारणं । स्नानहोमादिकं कार्यं भुंजीतेंदूदये पुनः । इति ।

नक्षत्रविशेषेषु ग्रहणेषु शुभाशुभफलमाह हेमाद्रौ गर्गः—तिष्यश्चैवाजपादं च याम्यं भाग्यं च पैतृकं । ऐंद्राग्नमग्निदैवत्यं सप्तैतान्यानलो गणः । आजपादं पूर्वाभाद्रपदा । याम्यं भरणी । भाग्यं पूर्वाफल्गुनी । पैतृकं मघा । ऐंद्राग्नं विशाखा । अग्निदैवत्यं कृत्तिका । आनले मंडले दृष्टं ग्रहणं रविसोमयोः । राज्ञो भयंकरं विद्यात्प्रजानां बहुदोषकृत् । अहिर्बुध्न्यं तथा पौष्णं मूलमाप्यं च शांकरं । वारुणं सर्पदैवत्यं वारुणं मंडलं स्मृतं । अहिर्बुध्न्यमुत्तराभाद्रपदा । पौष्णं रेवती । आप्यं पूर्वाषाढा । शांकरमार्द्रा । वारुणं शततारका । सर्पदैवत्यमाश्लेषा । एतस्मिन्नुपरागे स्यान्मंडले सोमसूर्ययोः । दुर्भिक्षामयनाशस्तु प्रजानामिति निश्चयः । ऋक्षाणामर्यमादीनां चतुर्णां च पुनर्वसुः । सौ-

र्य्यं तथाश्विदैवत्यं वायव्यं मंडलं भवेत्। अर्यमादीन्युत्तराफल्गुन्यादीनि। सौम्यं मृगशीर्षं। अश्विदैवत्यं अश्विनी। समरं सभयं चैव दुर्भिक्षं कुरुते चिरात्। व्याधिशस्त्राग्निकोपश्च मंडलेस्मिन्नुपप्लुते। ज्येष्ठा ब्राह्मं तथा मैत्रं प्राग्देशं वासवं तथा। वैष्णवं वैश्वदेवं च पुरुहूतस्य मंडलम्। ब्राह्मं रोहिणी। मैत्रमनुराधा। प्राग्देशमभिजित्। वासवं धनिष्ठा। वैष्णवं श्रवणं। वैश्वदेवं उत्तराषाढा। मंडलेस्मिन्समुत्पन्ने ग्रहणे जगतां शुभं। आनंदं सर्वभूतानां विदधाति विशेषतः।

मंडलविशेषेण शांतिविशेषमाह काश्यपः—आग्नेयीं कारयेच्छांतिं शांतिं कुर्याच्च वारुणीं। वायव्या शांतिरिष्येत माहेंद्रीं तत्र कारयेत्। इति तत्तद्देवतापूजाजपहोमादिकमुक्तं तद्राजभिर्लोकहितार्थं कार्यं। जन्मराश्यादिषु ग्रहणे दोषमाह गर्गः—जन्मसप्ताष्टरिप्फांकदशमस्थे निशाकरे। दृष्टोरिष्टप्रदो राहुर्जन्मर्क्षे निधनेपि च। रिप्फं द्वादशं। अंका नव। निधनं सप्तमतारा। यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ। तज्जातानां भवेत्पीडा ये नराः शांतिवर्जिताः। यस्य त्रिजन्मनक्षत्रे तस्य रोगोथवा मृतिः। जन्मदशमैकोनविंशानि त्रीणि जन्मनक्षत्राणि। तस्य दानं च होमं च देवार्चनजपौ तथा। उपरागाभिषेकं च कुर्याच्छांतिर्भविष्यति। स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिं। ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः। सर्पस्य सर्पाकारस्य राहोरित्यर्थः। अद्भुतसागरे भार्गवः—यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते। राज्यभंगं सुहृन्नाशं मरणं चात्र निर्दिशेत्। राज्यस्य नक्षत्रं राज्याभिषेकनक्षत्रमिति तत्रैवोक्तम्। ज्योतिःसागरे—सौवर्णं कारयेन्नागं पलेनाथ पलार्धतः। तदर्धतस्तदर्धेन फणायां मौक्तिकं न्यसेत्। ताम्रपात्रे निधायाथ घृतपूर्णे विशेषतः। कांस्ये वा कांतलोहे वा न्यस्य दद्यात्सदक्षिणं। चंद्रग्रहे तु रूप्यस्य बिंबं दद्यात्सदक्षिणम्। नागं रुक्ममयं सूर्यग्रहे बिंबं तु हेमजम्। तुरंगरथगोभूमितिलसर्पिश्च कांचनम्। कालविवेके—सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनम्। सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदयेत्। सौवर्णं राजतं वापि बिंबं कृत्वा स्वशक्तितः। उपरागभवक्लेशच्छिदे विप्राय कल्पयेत्।

१ 'जननदशम'.

मम शांतिप्रदो भव । विधुंतुद नमस्तुभ्यं सिंहिकानंदनाच्युत । दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् । इति ।

शांतिरुक्ता मात्स्ये—यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः । स्नानं तस्य प्रवक्ष्यामि मंत्रौषधिसमन्वितम् । चंद्रोपरागं संप्राप्य कृत्वा ब्राह्मणवाचनं । संपूज्य चतुरो विप्रान्शुक्लमाल्यानुलेपनैः । पूर्वमेवोपरागस्य समानीयौषधादिकं । स्थापयेच्चतुरः कुंभानव्रणान्सलिलान्वितान् । गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् । पंचगव्यं पंचरत्नं पंचत्वक् पंचपल्लवं । रोचनं पद्मकं शंखं कुंकुमं रक्तचंदनं । शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलून् । मधुकं देवदारुं च विष्णुक्रांतां शतावरीं । बलां च सहदेवीं च निशाद्वितयमेव च । गजदंतं कुंकुमं च तथैवोशीरचंदनं । एतत्सर्वं च निक्षिप्य कुंभेष्वावाहयेत्सुरान् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः । योसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु । मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः । चंद्रोपरागसंभूतामग्निः पीडां व्यपोहतु । यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः । यमश्चंद्रोपरागोत्थां ग्रहपीडां० । रक्षोगणाधिपः साक्षान्नीलांजनसमप्रभः । खड्गहस्तोतिभीमश्च ग्रहपीडां० । नागपाशधरो देवः सदा मकरवाहनः । स जलाधिपतिर्देवो ग्रहपीडां० । प्राणरूपो हि भूतानां सदा कृष्णमृगप्रियः । वायुश्चंद्रोपरागोत्थां ग्रहपीडां० । योसौ निधिपतिर्देवः खड्गशूलगदाधरः । चंद्रोपरागकलुषं धनदोत्र व्यपोहतु । योसाविंदुधरो देवः पिनाकी वृषवाहनः । चंद्रोपरागपापानि स नाशयतु शंकरः । त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्ण्वर्करुद्राश्च दहंतु मम पातकम् । एवमावाहयेद्देवान्मंत्रैरेभिश्च वारुणैः । एतानेव तथा मंत्रान्स्वर्णपट्टे विलेखयेत् । ताम्रपट्टेऽथ वा लेख्या नववस्त्रे तथैव च । मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः । कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान् । गृहीत्वा स्थापयेद्रूढं भद्रपीठोपरि स्थितं । पूर्वैरेव तु मंत्रैश्च यजमानं द्विजोत्तमाः । अभिषे-

---

१ 'गुग्गुलान्'; गुग्गुलम्.

कं ततः कर्युमंत्रैर्वारुणसूक्तकैः । आचार्यं वरयेत्पश्चात्स्वर्णपट्टं निवेदयेत् । आचार्यं दक्षिणां दद्याद् गोदानं च स्वशक्तितः । होमं चापि प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा । दानं स्वशक्तितो दद्याद्यदीच्छेदात्मनो हितं । सूर्यग्रहे सूर्यनामयुक्तान्मंत्रांश्च कीर्तयेत् । अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत् । न तस्य ग्रहणे दोषः कदाचिदपि जायते । इति ग्रहणशांतिः ।

**सारसंग्रहे**—सतीर्थेऽर्कविधुग्रासे तंतुदामनपर्वणोः । मंत्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् । **रामार्चनचंद्रिकायां**—चंद्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये । मंत्रमात्रप्रकथनमुपदेशः स उच्यते । इति । **पुरश्चरणचंद्रिकायां**—अथवान्यप्रकारेण पुरश्चरणमिष्यते । ग्रहणेऽर्कस्य चेंदोर्वा शुचिः पूर्वमुपोषितः । ग्रहणादिविमोक्षांतं जपेन्मंत्रं समाहितः । अनंतरं दशांशेन क्रमाद्धोमादिकं चरेत् । होमाशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणं । षड्गुणं वाष्टगुणितं यथासंख्यं द्विजातयः । तेषां स्त्रीणां तु विज्ञेयस्तेषामेव समो जपः । यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्तितः । जपाद्दशांशतो होमस्तथा होमात्तु तर्पणं । नमोंतं मंत्रमुच्चार्य तदंते देवताभिधां । द्वितीयांतामहं पश्चात्तर्पयामि नमोंतकं । तर्पणस्य दशांशेन मार्जनं कथितं किल । तत्रैवं देवतारूपं ध्यात्वात्मानं प्रपूज्य च । नमोंतं मंत्रमुच्चार्य तदंते देवताभिधां । द्वितीयांतामहं पश्चादभिषिंचाम्यनेन तु । तोयैरंजलिना शुद्धैरभिषिंचेत्स्वमूर्धनि । मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् । विप्राराधनमात्रेण व्यंगं सांगं भवेद्यतः । ततो मंत्रप्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् । एवं च मंत्रसिद्धिः स्याद्देवता च प्रसीदति । इति । इदं च पुरश्चरणं ग्रस्तोदये ग्रस्तास्ते च न भवति । ग्रहणादिविमोक्षांतमित्यभिधानादिति ।

निर्णीतस्य ग्रहणतत्कृत्यस्यायं संग्रहः । तद्देशस्थपुरुषस्य चाक्षुषज्ञानयोग्यमेव ग्रहणं स्नानादौ निमित्तम् । तत्र यस्मिन्यामे चंद्रग्रहणं तस्मात्पूर्वं यामत्रयं त्यक्त्वा भोजनं कार्यं । सूर्यग्रहात्पूर्वं यामचतुष्टयं त्याज्यं । सूर्यग्रस्तोदये पूर्वरात्रौ चंद्रग्रस्तोदये संपूर्णदिने च न भोक्तव्यं । ग्रस्तास्ते तु पुनरुदयपर्यंतं शक्तेन न भोक्तव्यं । बालवृद्धातुरैर्ग्रहणयामात्पूर्वमेकं यामं त्य-

क्त्वा भोक्तव्यं । स्पर्शोत्तरं सचैलं तूष्णीं मज्जनं कृत्वा पश्चात्संकल्पपूर्वकं स्नानश्राद्धजपहोमदेवपूजादानानि कर्तव्यानि । आशौचादौ विद्यमानेपि ग्रहणनिमित्तकस्नानश्राद्धादिकं कर्तव्यमेव मुक्त्यनंतरं च स्नानं कर्तव्यमिति । इति पुरुषार्थचिंतामणौ ग्रहणनिर्णयः ।

**अथ संक्रांतिर्निर्णीयते** । ताश्च संक्रांतयो द्वादश । तदाह **हेमाद्रौ वसिष्ठः**—अयने द्वे विषुवे द्वे चतस्रः षडशीतयः । चतस्रो विष्णुपद्यश्च संक्रांत्यो द्वादश स्मृताः । झषकर्कटसंक्रांती द्वे तूदग्दक्षिणायने । विषुवती तुला मेषौ तयोर्मध्ये ततोऽपराः । वृषवृश्चिककुंभेषु सिंहे चैव यदा रविः । एतद्विष्णुपदं नाम विषुवादधिकं फलम् । कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः । षडशीतिमुखी प्रोक्ता षडशीतिफला गुणैः । झषो मकरः । तयोर्विषुवायनयोर्मध्ये अपराः विष्णुपद्यः षडशीतिमुख्यश्च वारविशेषयोगेन नक्षत्रविशेषयोगेन च एकैकस्याः संक्रांतेः सप्त नामान्युक्तानि **हेमाद्रौ देवीपुराणे**—सप्तधा सा तु विज्ञेया एकैकैव यथा शृणु । मंदा मंदाकिनी ध्वांक्षी घोरा चैव महोदरी । राक्षसी मिश्रिता प्रोक्ता संक्रांतिर्नृप सप्तधा । सूर्ये घोरा विधौ ध्वांक्षी भौमवारे महोदरी । बुधे मंदाकिनी नाम मंदा सुरपुरोहिते । मिश्रिता शुक्रवारे स्याद्राक्षसी च शनैश्चरे । मंदा ध्रुवेषु विज्ञेया मृदौ मंदाकिनी तथा । क्षिप्रे ध्वांक्षी विजानीयादुग्रैर्घोरा प्रकीर्तिता । चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी । मिश्रिता चैव निर्दिष्टा मिश्रऋक्षैस्तु संक्रमे । ध्रुवमृद्वादीनि नक्षत्राण्युक्तानि **रत्नमालायां**—रोहिणीसहितमुत्तरात्रयं कीर्तयंति मुनयो ध्रुवाह्वयं । त्वाष्ट्रमित्रशशिपूषदेवतान्यामनंति मुनयो मृदून्यथ । अश्विनी गुरुभमर्कदैवतं साभिजिल्लघु चतुष्टयं मतम् । मूलशक्रशिवसर्पदैवतान्यामनंति ननु तीक्ष्णसंज्ञया । वैष्णवत्रययुतः पुनर्वसुर्मारुतं च चरपंचकं त्विदं । पूर्विकात्रितयमंतकं मघेत्युग्रपंचकमिदं विदुर्बुधाः । हव्यवाहनयुतं द्विदैवतं मिश्रसंज्ञमथ मिश्रकर्मसु । इति । त्वाष्ट्रं चित्रा । मित्रशशिपूष्णदैवतानि क्रमेणानुराधामृगशीर्षरेवत्यः । गुरुभं पुष्यः । अर्कदैवतं हस्तः । शक्रशिवसर्पदैवतानि ज्येष्ठाद्रार्श्लेषाः । वैष्णवत्रयं श्रवणादित्रयं । मारुतं स्वाती । पूर्वि-

कात्रयं पूर्वादित्रयं । अंतकं भरणी । हव्यवाहनं कृत्तिका । द्विदैवतं विशाखा । त्रिचतुःपंचसप्ताष्टनवद्वादश एव च । क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकं । यथासंख्यं सर्वासु संक्रांतिषु एते सप्त काला द्रष्टव्याः । पारमार्थिकं सूक्ष्मतमसंक्रांतिकाले धर्मानुष्ठानाद्यत्पुण्यं लभ्यते तदेवैतासु घटिकासु लभ्यते इत्यर्थः इति हेमाद्रिः । तस्मिन्पुण्यं तत्पुण्यमित्यर्थः । मंदादीनां ब्राह्मणादीनां सुखसूचकत्वमुक्तं हेमाद्रौ देवीपुराणे—मंदा विप्रजने शस्ता मंदाकिन्यस्तु राजनि । ध्वांक्षी वैश्येषु विज्ञेया घोरा शूद्रे सुखप्रदा । महोदरी तु चौराणां शौंडिकानां जयावहा । चंडालपुल्कसानां च ये चान्ये क्रूरकर्मिणः । सर्वेषां कारुकाणां च मिश्रिता वृत्तिवर्धिनी । शौंडिकानां जयावहेत्यत्र राक्षसीति ज्ञेयम् । तेन या यस्य जयावहा स तस्यां जातायामभ्युदयसाधनानि कर्माणि कुर्यात् । अनिष्टसूचकत्वमुक्तं तत्रैव—नृपाः पीड्यंति पूर्वाह्णे मध्याह्ने तु द्विजोत्तमाः । अपराह्णे तथा वैश्याः शूद्रा अस्तमये रवेः। पिशाचा अस्तमये चापि अर्धरात्रे तु राक्षसाः । अर्धरात्रे व्यतीपाते पीड्यंते नटनर्तकाः । उषःकाले तु संक्रांतिर्हंति गोस्वामिनो जनान् । हंति प्रव्रजितान्सर्वान्संध्याकाले विशेषतः । संक्रांतिर्जायते यत्र भास्करे भूसुते शनौ । विदुर्मासि भयं तत्र दुर्भिक्षावृष्टिचोरजं । प्रद्योतनस्य संक्रांतिर्यादृशेनेंदुना भवेत् । तन्मासि तादृशं प्राहुः शुभाशुभफलं नृणां । इति । तत्रैव नागरखंडे—रवेः संक्रमणं राशौ संक्रांतिरिति कथ्यते । स्नानदानजपश्राद्धहोमादिषु महाफलम् । शातातपः—रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः । सप्तजन्मनि रोगी स्यान्निर्धनश्चैव जायते । संक्रांतौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः सहस्रगुणितानि वै । अयनादौ सदा देयं द्रव्यमिष्टं गृहे च यत् । षडशीतिमुखे चैव विमोक्षे चंद्रसूर्ययोः । तत्रैव देवीपुराणे— विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयं । एवं विष्णुपदे चैव षडशीतिमुखेषु च । भरद्वाजः—षडशीत्यां तु यद्दत्तं यद्दानं विषुवद्द्वये । दृश्यते सागरस्यांतस्तस्यांतो नैव दृश्यते । शतमिंदुक्षये दानं सहस्रं तु दिनक्षये । विषुवे शतसाहस्रं व्यतीपाते त्वनंतकं । इति । अयने विषुवे चैव त्रिरात्रोपोषितस्तु यः । स्नात्वा

योऽर्चयते भानुं सर्वकामफलं लभेत्। **आपस्तंबः**—अयने विषुवे चैव चंद्रसूर्यग्रहे तथा। अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते। इति। अयं चोपवासः पुत्रवता न कार्यः। आदित्येहनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः। उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथा। इति निषेधात्। तत्रैव **कालिकापुराणे**—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकं। एतानि पंचरत्नानि न्यसेद्देवस्य मूर्धनि। रत्नानां चाप्यभावे तु कर्षं कर्षार्धमेव वा। सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे। विधिवच्च तथाभ्यर्च्य गव्येनाज्येन भूरिणा। प्रक्षाल्य मर्दयित्वा तु प्रदद्याद्घृतकंबलं। दत्वा चोपस्करं भूयो ब्राह्मणान्यतिभिः सह। संभोज्य दक्षयित्वा तु कल्पयेदनिवारितं। कुलिशं हीरकम्। दक्षयित्वा दक्षिणया संतोष्य। कल्पयेद्भोजनमिति शेषः। उपोष्य सर्वमेवैतत्कुर्याद्भक्तिपुरःसरम्। पंचगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्स्वयं। तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्तनं बुधः। देवतानां पितृणां च उभाभ्यां तर्पणं तथा। पारयेत्पारणं कुर्यात्। क्रमोत्राविवक्षितः। उभाभ्यामिति तादर्थ्यं चतुर्थी। होमं तिलैः प्रकुर्वीत सर्वदैवोत्तरायणे। तान्वै देवाय विप्रेभ्यो हाटकेन समं ददेत्। यत्नादेव करोत्येवं चित्तं शंभौ निवेश्य यः। उत्तरायणमासाद्य नरः कस्मात्स शोचते। शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः। महाजया तदा सा वै सप्तमी भास्करप्रिया। स्नानं दानं जपो होमः पितृदेवादिपूजनं। सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा। यस्त्वस्यां मानवो भक्त्या घृतेन स्नापयेद्रविं। सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत्। पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः। विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकतां। **शिवरहस्ये**—तस्मात्तस्यां तिलैः स्नानं कार्यं चोद्वर्तनं तिलैः। देवतानां पितृणां च सोदकैस्तर्पणं तिलैः। तिला देयाश्च विप्रेभ्यः सर्वदैवोत्तरायणे। तिलतैलेन देयाश्च दीपाः शिवगृहे शुभाः। सतिलैस्तंदुलैश्चैव पूजयेद्विधिवद्द्विजः। घृताभिषेकं वा कुर्यान्महापुण्यफलेप्सया। गव्येनाज्येन वा शंभोः प्रदद्याद्घृतकंबलं। सर्पिषा रूपकं रम्यं कृत्वा श्रेयोभिवृद्धये। इति। **हेमाद्रौ वसिष्ठः**—संक्रांतिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः। तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः। **शातातपः**—

अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश । कालः पुण्योऽर्कसंक्रांतेर्विद्वद्भिः परिकीर्तितः । देवीपुराणे—अतीतानागता भानोर्नाड्यः पंचदश स्मृताः । संक्रांतौ निमित्ते विहितस्य स्नानदानादेर्निषिद्धस्य चाध्ययनादेः पालनं भोग इति हेमाद्रिः । यत्तु ब्रह्मवैवर्ते—विषुवे षण्मुहूर्तः स्यात्षडशीतिमुखे त्रयं । तथा विष्णुपदे त्रीणि पुण्यानि कवयो विदुः । इत्यल्पकालस्य प्रतिपादनं तत्पुण्यतमत्वप्रतिपादनार्थं न तु नियमार्थं । अतएव शातातपः—या याः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः । इति । धर्माद्विवर्धते ह्यायू राज्यपुत्रसुखादयः । अधर्माद्व्याधिशोकादि विषुवायनसंनिधौ । इति देवीपुराणेपि संनिधावित्युक्तेश्च । एवंच संक्रांतेः पूर्वं ऊर्ध्वं च त्रिंशन्नाड्यः पुण्याः षोडश पुण्यतराः ततो न्यूनाः पुण्यतमा इति ज्ञेयं । तदेवं संक्रांतिसंनिहितपूर्वोत्तरकालयोः पुण्यत्वेपि दक्षिणायने विष्णुपद्यां च पूर्वकालः पुण्यतरः । उत्तरायणे षडशीतिमुखे चोत्तरः कालः पुण्यतरः । विषुवे तु पूर्वं पश्चाच्च दश घटिकाः पुण्यतराः । तत्रैव बौधायनः—भविष्यत्ययने विष्णौ वर्तमाने तथा विषौ । षडशीतिमुखेऽतीते व्यतीते चोत्तरायणे । अयने दक्षिणायने । विष्णौ विष्णुपद्यां । विषौ विषुवति । वसिष्ठः—मध्ये तु विषुवे पुण्यं प्राग्विष्णौ दक्षिणायने । षडशीतिमुखेतीते अतीते चोत्तरायणे । लौगाक्षिः—याम्यायने विष्णुपदे तथादौ दानाद्यनंतं विषुवे तु मध्ये । वदंत्यतीते षडशीतिवक्त्रे महर्षयः खल्वयने च सौम्ये । इति । वृद्धवासिष्ठः—अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः । ब्रह्मवैवर्ते तु—त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः । भविष्यत्ययने पुण्या अतीते चोत्तरायणे । दशाधिकाश्चत्वारिंशदित्यर्थः । बृहस्पतिः—अयने विंशतिः पूर्वा मकरे विंशतिः पराः । वर्तमाने तुलामेषे नाड्यस्तूभयतो दश । वृद्धवसिष्ठः—षडशीत्यामतीतायामष्टिरुक्तास्तु नाडिकाः । पुण्याख्या विष्णुपद्याश्च प्राक् पश्चादपि षोडश । अष्टिः षोडश । क्वचित्तु षष्टिरुक्तास्तु नाडिका इति पाठः । तत्र षडशीतिमुखीनां चतसृणामेकैकस्याः पंचदश पंचदशेति षष्टिनाड्यो ज्ञेयाः । षडशीतिमुखेतीते नाड्यः पंचदश स्मृताः । इति स्कांदैकवा-

यथाश्रुतमाधवदर्शनेन प्रवृत्ता अर्वाचीनग्रंथा उपेक्ष्याः। अत्र विष्णुपद्याः पराः षोडश घटिकाः पुण्याः पूर्वाः षोडशघटिकाः पुण्यतमा इति बोध्यं। याम्यायने विष्णुपदे तथादावित्युदाहृतानेकवचनेषु पूर्वकालस्य पुण्यतमत्वप्रतिपादनात्। कन्यायां मिथुने चैव मीने धनुषि च द्विजाः। घटिकाः षोडश ज्ञेयाः परतः पुण्यदायकाः। वृषभे वृश्चिके चैव सिंहे कुंभे तथैव च। पूर्वमष्टमुहूर्तं तु ग्राह्यं स्नानजपादिषु। इति बृहन्नारदीयवचनाच्च। एतादृशानि पुण्यातिशयप्रतिपादकानि नतु नियमार्थानि। तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः। इत्याद्यसंगतं स्यादिति **हेमाद्रिः**। एताश्च संक्रांतयो यदा मध्याह्नादिकाले भवन्ति तदा पूर्वोत्तरकालयोः पुण्यतमयोर्दिवसे लाभात्तत्रैव स्नानाद्यनुष्ठानं। यदा तूदयानंतरमेव दक्षिणायनं विष्णुपदी वा भवति तदा—अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितं। रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः। इति वचनेन रात्रौ संक्रांतौ रात्रौ स्नानादिनिषेधसूचनादहन्येव स्नानदानाद्यनुष्ठानं। एवं सूर्यास्तात्प्रागेव उत्तरायणं षडशीतिमुखं वा भवति। संक्रमणोर्ध्वं कियानपि दिनभागो न लभ्यते तदा संक्रांत्यासन्नपूर्वकाले अहन्येवानुष्ठानं। विषुवति तु पूर्वोत्तरयोरपि कालयोः पुण्यतमत्वान्न रात्रावनुष्ठानप्रसंगः। यदा तु रात्रौ पूर्वार्धे संक्रांतिस्तदा पूर्वदिनस्योत्तरार्धे स्नानादेरनुष्ठानं। यदा तु रात्र्युत्तरार्धे संक्रांतिस्तदोत्तरदिनस्य पूर्वार्धे अनुष्ठानं। यदा तु रात्रिपूर्वोत्तरार्धयोः संधौ संक्रांतिस्तदा पूर्वदिनस्योत्तरार्धे परदिनस्य पूर्वार्धे वानुष्ठानं। तदाह **वृद्धवसिष्ठः**—रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः। अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्। पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ। इति। अत्र दिनद्वयशब्देन दिनद्वयार्धं गृह्यते। रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः। इति वचनैकवाक्यत्वात्। **गोभिलो**ऽपि—रात्रौ संक्रमिते भानौ दिवा कुर्यात्तु तत्क्रियां। पूर्वस्मात्परतो वापि प्रत्यासत्तेस्तु तत्फलं। **निगमे**—विष्णुपद्यां धनुर्मीननृयु-

कन्यासु वै यदा । पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् । पूर्वाह्णे पंच नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे तु वै पंच श्रौते स्मार्ते च कर्मणि । इति । देवीपुराणे—संपूर्णे अर्धरात्रे तु उदयेऽस्तमयेपि च । मानार्धे भास्करे पुण्यमपूर्णे शर्वरीदले । उदयः प्रातःसंध्या । अस्तमयः सायंसंध्या । भासं करोतीति भास्करो दिवसः । तस्य मानं प्रहरचतुष्टयं तस्यार्धं यामद्वयमित्यर्थः । अपूर्णे शर्वरीदले । दलमर्धं पूर्वमुत्तरं च तस्मिन्नपूर्णे । पूर्वार्धस्य उत्तरार्धस्य वा मध्ये इत्यर्थः । एवंच अर्धरात्रे प्रातःसंध्यायां सायंसंध्यायां रात्रेः पूर्वदले उत्तरदले वा यदा संक्रांतिर्भवति तदा दिनार्धं पुण्यमित्यर्थः । रात्रौ कस्मिन्भागे संक्रमणे कस्य दिनस्यार्धं पुण्यमित्यपेक्षायां तत्रैवोक्तं—अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतं । संपूर्णे उभयोर्ज्ञेयमतिरेके परेहनि । रात्रेर्दलद्वयसंधिरूपात्क्षणात्मकादर्धरात्रात्पूर्वं संक्रांतौ आगतमिति नपुंसके भावे क्तः । न विद्यते आगतमागमनं यस्य तदनागतं पूर्वदिनार्धमित्यर्थः । संपूर्णे दलद्वयसंधौ संक्रमणरूपक्रियाया दलद्वयेनापि संबंध इति यावत् । तदा पूर्वोत्तरदिनयोः उत्तरपूर्वार्धयोः पूर्वदिनस्योत्तरार्धं उत्तरदिनस्य पूर्वार्धं ज्ञेयमित्यर्थः । अतिरेके यदा संक्रमणक्रियायाः पूर्वार्धेन संबंधो नास्ति उत्तरार्धे एव संक्रांतिस्तदोत्तरदिनार्धं पुण्यमित्यर्थः । यत्तु माधवे—रात्रिस्त्रेधा भिद्यते । मध्यवर्तिघटिकाद्वयात्मक एको भागः । तस्मात्पूर्वोत्तरौ द्वौ भागाविति भागत्रयं कल्पयित्वा द्वितीययामांत्यघटिकाद्यपादेपि संक्रांतावपि संपूर्णेर्धरात्रे इत्यनेनोत्तरदिनपूर्वार्धेपि पुण्यक्षणात्पूर्वं, एवं तृतीययामाद्यघटिकांत्यक्षणेपि संक्रांतौ पूर्वदिनस्योत्तरार्धेपि पुण्यमित्युक्तं तद्द्वितीययामांत्यक्षणात्पूर्वं संक्रांतौ पूर्वदिनार्धस्यैव पुण्यत्वप्रतिपादक—अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतं । इति देवीपुराणवचनस्य—रात्रौ संक्रमिते भानौ दिवा कुर्यात्तु तत्क्रियां । पूर्वस्मात्परतो वापि प्रत्यासत्तेस्तु तत्फलं । इत्यादिभागद्वयव्यवस्थयैव प्रत्यासन्नदिनस्यैव पुण्यत्वबोधकगोभिलादिवचनानां हेमाद्रिमदनरत्ननिर्णयामृतादिनिबंधानां च विरुद्धमिति अप्रतिज्ञातेस्मिन्न तत्तात्पर्यं, अप्रतिज्ञाते तात्पर्यं नास्तीति माधवसिद्धांतादिति ज्ञेयं । एतेन एतन्माधवग्रंथानुसारेण प्रवृत्ताः स्मृतिकौस्तुभाद्यर्वाचीनग्रंथा उपेक्ष्याः ।

एवं अर्धरात्रसंक्रांतौ दिनद्वयार्धस्य विकल्पेन ग्राह्यत्वे प्राप्ते व्यवस्थोक्ता **देवीपुराणे**–आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् । अर्धरात्रे व्यतीते तु विज्ञेयमपरेहनि । इति । अर्धरात्रे संक्रांतौ संक्रांतिकालिकी तिथिः पूर्वदिनस्योत्तरार्धे वर्तते तदा पूर्वदिनस्योत्तरार्धं ग्राह्यं । यदि संक्रांत्यधिकरणीभूता तिथिः पूर्वदिने नास्ति तदा तत्तिथियुक्तोत्तरदिनस्य पूर्वार्धं ग्राह्यमित्यर्थसिद्धं । यदातु अर्धरात्रादूर्ध्वं संक्रांतिस्तदोत्तरदिने संक्रांतिकालिकतिथिर्नास्ति तथाप्युत्तरदिनपूर्वार्धमेव ग्राह्यं । यदात्वर्धरात्रसंक्रांतिकालिकी तिथिर्दिनद्वयेपि भवति तदा विष्णुपद्यां पूर्वदिनोत्तरार्धं ग्राह्यं । षडशीतिमुखे तूत्तरदिनपूर्वार्धं ग्राह्यं । विषुवे तु पूर्वोत्तरस्य वा दिनस्यार्धं ग्राह्यं । इयं रात्रिसंक्रांतौ पुण्यकालव्यवस्था अयनातिरिक्तविषया । मुक्त्वा मकरकर्कटावित्यभिधानात् । अयनयोस्तु मकरसंक्रांतौ रात्रौ जातायामुत्तरदिनार्धमेव पुण्यं । कर्कटसंक्रांतौ रात्रौ जातायां पूर्वदिनार्धं पुण्यम् । तदाह **वृद्धगार्ग्यः**–यदास्तमयवेलायां मकरं याति भास्करः । प्रदोषे वार्धरात्रे वा स्नानं दानं परेहनि । अर्धरात्रात्तदूर्ध्वं वा संक्रांतौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः । **भविष्योत्तरे**–मिथुनात्कर्कसंक्रांतिर्यदा स्यादंशुमालिनः । प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः । कार्मुकं तु परित्यज्य झषं संक्रमते रविः । प्रदोषे वार्धरात्रे वा स्नानं दानं परेहनि । इति । झषो मकरः । **बौधायनोपि**–अस्तं गते यदा सूर्ये झषं याति दिवाकरः । प्रदोषे वार्धरात्रे वा तदा पुण्यं दिनांतरं । दिनांतरमुत्तरदिनं । एवमयनभिन्नसंक्रांतिषु रात्रौ जातासु यथायथं पूर्वोत्तरदिनार्धस्य दक्षिणायने पूर्वदिनार्धस्य, उत्तरायणे उत्तरदिनार्धस्य पुण्यत्वे सत्यपि पूर्वदिनस्यांत्याः पंचघटिकाः उत्तरदिनस्याद्याः पंचघटिकाः पुण्यतमाः । तदुक्तं **निगमे**–विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै यदा । पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् । पूर्वार्धे पंचनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे च पंचैव श्रौते स्मार्ते च कर्मणि । इति । नृयुग् मिथुनं । **स्कांदे**–धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा । पूर्वापरविभागेन रात्रौ संक्रमते यदा । दिनांते पंच नाड्यस्तु तदा

मासन्नसंक्रमं पुण्यमित्याद्यप्ययनविषये न संबध्यते। अन्यसंक्रांतिविषये सावकाशानामेषां मकरकर्कटमात्रविषयक--यदास्तमयवेलायामित्याद्युदाहृतविशेषवचनैर्बाधात् । एवमेतैर्वचनैः रात्रौ संक्रांतौ तन्निमित्तकस्नानादेर्दिने विधानात् रात्रौ तन्न कर्तव्यमिति अर्थात्सिद्धं । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ। इति पर्युदासोपि मकरकर्कटयोर्दिनद्वयं न पुण्यं किंतु मकरे उत्तरदिनमेव, कर्कटे पूर्वमेवेति प्रतिपादनेनोपपद्यते। तथापि--पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः। राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि । राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु। स्नानदानादिकं शस्तं निशि काम्यव्रतेषु च। ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च। श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते । विवाहव्रतसंक्रांतिप्रतिष्ठाऋतुजन्मसु । तथोपरागपातादौ स्नाने दाने निशा शुभा। ऋतुः गर्भाधानम् ।पातो व्यतीपातः। इति वृद्धवसिष्ठयाज्ञवल्क्यसुमंतुविष्णुवचनानां रात्रावेव संक्रांतिनिमित्तस्नानादिविधायकानां निरवकाशत्वेन सर्वसंक्रांतिविषयत्वे प्राहुर्दिनद्वयं पुण्यमित्यस्य वैयर्थ्यापत्तेः। मुक्त्वा मकरकर्कटावित्यनेनैकवाक्यतया अयनसंक्रांतिरेवावकाशः पर्यवसितः। एवंच मकरसंक्रांतेः सन्निहितोत्तररात्रिभागस्य एतैर्वचनैः उत्तरदिनार्धस्य यदास्तमयवेलायामित्याद्युदाहृतवचनैः पुण्यत्वम्। कर्कटसंक्रांतौ तु संनिहितरात्रिपूर्वभागस्य पूर्वदिनोत्तरार्धस्य च पुण्यत्वं। रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः। इति निषेधबाधेन सिद्धं भवति । रात्रिसंक्रांतौ रात्रौ दिवा च पुण्यं आसन्नविशेषात्तु फलविशेष इति हेमाद्रेरपि अयनसंक्रांतावेव तात्पर्यं । सर्वसंक्रांतिविषयत्वे या याः संनिहिता इत्यनेन रात्रौ संक्रांतौ संनिहितरात्रिभागस्यैव पुण्यत्वं प्रसक्तं। तदपवादार्थं प्रवृत्तस्य--रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः। इत्यादिनाऽर्धरात्रात्पूर्वं पूर्वदिनार्धस्य, अर्धरात्रानंतरमुत्तरदिनार्धस्य, पूर्णेऽर्धरात्रे पूर्वोत्तरदिनयोः पुण्यत्वप्रतिपादकवाक्यस्य विरोधापत्तेः। अयनविषयत्वे तु मुक्त्वा मकरकर्कटाविति वाक्यविशेषेण अयनभिन्नदशसंक्रांतिविषयत्वं

द्वे उदग्दक्षिणायने । इत्याद्येकवाक्यतया या याः संनिहिता नाड्य इत्यनेन, यदास्तमयवेलायामित्यादिवाक्यैश्च मकरसंक्रांत्युत्तररात्रिभागस्योत्तरदिनस्य च पुण्यत्वं प्रतिपाद्यते । कर्कटे तु संक्रांतिपूर्वरात्रिभागस्य तत्पूर्वदिनस्य च पुण्यत्वं प्रतिपाद्यते। एवं सति संक्रांतिनिमित्तकस्नानादेः रात्रौ विधायकवचनानां मुक्त्वा मकरकर्कटाविति पर्युदासानुगृहीतवाक्यैकवाक्यतया अयनविषये चरितार्थत्वेनायनातिरिक्तसंक्रांतौ पूर्वोत्तरदिनार्धपुण्यत्वबोधकवचनबाधकत्वासंभवेन तद्विषये दिनार्धपुण्यत्वप्रतिपादकवाक्यविरोधापत्तेः । तस्माद्रुभयाद्रेः अयनसंक्रांतावेव तात्पर्यं । अतएव अयनयोरेव रात्रिभागस्यापि पुण्यत्वात्तत्रापि स्नानादिकं कर्तव्यं। अतएव दक्षिणस्यां दिशि रात्रावयनसंक्रांतौ रात्रावपि स्नानादिकं शिष्टाः कुर्वंति इति **माधवमदनरत्नाभ्यां**, अयनयो रात्रावपि पुण्यत्वमिति **निर्णयामृतेन** च सहैकवाक्यता भवतीति बोद्धव्यं । संक्रांतिप्रयुक्तयात्रादिनिषेधा अपि उक्तेषु पुण्यकालेषु परिपालनीयाः। तदाह **हेमाद्रौ लौगाक्षिः**— यात्रानिषेधा अपि सूक्ष्मकाले पदं स्थिरीकर्तुमशक्नुवंतः । आलोच्य तत्तुल्यतयोपदिष्टं भवंति नित्यं परिपूर्णकामाः । इति ।

अयनविषुवत्प्रयुक्तानध्याये विशेष उक्तो **हेमाद्रौ** स्मृत्यंतरे—दिवा चेद्रात्रियुग्मं स्याद्रात्रौ चेद्वासरद्वयं । संक्रांतिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु । इति । अत्र दानं वेदस्य अध्यापनरूपं । वचनांतरं **मदनरत्ने**—निशाद्वयं दिवारात्रौ संक्रमे द्वासरद्वयं । अनध्यायं प्रकुर्वीत अयने विषुवे तथा । इति । ग्रहांतरसंक्रांतिकालस्यापि पुण्यत्वमाह **हेमाद्रौ जैमिनिः**—नक्षत्रराशौ रविसंक्रमे स्युरर्वाक्परत्रापि रसेंदुनाड्यः । पुण्यास्त्वथेंदोस्त्रिधरापलैर्युगेकैव नाडी मुनिभिः शुभोक्ता । नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि । सार्धाश्चतस्रः पलसप्तयुक्ता गुरोश्च शुक्रे सपलाश्चतस्रः । द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताः सुपुण्याः । आद्यंतमध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेंद्रधाम । इति । नक्षत्रे राशौ वा सूर्यस्य संक्रमणे सति पूर्वतः परतोपि रसेंदुनाड्यः षोडश घटिकाः पुण्यकालः । इंदोः त्रिधरापलैर्युक् त्रयोदशपलैर्युक्ता एका घ-

टिका। कुजस्य मंगलस्य एकपलयुक्ताश्चतस्रो घटिकाः। बुधस्य चतुर्दशपलयुक्तास्तिस्रः। गुरोः भृगोश्च सप्तत्रिंशत्पलयुक्ताश्चतस्रः। शनैश्चरस्य पलसप्तयुक्ताः द्विनागाः द्विरावृत्ता नागाः षोडश घटिकाः पुण्या इत्यर्थः।

इत्थं सर्ववचनानामेकवाक्यतया हेमाद्रिमाधवादिनिबंधानामेकवाक्यताप्रदर्शनेन निर्णीतस्य संक्रांतिकालस्यायं निर्णयसंग्रहः–तत्र मेषतुलासंक्रांती विषुवत्संज्ञिके। वृषसिंहवृश्चिककुंभसंक्रांतयो विष्णुपदीसंज्ञिकाः। मिथुनकन्याधनुर्मीनसंक्रांतयः षडशीतिसंज्ञिकाः। कर्कमकरसंक्रांती दक्षिणायनोदगयनसंज्ञिके। तत्र सर्वस्याः संक्रांतेः पूर्वं उत्तरं च त्रिंशद्घटिकाः पुण्याः। षोडशषोडशघटिकाः पुण्यतराः। पुण्यतमास्तु मेषतुलयोः पूर्वा दश घटिकाः उत्तराश्च दश। तत्रापि संक्रांतिसंनिहिता अतिपुण्यतमाः। वृषसिंहवृश्चिककुंभेषु पूर्वं षोडश पश्चादपि षोडश। मिथुनकन्याधनुर्मीनेषु उत्तराः षोडश। कर्कटके पूर्वास्त्रिंशत्। मकरे उत्तरास्त्रिंशद्घटिकाः। पुण्यतमास्वपि घटिकासु मध्ये या याः संनिहितास्ता अतिपुण्यतमा इति सर्वत्र बोध्यं। इदं दिनसंक्रांतौ। रात्रिसंक्रांतौ तु रात्रिपूर्वदले संक्रांतौ पूर्वदिनोत्तरार्धं। संक्रांतिकालिकी तिथिश्चेत्पूर्वदिने नास्ति तदोत्तरदिनपूर्वार्धमेव। रात्र्युत्तरदले संक्रांतावुत्तरदिनपूर्वार्धं दलद्वयसंधौ संक्रांतौ तु पूर्वदिनोत्तरार्धं उत्तरदिने पूर्वार्धं च पुण्यं। अयनसंक्रांतौ तु कर्कसंक्रांतौ रात्र्युत्तरार्धे सूर्योदयात्पूर्वं जातायामपि पूर्वदिनोत्तरार्धसंनिहितरात्रिभागोपि पुण्यः। मकरसंक्रांतौ अस्तमयमारभ्य जातायां उत्तरदिनपूर्वार्धसंनिहितरात्रिभागश्च पुण्यः। पूर्वदिनार्धस्यांतिमाः उत्तरदिनार्धस्य आद्याः पंच नाडयस्तु अतिप्रशस्ततरा इति रात्रिसंक्रांतौ सर्वत्र ज्ञेयं। तत्र स्नानदानश्राद्धादि कर्तव्यं। अत्र श्राद्धं पिंडरहितं। तदाह पुलस्त्यः–अयनद्वितये श्राद्धं विषुवद्वितये तथा। युगादिषु च कुर्वीत पिंडनिर्वपणादृते। इति। अत्र अयनग्रहणं सर्वसंक्रांत्युपलक्षणं। संक्रांत्यंतरेपि वचनांतरेण श्राद्धविधानात्। इति पुरुषार्थचिंतामणौ संक्रांतिनिर्णयः।

अथ श्राद्धकालो निर्णीयते। तत्र सामान्यतः श्राद्धतिथिनिर्णयः। एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितं। त्रीनु-

द्दिश्य तु यच्छ्राद्धं पार्वणं मुनयो विदुः। इति वचनात् त्रिपु रुषोद्देश्यकं श्राद्धं यस्यां तिथौ विहितं सा चेद्दिनद्वयसंबंधिनी तदा या अपराह्णसंबंधिनी सा ग्राह्या। तथाच हेमाद्रौ निगमः—पूर्वाह्णिकास्तु तिथयो दैवकार्ये फलप्रदाः। अपराह्णिकास्तथा ज्ञेयाः पितृकार्ये शुभप्रदाः। इति। यदा तु दिनद्वयेप्यपराह्णसंबंधिनी तदा पूर्वा। तदाह तत्रैव मनुः—यस्यामस्तं रविर्याति पितरस्तामुपासते। सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयंभुवा। इति। यस्यामपराह्णसंबंधे सत्यस्तमयानुवृत्तिः सा पितृकार्ये प्रशस्ता नत्वस्तमयमात्रसंबंधिनीत्यर्थः। अतएव हारीतः—अपराह्णः पितॄणां तु यापराह्णानुयायिनी। सा ग्राह्या पितृकार्ये तु न पूर्वास्तानुयायिनी। यदा दिनद्वयेप्यपराह्णसंबंधो नास्ति तदा पूर्वैव। तदुक्तं तत्रैव नारदीये—तिथेः प्रांत सुराख्यं हि उपोष्यं कवयो विदुः। पित्र्यं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः। पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते। न तत्रौदयिकी ग्राह्या दैवे ह्यौदयिकी तिथिः। इति। गोभिलः—सायाह्णव्यापिनी या तु पार्वणे सा उदाहृता। इति। ननु—सायाह्नस्त्रिमुहूर्तः स्यात्सर्वकर्मसु गर्हितः। इति सायाह्नस्य निषेधादपराह्णे तु निमित्तभूततिथ्यभावेपि तत्रानुष्ठाने कर्मणो यस्य यः काल इति वचनविरोध इति चेन्न—विधिः पूज्यतिथौ तत्र निषेधः कालमात्रकः। इति वचनात् वचनांतरबोधितपूज्यत्वाया एव तिथेः कर्मकाले ज्योतिःशास्त्रप्रसिद्धसत्वाभावेपि साकल्यवचनबोधिततिथिसत्वमादायैव कर्मकालव्याप्तिशास्त्रप्रवृत्तेः। अतएव पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते। इत्यादिवचनानां सार्थक्यं—तिथ्यादिषु भवेद्यावान्ह्रासो वृद्धिः परेहनि। तावान्ग्राह्यः स पूर्वेद्युरदृष्टोपि स्वकर्मणि। इति वचनाधिककालकल्पनया अपराह्णेपि निमित्तभूततिथिसंभवादिति सिद्धांतयतां हेमाद्र्यादीनामुक्तार्थ एव स्वारस्याच्च। इयंच तिथिक्षये तिथिवृद्धौ तिथिसाम्ये चोत्तरा ग्राह्या। तथाच व्याघ्रः—खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणं। खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी। इति। उभयत्र साम्येनैकदेशव्याप्तावप्येवमेव। यदा तु वैषम्येणोभयत्रैकदेशव्याप्तिस्तदा यत्राधिककालव्यापिनी सैव ग्राह्येति। एकोद्दिष्टश्राद्धे तु मध्याह्नव्यापिनी

तिथिर्ग्राह्या । तथाच वृद्धगौतमः—म
त्सैकोद्दिष्टे तिथिर्भवेत् । अपराह्णव्यापिन
र्भवेत् । इति । हारीतः–आमश्राद्धं तु
मध्यतः । पार्वणं चापराह्णे तु प्रातर्वृद्धिनि
दैविकं श्राद्धमपराह्णे तु पार्वणं । एकोद्दि
द्धिनिमित्तकं । इति । दैविकश्राद्धमाह
देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।
दश्यादिषु यत्नतः । इति । अत्र कर्मणो
वचनात्कर्मकालव्यापिनी तिथिर्ग्राह्या ।
तिथिनिर्णयः ।

अथ सांवत्सरिकश्राद्धे तिथिनि
सांवत्सरिकं श्राद्धमुक्तं हेमाद्रौ ब्र
कार्यं मातापित्रोर्मृतेऽहनि । पितृव्यस्या
चैव हि । मात्रादीनां श्राद्धं कार्यमित्युक्ते
त्वमुक्तम् । एतच्चाधिकारिमात्रोपलक्षणम्
नुषंजनीयम् । ज्येष्ठस्येत्यनेन कनिष्ठस्य भ्रा
सूच्यते । अतएव–न पुत्रस्य पिता दद्या
यदि स्नेहेन कुर्वीत सपिंडीकरणं विना ।
धिकारः प्रतिषिध्यते । तेनापुत्रस्य कनि
पुत्रस्य पित्रापि सतिस्नेहे सांवत्सरिकं श्र
माद्रौ प्रभासखंडे–मृताहनि पितुर्यस्
रात् । मातुश्चैव वरारोहे वत्सरांते मृतेऽ
देवि पूजां गृह्णामि नो हरिः । भविष्य
द्धानां श्रेष्ठं सांवत्सरं मतं । क्रियते यत्खगश्रे
मृतेहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात्
वत्सरांते मृतेहनि । नाहं तस्य खगश्रेष्ठ पृ
न ब्रह्मा न च वै रुद्रो न चान्ये देवतागण
र्तव्यं वर्षे वर्षे मृतेहनि । नरेण खगशार्दू
भोजको यस्तु वै श्राद्धं न करोति खगा
सततं वर्षे वर्षे मृतेहनि । स याति नर
नामतः । इति ।

मातृश्राद्धे विशेषो मार्कंडेयपु

विप्रैः सह सुवासिनी । इति । अत्र मरणाहोरात्रांतर्गतमरणाधिकरणभूता तिथिर्विवक्षिता नतु साकल्यवचनबोधिता । पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता । इति वचनात् । तेन वत्सरांतरे—मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि । प्रत्यब्दं तत्तथाभूतं क्षयाहं तस्य तं विदुः । इति लक्षणयुक्ताहोरात्रांतर्गतमरणाधिकरणतिथौ सांवत्सरिकं श्राद्धं कर्तव्यम् । अत्र मासश्चांद्र एव । आब्दिके पितृकार्ये च मासश्चांद्रमसः स्मृतः । इति वचनात् । यत्तु वचनं—यस्मिन्राशौ गते सूर्ये विपत्तिं याति मानवः । तद्राशावेव कर्तव्यं पितृकार्यं मृतेहनि । इति तन्मलमासमृतविषयम् । अधिमासमृतानां तु सौरं मानं समाश्रयेत् । स एव दिवसस्तस्य श्राद्धपिंडोदकादिषु । इति वचनादिति मलमासनिर्णये उक्तम् । इदं क्षयाहश्राद्धं द्विविधमेकोद्दिष्टं पार्वणं च । तत्रैकोद्दिष्टमुक्तं मात्स्ये—ततःप्रभृति संक्रांतावुपरागादिपर्वसु । त्रिपिंडमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेहनि । एकोद्दिष्टं परित्यज्य मृताहं यः समाचरेत् । सदैव पितृहा स स्यान्मातृभ्रातृविनाशकः । प्रतिसंवत्सरं तस्मादेकोद्दिष्टं समाचरेत् । इति । पार्वणरूपतोक्ता कौर्मे—ये सपिंडीकृताः प्रेता न तेषां स्यात्पृथक्कृतिः । यस्तु कुर्यात्पृथक् पिंडं पितृहा सोऽभिजायते । पार्वणेन विधानेन सांवत्सरिकमिष्यते । प्रतिसंवत्सरं कार्यं विधिरेष सनातनः । इति । शातातपोपि—सपिंडीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वान्छागलेयोदितो विधिः । इत्यादिभिरितरनिंदानिषेधमुखेन स्वविषयप्राशस्त्यबोधकवचनैः सामान्यतः क्षयाहे विकल्पः प्रतीयते । तथापि वक्ष्यमाणविशेषवचनविषयपरिहारेणैवायं विकल्पः । अन्यथा तेषां वैयर्थ्यापत्तेः । तथाहि—आपाद्य सहपिंडत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेहनि । इति हेमाद्रौ जमदग्निवचनादौरसमात्रस्य पार्वणं प्रतीयते, तथापि सपिंडीकरणकर्तुः साग्नेश्चौरसस्य नियतम् । अन्यस्य तु विकल्प एव आपद्येति क्त्वाप्रत्ययेनैककर्तृत्वबोधनात्—सहपिंडक्रियायां तु यः पुत्रोऽधिकृतः पितुः । स एव दर्शवच्छ्राद्धं विदधीत मृताहनि । इति तत्रैव शाट्यायनवचनाच्च । न पैतृयज्ञियो होमो लौकिकाग्नौ

विधीयते । न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः । इति मनुवचनाद्दर्शोपलक्षितपार्वणविधिना वर्जितश्राद्धमाहिताग्निना न कार्यं किंतु दर्शश्राद्धविधिनैवेत्यर्थं इति हेमाद्रिः । युक्तं चैतत् । दर्शश्राद्धभिन्नश्राद्धस्य निषेधे क्षयाहश्राद्धाद्यभावापत्तेः । तत्रैव—श्राद्धक्रियैकतां तेषु प्रशस्तां मनुरब्रवीत् । न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः । इति यमवचनाच्च सपिंडीकरणकर्तुः साग्नेश्च क्षेत्रजस्यापि पार्वणमेव । औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश । पितुः पितृगणस्थस्य कुर्यातां दर्शवत्सुतौ । प्रत्यब्दं प्रतिमासं च विधिज्ञौ क्षेत्रजौरसौ । इति जाबालिना तयोः सह निर्देशात् प्रत्यब्दं मृताहनि प्रतिमासं दर्शादावित्यर्थं इति हेमाद्रिः ।

दत्तकपुत्रो द्विविधः । अद्ध्यामुष्यायणो द्व्यामुष्यायणश्चेति संस्कारखंडे सापिंड्यनिर्णये विस्तरः । तत्र द्व्यामुष्यायणदत्तकस्य—उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः । स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः । इति मनुना औरसेन सह समधनग्राहित्वस्योक्तत्वात् अद्ध्यामुष्यायणदत्तकस्यापि साग्नेः पार्वणमेव । न दर्शेन विनेति मनुना एकोद्दिष्टनिषेधात् । बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च । तेषां सपिंडनादूर्ध्वमेकोद्दिष्टं न पार्वणम् । इति भृगुणापि साग्नेरेकोद्दिष्टनिषेधेन पार्वणस्यैव परिशेषात् । नचेदं साग्नेः पार्वणनिषेधकमस्त्विति शंक्यम् । उदाहृतमन्वादिवचनैः। वर्षे वर्षे तु कुर्याद्वै पार्वणं योग्निमान् द्विजः। कुर्यादनग्निमान्वीर एकोद्दिष्टं मृताहनि । इत्यादिभविष्यत्पुराणादिवचनैश्च विरोधापत्तेः । नच पार्वणनिषेधमुखेन पाक्षिकैकोद्दिष्टविधायकमिदं मात्स्यादिवचनवदिति शंक्यं । तस्य निरग्निसाधारणत्वे बह्वग्नय इति पूर्वार्धवैयर्थ्यापत्तेः । तस्मादेकोद्दिष्टनिषेधकमेवेदम् । पार्वणं कर्तव्यमिति तु वचनांतरप्राप्तानुवाद इत्येव स्वीकर्तव्यत्वात् । अतएव तेषामेकोद्दिष्टं नेति संबंध इति हेमाद्रिः संगच्छते । अग्निप्रधानं सर्वेषामनुष्ठानं गृहाश्रमे । तद्योगात्कृतसामर्थ्याः सर्वेऽत्रार्हंति पार्वणं । इति कार्ष्णाजिनिनापि साग्नेः पार्वणस्यैव विधानाच्च । एवं कालविषये मृतयोः पित्रोर्निरग्निनाप्यौरसादिना पार्वणमेव कार्यं । तदाह शंखः—पर्वकालो मृताहश्च यद्येकत्र द्वयं भवेत् । पार्वणं तत्र कर्तव्यं नै-

कोद्दिष्टं कदाचन । अमायां तु क्षयो यस्य प्रेतपक्षे तथा भवेत् । पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन । इति । यतेरपि पार्वणमेवेत्याह प्रचेताः—एकोद्दिष्टं यतेर्नास्ति त्रिदंडग्रहणादिह । सपिंडीकरणाभावात्पार्वणं तस्य सर्वदा । इति । उक्तविधान्येषामौरसादीनां तु पार्वणैकोद्दिष्टयोर्विकल्पः । सोपि श्रुतिद्वैधं तु यत्र स्यादुभौ धर्मावपि स्मृतौ । स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथक् । इति हेमाद्रौ जाबालिवचनात् । देशधर्मं समाश्रित्य कुलधर्मं तथा परे । सूरयः श्राद्धमिच्छंति पार्वणं च क्षयाहनि । इति पृथ्वीचंद्रोदये वृद्धपराशरवचनाच्च देशवंशसमाचाराद्व्यवस्थित एव नत्वैच्छिक इति । द्व्यामुष्यायणदत्तकादीनां तु—इतरे कुर्युरेकोद्दिष्टं सुता दशेति वचनादेकोद्दिष्टमेवेति बोध्यम् । प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश । इति जातूकर्ण्यवचने एवकारो भिन्नक्रमः क्षेत्रजौरसावित्यनंतरं बोध्यः । अन्यथा सपिंडीकरणकर्तुरेव साग्नेरेव च औरसादेः पार्वणनियामकोदाहृतवचनैर्विरोधापत्तेः । तथाच यत्क्षयाहे पाक्षिकं पार्वणं वचनांतरेण बोधितं तत् क्षेत्रजौरसयोरेवेत्यर्थात् । औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश । पितुः पितृगणस्यास्य कुर्यातां दर्शवत्सुतौ । प्रत्यब्दं प्रतिमासं च विधिज्ञौ क्षेत्रजौरसौ । प्रत्यब्दं मृताहनि प्रतिमासं दर्शादाविति हेमाद्रिव्याकृतजाबालिवचनेन समानार्थकमेवेति । एतेन प्रत्यब्दमिति जातूकर्ण्यवचनात् औरसक्षेत्रजाभ्यां मातापित्रोः क्षयाहे पार्वणमेव, दत्तकादिभिरेकोद्दिष्टमेवेति दाक्षिणात्या व्यवस्थामाहुः । तदसत् । नह्यत्र क्षयाहवचनमस्त्यपितु प्रत्यब्दमिति । संति च प्रत्यब्दमक्षय्यतृतीयादिश्राद्धानीति नैतत्क्षयाहे पार्वणैकोद्दिष्टयोर्व्यवस्थापनायालमिति विज्ञानेश्वरोक्तिरयुक्ता । प्रत्यब्दं श्राद्धं कार्यमित्युक्ते—सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतम् । इत्यादिवचनैस्तस्यैव प्राधान्यप्रतिपादनात् प्रधाने कार्यसंप्रत्यय इति न्यायेन शीघ्रोपस्थितक्षयाहश्राद्धपरित्यागेनाप्रधानाक्षय्यतृतीयादिश्राद्धकल्पनाया अयुक्तत्वात् । किंचैकोद्दिष्टमितरे कुर्युरित्युत्तरार्धेपि क्षयाहातिरिक्तश्राद्धस्यैवैकोद्दिष्टत्वापत्तौ—ततःप्रभृति संक्रांतावुपरागादिपर्वसु । त्रिपिंडमाचरेच्छ्राद्धमेकोद्दिष्टं

क्षयेहनि । इति मात्स्यादिवचनविरोधापत्तेः । यदपि साग्नेः पार्वणमेवेति नियमे वह्न्यग्नयस्तु ये विप्रा इति वचनेन साग्नेरप्येकोद्दिष्टविधानादिति दूषणं दत्तं तदपि पूर्वोक्तरीत्यास्य वचनस्यैकोद्दिष्टविधायकत्वासंभवात्, न दर्शेन विना श्राद्धमिति मन्वादिवचनाप्रतिसंधाननिबंधनत्वाच्चासंगतमेव । यदपि संन्यास्यमावास्यामृतयोरेव पार्वणं अन्येषां पार्वणैकोद्दिष्टयोर्विकल्प एव व्रीहियववदिति सिद्धांतितं तदपि सपिंडीकरणकर्तुर्निरग्नेः साग्नेश्च पार्वणनियामकवचनविरोधात् स्मृतिद्वैधे तु विषय इति व्यवस्थितविकल्पविधायकवचनविरोधाच्चायुक्तमेवेति चिंतनीयम्। अतएवौरसक्षेत्रजयोः पार्वणं दत्तकादीनामेकोद्दिष्टमित्येकः पक्षः । साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमित्यपरः । तद्दूषणं मिताक्षरादौ ज्ञेयमिति निर्णयसिंध्वाद्यर्वाचीनग्रंथा उपेक्ष्याः । न दर्शेन विनेत्यादिवाक्यादर्शननिबंधनत्वात् । अतएव साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमिति व्यवस्थेति केचित् । तदसत् । वह्न्यग्नय इति वाक्येन साग्नेरप्येकोद्दिष्टविधानात् । अन्येतु प्रत्यब्दं पार्वणेनैवेति जातूकर्ण्यवचनादौरसक्षेत्रजाभ्यां पार्वणं अन्यैस्त्वेकोद्दिष्टमिति व्यवस्थापयंति तदप्यसत् । एकोद्दिष्टं तु कर्तव्यमौरसेन मृतेहनि । सपिंडीकरणादूर्ध्वं मातापित्रोर्न पार्वणं । इति पैठीनसिनौरसस्याप्येकोद्दिष्टविधानादिति मदनरत्नेप्ययुक्तः। मन्वादिवाक्यविरोधेन वह्न्यग्नय इति वाक्यस्यैकोद्दिष्टविधायकत्वासंभवस्य दर्शितत्वात् । न सुतस्य पिता दद्यान्नानुजस्य तथाग्रजः । इत्यनेन नियताधिकार एव प्रतिषिध्यते । तेन ताभ्यामपि सुताद्यभ्युदयेच्छया श्राद्धं कर्तव्यमिति सिद्धांतवत् मातापित्रोर्न पार्वणमिति पैठीनसिनापि नियतपार्वणस्यैव निषेधेन तद्विरोधाभावात् । अतएव वह्न्यग्नय इति भृगुणा साग्नीनामप्येकोद्दिष्टविधानादिकालतत्त्वविवेचनाद्यर्वाचीनग्रंथा अयुक्ताः । न दर्शेन विनेति मन्वादिवाक्यार्थाज्ञाननिबंधनत्वादिति । तस्मात्सपिंडीकरणकर्त्रा साग्निना चौरसादिना क्षयाहे पार्वणमेव कार्यं । एवममावास्यायां प्रेतपक्षे च मृतस्य निरग्निनापि पार्वणमेव । कालांतरे मृतस्य निरग्निना सपिंडीकरणकर्तृभिन्नेन चौरसादिना देशकुलाचारव्यवस्थयैव पार्वणमेकोद्दिष्टमेव वा कार्यं नतु कदाचि-

त्पार्वणं कदाचिदेकोद्दिष्टमिति पैच्छिकविकल्पेनेति सर्ववाक्याविरोधेन सिद्धमिति विभावनीयम्। अत्र श्राद्धे कर्मकालव्याप्त्या तिथिर्निर्णेतव्येति कर्मकालो निर्णेतव्यः।

तत्र निषिद्धकालमाह **मनुः**—रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा। संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते। इति। **बौधायनः**—चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः। आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत्। **माधवे शिवराघवसंवादे**—प्रातःकाले तु न श्राद्धं प्रकुर्वीत कदाचन। नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः। इति। ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः। कुतपाद्यथवाप्यर्वागासनं कुतपे भवेत्। इति माधवे शिवराघवसंवादवचनेन गांधर्वेण्यारंभस्योक्तत्वेनार्थात्संगवनिषेधः। तथाच संगवकालादूर्ध्वं सायंकालात्प्राक्नानैमित्तिकश्राद्धस्य काल इत्यर्थादुक्तं भवति। तत्रापराह्णस्य प्राशस्त्यमाह **मनुः**—यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते। तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते। इति। अपराह्णः पितृणां तु यापराह्णानुयायिनी। तिथिस्तेभ्यो यतो दत्ता ह्यपराह्णे स्वयंभुवा। इत्यादिपूर्वोदाहृतवचनैश्चापराह्णस्य मुख्यकालत्वं प्रतिपाद्यते। मुख्यत्वेन निषिद्धस्यापि सायाह्नस्य गौणकालत्वमाह **व्यासः**—स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं यथाविधि। इति पूर्वमारब्धस्य रात्रावपि समाप्तिमाहापस्तंबः—नच नक्तं श्राद्धं कुर्वीतारब्धे च भोजनसमापनादिति। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्। इति पूर्वोदाहृतवचनादेकोद्दिष्टस्य मध्याह्नो मुख्यकालः। **मात्स्ये**—अह्नो मुहूर्ता विख्याता दश पंच च सर्वदा। तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः। अष्टमे भास्करो यस्मान्मंदीभवति सर्वदा। तस्मादनंतफलदस्तत्रारंभो विशिष्यते। ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयं। मुहूर्तपंचकं ह्येतत्स्वधाभवनमिष्यते। इति। तत्रापि पादन्यूनापराह्णांत्यमुहूर्तस्य चतुर्थप्रहरांतर्गतत्वाच्चतुर्थप्रहरस्य च—चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते द्विजः। आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत्। इति निषिद्धत्वात्कुतपमारभ्य मुहूर्तचतुष्टयं पार्वणस्य मुख्यः कालः। अतएवात्रापराह्णादिशब्दा अपराह्णाद्येकदेशपरा इत्यपराह्णादिविनियोगे **हेमाद्रिः** संगच्छते। एकोद्दिष्टस्य तु आरभ्य कुतपे श्राद्धं रौ-

ह्णिं तु न लंघयेत्। इति वचनात्कुतपादिमुहूर्तद्वयं मुख्यः कालः। तत्र पार्वणे या मुख्यापराह्णव्यापिनी पूर्वा परा वा सैव ग्राह्या। अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत्। इति वृद्धगौतमवचनात्। यदा दिनद्वये संपूर्णमुख्यापराह्णव्याप्तिस्तदा पूर्वैव। तदाह मनुः—यस्यामस्तं रविर्याति पितरस्तामुपासते। सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयंभुवा। इति। सुमंतुरपि—त्र्यहे तु व्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः। पूर्वस्यां निर्वपेत्पिंडमित्यांगिरसभाषितं। इति। दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्। पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते। इति नारदीयाच्च। यदा दिनद्वयेपि साम्येनैकदेशव्याप्तिस्तदा तिथिवृद्धावुत्तरा तिथिक्षये पूर्वा। तदाह बौधायनः—अपराह्णद्वयव्यापिन्यतीतस्य च या तिथिः। क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तदोत्तरा। इति। 'तिथिसाम्येपि पूर्वैव यस्यामस्त'मिति, 'दर्शं च पूर्णमासं चे'ति वचनात्। अतएव खर्वशास्त्रं तु क्षयाहविषयबहुवाक्यानुरोधात्तद्व्यतिरिक्तविषयमिति हेमाद्रिः। खर्वो दर्प इति क्षयाहव्यतिरिक्तश्राद्धतिथिविषयं। त्र्यहे तु व्यापिनीत्याद्युदाहृतवचनविरोधादिति मदनरत्नादयश्च संगच्छंते। वैषम्येणोभयापराह्णैकदेशव्याप्तौ तु यत्राधिकापराह्णव्याप्तिः सा ग्राह्या। तदाह माधवे मरीचिः—त्र्यपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः। महती यत्र तद्विद्धां प्रशंसंति महर्षयः। इति। यदा दिनद्वयेप्यपराह्णसंबंधाभावस्तदापि पूर्वैव। तदाह मनुः—न त्र्यहव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः। पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता भवेद्यदि। इति। माधवे सुमंतुरपि—न त्र्यहव्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः। पूर्वस्यां निर्वपेत्पिंडमित्यांगिरसभाषितम्। इति। नन्वत्र चतुर्थे प्रहरे इत्यनेन चतुर्थप्रहरस्य निषेधात्तत्पूर्वकाले ग्राह्यतिथ्यसत्वेऽप्यनुष्ठाने कर्मणो यस्य यः काल इत्यादेर्विरोध इति चेन्न। विधिः पूज्यतिथौ तत्र निषेधः कालमात्रक इति वचनात् वचनांतरबोधितपूज्यत्वाया एव तिथेः साकल्यवचनबोधितसत्तामादायापि कर्मकालशास्त्रप्रवृत्तिर्नतु अपूज्यतिथेर्ज्योतिःशास्त्रप्रसिद्धसत्तामादाय विधिः पूज्यतिथाविति विरोधात्। अतएव वस्तुतस्त्रिमुहूर्ताया अपि—तिथ्यादिषु भवेद्यावान्ह्रासो वृद्धिः परेहनि। तावान्ग्राह्यः स पूर्वेद्युरदृष्टोपि

स्वकर्मणि। इति वचनादधिककालस्य कल्पनयापराह्णेपि संभवादिति। श्राद्धतिथिप्रकरणे हेमाद्रिः—यदा तूभे अपि मध्याह्नोत्तरार्धैकदेशमपि न व्याप्नुतस्तदापि गौणकाले सत्वात्पूर्वैव। तत्रापि मध्याह्ने एवैकभक्तं तिथ्यादिष्विति वचनाद्यस्यां तिथौ यत्कर्म विहितं तत्तस्याः स्वं कर्म। तेन मध्याह्नकालेऽपि तत्तिथिलाभात्तत्रैवैकभक्तं कार्यमिति हेमाद्रिरेकभक्तादिप्रकरणस्थमदनरत्नादयश्च संगच्छंते। युक्तं चैतत्। परेहनि विद्यमानतिथ्यादिगतक्षयादिः पूर्वदिने अनुष्ठीयमाने स्वनिमित्तके कर्मणि ग्राह्य इत्युक्ते उत्तरदिनविद्यमानस्वगतक्षयादेः पूर्वदिनगतस्वपूर्वतिथ्यादावेव स्वारस्येन ग्राह्यत्वप्रतीतेः। यत्तु माधवाचार्यैः उत्तरतिथिगतावेव वृद्धिक्षयौ नतु ग्राह्यतिथिगतौ। ग्राह्यतिथेरपराह्णद्वयव्यापित्वं मुहूर्तत्रयवृद्धावेव भवति। तथाच्च क्षये पूर्वेति नोपपद्यते। तेन यदा द्वितीयोत्तरदिने सायाह्नं प्रविशति तदा तिथिवृद्धिस्तत्र परेद्युरेवानुष्ठानम्। यदा द्वितीया परेद्युरपराह्णेपि कियती क्षीयते तदा प्रतिपत्पूर्वविद्धा ग्राह्या। उत्तरस्याः प्रतिपदः ज्योतिःशास्त्रप्रक्रिययापराह्णव्यापित्वेपि पारिभाषिक्या स्मार्तप्रक्रियया तदा व्यापित्वादित्युक्तं तच्छिष्यबुद्धिपरीक्षार्थमेव नतु तेषां तत्र तात्पर्यं कल्पनीयम्। अप्रतिपातेर्थे तात्पर्यं नास्तीति वेदांताधिकरणमालायां निर्णीतत्वात्प्रकृते हेमाद्र्यादिनिर्णीतकालसंकलीकरणार्थमेव ममायमुद्योग इति प्रतिज्ञातत्वेन प्रासंगिकविचारे तेषां तात्पर्याभावात्। बाणवृद्धी रसक्षयः इति ज्योतिर्विदुक्ते मुहूर्तत्रयतिथिवृद्धेरसंभवादपराह्णद्वयव्यापिन्यां प्रतिपदि सत्यां पूर्वतिथिभोगापेक्षयोत्तरतिथिभोगस्य सार्धघटिकातो न्यूनाधिकभावस्यासंभवेन तृतीयापराह्णे द्वितीयायाः क्षयस्य ज्योतिःशास्त्रे अप्रसिद्धत्वेन बाधितार्थक एवायं ग्रंथः स्यादिति सूरिभिश्चिंतनीयम्। एतेन यथाश्रुतार्थे एवाचार्यतात्पर्यं निश्चित्य तदनुसारेण निर्णयार्थं प्रवृत्ताः कालतत्वविवेचनादयः सर्वेपि नवीनग्रंथा उपेक्ष्याः। अत्र क्षयाहश्राद्धे पितृपार्वणमेव नतु मातामहपार्वणमपि। पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषं। सर्वत्रानेकगोत्राणामेकस्यैव मृताहनि। इति पारस्करवचनात् दौहित्रादीनां अपुत्रमातामहादिश्राद्धमेकोद्दिष्टमेवेत्यर्थ इति हेमाद्रिः। कर्षूसमन्वितं मुक्त्वा तथाद्यं

श्राद्धषोडशम्। प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिः इति कात्यायनवचनाच्च क्षयाहे मातृश्राद्धस्य पृथग्विधाना त्पितृक्षयाहे पित्रादीनां केवलानामिवोद्देशः कार्यं इति मरणादि नैक्येपि न सपत्नीकानां निर्देशः किंतु मरणपौर्वापर्येण द्वयो श्राद्धं तंत्रेण अर्पणं कृत्वा पृथगेव कार्यं। यदा तु मरणपौर्वा पर्यं न ज्ञातं तदा पितृपूर्वमिति हेमाद्रिः। एकोद्दिष्टरूपक्ष याहश्राद्धे तु मध्याह्नव्यापिनी तिथिर्ग्राह्या। मध्याह्नव्यापिनी य स्यात्सैकोद्दिष्टे तिथिर्भवेत्। इति पूर्वोदाहृतवचनात्। अत्र मध्याह्नशब्देन मध्याह्नैकदेशः कुतपरौहिणाख्यं मुहूर्तद्वयं गृह्यते। अतएव श्लोकगौतमः—आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं तु न लंघयेत्। इति। कुतपपूर्वभागे एवारंभस्तदाह व्यासः—कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत्। आवर्तनसमीपे वा तत्रैव नियतात्मवान्। तत्रैव कुतपे एव। अत्रापि तिथिद्वैधे पार्वणतिथिवन्निर्णयो ज्ञेयः। एतत्क्षयाहश्राद्धं सूर्यग्रहणदिने भोक्तृब्राह्मणाभावेपि तद्दिने एवामादिना कार्यं। तदाह गोभिलः—दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितं। अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः। इति पुरुषार्थचिंतामणौ कालखंडे क्षयाहश्राद्धकालनिर्णयः।

अथ सामान्यतः श्राद्धकालः तत्र याज्ञवल्क्यः—अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः। व्यतीपातो गजच्छाया ग्रहणं चंद्रसूर्ययोः। श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः। इति। तत्र अमावास्या पूर्वं निर्णीता। अष्टका मार्गशीर्षादिमासानामपरपक्षाष्टम्यः। हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति आश्वलायनसूत्रादावुक्ताः। वृद्धिः पुत्रजन्मादिः। तेन तद्विशिष्टः कालो लक्ष्यते। कृष्णपक्षः अपरपक्षः। सर्वस्य सूर्यसंक्रमस्य वचनांतरेण श्राद्धकालत्वाभिधानादयनाद्युपादानं फलातिशयार्थं। द्रव्यं पायसादि। ब्राह्मणसंपत्तिर्विशिष्टब्राह्मणलाभः। व्यतीपातो योगविशेषः। श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः। यद्यमा रविवारेण व्यतीपातः स उच्यते। इति वृद्धमनूक्तोपि। गजच्छाया तु—यदेंदुः पितृदैवत्ये हंसश्चैव करे स्थितः। याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता। इत्युक्ता। यदा श्राद्धं प्रति

श्चित्तदापि श्राद्धं कार्यम् । हेमाद्रौ विष्णुना तु तिस्र एवा-ष्टका उक्ताः अमावस्या तिस्रोऽष्टका इति । अन्वष्टका अष्टकाना-मुपरितना नवम्यः । तत्रैव कौर्मे—अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु । तिस्रश्चान्वष्टकाः पुण्या माघी पंचदशी तथा । इति । अष्टकाचतुष्टयातिरिक्ता भाद्रपदापरपक्षाष्टमी अष्ट-कोक्ता । हेमाद्रौ विष्णुधर्मोत्तरे—प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि । आयुरारोग्यदा नित्यं सर्वकामफलप्रदा । इति । वा-युपुराणे—अथ कालं प्रवक्ष्यामि श्राद्धकर्मणि पूजितं । पुत्रदा धन-मूलाः स्युरष्टकास्तिस्र एव च । कृष्णपक्षधनिष्ठादिपूर्वा चैंद्री उदाहृता । प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविकी । आद्या-पूपैः सदा कार्या मांसैरन्या भवेत्सदा । शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः । अन्वष्टका पितॄणां तु नित्यमेव विधीयते । या चान्या तु चतुर्थी स्यात्तां च कुर्यात्प्रयत्नतः । तासु श्राद्धं बुधाः कुर्युः सर्वस्वेनापि नित्यशः । हेमाद्रौ विष्णुधर्मो-त्तरे—अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च । अष्टका-विधिना हुत्वा क्रमेणैतासु पंचकम् । मात्रे राजन्पितामह्यै श्राद्धं कार्यं यथाविधि । तथैव प्रपितामह्यै वैश्वदेवपुरःसरं । पिंडनिर्वपणं कार्यं तथैव पितृवन्नृप । इति । आश्वलायनानामपि भाद्रपदकृष्ण-पक्षाष्टम्यामनुष्ठानं तादृशमेव । एतेन माघ्यावर्षं प्रौष्ठपद्या अपरपक्ष इत्यतिदेशात् शाकादिद्रव्यभेद इंद्रादिदेवताभेदश्च आश्वलायनव्यतिरिक्तविषयः । तेषां पंचस्वपि द्रव्याणां देवता-नां चाभेद एव । शाकादिद्रव्योपादानं तेषां प्राधान्यार्थम् । तथाच तत्प्रधानं सर्वमन्नं देयं । इत्यष्टकाः ।

अथ वृद्धिश्राद्धकालः । वृद्धिर्नाम पुत्रजन्मादिनिमित्तो-पलक्षितकालः । तथाच हेमाद्रौ जाबालिः—यज्ञोद्वाहप्रति-ष्ठासु मेखलाबंधमोक्षयोः । पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं विधी-यते । इति । तत्रैव विष्णुपुराणे—जातस्य जातकर्मादि क्रिया-कांडमशेषतः । पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् । इति । कात्यायनः—स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । पिंडा-नोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् । जातकर्मनामकरणनि-

पूर्वसंस्कृतैः । इत्यादिवचनाद्यः संस्कारकर्ता ज्येष्ठभ्रात्रादिः स संस्कार्यपित्रादिभ्यो दद्यात् । समावर्तनस्य विवाहप्राक्तनसंस्कारत्वादिति हेमाद्रिः । अत्राभावो नाश एव । देशांतरगतत्वेनासांनिध्ये रोगेणाशक्तौ संन्यासेन पातित्येन वा अनधिकारित्वे वान्यः सकुल्यादिर्वचनलब्धाधिकारः करोति तदापि संस्कार्यपितृभ्यो दद्यात् । यदा वचनोक्तसकुल्यादिर्नास्ति तदोपनयनात्पूर्वं ऋत्विगेव । उपनयनादूर्ध्वं संस्कार्यो वा स्वपितृभ्यो दद्यात् । अतएव—पितरो जनकस्येज्या यावद्व्रतमनाहितं । समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् । इति यमनाम्ना नवीनोदाहृतवचनं संगच्छते । अधिकारिनिर्णये हेमाद्रिणा पितुरभावे वचनेन लब्धाधिकारः सकुल्यादिरपि । तस्याभावे तु तत्क्रमादित्यत्र स्वपितृभ्य इत्यानुषंगात् प्रधानेधिकृत एवांगेऽधिकारीति सकुल्यादिः स्वेभ्य एव दद्यादित्युपसंहृतं तत् यदा सकुल्यादिः स्वेन द्रव्येण धर्मार्थं करोति तद्विषयमिति न तत्र वचनविरोध इति ज्ञेयं । पितुरभावे ज्येष्ठभ्रात्रादिर्दद्यात् । तदभावे स्वयमेव स्वपितृभ्यो दद्यात् । उपनयनोत्तरमधिकारस्य जातत्वादिति प्रयोगपारिजातश्च विष्णुपुराणादिवचनमूलत्वाद्युक्ततर एव । एतेनोपनयनोत्तरं स्वयमेव वृद्धिश्राद्धं कार्यमिति धर्मप्रकाशाद्यर्वाचीनग्रंथा उपेक्ष्याः । विष्णुपुराणादिवचनविरोधात् । वसिष्ठः—पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा । उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु । वृद्धशातातपः—पृथक् दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं तु कुर्वीत वैश्वदेवं च तांत्रिकम् । पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा । ततो मातामहानां वै वृद्धौ श्राद्धत्रयं स्मृतम् । भिन्नकालासंभवे बृहन्मनुः—अलाभे भिन्नकालानां नांदीश्राद्धत्रयं बुधः । पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् । इति ।

जीवत्पितृकस्य स्वसुतसंस्कारे विशेषो गृह्यपरिशिष्टे—जीवत्पितृकः सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवंत्यां मातामहस्यैव कुर्यादिति । अनेन मातामहेपि जीवति-नानिष्ट्वा तु पितॄन्श्राद्धे वैदिकं किंचिदाचरेत् । इति निषेधस्तं प्रति न प्रवर्तत इति सूच्यते । अतएव कात्यायनः—सपितुः पितृकृत्येषु अधि-

कारो न विद्यते । न जीवंतमतिक्रम्य किंचिद्दद्यादिति श्रुतिः । इति । जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । येषां वापि पिता दद्यात्तेभ्यो दानं प्रचक्षते । इति । मदनरत्ने हारीतः—जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् । इति नवीनोदाहृतवचनं च । अतएव विष्णुः—पितरि जीवति यः श्राद्धं कुर्यात् येषां पिता तेषां कुर्यात्, पितरि पितामहे च जीवति येषां पितामहः कुर्यात् । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात् । यस्य पिता प्रेतः स्यात्स पित्रे पिंडं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिंडौ दत्वा पितामहपितामहाय दद्यात् । मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । अनंतर्हितेभ्योंतर्हितेभ्यो वा त्रिभ्यः क्रमेण श्राद्धं कर्तव्यमिति । अत्र यः कुर्यादिति यच्छब्दप्रयोगात् जीवत्पितृकस्याकरणे न प्रत्यवायः किंतु कुर्वाणस्य फलविशेषो भवतीति हेमाद्रिः संगच्छते । एतेन—पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः । तेभ्यः पूर्वतरा ये च प्रजावंतः सुखैधिताः । ते तु नांदीमुखा नांदी समृद्धिरिति कथ्यते । इति । प्रपितामहात्परेषां नांदीमुखसंज्ञामभिधाय—कर्मण्यथाभ्युदयिके मंगले चातिशोभने । जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितृन्नांदीमुखान्नाम पूजयेद्विधिपूर्वकम् । इति तेषां नांदीमुखानां वृद्धिश्राद्धे देवतात्वमुक्तम् । तेन जीवत्पित्रादित्रिकेण वृद्धप्रपितामहादित्रयाणां नांदीश्राद्धं कर्तव्यम् । विष्णूक्तो निषेधस्तु वृद्धिश्राद्धातिरिक्तविषय इति मदनरत्नो मदनपारिजातश्चोपेक्ष्यः । नांदीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा । इति पूर्ववचनेन प्रौष्ठपद्यां श्राद्धमुक्तं प्राकरणिके तस्मिन्नांदीमुखसंज्ञकानां प्रपितामहपित्रादीनामन्वयेन कर्मण्यथाभ्युदयिक इति प्रकरणांतरोक्ते वृद्धिश्राद्धे तेषामन्वयस्य वक्तुमशक्यत्वात् । पितामहप्रपितामहादीनां नांदीमुखसंज्ञायाः प्रौष्ठपदीश्राद्धार्थत्वेन वृद्धिश्राद्धेनैतेषां संबंध इति हेमाद्रिविरोधात् जीवत्पितृकस्य दर्शादिश्राद्धप्रसक्त्यभावेन विष्ण्वाद्युक्तनिषेधस्य वृद्धिश्राद्धातिरिक्तविषयत्वस्यायुक्तत्वाद्वक्ष्यमाणसुमंतुवचनविरोधाच्च । अतएवैतन्मूलका गोविंदार्णवस्मृतिकौस्तुभाद्यर्वा-

चीनग्रंथा अयुक्ता इति प्रौष्ठपदीप्रकरणे प्रतिपादितम्। यत्तु—विवाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः। इति मैत्रायणीयपरिशिष्टवचनं, तत्। न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः। पितामहेप्येवमेव कुर्याज्जीवति साग्निकः। साग्निकोपि न कुर्वीत जीवति प्रपितामहे। इति सुमंतुवचनैकवाक्यत्वात् साग्निविषयमेव। एवंच—वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः। अनग्निकोपि कुर्वीत जन्मादौ वृद्धिकर्मणि। येभ्य एव पिता दद्यत्तानेवोद्दिश्य पार्वणम्। इत्यादिवचनानि फलार्थिजीवत्पितृकादिविषयाणीति बोध्यम्। एतेन जीवत्पिता सुतसंस्कारेषु मातृमातामहयोरेवेति बह्वृचपरिशिष्टं बह्वृचविषयमेवेति निर्णयसिंध्वादय उपेक्ष्याः। विष्ण्वादिवचनहेमाद्र्यर्थाज्ञाननिबंधनत्वात्। यत्तु यदा जीवत्पितृकः पितामहादीनां श्राद्धं करोति तदा येभ्य एव पिता दद्यादिति वचनात् पितुरेव मात्रादीनां, मातामहादीनां च कुर्यादिति कैश्चिदर्वाचीनैरुक्तं तदयुक्तं जीवत्पिता मातृमातामहयोरेव कुर्यादित्यादिभिर्मात्रादिश्राद्धस्य विधानात्। मात्रादिशब्दानां संबंधिशब्दत्वेनोपस्थितस्वमात्रादिपरित्यागेनानुपस्थितपितृमात्रादिग्रहणस्यायुक्तत्वादिति ज्ञेयम्।

कर्मांगमपि श्राद्धमाह हेमाद्रौ पारस्करः—निषेककाले सोमे च सीमंतोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्मांगं वृद्धिवत्कृतम्। इति। निषेककालो गर्भाधानकालः। तत्र तदंगं श्राद्धं कार्यं। सोमग्रहणमाधानाग्निहोत्रादिकर्मणामुपलक्षणार्थम्। यत्तु—नांदीमुखे विवाहे च प्रपितामहपूर्वकं। नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम्। इति वृद्धवसिष्ठवचनं, तत् नांदीमुखाः पितर इदं वो अर्घ्यं इत्यर्घ्यप्रदानमंत्रो यथालिंगमित्याश्वलायनसूत्रम्। नांदीमुखास्तु पितरः प्रीयंतामिति मंत्रतः। इममेव वदेन्मंत्रं पितामहपदान्वितम्। इति तत्कारिका—नांदीमुखाः पितरः पितामहाः प्रपितामहा इति कात्यायनगोभिलसूत्रविरोधात् यस्यां शाखायां पित्रादित्वबोधकवचनं नास्ति तद्विषयं ज्ञेयम्। नांदीमुखे पुत्रादिप्रयोजकत्वेन हर्षसंपादके इति

---

१ 'कुर्यादित्यादिमात्रा'.

विवाहस्यैवेदं विशेषणमिति विवाहतत्त्वकारः । इति वृद्धिश्राद्धकालः ।

अथ कृष्णपक्षश्राद्धकालनिर्णयः । तत्र हेमाद्रौ कात्यायनः—अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं वा चतुर्थ्यां यदहः संपद्यत इति । प्रतिपत्प्रभृति अमावास्यांते पक्षे चतुर्थ्या ऊर्ध्वं कस्मिंश्चिद्दिने यस्मिन् श्राद्धसाधनसंपत्तिस्तस्मिन्कुर्यात् । गौतमः—अमावास्यायां पितृभ्यो दद्यात् पंचमीप्रभृति वाऽपरपक्षस्य यथश्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणासंभवे कालनियमः शक्तित इति । नित्यं चेदम् । तथाच तत्रैव कात्यायनः—शाकेनापि नापरपक्षमतिक्रमेदिति । प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा । इत्यादिफलश्रुतेः काम्यमपि । इदममावास्याश्राद्धात्पृथगेव कार्यम् । अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् । इति पृथङ्निर्देशादिति हेमाद्रौ स्मृतिचंद्रिकाकारः । अपरपक्षे यदहः संपद्येतामावास्या विशेषेणेति निगमवचनात्केचित्तु विकल्पमेव मन्यंते इति तत्रैवोक्तम् । तथाच शक्यशक्त्यपेक्षया व्यवस्थेति बोध्यम् । भाद्रपदापरपक्षे तु अशक्तेनापि कृष्णपक्षश्राद्धममावास्याश्राद्धात्पृथगेव कार्यम् । तथाच हेमाद्रौ विष्णुधर्मोत्तरं—उत्तरादयनाद्राजन्श्रेष्ठं स्याद्दक्षिणायनम् । याम्यायनाच्चतुर्मासं तत्र सुप्ते तु केशवे । प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः । पंचम्यूर्ध्वं तु तत्रापि दशम्यूर्ध्वं ततोप्यति । मघायुक्ता तु तत्रापि श्रेष्ठा राजंस्त्रयोदशी । इति । तत्रैव ब्राह्मे—अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा । इति । आदित्यपुराणे—प्रावृड् ऋतौ यमः प्रेतान्पितॄंश्चापि यमालयात् । विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् । क्षुधार्ताः कीर्तयंतश्च दुष्कृतं च स्वयं कृतम् । कांक्षंति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् । तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु । मध्वाज्यतिलमिश्रेण तथा शीतेन चांभसा । भिक्षामात्रेण यः प्राणान्संधारयति वा स्वयम् । श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैः सुसंचितैः । इति । नागरखंडे—आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे । यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे । तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम् । शाट्यायनिः—नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः । कन्याग-

तान्वितश्चेत्स्यात्स कालः श्राद्धकर्मणि । तत्रैव ब्राह्मे—कन्यागते सवितरि यान्यहानि तु षोडश । ऋतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् । इति । अत्र पंचमपक्षस्यैव श्राद्धकालत्वम् । पंचदशतिथ्यात्मकोऽपि पक्षस्तिथिवृद्धौ कदाचित्षोडशदिनात्मकोपि भवति । तत्रैकदिनहानिर्माभूदित्यभिप्रायेण तिथिषोडशक इत्युक्तमथवा शुक्लप्रतिपदा सह षोडशत्वम् । तदाह माधवे देवलः—अहःषोडशकं यत्तु शुक्लप्रतिपदा सह । चंद्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता । इति । अत्र कन्यार्कः प्राशस्त्यसंपादको नतु निमित्तम् । तदाह जाबालिः—आगतेपि रवौ कन्यां श्राद्धं कुर्वीत सर्वथा । आषाढ्याः पंचमः पक्षः प्रशस्तः पितृकर्मसु । पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा । प्राप्नोति पंचमे दत्वा श्राद्धं कामांस्तथापरान् । बृहन्मनुः—आषाढीमवधिं कृत्वा पंचमं पक्षमाश्रिताः । कांक्षंति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् । तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् । आषाढीमवधिं कृत्वा यः पक्षः पंचमो भवेत् । तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा । इति । शाट्यायनिः—पुण्यः कन्यागतः सूर्यः पुण्यः पक्षस्तु पंचमः । कन्यास्थार्कान्वितः पक्षः सोऽत्यंतं पुण्य उच्यते । कार्ष्णाजिनिः—आदौ मध्येऽवसाने वा यत्र कन्यां व्रजेद्रविः । स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति । इति । वृद्धमनुः—नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः स महालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा । इति । अत्र प्रतिपत्प्रभृति अमावास्यापर्यंतश्राद्धकरणे नंदादिनिषेधो नास्ति । तदाह कार्ष्णाजिनिः—नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने नैव नंदादिवर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी । इति । नन्वेवं—प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीं । इति याज्ञवल्क्यविरोध इति चेन्न । अपरपक्षे श्राद्धं प्रकुर्वीतोर्ध्वं चतुर्थ्या यदहः संपद्यते सप्तम्या ऊर्ध्वं यदहः संपद्यते ऋते चतुर्दशीमिति कात्यायनवाक्यैकवाक्यतया पंचम्यादिसप्तम्यादिपक्षविषयत्वेनाप्युपपत्तेः श्राद्धषोडशकत्वापवादत्वासंभवात् । अतएव प्रतिपदादिसर्वतिथिश्राद्धेपि चतुर्दशी वर्जनीयेति केचनार्वाचीनग्रंथ उपेक्ष्याः । हेमाद्रिमाधवमदनरत्नादिविरोधाच्च । अतएव मनुः—कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् । श्राद्धे प्रशस्ता

स्तिथयो यथैता न तथेतराः । इति । अत्राप्यशक्तावाह यमः—हंसे
र्षासु कन्यास्थे शाकेनापि गृहे वसन् । पंचम्योरंतरे दद्यादु-
योरपि पक्षयोः । इति । कृष्णपंचमीमारभ्य शुक्लपंचमीपर्यंतं
स्यांचित्तिथावपि कुर्यादित्यर्थः । एकस्मिन्दिने श्राद्धकरणे
दादिनिषेधमाह गार्ग्यः—नंदायां भार्गवदिने त्रयोदश्यां त्रिज-
मसु । एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् । वृद्धगार्ग्यः—
ाजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा । यस्तु श्राद्धं प्रकु-
ीत तस्य पुत्रो विनश्यति । इति । नंदा प्रतिपत्षष्ठ्येकादश्यः ।
ाद्यदशमैकोनविंशानि त्रिजन्मनक्षत्राणि । प्राजापत्यं रोहिणी ।
ौष्णं रेवती । पित्र्यर्क्षं मघा । अस्यापवादः प्रयोगपारिजाते
ंग्रहे—अमापाते भरण्यां च द्वादश्यां पक्षमध्यके । तिथिं
ारं च नक्षत्रं योगं च न विचारयेत् । इति । इदं निषेधतत्प्र-
तिप्रसवपर्यालोचनं महालयपक्षांतर्गतमृततिथौ सकृन्महालया-
भवेन यदा तिथ्यंतरेऽनुष्ठानं तदैव महालयांतर्गतमृततिथौ
कृन्महालयानुष्ठानं मुख्यम् । तत्र निषेधादिविचारः—सौरो मासो
िवाहादाविति प्रकरणे हेमाद्रौ—प्रेतमासस्य यः पक्षस्तत्तिथौ
तिवत्सरम् । यावत्स्मरति पौत्रोपि तेषां तत्रैव दापयेत् । इति
चेतोवचनेन मृततिथावेव विधानात् । अतएव निषेधप्रयो-
कनक्षत्रादियुक्तायामपि तत्तिथौ सकलदेशीयशिष्टानामनु-
ानम् ।—आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे । मृताहनि
ितुर्यो वै श्राद्धं दास्यति मानवः । तस्य संवत्सरं यावत्संतृप्ताः
ितरो ध्रुवम् । या तिथिर्यस्य तातस्य मृताहे तु प्रवर्तते । सा
िथिः पितृपक्षे तु पूजनीया प्रयत्नतः । अशक्तः पक्षमध्ये तु
रोत्येकदिने यदा । निषिद्धेपि दिने कुर्यात्पिंडदानं यथाविधि ।
ति नागरखंडे कात्यायननाम्ना कैश्चिदर्वाचीनैर्लिखितानि
चनानि च संगच्छंते प्रचेतोवचनसमानार्थत्वात् । एतान्य-
करणि महानिबंधेष्वदर्शनादिति कृत्यरत्नावल्याद्यर्वाचीन-
था उपेक्ष्याः प्रचेतोवचनादर्शननिबंधनत्वात् ।

गौणकालोऽप्युक्तो हेमाद्रौ ब्राह्मे—यावच्च कन्यातु-
योः क्रमादास्ते दिवाकरः । तावच्छ्राद्धस्य कालः स्याच्छून्यं

पितरस्तदा। पुनः स्वभवनं यांति शापं दत्वा सुदारुणं। सुमंतुः—कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः। तस्मात्कालाद्भवेदेयं वृश्चिकं यावदागतः। येयं दीपान्विता राजन् ख्याता पंचदशी भुवि। तस्यां दद्यान्न चेद्दत्तं पितृणां वै महालये। यत्तु जातूकर्ण्यवचनं—तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम्। इति तत्पंचमपक्षस्य मुख्यकालत्वबोधकम्। अकरणे दोषो हेमाद्रौ ब्राह्मे—सूर्ये कन्यागते कुर्याच्छ्राद्धं यो न गृहाश्रमी। धनं पुत्राः कुतस्तस्य पितृनिश्वासपीडया। न संति पितरश्चेति कृत्वा मनसि यो नरः। श्राद्धं न कुरुते तत्र तस्य रक्तं पिबंति ते। इति मार्कंडेयः—कन्यागते सवितरि दिनानि दश पंच च। पार्वणेनैव विधिना श्राद्धं तत्र विधीयते। इति। यत्तु—विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्। पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्। इति पिंडदाननिषेधस्तस्यापवादः संग्रहे—महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि। यस्य कस्यापि मर्त्यस्य सपिंडीकरणे तथा। कृतोद्वाहोऽपि कुर्वीत पिंडनिर्वपणं सुतः। इति।

संन्यासिविषये **संन्यासिविषये** उक्तं वायुपुराणे—संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि। महालये तु यच्छ्राद्धं द्वादश्यामेव तद्भवेत्। इति। मृताहं च सपिंडं च गयाश्राद्धं महालयम्। आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित्। इति वचनात्पक्वान्नमेव मुख्यम्। अत्र सर्वथा तदसंभवे तु अकरणान्मंदकरणं श्रेय इति न्यायात्—अन्नाभावे द्विजातीनामामश्राद्धं विधीयते। इति वचनाच्चामेनापि कर्तव्यं न तु सर्वथा लोपः कार्य इति बोध्यम्।

अत्र देवता दिने दिने पार्वणेनैव विधिनेत्युक्तत्वेपि मातृपार्वणं पृथगेव कार्यम्। अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरे तथा। महालये गयायां च सपिंडीकरणात्पुरा। मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह। महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च। नवदैवतमत्रेष्टं शेषं षाट्पौरुषं विदुः। इत्यादिवचनात्। महालये गयाश्राद्धे श्राद्धे चान्वष्टकासु च। ज्ञेयं द्वादशदैवत्यं तीर्थे प्रौष्ठे मघासु च। इति। निगमे तु मातामहिपार्वणमपि पृथगुक्तम्। सकृन्महालये देवतास्तु संग्रहे उक्ताः—तातांबात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननी-

स्वभ्रातरस्तात्त्रयः। तातादात्मभगिन्यपत्यश्वशुक् जायापती सद्गुरुः शिष्यासाः पितरो महालयविधौ तीर्थे तथा तर्पणे। इति।

विधवाकर्तृकमहालयः अत्रापि पार्वणत्रयमेवोक्तम्। विधवाकर्तृकश्राद्धे विशेषः संग्रहे—चत्वारि पार्वणानीह विधवायाः सदैव हि। स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव हि। ततो मातामहानां च श्राद्धदानमुपक्रमेत्। स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैवच। विधवा कारयेच्छ्राद्धं सर्वकालमतंद्रिता। इति। स्मृतिरत्नावल्यां तु पार्वणद्वयमेवोक्तम्। इति महालयदेवताः। महालयश्राद्धांगतर्पणकाल उक्तो नारदीये—पक्षश्राद्धं यदा कुर्यात्तर्पणं तु दिने दिने। सकृन्महालये चैव परेहनि तिलोदकम्। इति। माध्यंदिनैः सकृन्महालये तद्दिने एव कार्यम्। इदं महालयश्राद्धं मलमासे न कार्यमित्युक्तं मलमासनिर्णये। महालयपक्षांतर्गतभरण्यां श्राद्धे फलमुक्तं मात्स्ये—भरणी पितृपक्षे या महती परिकीर्तिता। तस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत्। इति। इदं पिंडरहितं कार्यम्। अयनद्वितये श्राद्धं विषुवद्वितये तथा। भरणीषु च कुर्वीत पिंडनिर्वपणं नहि। इति पुलस्त्यवचनात्। अष्टम्यां श्राद्धे फलमुक्तं ब्रह्मांडपुराणे—आषाढ्याः पंचमे पक्षे या च मध्याष्टमी स्मृता। त्रयोदशी गजच्छाया गयातुल्या तु पैतृके। इति। एतत्पक्षीयत्रयो-

मघात्रयोदशी दश्यां श्राद्धमाह मनुः—यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीं। तदप्यक्षयमेव स्याद्वर्षासु च मघासु च। इति। विष्णुः—अथ पितृगाथा भवति—अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः। प्रावृड्काले सिते पक्षे त्रयोदश्यां समाहितः। मधूत्तरेण यः श्राद्धं पायसेन समाचरेत्। महाभारते—अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीं। मघासु सर्पिषा युक्तं पायसं दक्षिणामुखः। याज्ञवल्क्यः—यद्ददाति गयास्थश्च सर्वमानंत्यमश्नुते। तथा वर्षत्रयोदश्यां मघासु च विशेषतः। प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्। प्राप्य श्राद्धं प्रकर्तव्यं मधुना पायसेन च। प्रजामिष्टां यशः स्वर्गमारोग्यं च धनं तथा। नृणां श्राद्धे सदा तृप्ताः प्रयच्छंति पितामहाः। इति। नित्यमपीदम्—प्रौष्ठपद्यामतीतायां मघायुक्ता त्रयोदशी। इत्युक्त्वा विष्णुधर्मोत्तरे—एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः। श्राद्धमेते-

दश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः। पंचत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम्। नागरखंडे—ये वांछंति नरा मुक्तिं पितृभिः सह चात्मनः। असंतानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी। संतानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत्। अद्यप्रभृति वै श्राद्धं त्रयोदश्यां करिष्यति। कन्यागते सहस्रांशौ तस्य स्याद्वंशसंक्षयः। इति शापेन देवानां निर्दग्धेयं महातिथिः। ततः प्रभृति नैतस्यां क्रियते श्राद्धमुत्तमम्। इत्यादिभिस्तु पुत्रवतः काम्यश्राद्धमेव निषिध्यते नतु नित्यमपि। श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते। इत्याद्युदाहृतवचनविरोधात्। काम्यमपि उत्तमविशेषणादावाहनार्घ्यदानादीतिकर्तव्यताविशिष्टमेव निषिध्यते। अतएव—अतः श्राद्धं विना देयं तद्दिने मधुपायसम्। खड्गमांसं कालशाकं मांसं वार्ध्रीणसस्य च। तस्याभावे तु दातव्यं क्षीरौदनमनुत्तमम्। तस्मिन्नहनि विप्रेभ्यः पितॄणां तृप्तये नृप। इत्यग्रिमवचनेन ब्राह्मणभोजनविधानात्। अतएव—प्रजां मेधां पशुं पुष्टिं स्वातंत्र्यं वृद्धिमुत्तमाम्। दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीम्। अवाप्नोति न संदेहः श्राद्धं श्रद्धापरो नरः। इति। द्वादश्यां मूर्तिसंपन्नस्त्रयोदश्यां बहुप्रजः। आयुष्मतीं प्रजां चैव धनं वश्यं च विंदति। इति। प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्। प्राप्य श्राद्धं तु कर्तव्यं मधुना पायसेन च। प्रजामिष्टां यशः स्वर्गमारोग्यं च धनं तथा। नृणां श्राद्धे तदा प्रीताः प्रयच्छंति पितामहाः। इति मार्कंडेयवृद्धमनुशंखलिखितवचनबोधितं फलं। अयनद्वितये श्राद्धं विषुवद्वितये तथा। युगादिषु च सर्वासु पिंडनिर्वपणादृते। इति पुलस्त्यवचनादसंतानस्य पिंडदानरहितेनापि श्राद्धेन भवति। तथा पुत्रवत इति कर्तव्यपिंडरहितेनैतेन फलसिद्धावपि वाधकाभावात्। अतएव—ज्ञातीनां तु भवेच्छ्रेष्ठः कुर्वञ्छ्राद्धं त्रयोदशीम्। नावश्यं तु युवानोऽस्य प्रमीयंते नरा गृहे। इति महाभारतस्यै—संतानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत्। इत्यादिनागरखंडादिवचनैर्न विरोध इति वोध्यम्। एतेन—वयं तु पश्यामो निषेधवचनानि सपुत्रविषयाण्येवासंतानस्तु य इति नागरखंडवचनादित्यादिनिर्णयसिंध्वाद्यर्वाचीनग्रंथा उपेक्ष्याः भारतादिव-

चनविरोधात् । इदं श्राद्धं दर्शश्राद्धवदेव कार्यं न क्षयाहश्राद्धवत् । तदाह हेमाद्रौ कार्ष्णाजिनिः—श्राद्धं तु नैकवर्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्तास्तत्र येऽस्य स्युः प्रजां हिंसंति तस्य ते । इति । स्मृत्यंतरं—नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषोः । एकस्यैव तु नो दद्यात्पार्वणं तु समाचरेत् । यः पुत्रवान्सुतायुषोरभिवृद्धिं इच्छेत् स एकवर्गस्यैव श्राद्धं नो दद्यादपितु मातामहवर्गोद्देशेनापि पार्वणं समाचरेदिति हेमाद्रिमाधवादयः । ननु—पितरो यत्र पूज्यंते तत्र मातामहा ध्रुवम् । अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् । इतिवचनादमावास्यादिकालिकपितृवर्गश्राद्धे मातामहपार्वणस्यावश्यकत्वेनैकवर्गश्राद्धस्याप्रसक्तत्वात्कथं वचनप्रामाण्यम् । नच द्वितीयब्राह्मणभोजनासामर्थ्येन तत्प्रसक्तिरिति शंक्यम् । एकेनापि हि विप्रेण षट्पिंडं श्राद्धमाचरेत् । षडर्घ्यान्दापयेत्तत्र षड्भ्यो दद्यात्तथाशनम् । पिता भुंक्ते द्विजकरे मुखे भुंक्ते पितामहः । प्रपितामहस्तु तालुस्थः कंठे मातामहः स्मृतः । प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थितः । एवमप्याचरेच्छ्राद्धं षड्दैवत्यं महामुने । विभक्तं कारयेद्यस्तु पितृहा स निगद्यते । इति हेमाद्रौ देवलस्मृतिविरोधात् । तस्मादेकवर्गश्राद्धप्राप्त्यभावात्कथं प्रामाण्यमिति चेत् । येन पुरुषेण सर्वशाखोक्तांगोपसंहारेणैव कर्म कर्तव्यमित्यादिसिद्धांतः णणां विधायकानि सूत्रांतरादीनि च न ज्ञातानि, किंतु पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमिति सूत्रमेव दृष्टं, तस्य पित्रादित्रयाणामेव कर्तव्यमिति प्रसक्तौ तावन्मात्रं न कर्तव्यं किंतु मातामहपार्वणमप्यवश्यं कर्तव्यमित्येतद्विधायकत्वेन वचनसामंजस्यात् व्यामोहप्राप्तमेकवर्गश्राद्धमनेन निषिध्यते । हेमाद्रिमाधवयोरप्युक्तार्थे एव तात्पर्यात् । एतेन अविशेषेणेति तु येन मातामहेन सह मातुः सपिंडीकरणं कृतं तद्विषयमेव । तेन भाद्रकृष्णत्रयोदश्यां दर्शादौ पितृवर्गश्राद्धमात्रेणापि नित्यशास्त्रार्थसिद्धावपि तावन्मात्रं न कर्तव्यं किंतु मातामहपार्वणमपीति कालतत्त्वविवेचनादयोऽर्वाचीनग्रंथा उपेक्ष्याः । उदाहृतानेकवचनहेमाद्रिमाधवविरोधात् । यस्तु प्रतिदिनं पक्षपर्यंतं सपिंडकं महालयश्राद्धं करोति तेन त्रयोदश्यामपि तथैव

कार्यं नैव नंदादिवर्ज्यं स्यादित्युदाहृतवचनात् । इति त्रयोदशीनिर्णयः ।

**अथ महालयांतर्गतचतुर्दशीश्राद्धनिर्णयः ।** तत्र **याज्ञवल्क्यः**–प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् । शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते । **ब्रह्मांडपुराणे**–प्रायोनाशकशस्त्राग्निविषोद्बंधनिनां तथा । चतुर्दश्यां तु कर्तव्यं तृप्त्यर्थमिति निश्चयः । **नागरखंडे**–अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा । उपसर्गान्वितानां च विषमृत्युमुपेयुषाम् । वह्निना च प्रदग्धानां जलमृत्युमुपेयुषाम्। सर्पव्याघ्रहतानां च मृतस्योद्बंधनैरपि । श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप । इति । अपमृत्युः अकालमृत्युः । अतएव **मार्कंडेयः**–युवानः पितरो यस्य मृताः शस्त्रेण वा हताः । तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता । इति । उपसर्गो ग्रहभूतादिप्रवेशः । **ब्रह्मवैवर्ते**–युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत् । शस्त्रेण च हता ये वै तेभ्यो दद्याच्चतुर्दशीम्। **मरीचिः**-विषशस्त्रश्वापदादितिर्यग्ब्राह्मणघातिनाम्। चतुर्दश्यां क्रिया कार्या येषां मृत्युर्विगर्हितः। इति। विषादिकृतो घातो येषां ते तथोक्ताः । **प्रचेताः**–वृक्षारोहणलोहाद्यैर्विद्युज्जलविषादिभिः । नखिदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी । इति । आदिशब्देन भृगुपतनवृक्षारोहणपतनादयो गृह्यंते । **हेमाद्रौ मनुः**–ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः । प्रीयंते पितरश्चास्य ये च शस्त्रहता रणे । इति । ये तु शास्त्रानुज्ञातजलाग्निप्रवेशादिमृतास्तेषां चतुर्दश्यां श्राद्धं न कार्यम् । अतएव **शाकटायनः**–जलाग्निभ्यां पवित्राणां संन्यासे वा गृहेपि वा । श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीम् । इति । जलाग्निग्रहणं विधिपरिगृहीतभृगुपतनादिमरणहेतूनामुपलक्षणम्। उदाहृतवचनानि तु अविहितजलादिमरणविषयाणि । अतएव पतिमरणानंतरं विहिताग्निप्रवेशेन मृतानां स्त्रीणामपि चतुर्दश्यां श्राद्धं न कार्यम् । इदं श्राद्धं पित्रादीनामप्येकोद्दिष्टमेवाह **गार्ग्यः**–चतुर्दश्यां तु यच्छ्राद्धं सपिंडीकरणात्परम्। एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः । **भविष्यत्पुराणे**–समत्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये । इति । अत्र पितृसुतग्रहणं

श्राद्धदेवतातदधिकारिमात्रोपलक्षणम् । मनुरपि—एकपिंडीकृतानां तु पृथक्त्वं नोपपद्यते । सपिंडीकरणादूर्ध्वंमृते कृष्णचतुर्दशीं । इति । अत्र शस्त्रादिहतानामेव चतुर्दश्यां, तेषां चतुर्दश्यामेवेति द्विविधो नियम इति केचित् । तदयुक्तम् । श्राद्धं कार्यं दिने दिने । नैव नंदादिवर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी । इति वचनविरोधात्तेषामेवेत्यस्यायुक्तत्वात् । आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् । चतुर्दश्यां भवेत्पूजा अमावास्या तु कामिकी । इति मदनरत्नोदाहृतदेवीपुराणे पूजा श्राद्धरूपा, अमावास्याग्रहणस्योपलक्षणत्वात् अमावास्यादिकालेष्वपि तेषां तृप्त्यर्थं श्राद्धविधानात्तेषां चतुर्दश्यामेवेत्यस्याप्ययुक्तत्वात् । शस्त्रादिहतानां चतुर्दश्यामेकोद्दिष्टमेवेत्यत्र कारणमुक्तं हेमाद्रौ नागरखंडे—यदि प्रेतत्वमापन्नः कदाचित्तत्पिता भवेत् । तृप्त्यर्थं तस्य कर्तव्यं श्राद्धं तत्र दिने नृप । पितामहाद्यास्तत्राह्नि श्राद्धं नार्हंति कुत्रचित् । अथ चेद्भ्रांतितो दद्यात्क्रियते राक्षसैस्तु तत् । ब्रह्मणो वचनाद्राजन् भूतप्रेतैश्च दानवैः । तेनैकोद्दिष्टमेवात्र कर्तव्यं नतु पार्वणम् । पितृपक्षे चतुर्दश्यां कन्यासंस्थे दिवाकरे । एतस्मात्कारणाद्राजन्पार्वणं नैव कारयेत् । इति । अतएव शस्त्रहतस्य पितुश्चतुर्दश्यामेकोद्दिष्टे कृतेपि तेन पितामहादेस्तृप्त्यसिद्धेः । कांक्षति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् । तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन हि । इत्यादिवचनात्पितामहादितृप्त्यर्थं दिनांतरे पार्वणविधिना महालयश्राद्धं कर्तव्यमेवेति हेमाद्रिः संगच्छते । पितामहोपि चेच्छस्त्रादिना हतस्तदा तस्यापि चतुर्दश्यामेकोद्दिष्टं कार्यम् । तथाच हेमाद्रौ स्मृत्यंतरं—एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति । यत्तु इदं चैकोद्दिष्टमपि देवयुक्तं कार्यम् । प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टं विधानतः । दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत् । इति प्रयोगपारिजाते उक्तं, तत्रानिर्दिष्टमूलकेन वचनेन एकोद्दिष्टं देवहीनमित्यादिवचनानां बाधः कथमिति चिंत्यम् । यदा पित्रादयस्त्रयोपि शस्त्रादिना हतास्तदा त्रयाणां पार्वणमेव कार्यं । तदाह मदनरत्ने बृहत्पराशरः—चतुर्दश्यां तु यच्छ्राद्धं सपिंडीकरणे कृते । एकोद्दिष्टविधानेन

अतएव एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति विशेषाभिधानात्त्रयाणां शस्त्रादिहतत्वे पार्वणमेव । अनेनैवाभिप्रायेण **अपरार्केणापि** पार्वणमेवोक्तमिति केचित् । अन्ये त्वाहुः—अयुक्तमेतत् । एकस्मिन्द्वयोर्वेत्यस्योपलक्षणत्वात् । अतएव **देवस्वामिनोक्तं** त्रिष्वपि शस्त्रहतेषु एकोद्दिष्टत्रयमेव कार्यं नतु पार्वणं आहत्यवचनाभावादिति तदयुक्तम् । उपलक्षणत्वे लक्षणाप्रसंगादिति **हेमाद्रिकृतं** मतांतरदूषणं संगच्छते । अतएवैकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति विशेषोपादानात्त्रयाणां तथात्वे पार्वणमेवेति **चंद्रिकापरार्कयोर्मतमिति माधवश्च** । यत्तु त्रयाणां शस्त्रहतत्वेपि एकोद्दिष्टत्रयमेव कार्यमिति **देवस्वामिमतमेव** युक्तमिति प्रतिभातीति **माधवेनोक्तं** तद्यदि पार्वणविधायकपराशरवचनं न स्यादिति कृत्वाचिंतया देवस्वाम्याशयवर्णनमात्रं नतु वस्तुस्थितिः, स भूते पार्वणं कुर्यादिति **पराशरवचने** लक्षणाप्रसंगादिति **हेमाद्रिविरोधादिति** बोध्यम् । अतएव त्रयाणां शस्त्रहतत्वेपि एकोद्दिष्टत्रयमेव कार्यं न पार्वणमिति **कालतत्त्वविवेचनादयो**ऽर्वाचीनग्रंथा उपेक्ष्याः । **चंद्रिकापरार्कहेमाद्रिमदनरत्नादिविरोधादिति** । यत्तु अस्यां चतुर्दश्यां शस्त्रादिना मृतस्तस्य चतुर्दशीनिमित्तमेकोद्दिष्टं क्षयाहनिमित्तं च पार्वणं एकोद्दिष्टं वा यथाकुलाचारं इति श्राद्धद्वयं प्राप्नोति इत्यापाततो **हेमाद्रिणोक्तं विज्ञानेश्वरादिभिश्च** क्षयाहनिमित्तपार्वणैकोद्दिष्टयोर्विकल्प एवेत्युक्तं तथाप्यग्रे **हेमाद्रिणा** क्षयाहनिमित्तं पार्वणमेवेति सिद्धांतितम् । युक्तं चेदमेव । अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः । इति क्षयाहप्रकरणोदाहृतवाक्येन प्रेतपक्षे मृतस्य क्षयाहे पार्वणस्यैव विधानात् । तेनात्रैव चतुर्दश्यां यः शस्त्रादिना मृतस्तस्य क्षयाहनिमित्तं पार्वणमेव कार्यम् । चतुर्दशीनिमित्तैकोद्दिष्टस्य प्रसंगादेव सिद्धिरिति । इति महालयचतुर्दशीश्राद्धनिर्णयः ।

**अथैकोद्दिष्टकालः** । तच्चैकोद्दिष्टं द्विविधं नवं नवमिश्रं चेत्याह **हेमाद्रौ आश्वलायनः**—नवश्राद्धं दशाहानि नवमिश्रं च षड्ऋतून् । इति । तत्र नवान्यनेकविधानि । त्रीणि

ष्टमे नवमे तथा । दशमैकादशे चैव ...

त्यायनः—चतुर्थे पंचमे चैव नवमैकादशे तथा । यत्तु वै दीयते जंतोस्तन्नवश्राद्धमुच्यते । शंखः—आद्यं श्राद्धमशुद्धोपि कुर्यादेकादशेहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः । वसिष्ठः—प्रथमेह्नि तृतीये च पंचमे सप्तमे तथा । नवमैकादशे चैव नवश्राद्धानि षट् तथा । इति । मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्यादानवमाद्यत्र नवमं विच्छिद्येतैकादशेह्नि तत्कुर्यादिति बौधायनेन पंचोक्तानि । अत्र व्यवस्थोक्ता शिवस्वामिना—नवश्राद्धानि पंचाहुराश्वलायनशाखिनः । आपस्तंबाः षडित्याहुर्विभाषामैतरेयिणः । इति । वृद्धवसिष्ठः—अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्न विमुच्यते । अर्वाक्तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतं । इति । अत्र पूर्वपूर्वश्राद्धं स्वकाले न कृतं चेदुत्तरेण सह तत्कुर्यात् । तदाह कण्वः—नवश्राद्धं मासिकं च यद्यदंतरितं भवेत् । तदुत्तरेण सातंत्र्यादनुष्ठेयं प्रचक्षते । सातंत्र्यं समानतंत्रता । हेमाद्रौ कौर्मे—पंचमे सप्तमे चैव नवमैकादशे तथा । युग्मांस्तु भोजयेद्विप्रान्नवश्राद्धं तु तद्विदुः । शूलपाणौ तु अयुग्मान्भोजयेद्विप्रानिति पाठः । ब्रह्मपुराणे—चतुर्थे ब्राह्मणानां च पंचमेहनि भूभृताम् । नवमे वैश्यजातीनां शूद्राणां दशमात्परे । तत्रैवात्रिः—प्रेतार्थे सूतकांते तु ब्राह्मणान्भोजयेत्ततः । नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि । इति । एवं चैकादशादिकान्नवश्राद्धादाशौचांते विधीयमानं ब्राह्मणभोजनं कर्मांतरमिति हेमाद्रिः । युद्धहतादौ सद्यःशौचेऽप्येकोद्दिष्टादिकमेकादशादिने एव । तदाह हेमाद्रौ पैठीनसिः—सद्यःशौचे प्रदातव्यं प्रेतस्यैकादशेहनि । स एव दिवसस्तस्य श्राद्धशय्यासनादिषु । इति । बृहस्पतिः—चतुर्थेहनि विप्रेभ्यो देयमन्नं हि बांधवैः । गावः सुवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः । चतुर्थेहनि संचयाहे इति हेमाद्रिः । यदिष्टं जीवतश्चासीत्तद्दद्यात्तस्य यत्नतः । इति । एकोद्दिष्टविधानेन यदेकस्य प्रदीयते । आवाहनाग्नौकरणरहितं देववर्जितम् । वस्त्रालंकारशय्याद्यं पितुर्यद्वाहनायुधम् । गंधमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् । इति ।

मात्स्येपि—सूतकांते द्वितीयेह्नि शय्यां दद्यात्सुलक्षणां । कांचनं

पुरुषं तत्र फलपुष्पसमन्वितम्। संपूज्य द्विजदांपत्यं नानावस्त्रविभूषणैः। वृषोत्सर्गं च कुर्वीत[1] देया च कपिला शुभा। इति। अत्र वृषोत्सर्ग आवश्यकः। एकादशेऽह्नि प्रेतस्य यस्य नोत्सृज्यते वृषः। प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि। इति षट्त्रिंशन्मते निंदाश्रुतेः। स्त्रीषु विशेष उक्तः संग्रहे–पतिपुत्रवती नारी भर्तुरग्रे मृता यदि। वृषोत्सर्गं न कुर्वीत गां च दद्यात्सवत्सिकां। इति। अस्मिंस्त्वेकादशाहे तु द्विजा एकादशैव तु। इति मात्स्ये एकादश ब्राह्मणा इत्युक्तं स मुख्यः कल्पः। एको ब्राह्मण इत्यनुकल्पः। अतएव विष्णुना शक्त्यपेक्षया बहव इत्युक्तम्। इदं चैकादशाहिकं महैकोद्दिष्टसंज्ञं क्षत्रियादिभिरप्येकादशाहे एव कार्यम्। आद्यं श्राद्धमशुद्धोपीति सद्यःशौचे प्रदेयमिति शंखपैठीनसिवचनात्। यत्तु यथाशौचापगमे इति विष्णुनोक्तं तत्कर्तुस्तात्कालिकी शुद्धिरिति वचनोक्ततात्कालिकाशौचापगमे इति व्याख्येयम्। अन्यथा मंत्रवर्जं हि शूद्रस्य द्वादशेऽहनि कीर्तितं। इति सपिंडीकरणविषयविष्णुवाक्यविरोधापत्तेः। शंखादिवाक्यविरोधाच्च। एतेनैकाहाद्याशौचे द्वितीयादिदिने कर्तव्यमिति गौडादिग्रंथाः, क्षत्रियादिभिः स्वाशौचांते त्रयोदशाहादौ कार्यमिति कालतत्त्वविवेचनाद्यर्वाचीनग्रंथा उपेक्ष्याः। उदाहृतवचनं एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्। चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक्। इति पैठीनसिवचनहेमाद्र्यादिनिबंधविरोधात्। इति नवश्राद्धकालः।

अथ नवमिश्रसंज्ञकषोडशश्राद्धकालः। तत्र हेमाद्रौ ब्राह्मे–नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा। चतुर्थे पंचमे चैव नवमैकादशे तथा। ततो द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया। कर्तव्याः श्रुतितस्तेषां तत्र विप्रांस्तु भोजयेत्। माधवे जातूकर्ण्यस्त्वाह–द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा। त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश। इति। अत्राद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषाण्मासिकोनाब्दिकपराः द्वादशानामपि मासिकानां पृथग्ग्रहणात्। हेमाद्रौ तु द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा। सपिंडीकरणं

१ 'प्रकुर्वीत.'

च्चैव इत्येतच्छ्राद्धषोडशम् । इति जातूकर्ण्यवचनपाठः । तत्राद्यमूनमासिकषाण्मासिक ऊनषाण्मासिकोनाब्दिके सपिंडीकरणं ऊनाब्दिकं इत्यर्थादेकार्थकत्वमिति बोध्यम् । नवश्राद्धं दशाहानि नवमिश्राणि षड्ऋतून् । इत्याश्वलायनोक्तेरेतान्येव नवमिश्राणि षोडशश्राद्धानि । ग्राह्यं तु नवमिश्रगतषोडशत्वबोधकमशक्तविषयमिति बोध्यम् ।

मासिकानां काल उक्तो याज्ञवल्क्येन—मृतेहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेहनि । मासश्चात्र मृताहतिथिमारभ्य त्रिंशत्तिथ्यात्मकश्चांद्रो ग्राह्यः । वत्सरपर्यंतं मासि मासि मृतेहनि श्राद्धं कर्तव्यम् । सपिंडीकरणादूर्ध्वं प्रतिसंवत्सरं मृतेहनि श्राद्धं कर्तव्यम् । आद्यं तु मासिकमेकादशेह्नि कर्तव्यमिति हेमाद्रिमाधवादयः । तेनैकादशेह्नि आद्यमासिकं नवश्राद्धं महैकोद्दिष्टं चेति श्राद्धत्रयमिति बोध्यम् । एतेनाद्याब्दिकं एकादशाहे कर्तव्यमिति केषांचिदर्वाचीनानामुक्तिरुपेक्ष्या । आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । इत्यादिवचनार्थाज्ञाननिबंधनत्वाच्च । अत एवाद्याब्दिकमेकादशाहे कार्यमिति शूलपाण्यादयोप्युपेक्ष्याः । सपिंडीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वाञ्छागलेयोदितो विधिः । आपाद्य सहपिंडत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेहनि । मृताहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् । मातुश्चैव वरारोहे वत्सरांते मृतेहनि । नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः । प्रथममासिकोनमासिकद्वितीयमासिकत्रैपक्षिकतृतीयचतुर्थपंचमषण्मासिकोनषाण्मासिकसप्तमाष्टमनवमदशमैकादशद्वादशमासिकोनाब्दिकानि षोडशश्राद्धानि क्रमेण दद्यादिति हेमाद्र्युदाहृतशातातपप्रभासखंडादिवचनकल्पसूत्रैः संवत्सरांते मृताहसंबंधिन्यां तिथौ सांवत्सरिकं श्राद्धं कर्तव्यमिति हेमाद्रिमाधवादिभिश्च सह विरोधात् । अतएव—चक्रवत्परिवर्तेत सूर्यः कालवशाद्यतः । अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिह्नितम् । मासचिह्नं तु कर्तव्यं पौषमाघाद्यमेव हि । यतस्तत्र विधानेन स मासः परिकीर्तितः । इति लघुहारीतवचनं संगच्छते । तस्मान्मासाद्यतिथौ मासिकानुष्ठानं, अब्दे जाते द्वितीयाब्दाद्यतिथौ

आब्दिकश्राद्धानुष्ठानमिति हेमाद्र्युक्तमेव युक्तमिति बोध्यम् । अतएव मासादौ मासिकं कार्यमाब्दिकं वत्सरे गते । आद्यमेकादशे कार्यमधिके त्वधिकं भवेत् । इत्यर्वाचीनोदाहृतलौगाक्षिवचनं संगच्छते । ऊनषाण्मासिकादेः कालमाह हेमाद्रौ पैठीनसिः–षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते । मासिकानि स्वकीये तु दिवसे द्वादशेपि वा । इति माधवे गोभिलः–ऊनषाण्मासिकं षष्ठे मासेऽर्धन्यूनमासिकं । त्रैपक्षिकं तृतीये स्यादूनाब्दं द्वादशे तथा । मदनरत्ने भविष्ये–त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनंतरम् । इति । श्लोकगौतमोपि–एकद्वित्रिदिनैरूने त्रिभागेनोन एववा । श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः । ऊनमासिकस्य कालांतरमाह गोभिलः–मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकं । इति । द्व्यादिदिनन्यूनपक्षे नंदादिनिषेधमाह माधवे गार्ग्यः–नंदायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् । मरीचिः–द्विपुष्करे च नंदासु सिनीवाल्यां भृगोर्दिने । चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे । इति । भद्रातिथयः, त्रिपादृक्षाणि, भानुभौमशनैश्चरवाराः, एषां त्रयाणां योगः त्रिपुष्करं । द्वयोर्योगो द्विपुष्करमित्यर्थः । हेमाद्रौ पैठीनसिः–सपिंडीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश । एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि च । इति । आहिताग्नेः प्रेतश्राद्धकालमाह कात्यायनः–श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि । ध्रुवाणि तु प्रकुर्वन्ति प्रमीताहनि सर्वदा । त्रैपक्षिकादूर्ध्वानि । ध्रुवाणि अतएव जातूकर्ण्यः–ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् । अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः । इति । असामर्थ्ये आह हारीतः–मुख्यं श्राद्धं मासि मासि अपर्याप्तमृतुं प्रति । द्वादशाहे न वा भोज्या एकाहे द्वादशेपि वा । इति । नवश्राद्धादौ भोजने प्रायश्चित्तमाह हारीतः–चांद्रायणं नवश्राद्धे प्राजापत्यं तु मासिके । एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते । इति नवमिश्रसंज्ञकानां षोडशश्राद्धानां कालः ।

अथ सपिंडीकरणकालः । तत्र निरग्नेः प्रेतस्य निरग्निः कर्ता संवत्सरे पूर्णे तदुत्तरमृताहे सपिंडनं कुर्यात् । तदुक्तं भविष्यत्पुराणे–सपिंडीकरणं कुर्याद्यजमानस्त्वनग्निमान् ।

अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ। इति। हेमाद्रौ पुलस्त्यः—निरग्निकः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्। वृद्धिर्वृद्धिनिमित्तं चौलादिकम्। शाट्यायनः—प्रेतश्राद्धानि शिष्टानि सपिंडीकरणं तथा। अपकृष्यापि कुर्वीत कर्तुं नांदीमुखं द्विजः। अनेन प्रेतकर्मकर्तुस्तत्समाप्तेः पूर्वं वृद्धिश्राद्धे अनधिकारोपि सूचितः। अतएव हेमाद्रौ लघुहारीतः—भ्राता वा भ्रातृपुत्रो वा सपिंडः शिष्य एव वा। सहपिंडक्रियां कृत्वा कुर्यादाभ्युदयं ततः। इति नागरखंडे—ततः सपिंडीकरणं वत्सरादूर्ध्वतः स्थितम्। वृद्धिर्वागामिनी चेत्स्यात्तदर्वागपि कारयेत्। उशना—पितुः सपिंडीकरणम् आब्दिके मृतिवासरे। आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात्। तत्र चापकृष्यमाणे सपिंडीकरणे 'तदंतं अपकर्षे स्यात्' इति न्यायात्तत्पूर्वतनानि षोडशश्राद्धानि कृत्वैव सपिंडीकरणं कार्यम्। अतएव वृद्धवसिष्ठः—श्राद्धानि षोडशादत्वा नैव कुर्यात्सपिंडनम्। तद्धानौ तु कृते प्रेतः पितृत्वं नोपपद्यते। षोडशश्राद्धहानौ कृते सपिंडीकरणे इति शेषः। शाट्यायनिः—प्रेतश्राद्धानि सर्वाणि सपिंडीकरणं तथा। अपकृष्य प्रकुर्वीत कुर्यान्नांदीमुखं ततः। सपिंडीकरणात्पूर्वमपकर्षेण कृतानामपि मासिकानां स्वकालेषु पुनरप्यनुष्ठानमाह लौगाक्षिः—यस्य संवत्सरादर्वाक्सपिंडीकरणं भवेत्। मासिकं चोदकुंभं च देयं तस्यापि वत्सरम्। माधवे गोभिलः—यस्य संवत्सरादर्वाग्विहिता तु सपिंडना। विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश। पैठीनसिः—सपिंडीकरणादर्वाकुर्याच्छ्राद्धानि षोडश। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु। सपिंडीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः। प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्सदा पुनः। आवर्तनं चोर्ध्वभाविनामेव नाधोभाविनां। तदाह कार्ष्णाजिनिः—अर्वागब्दाद्यत्र यत्र सपिंडीकरणं कृतम्। तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः। इति। गालवः—अर्वाक्संवत्सराद्यस्य सपिंडीकरणं कृतम्। षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः। षोडशानां मध्ये यान्यपकृष्य कृतानि तेषां द्विरावृत्तिः पूर्ववचनैकवाक्यत्वात्। सपिंडीकरणादूर्ध्वं स्वस्वकाले पुनरनुष्ठेयानां मासिकानां वृद्धिप्राप्तौ पुनरप्यपकर्षमाह शाट्यायनिः—

सपिंडीकरणादर्वागपकृष्य कृतान्यपि[1]। पुनरप्यपकृष्यंते वृद्ध्युत्तर-निषेधनात्। इति। निषेधमाह कात्यायनः—निर्वर्त्य वृद्धितंत्रं च मासिकानि न तंत्रयेत्। अयातयामं मरणं न भवेत्पुनरस्य तत्। इति। वृद्ध्यनंतरं मासिकानुवर्तने नूतनं मरणं भवेदिति भावः। वृद्धिं विना पुनरपकर्षे दोषमाह शाठ्यायनिः—अंतरेणैव यो वृद्धिं प्रेतश्राद्धानि कर्षति। स श्राद्धी नरके घोरे पितृभिः सह मज्जति। इति। हेमाद्रावुशना—वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत्[2]। श्राद्धी स नरके घोरे पितृभिः सह पच्यते। असमर्थं प्रत्याह हेमाद्रौ गोभिलः—पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वृद्धिरापद्येत इति। अत्र वृद्धिरागामिनी चेत्स्यादित्यनेनैकवाक्यत्वार्थं यदहर्वृद्धिः संनिधीयेतेति व्याख्येयम्। अन्यथा वृद्धिश्राद्धस्य पूर्वाह्णकालत्वात् सपिंडीकरणस्यापराह्णकालत्वेनैकदिने असंभवात्तेन पूर्वदिने कर्तव्यमित्यर्थः। चतुर्विंशतिमते—सपिंडीकरणं कुर्याद्यजमानस्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ। द्वादशेहनि षष्ठे वा त्रिपक्षे वा त्रिमासके। एकादशेपि वा मासि मंगलं स्यादुपस्थितम्। इति। व्याघ्रः—आनंत्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्। अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते। इति निरग्निकसपिंडीकरणकालनिर्णयः।

**अथ साग्निकसपिंडीकरणकालः।** तत्र लघुहारीतः—अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिंडनम्। मृताहमारभ्य पक्षत्रये पूर्णे सपिंडीकरणं कुर्यादिति हेमाद्रिः। सुमंतुः—प्रेतश्चेदाहिताग्निः स्यात्कर्तानग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके। लघुहारीतः—यजमानोऽग्निमान्राजन्प्रेतश्चानग्निमान्भवेत्। द्वादशाहे भवेत्कार्यं सपिंडीकरणं सुतैः। कात्यायनः—एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि। प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिंडनम्। अस्याभिप्रायः—आहिताग्निना अमावास्यायां पिंडपितृयज्ञः पिंडान्वाहार्यकं श्राद्धं च कर्तव्यम्। तद्धि प्रमीतमातापितृकस्य सपत्नीकपितृदैवत्यं—एकत्वमागता भर्तुः पिंडे गोत्रे च सूतके। इत्यादिवचनात् पितृपिंडे मातुरप्यंशभागि-

---

१ 'कृतावपि'. २ 'यश्चरेत्'.

त्वात् । नचाकृतसपिंडीकरणयोस्तयोर्दर्शश्राद्धादौ दैवतात्वमुपपद्यते । तस्य सपिंडीकरणोत्तरकालिकत्वनियमात्तदाह हेमाद्रौ प्रजापतिः—नासपिंड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत् । न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् । इति । अतः पिंडपितृयज्ञदर्शश्राद्धयोर्लोपो माभूदिति एकादशाहे एकोद्दिष्टादिकृत्यानंतरं द्वादशाहे वा षोडशश्राद्धपूर्वकं सपिंडीकरणं कृत्वा दर्शे पिंडपितृयज्ञादिकं कुर्यादिति । पक्षांतरमाह हारीतः—या तु पूर्वममावास्या मृताहाद्दशमी भवेत् । सपिंडीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् । मृताहमवधीकृत्य दशमी मृताहमारभ्यैकादशीत्यर्थः । तस्यामेकोद्दिष्टं सपिंडीकरणं कृत्वा अनंतरं पितृयज्ञादिकं कुर्यात् । अतएव जाबालिः—सपिंडीकरणं कुर्यात्पूर्वे दर्शेऽग्निमान्सुतः । परतो दशरात्रस्य पूर्णेऽब्दे च तथा परः । मृताहमारभ्य यद्दशममहस्तस्मात्परतो यो दर्शस्तस्मिन्नित्यर्थः । दशरात्रग्रहणमाशौचोपलक्षणार्थं । अपरः निरग्निकः । तदेवं साग्निकस्य त्रयः सपिंडीकरणकालाः द्वादशाहः, द्वादशाहोर्ध्वभाविनी या अमावास्या तस्याः पूर्वं यत्किंचिदेकं अहः, दशाहात्परा अमावास्या चेति साग्निकोक्तेषु त्रिषु कालेषु प्रतिबंधकवशात्सपिंडीकरणं न कृतं तदा त्रिपक्षादिषूत्तरकालेषु कर्तव्यं । तदाह साग्निं प्रकृत्य गोभिलः—द्वादशाहादिकालेषु प्रमादादननुष्ठितं । सपिंडीकरणं कुर्यात्कालेषूत्तरभाविषु । इति । वत्सरांतेप्यननुष्ठाने साग्निनिरग्निसाधारण्येन गौणकालमाह माधवे ऋष्यशृंगः—सपिंडीकरणश्राद्धमुक्तकाले न चेत्कृतम् । रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् । इति । इदं सपिंडीकरणं वत्सरांते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान्देवपूर्वं भोजयेत् प्रेतपिंडं चार्घ्यपात्रोदकवत्पिंडत्रये निदध्यादिति विष्ण्वादिवचनैः तत्पित्रादिभिः सह विहितम् । तत्र पितामहे जीवति कथं कार्यमित्याकांक्षायां हेमाद्रिमाधवोदाहृतब्रह्मपुराणे उक्तम् । मृते पितरि यस्याथ विद्यते च पितामहः । तेन देयास्त्रयः पिंडाः प्रपितामहपूर्वकाः । तेभ्यश्च पैतृकः पिंडो नियोक्तव्यश्च पूर्ववत् । इति । एतेन प्रेतस्य प्रपितामहपिंडं त्रेधा विभज्य पिंडत्रयेण संयोजयेदिति केषांचिदुक्तिरुपेक्ष्या उदाहृतवचनविरोधात् । यदा पितामहप्रपिता-

महौ जीवतस्तदा प्रेतप्रपितामहपूर्वकास्त्रयः पिंडा देयाः । पिता-
महग्रहणस्योपलक्षणत्वात् । अत एव त्रयाणामपि पिंडानामे-
केनापि सपिंडने । पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ।
इति निर्णयामृते सुमंतुवचनं संगच्छते । प्रेतस्य पितृपिता-
महप्रपितामहसंबंधिनां त्रयाणां पिंडानां मध्ये अन्यतमेनैकेने-
त्यर्थः । अतएव यदा प्रेतस्य पितामहप्रपितामहौ जीवतस्तदा
प्रेतपित्रे पिंडं दत्त्वा तत्पितामहात्परयोर्द्वयोर्दद्यादिति हेमाद्रौ
स्मृतिवचनं च संगच्छते । अतएव व्युत्क्रमेण मृतानां सपिंडी-
करणं नास्तीति विज्ञानेश्वरादीनामुक्तिरुपेक्ष्या । उदाहृतवच-
नविरोधात् । यत्तु—व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिंडना ।
इति यदुदाहृतवचनं तत्—व्युत्क्रमेण मृतानां न सपिंडीकृति-
रिष्यते । यदि माता यदि पिता भर्ता नैष विधिः स्मृतः । इति
माधवनिर्णयामृतोदाहृतस्कंदपुराणवचनोपात्तमातापितृप-
तिभिन्नविषयमिति बोध्यम् । हेमाद्रौ ब्रह्मपुराणे—मातर्यथ
प्रमीतायां विद्यते च पितामही । प्रपितामहीतः सर्वाः कार्यस्तत्रा-
प्ययं विधिः । इति पितृसपिंडीकरणोत्तरं पितामहमरणे तस्य
पुत्रांतराभावे तत्सपिंडीकरणं पौत्रेण कार्यं । तदाह तत्रैव का-
त्यायनः—पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति । पौत्रेणै-
कादशाहादि कर्तव्यं श्राद्धषोडशम् । नैतत्पौत्रेण कर्तव्यं पुत्र-
वांश्चेत्पितामहः । इति । निर्णयामृतेप्येवम् । यत्तु—असंस्कृतौ
न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः । पितरं तत्र संस्कुर्यादिति
कात्यायनोऽब्रवीत् । इति छंदोगपरिशिष्टवचनं तत् विद्यमान-
पुत्रप्रपितामहपितामहविषयं । नैतत्पौत्रेण कर्तव्यमित्यनेनैकवा-
क्यत्वात् । यदपि पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा । पिता-
महेन पितरं संस्कुर्यादिति निश्चयः । इति कात्यायनवचनं,
अत्र पापिष्ठत्वं संस्काराभावेन प्रेतत्वरूपं नतु पातित्यं । पाप-
कर्मिणो न संसृजेत्स्त्रियश्चातिचारिणीरिति गौतमेन तस्य
निषेधात् । तत् एकस्मिन्पक्षे मासि वा पितामहप्रपितामहौ
मृतौ तत्पुत्राभ्यामेकोद्दिष्टं कृत्वा वत्सरांते सपिंडीकरणपक्षोव-
लंबितः । ततः पिता मृतः अशक्त्यादिना द्वादशाहे एव पितुः
सपिंडीकरणं कर्तुमिच्छति तदा असपिंडीकृतेनापि पितामहा-
दिना सह कुर्यादित्यर्थकं बोध्यम् । यदा तु आवश्यकवृद्ध्यादिना

हितौ तदा तत्सपिंडीकरणं कृत्वैव पितुः सापिंड्यं कृत्वा नांदीमुखं कुर्यात् । पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः । सपिंडः संततिर्वापि क्रियार्हो नृप जायते । इति विष्णुपुराणात् । प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् । आचतुर्थं ततः पुंसि पंचमे शुभदं भवेत् । इति मेधातिथिवचनादिति संपन्नो वचनानामविरोध इति चिंतनीयम् ।

नांदीश्राद्धानुपस्थितौ तु—श्राद्धानि षोडशादत्वा कुर्यान्न तु सपिंडनम् । प्रोषितावसिते पुत्रः कालादपि चिरादपि । इति वायुपुराणात् पुत्र एव कुर्यात् । प्रवासावसाने चिरादपि कालात्पुत्रः सपिंडनं कुर्यात्तच्च षोडशश्राद्धपूर्वकमेव । यदि च कनिष्ठभ्रात्रादिना षोडशश्राद्धानि कृतानि तदा सपिंडत्वमेव कुर्यादित्यपरार्कः । मातुरपि मातर्यग्रे प्रमीतायामित्युदाहृतब्राह्मवचनात् प्रपितामह्यादिभिः कार्यं । तस्यामपि जीवंत्यां त्रयाणामपि पिंडानामित्युदाहृतवचनात्पितुः प्रपितामह्यादिभिः कुर्यात् । अन्वारोहणे तु पत्यादिभिरेव सपिंडनं कार्यम् । तदाह हेमाद्रौ शातातपः—मृता यानुगता नाथं सा तेन सह पिंडताम् । अर्हति स्वर्गवासं च यावदाभूतसंप्लवम् । यमोपि—पत्या वैकेन कर्तव्यं सपिंडीकरणं स्त्रियाः । सा मृतापि हि तेनैक्यं गता मंत्राहुतिव्रतैः । पत्या वैकेन पतिवर्गेणैकेनेत्यर्थः । अथवा पत्नीपिंडं पतिपिंडे तूष्णीं संयोज्य पश्चात्तत्पिंडं पिंडत्रयेण विधिना संयोजयेत् । मृते पितरि मातुस्तु न कार्या सहपिंडता । पितुरेव सपिंडत्वे तस्या अपि कृतं भवेत् । इति हेमाद्रौ शातातपवचनमेतद्विषयमिति ज्ञेयम् । पुत्राभावे पतिरेव पत्न्याः सपिंडनं कुर्यात् । तदाह पैठीनसिः—अपुत्रायां मृतायां तु पतिः कुर्यात्सपिंडनम् । श्वश्र्वादिभिः सहैवास्याः सपिंडीकरणं भवेत् । यत्तु—पुत्रेणैव तु कर्तव्यं सपिंडीकरणं स्त्रियाः । पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये । इति । सपिंडीकरणं स्त्रीणां पुत्राभावे न विद्यते । इति लघुहारीतमार्कंडेयपुराणवचनानि तानि पतिभिन्नेन न कर्तव्यमित्येवंपराणि । उदाहृतवचनविरोधात् । इदं ब्राह्मादिविवाहोढाविषयं । आसुरादिविवाहविषये तु सुमंतुः—पिता पितामहे योज्यः पूर्णे संवत्सरे

सुतैः । माता मातामहे तद्वदित्याह भगवान् शिवः । शातातपः—तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिंडनम् । आसुरादिविवाहेषु विन्नानां योषितां भवेत् । इति तत्र मातामह्यादिभिः मातामह्यादिभिर्वा कुर्यात् । अपुत्रस्य तु पत्नी कुर्यात् । तदाह माधवे लौगाक्षिः—सर्वाभावे स्वयं पत्न्यः स्वभर्तृणाममंत्रकम् । सपिंडीकरणं कुर्युस्ततः पार्वणमेव च । इति । सुमंतुः—अपुत्रे प्रस्थिते कर्ता नास्ति चेच्छ्राद्धकर्मणि । तत्र पत्न्यपि कुर्वीत सापिंड्यं पार्वणं तथा । इति । यत्तु आपस्तंबवचनं—अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोपि वा । तेषां सपिंडनाभावादेकोद्दिष्टं न पार्वणम् । इति । एवमन्यान्यपि वचनानि पुत्रोत्पादनविधिप्रशंसार्थानीति माधवादयः । अतएव—सपिंडीकरणादूर्ध्वमेकोद्दिष्टं विधीयते । अपुत्राणां च सर्वेषामपत्नीनां तथैव च । इति हेमाद्रौ प्रचेतोवचनं संगच्छते । अपुत्राणामकृतविवाहानामिति हेमाद्रिः । एतानि षोडशश्राद्धानि अनेकेषु पुत्रेषु विभक्तेष्वपि ज्येष्ठ एक एव कुर्यात् । तदाहापरार्के प्रचेताः—एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिवत्क्रियाः । कुर्यान्नैकैकशः श्राद्धमाब्दिकं तु पृथक्पृथक् । इति । सपिंडने त्वाह हेमाद्रौ मरीचिः—सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् । इति । ज्येष्ठासंनिधौ तु तदनुजः कुर्यात् । अनुमतिं कृत्वेत्यनेन सर्वैरेव कृतं भवेदित्यनेन च सपिंडनाकरणजन्यप्रत्यवायाभावप्रतिपादनेन तस्याप्यधिकारबोधनात् । अतएव—यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु । तज्ज्यायसापि कर्तव्यं सपिंडीकरणं पुनः । इति । भ्राता वा भ्रातृपुत्रो वेत्युदाहृतवचनानि—काश्यादिषु गयायां तु प्रेतकार्यं कृतं च यत् । सपिंडैरसपिंडैर्वा कृतं तद्वै भवेत्सुतैः । इति श्राद्धकल्पलतायां ब्रह्मवैवर्तवचनं च संगच्छते । विभक्ताः सधनाः पुत्रा ऋद्धिकामाः पृथक्सपिंडनम् कुर्युरिति स्मृत्यर्थसारः । द्रव्यदानानुमत्यभावे कनिष्ठैरपि पृथक्कार्यमिति शूलपाणिः वाचस्पतिश्च । प्रेतशब्दं विहायेत्यनेन कनिष्ठकृतेनैव प्रेतत्वनिवृत्तिबोधनाच्च । कृतं कनीयसा वापि यस्य श्राद्धं सपिंडनम् । ज्येष्ठोऽपि हि सुतः कुर्यात्सपिंडीकरणं पुनः । पुनः सपिंडीकरणश्राद्धं पार्वणवद्भवेत् । अर्घ्यसंयोजनं नैव

पिंडसंयोजनं न च। इति श्राद्धकल्पलतायां संवर्तवचनं—मातापित्रोर्मृतेः काले ज्येष्ठे देशांतरे स्थिते । कनिष्ठेन प्रकर्तव्यं सपिंडीकरणं तदा । इति निर्णयसिंधूदाहृतसंवर्तवचनं च संगच्छते, उदाहृतवचनसूचितार्थकत्वात् । अतएवेदं निर्मूलमिति निर्णयसिंधुरुपेक्ष्यः । एतेन ज्येष्ठपुत्रे देशांतरस्थेऽपि सति कनिष्ठस्य सपिंडीकरणेऽधिकारो नास्तीति केषांचिदर्वाचीनानामुक्तिरुपेक्ष्या । उदाहृतवचनविरोधात् । द्वादशाहः प्रशस्यते इत्यत्र द्वादशाहग्रहणं आशौचांतोपलक्षणं । अतएव कात्यायनः—सर्वेषामेव वर्णानामाशौचांते सपिंडनम् । इति । द्वादशेहनि विप्राणामाशौचांते तु भूभृताम् । वैश्यानां च त्रिपक्षादावथवा स्यात्सापिंडनम्। इति निर्णयामृते वृद्धमनुश्च । शूद्राणां द्वादशाहे एव सपिंडीकरणम् । तदाह हेमाद्र्यादौ विष्णुः—मंत्रवर्ज्यं हि शूद्राणां द्वादशेहनि कीर्तितम् । इति वचनबलादाशौचमध्ये एव कार्यमिति हेमाद्र्यादयः। सर्वेषामेव वर्णानामितिवचनं त्रैवर्णिकविषयमेवेति बोध्यम् ।

संन्यासिनां सपिंडीकरणं नास्ति । तदाहोशना—एकोद्दिष्टं च कुर्वीत यतीनां चैव सर्वदा । अहन्येकादशे प्राप्ते पार्वणं तु विधीयते । इति । शातातपः—एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियाम् । न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे । इति । यत्तु—प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् । न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः । इति माधवे देवलीयं तद्वत्सरांतसपिंडीकरणविषयम्। या तु पूर्वममावास्येत्युदाहृतवचनैः साग्नेः कर्तुर्दशाहानंतरामावास्यायां पितृयज्ञदर्शश्राद्धविधानात् । प्रेतश्राद्धानि सर्वाणि सपिंडीकरणं तथा । अपकृष्यापि कुर्वीत कर्तुं नांदीमुखं ततः । इत्यादिभिर्निरग्नेरप्यावश्यकनांदीश्राद्धविधानात्। अर्वाक्संवत्सराद्यस्य सपिंडीकरणं भवेत्। प्रेतत्वं तस्य विज्ञेयं यावत्पूर्णो न वत्सरः । इत्यादीनि तानि । वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् । स श्राद्धी नरके घोरे पितृभिः सह मज्जति । इति । तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते । इत्याद्येकवाक्यतया वृद्धिं विनापकर्षविषयाणि काम्यकर्मविषयाणि चेति । अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् । प्रथमेब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः । इत्यादिवचनं वृद्धि-

विनापकर्षविधयोगात । भक्तिमानित्यत्र भक्त्याख्य श्राद्धं कृत्वेति केषांचिदुक्तिर्श्चित्या प्रमाणाभावादिति सिद्धः सर्वेषामविरोध इति चिंतनीयम् । इति सपिंडीकरणकालः ।

अतीतस्वकालस्य प्रेतकर्मणः कालांतरेऽनुष्ठाने विशेषमाह गार्ग्यः—प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् । आशौचमध्ये क्रियते पुनःसंस्कारकर्म चेत् । शोधनीयं दिनं तत्र यथासंभवमेव तु । आशौचविनिवृत्तौ तु पुनः संस्क्रियते मृतः । संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि । प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् । कृष्णपक्षस्तु तत्रापि वर्जयेच्च दिनक्षयम् । इति । नंदायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । तत्र श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् । इति च । प्रेतश्राद्धं प्रकृत्य भारते—नक्षत्रे च न कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रौष्ठपदयोः कुर्यात्तथाग्नेये च भारत । दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत् । जन्मनक्षत्रं कर्तुः । प्रौष्ठपदयोः पूर्वाभाद्रपदाद्वये । आग्नेयं कृत्तिका । दारुणानि आर्द्राश्लेषाज्येष्ठामूलानि प्रत्यरं जन्मनक्षत्रात्पंचमं चतुर्दशं त्रयोविंशं च इति हेमाद्रिः । तत्रैव ज्योतिःपराशरः—साधारणे ध्रुवोग्रे मैत्रेये च न शस्यते मनुष्याणाम् । प्रेतक्रिया कथंचित्त्रिपुष्करे यमधिष्ण्ये च । साधरणे कृत्तिकाविशाखे । ध्रुवाण्युत्तरात्रयं रोहिणी च । उग्राणि पूर्वात्रयं भरणी मघा च । मैत्राणि मृगचित्रानुराधारेवत्यः । त्रिपादृक्षं भद्रातिथिः भौमभृगुशनिवाराः एतेषां मध्ये त्रयाणां योगः त्रिपुष्करः । यमधिष्ण्यं धनिष्ठा । वाराहे—चतुर्थाष्टमगे चंद्रे द्वादशे च विवर्जयेत् । प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा । करणे विष्टिसंज्ञे च शनैश्चरदिने तथा । त्रयोदश्यां विशेषेण जन्मतारात्रये तथा । जन्मदशमैकोनविंशानि जन्मतारात्रयम् । कश्यपः—भरण्यार्द्रा मघाश्लेषा मूलं त्रिचरणानि च । प्रेतकृत्येतिदुष्टानि धनिष्ठाद्यं च पंचकम् । फल्गुनीद्वितयं रोहिण्यनुराधापुनर्वसू । द्वे अषाढे विशाखा च तानि द्विचरणानि च । एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत् । स्वकालेऽनुष्ठाने नायं निषेधः । तदाह हेमाद्रौ गोभिलः—नंदायां शुक्रवारे

चा त्रयोदश्यां त्रिजन्मसु । एकादशाहप्रभृति नैकोद्दिष्टं निषिध्यते । तत्रैव बैजवापः–प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि । नक्षत्रतिथिवारादि शोधनीयं न किंचन । युगमन्वादिसंक्रांतिदर्शे प्रेतक्रिया यदि । दैवादापतिता तत्र नक्षत्रादेर्न शोधनम् । इति । प्रेतक्रियायामुपस्थितायां दैवाद्यदि युगादिप्रभृत्युपस्थितिस्तदा नक्षत्रादिशोधनं नास्ति । नतु शुद्धकालेऽनुष्ठानसंभवेपि तत्र निषेधाभाव इति दैवादापतितेत्यनेन प्रतिपाद्यत इति ज्ञेयम् । इति प्रेतक्रियाया निषिद्धकालः ।

अथ युगादयः । तत्र हेमाद्रौ स्कांदे–नवम्यां शुक्लपक्षस्य कार्तिके निरगात्कृतम् । राधे सिततृतीयायां त्रेता वै समपद्यत । दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् । कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः । युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः । मात्स्ये–वैशाखस्य तृतीयायां नवमी कार्तिकस्य तु । पंचदश्यपि माघस्य नभस्ये च त्रयोदशी । युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः । तत्रैव नागरखंडे–नवमी कार्तिके शुक्ला तृतीया माधवे सिता । अमावास्या तपस्ये च नभस्ये च त्रयोदशी । त्रेताकृतकलीनां तु द्वापरस्यादयः क्रमात् । शुक्लादिमासाभिप्रायेण माघस्येत्युक्तम् । कृष्णादिमासाभिप्रायेण तपस्य इत्युच्यत इति माघ्युत्तरा एकैवामावास्येति ज्ञेयम् । ब्रह्मपुराणे–वैशाखे शुक्लपक्षस्य तृतीयायां कृतं युगम् । कार्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि । अथ भाद्रपदे कृष्णत्रयोदश्यां तु द्वापरम् । माघस्य पौर्णमास्यां च घोरं कलियुगं तथा । युगारंभास्तु तिथयो युगाद्यास्तेन विश्रुताः । भविष्यत्पुराणे–वैशाखस्य तृतीया या समा कृतयुगेन तु । नवमी कार्तिके या तु त्रेतायुगसमा स्मृता । भाद्रे त्रयोदशी कृष्णा द्वापरेण समा तु सा । माघे पंचदशी राजन्कलिकालसमा तु सा । एताश्चतस्रो राजेंद्र युगानां प्रभवाः शुभाः । युगादयस्तु कथ्यंते तेनैताः पूर्वसूरिभिः । उपवासस्तपो दानं श्राद्धं होमो जपस्तथा । यदासु क्रियते किंचित्सर्वं कोटिगुणं भवेत् । समा कृतयुगेनेत्यनेन सकले कृतयुगे प्रत्यहं क्रियमाणेन कर्मणा यावत्पुण्यं भवति तावदस्यामेकस्यामेव तिथौ भवतीति प्रतिपाद्यते । अत्र स्कांदे–कार्तिकनवमी युगादिः, वैशाखतृतीया त्रेतायुगादिरित्याद्युक्तम् । नाग-

रखंडादौ तु नवमी त्रेतादिः, तृतीया कृतयुगादिरित्याद्युक्तमिति विरोधः प्रतीयते । सच कस्मिंश्चित्कल्पे नवम्यां कृतयुगप्रवृत्तिः कस्मिंश्चित्कल्पे तृतीयायां कृतयुगप्रवृत्तिरित्यभिप्रायेण न दोषः । एवं कस्मिंश्चित्कल्पे माघ्यां कलियुगप्रवृत्तिः कस्मिंश्चित्तदुत्तरामावास्यायामिति न तत्रापि विरोधः । न चैवमुभयोर्युगादित्वेन युगादीनां पंचत्वापत्तौ—दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । इति तच्चतुष्ट्वबोधकवचनविरोध इति वाच्यम् । माघपंचदशीत्वेन परिगणनात् पंचत्वापत्त्यभावात् । नचैवमपि उभयत्रापि श्राद्धापत्तिः इष्टापत्तेः अशक्तौ अन्यतरस्यां कृतेनापि प्रत्यवायपरिहार इति न काप्यनुपपत्तिः । इदं युगादिनिमित्तं श्राद्धं मलमासपाते मासद्वयेऽपि कर्तव्यमिति मलमासप्रकरणे प्रतिपादितं । इति युगादयः ।

**अथ युगांताः**—तत्र **हेमाद्रौ ब्रह्मपुराणे**—सूर्यस्य सिंहसंक्रांत्यामंतः कृतयुगस्य तु । अथ वृश्चिकसंक्रांत्यामंतस्त्रेतायुगस्य तु । ज्ञेयस्तु वृषसंक्रांत्यां द्वापरांतस्तु संज्ञया । तथा तु कुंभसंक्रांत्यामंतः कलियुगस्य तु । युगादिषु युगांतेषु श्राद्धमक्षय्यमुच्यते । इति । **मनुः**—सहस्रगुणितं दानं भवेद्दत्तं युगादिषु । कर्म श्राद्धादिकं चैव तथा मन्वंतरादिषु । इति युगांताः ।

**अथ मन्वादयः । हेमाद्रौ मात्स्ये**—अश्वयुक् शुक्लनवमी द्वादशी कार्तिकस्य तु । चैत्रस्य तु तृतीया या तथा भाद्रपदस्य च । फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता । श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा । आषाढशुक्लदशमी माघशुक्लस्य सप्तमी । कार्तिकी फाल्गुनी चैत्री ज्येष्ठी पंचदशी तथा । मन्वंतरादयस्त्वेता दत्तस्याक्षय्यकारकाः । अत्रामावास्याष्टमीव्यतिरिक्ताः शुक्ला एव कार्तिकादयो दर्शांताः इति मन्वंतरादयः[1] ।

**अथ कल्पादयः । हेमाद्रौ नागरखंडे**—अथ कल्पादयो राजन्कथ्यंते तिथयः शुभाः । यासु श्राद्धे कृते तृप्तिः पितॄणामक्षया भवेत् । चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराभवत् । तस्य शुक्लत्रयोदश्यामुदानः समजायत । कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत् । अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्य-

---

१ षण्णवतिश्राद्धपरिगणनं—अमा १२ मनु १४ युग ४ क्रांति १२ धृति १२ पात १२ महालयाः १५ । अन्वष्टक्यं ५ च पूर्वेद्युः ५ षण्णवत्य ९६ ष्टका ५ स्तथा ।

तु शुक्लायां प्रवृत्तो गारुडाभिधः । समानस्तु तृतीयायां कृष्णायामुदपद्यत । माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत् । ज्येष्ठशुक्लतृतीयायां वामदेवस्य संभवः । पौर्णमास्यां तु तस्यैव कूर्मः प्रववृते नृप । कृष्णपक्षतृतीयायामाग्नेयः समगच्छत । पंचदश्यां तु कृष्णायां पितृकल्पः समागमत् । शुक्लां चतुर्थीमाषाढे प्राप्य नारायणोऽभवत् । चतुर्थ्यां तस्य कृष्णायां सोमकल्पः समापतत् । श्रावणे शुक्लपंचम्यां गौरवः समवर्तत । तस्यैव कृष्णपंचम्यां मानवः प्रत्यपद्यत । षष्ठीं प्रौष्ठपदे शुक्लां प्राप्य प्राणाभिधोऽभवत् । सितेतरायां षष्ठ्यां तु तस्य तत्पुरुषाह्वयः । बृहत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य च । कृष्णायामपि वैकुंठः प्रविवेश विशांपते । कार्तिकस्य सिताष्टम्यां कल्पः कंदर्पसंज्ञकः । असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना । मार्गशुक्लनवम्यां तु कल्पः सद्योऽभ्यपद्यत । असितायां च सावित्रीकल्पः प्रारंभमभ्यगात् । पौषे दशम्यां शुक्लायामीशानः प्रादुरास ह । असितायामघोरस्य कल्पस्योपक्रमोऽभवत् । एकादश्यां तु शुक्लायां माघे व्यानः प्रजज्ञिवान् । तस्यामेव तमिस्रायां वाराहः प्राप भूपते । सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य च । कृष्णायामपि वैराजो विरराज महामनाः । इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः । आरंभतिथयस्तासु शुक्लाः पुण्यतमा मताः । आसु श्राद्धे कृते पुण्यमाकल्पस्यापि कल्पते । इति । इति कल्पादयः ।

**अथ काम्यास्तिथयः** । तत्र **मनुः**—कुर्वन्प्रतिपदि श्राद्धं सुरूपांल्लभते सुतान् । कन्यकां तु द्वितीयायां तृतीयायां तु बंदिनः । बंदिनः स्तावकाः । पशून् क्षुद्रांश्चतुर्थ्यां तु पंचम्यां शोभनान्सुतान् । षष्ठ्यां द्यूतं कृषिं चैव सप्तम्यां लभते नरः । अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा । स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु । एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् । द्वादश्यां जातरूपं तु रजतं कुप्यमेव च । जातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः । प्रीयंते पितरश्चात्र ये शस्त्रेण हता रणे । श्राद्धदः पंचदश्यां तु सर्वान्कामानवाप्नुयात् । इति । **मार्कंडेयः**—कन्यागते सवितरि दिनानि दश पंच च । पार्वणेनैव विधिना

श्राद्धं तत्र विधीयते । प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा । वरार्थिनां तृतीया च चतुर्थी शत्रुनाशिनी । श्रियं प्राप्नोति पंचम्यां षष्ठ्यां पूज्यो भवेन्नरः । गणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम् । स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् । वेदांस्तथाप्नुयात्सर्वानेकादश्यां क्रियापरः । द्वादश्यां हेमलाभं च प्राप्नोति पितृपूजकः । प्रजां मेधां पशुं पुष्टिं स्वातंत्र्यं वृद्धिमुत्तमाम् । दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् । अवाप्नोति न संदेहः श्राद्धं श्रद्धापरो नरः । युवानः पितरो यस्य मृताः शस्त्रेण वै हताः । तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता । श्राद्धं कुर्वन्नमावास्यामन्नेन पुरुषः शुचिः । सर्वान्कामानवाप्नोति स्वर्गवासं समश्नुते । इति ।

नक्षत्रफलान्याह याज्ञवल्क्यः—स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षत्रं बलं तथा । पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभं । प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि । अरोगित्वं यशो वीतशोकतां परमां गतिम् । धनं वेदान् भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् । अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति । कृत्तिकादिभरण्यंतं स कामान्प्राप्नुयादिमान् । आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः । इति । मार्कंडेयोपि—कृत्तिकासु पितृनर्चन्स्वर्गमाप्नोति मानवः । अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां लभेत् । आर्द्रायां शौर्यमाप्नोति क्षेत्रादि च पुनर्वसौ । पुष्टिं पुष्ये पितृनर्चन्नाश्लेषासु वरान्सुतान् । मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फाल्गुनीषु च । प्रदानशीलो भवति सापत्यश्चोत्तरासु च । प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः । रूपवंति च चित्रासु तथाऽपत्यान्यवाप्नुयात् । वाणिज्यलाभदा स्वाती विशाखाः पुत्रकामदाः । कुर्वतां चानुराधाश्च दद्युश्चक्रप्रवर्तनम् । ज्येष्ठास्वर्थाधिपत्यं तु मूले त्वारोग्यमुत्तमम् । अषाढासु यशःप्राप्तिरुत्तरासु विशोकता । श्रवणे च शुभांल्लोकान्धनिष्ठासु धनं महत् । वेदवेत्ताभिजिति तु भिषक्सिद्धिं च वारुणे । अजाविकं प्रोष्ठपदे विंदेद्भार्यां तथोत्तरे । रेवतीषु तथा रौप्यमश्विनीषु तुरंगमान् । श्राद्धं कुर्वंस्तथाप्नोति भरणीष्वायुरुत्तमम् । तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित् । इति काम्यानि नक्षत्राणि ।

अथ वाराः । तत्र हेमाद्रौ विष्णुः—सततमादित्येहनि श्राद्धं कुर्वन्नारोग्यमाप्नोति सौभाग्यं चांद्रे समरविजयं कौजे सर्वान्कामान् बुधे विद्यामभीष्टां जीवे धनं भवति वै शुक्रे जीवितं च शनैश्चरे । इति । कूर्मपुराणे—आदित्यवारे त्वारोग्यं चंद्रे सौभाग्यमेव च । कुजे सर्वत्र विजयं सर्वान्कामान्बुधस्य तु । विद्यां विशिष्टां च गुरौ धनं वै भार्गवे पुनः । शनैश्चरे भवेतामायुरारोग्ये सुदुर्लभे । इति वाराः ।

हेमाद्रौ स्कांदे—अमायां यदि सोमः स्यात्सप्तम्यां वै दिवाकरः । चतुर्दश्यां चतुर्थ्यां वा वारः स्यान्मंगलस्य तु । तदा श्राद्धं प्रकर्तव्यं पितॄणां तृप्तिमिच्छता । षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च । नंदंति पितरः स्वर्गे विमानवरमास्थिताः । तावंतमेव कालं हि श्राद्धकर्तुस्तथा फलं । इति । मघासु दत्त्वा विधिना चतुरो लभते वरान् । धनमन्नं सुतानायुर्ददाति पितरोऽर्चिताः । शातातपः—विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं सदैव हि । मघासु च ततोऽन्यत्र नाधिकारः पृथक्विना । पृथक्त्वं विना विभागं विनेत्यर्थः । इति काम्यश्राद्धकालः ।

अथामश्राद्धकालः । तत्र—आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः । पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् । इति हेमाद्रौ शातातपहारीताभ्यां आमश्राद्धे पूर्वाह्णो विहितः । तत्रापि—प्रातःकाले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः । नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः । इति माधवीये शिवराघवसंवादवचनेन प्रातःकालस्य निषेधात्—कालात्प्रातस्तनादूर्ध्वं त्रिमुहूर्ता तु या तिथिः । आमश्राद्धं तत्र कुर्याद्द्विमुहूर्तापि या भवेत् । इति मदनरत्ने व्याघ्रपाद्वचनाच्च तदूर्ध्वभाविसंगवकलो ग्राह्यः । तच्चामश्राद्धं—श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् । अमावास्यादिनियतं माससंवत्सरादृते । यावत्स्याच्चाग्निसंयुक्त उत्सन्नाग्निरथापि वा । आमश्राद्धं तदा कुर्याद्धस्तेऽग्नौकरणं भवेत् । आपद्यनग्नौ तीर्थे च चंद्रसूर्यग्रहे तथा । आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि । स्त्री शूद्रः स्वपचश्चैव जातकर्मणि चाप्यथ । आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु । स्वयं पचतीति स्वपचः । अपत्नीक इत्यर्थः । इति हेमाद्रौ हारीतजमदग्न्युशनोवचनैः । पाकाभावेऽधिकारः स्याद्द्वि-

भ्रादीनां नराधिप । अपत्नीनां महाबाहो विदेशगमनादिभिः । सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः । इति तत्रैव सुमंतुवचनेन--अपत्नीकः प्रवासी च यस्य भार्या रजस्वला । सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते । इति माधवीये औशानसेन–आर्तवेन द्विजाभावे ग्रहणे देशविप्लवे । आमश्राद्धं द्विजः कुर्याच्छूद्रः कुर्यात्सदैव हि । इति मदनरत्ने वैयाघ्रपादवचनेन--अनग्निश्च प्रवासी च यस्य भार्या रजस्वला । आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृतेऽहनि । इति कालादर्शे मरीचिवचनेन च द्विजातीनां नैमित्तिकत्वेन शूद्रस्य च नित्यत्वेन विहितम् । तत्र किं पाकाभाव एव साक्षान्निमित्तं अन्यानि सर्वाणि तदुपपादकानि उत सर्वाणि साक्षादेव निमित्तानीति चिंतनीयम् । तत्र तावदनेकेषां निमित्तत्वकल्पने प्रमाणाभावात्पाकाभाव एव साक्षान्निमित्तम् । अन्यानि तदुपपादकान्येवेति युक्तं प्रतिभाति । अतएव पाकाभावे एव द्विजातीनाभामश्राद्धम् । पाकसंभवे तु अन्नेनैवेति युक्तमिति निर्णयसिंधुरन्येऽपि नवीनग्रंथाश्च संगच्छंत इति चेन्न । पत्न्यभावविदेशगमनादीनां पाकाभावसंपादकत्वेऽपि गृह्याग्न्यभावतदुत्पादयोस्तदुपपादकत्वाभावेन तदुपादानवैयर्थ्यापत्तेः । अस्तु तर्हि अनन्यगत्या तयोरपि साक्षान्निमित्तत्वमन्येषां तु तथा कल्पने प्रमाणाभावः । अतएव कालतत्वविवेचने अग्न्यभावस्यैव पाकाभावसंपादकत्वाभावेन स्वातंत्र्येणैव निमित्तत्वमन्येषां तु पाकाभावसंपादकत्वेनैवेति सिद्धांतितमिति चेन्न ।--यस्य भार्या रजस्वला । सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते । इत्यादिवचनवैयर्थ्यापत्तेः । अतएव पाणिग्रहणाद्धि सहत्वं कर्मस्विति वचनाद्गृहमेधिनः श्राद्धेऽपि पत्न्या सहैवाधिकारात्पत्नीगतरजोदर्शनमपि स्वातंत्र्येण निमित्तमिति हेमाद्रिणा सिद्धांतितम् । यत्तु पाणिग्रहणाद्धीति वचनं तु न्यायप्राप्तसहत्वानुवादस्तेन पुत्रकामश्राद्धादौ भवतु पत्न्या अप्यधिकारः नतु सर्वत्राग्निसाध्येपि । नच नित्यनैमित्तिकश्राद्धेषु पत्न्याः फलभागित्वं संभवतीति फलभागित्वरूपोऽधिकारः पत्न्या नास्त्येव । पत्न्याज्यमवेक्षते इत्यादौ पत्नीशब्दो भार्यापरस्तेन यज्ञस्वामियजमानभार्याकर्तृकत्वेनावगतानामाज्यावेक्षणादीनां यजमानभार्याकर्तृकत्वमात्रं

तत्र संभवतस्त्यागायोगात् गृह्यते इत्यादिना कालतत्त्वविवेचने हेमाद्रिसिद्धांते दूषणोद्भावनं तदयुक्तम् । तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः । इति मनुवचनविरोधापत्तेः । अपिच पत्न्याः फलभागित्वरूपाधिकाराभावे—अथैतां पत्नीं योक्त्रेण संनह्यति, एनां गार्हपत्ये समिधमाधापयति, एनामाज्यमवेक्षयति, इत्यादिबौधायनसूत्रे फलिसंस्कारविधानवैयर्थ्यापत्तेः । अतएव तत्सूत्रभाष्ये माधवेनावेक्षणस्याज्यसंस्कारत्वे—अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्येऽधिश्रयति मेध्यत्वायेति वचनविरोधात्पत्नीसंस्कार एव अवेक्षणम् । अतः पत्न्यनेकत्वे एकैकाऽऽज्यमवेक्षयेत् इत्यादि शालाक्युपमन्यवौपमन्यवीपुत्रवचनैः सर्वाभिरेव कर्तव्यमिति सिद्धांतितम् । अतएव क्रयस्य धर्ममात्रत्वमिति षष्ठसूत्रभाष्ये परिणेयस्येदं पारिणेयं तदेव परिणेय्यं परिणेतुः स्वं तस्येष्टे स्वामिनी भवतीत्येतदर्थकपत्नीपारिणेय्यस्येष्टे इति श्रुतिः, भसदा वा एताः परग्रहाणामैश्वर्यमवरुंधते इति च स्ववतोस्तु वचनादैककर्म्यं स्यादित्युत्तरसूत्रे स्ववंतौ उभावपि दंपती यस्त्वया कश्चिद्धर्मः कर्तव्यः सोऽनया सहेति मीमांसाभाष्यं, उद्वाहकाले एवानयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितं धर्मे चार्थे च कामे च नातिचरितव्येत्यनेनातो यस्त्यागः स इतरेतरसंसृष्टयोरेव दंपत्योः, नहि साधारणमेकेन त्यक्तुं शक्यते । पत्न्याज्यमवेक्षते यजमानश्चेति विहितावेक्षणद्वयस्य स्वामिद्वयकर्तृकस्य प्रयोगवचनेन समुच्चितस्य ग्रहणात्स्वामिभ्यां समुच्चिताभ्यां अवेक्षितस्याज्यस्य कर्मांगत्वात् । तथा मेखलया यजमानं दीक्षयति, योक्त्रेण पत्नीमित्यादिवचनाच्च । तस्मादितिकर्तव्यतालोचनया द्रव्यसाधारण्यान्न भर्त्रा सह विभजेदिति विभागप्रतिषेधात्, धर्मे चार्थे च कामे च नातिचरितव्येति वचनाच्च संसर्गाभिप्रायमेकवचनमिति नास्ति भिन्नयोः कर्तृतेति तंत्ररत्नसिद्धांतः । यथैव ह्यसौ तत्कृतान्स्नानोद्वर्तनपरिषेकान् लभते यथैव ह्यसावकुर्वती किंचित्पापं तत्कृतान्वधबंधनपरिक्लेशान् लभते, एवं प्रष्ठशब्दमपीति महाभाष्यं च न विरुध्यते । नचावेक्षणस्याज्यसंस्कारत्वे पत्नीसंस्कारत्वं माधवोक्तं विरुध्येतेति वाच्यम् । गयाश्राद्धादिवदेकस्योभयसंस्कारकत्वे बाधकाभावात् । अतएव

संकल्पे च कर्तृनिर्णयस्त्रिकांडमंडनेन कृतः । त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः । उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् । तयोर्दंपत्योर्मध्येऽन्यतरः कुर्यादित्यर्थ इति अन्न-समर्पणप्रकरणे हेमाद्रिः संगच्छते । यत्तु मिताक्षरादौ व्रतेष्टापूर्तादावन्यतरस्याप्यधिकार इत्युक्तं तदन्यतरस्य साम-र्थ्याभावे तदनुमत्यान्यतरेणापि कार्यमिति न विरुध्यते । अनु-मतिं विनाप्यधिकारे—नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपो-षणं इत्यादिस्मृतिवाक्यानां वैयर्थ्यापत्तेः। अतएव पाणिग्रहणाद्धि सहत्वं कर्मस्विति सहग्रहणं न बलीवर्दवत्समानाधिकार इति दर्शनार्थं । ततश्च भर्त्रासौ वक्तव्या—अहं दानादि वर्तयामि त्वमपि संकल्पं कुर्विति—तयापि तथैव कार्यमन्यथा दोष इति सहाधिकारस्ततश्चैकफलभोक्तृत्वं फलांतरोद्भूतिप्रतिबंधश्चेति दारकर्मणि मैथुन इति मनुवचने अपरार्कः संगच्छते। तस्मा-द्भार्यया सहैवाधिकार इति हेमाद्रिसिद्धांतस्यातिरमणीयत्वात्, आर्तवस्याप्यामश्राद्धनिमित्तत्वं युक्तमेवेति सिद्धम्। अतएव श्रा-द्धविघ्न इति वचनं भार्यारजोदर्शनविघ्नविषयमिति माधवसि-द्धांतः। रजस्वलांगनोऽनग्निर्विदेशस्थोऽपि वाब्दिके । दर्शादा-विव नामेन त्वन्नेन श्राद्धमाचरेत्। इति कालादर्शश्च संग-च्छते । तस्माद्भार्यारजोदर्शनमामश्राद्धस्याऽनिमित्तमेवेति कालतत्वाद्यर्वाचीनग्रंथास्तु पत्नी पारिणेय्यस्येष्टे इत्यादिश्रुति-मन्वादिवचनमीमांसाभाष्यतंत्ररत्नापरार्कहेमाद्रिमा-धवाद्यर्थाज्ञाननिबंधनत्वादुपेक्ष्या एवेति दिक् ।

अपरमिदं चिंतनीयम् । किमयं फलचमसवत्साधनविधिरुत प्रथमभक्षवत्कर्मांतरमिति। अत्रापि साधनविधित्वमेव तावद्युक्तं विशिष्टकर्मांतरकल्पने गौरवात् । अतएवामश्राद्धं तु पूर्वाह्णे इति प्रकरणे तदा ह्ययं न्यायः प्रकृते स्याद्यदि अन्नश्राद्धाद्भिन्नं आमश्राद्धं नाम कर्म स्यादिति हेमाद्रिदूषणे कालतत्ववि-वेचनं संगच्छत इति चेन्न। तत्र यदि राजन्यं वैश्यं वा या-जयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभनीराहृत्य ताः सं-पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति वचनेन या-गोद्देशेनैव सोमस्थान एव तद्विधानाद्युक्तं साधनविधित्वम् । प्र-कृते आमश्राद्धमित्येकस्मिन्पदे उद्देश्यविधेयभावेनान्वयस्य वक्तु-

मशक्यत्वेन तथात्वासंभवात् । अतोऽनन्यगत्या प्रथमभंक्षवत् विशिष्टकर्मांतरविधित्वमेव स्वीकर्तव्यम् । न चैकपदे उद्देश्यविधेयभावबोधस्वीकारे बाधकाभावः एकप्रसरताभंगस्य दूषकत्वबीजानिरुक्तेरिति वाच्यम् । सामर्थ्यभंगस्यैव तद्बीजत्वात् । सर्वत्रोद्देश्यविधेयभावस्थले उद्देश्ये विधेयान्वयात्पूर्वमेवोद्देश्यस्य तत्त्वेन क्रियान्वयोऽवश्यं वक्तव्यः । यथा यागेन स्वर्गं भावयेदित्यादौ यागपदाद्यागोपस्थितौ स्वर्गपदात्स्वर्गोपस्थितौ स्वर्गस्योद्देश्यत्वेन यागस्य विधेयत्वेन क्रियान्वये प्रथममवगते पश्चादेव विधेयस्य यागस्योद्देश्ये स्वर्गेऽन्वयः, तद्वच्च प्रथमभक्षपदेऽपि वक्तव्यस्तत्र प्राथम्येनैकार्थीभावापन्नस्य भक्षस्य निष्कृष्य क्रियान्वयासंभवस्यैव बाधकत्वात् । यत्तु **कालतत्त्वविवेचने** पक्वान्नासंभवे आममित्याद्युक्तं तदुक्तार्थाभिप्रायक**हेमाद्रि**ग्रंथार्थानवबोधप्रयुक्तत्वादयुक्तमिति ज्ञेयम् । अतएव पत्न्यभावे तद्रजोदोषे ग्रहणतीर्थसंक्रमादिषु पत्न्यग्नी सन्निधानेपि पाकसंभवेऽपि आमश्राद्धमेव मुख्यमिति **कालतत्त्वविवेचनो**पन्यस्त**स्मृतिरत्नावली** संगच्छते । भुक्तवत्सु च विप्रेषु दत्त्वा पिंडान्यथाक्रमम् । इति तीर्थश्राद्धे **हेमाद्रौ** पाद्मवचनात्तीर्थे अन्नश्राद्धासंभव एवामश्राद्धमिति विभावनीयम् । तत्सिद्धं आमश्राद्धं कर्मांतरमेवेति । तस्यापि नैमित्तिकत्वनित्यत्वभेदेन द्वैविध्यादामश्राद्धं तु पूर्वाह्ण इति पूर्वाह्णविधेरामश्राद्धत्वावच्छिन्नविषयत्वे—मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः । आममात्रेण तत्रैव पितॄणां दत्तमक्षयम् । इति **हेमाद्रिनिर्णयामृतमदनरत्नेषु शातातप**वचनस्य निर्विषयत्वापत्तेः । नचामश्राद्धं त्विति द्विजकर्तृकनैमित्तिकामश्राद्धविषयम् । मध्याह्नादिति तु शूद्रकर्तृकनित्यामश्राद्धविषयमिति व्यवस्था युक्ता वैपरीत्यस्यापि सुवचत्वात् । अतएव पूर्वाह्णविधिस्तु शूद्रामश्राद्धविषय एवेति **कालतत्त्वविवेचन**सिद्धांतः संगच्छते । नचामश्राद्धमित्यस्य **शातातपहारीत**प्रणीतत्वेन प्राबल्यं, मध्याह्नादित्यस्य **शातातप**मात्रप्रणीतत्वेन दुर्बलत्वम् । अतएव **हेमाद्रि**मात्रोपज्ञमिदं यदि साकरं तर्हि सर्वत्रामश्राद्धे पूर्वाह्णविकल्पितं कुतपोत्तरार्धादिकालं विधत्तामिति **कालतत्त्वविवेचनं** संगच्छत इति वाच्यम् । **शातातप**मात्रप्रणीतानां वचनांतराणामप्यप्रामाण्यापत्तेः । न चैतस्याना-

करत्वेन शातातपीयत्वसंदेहादप्रामाण्यं वचनांतराणां त-त्वेन निश्चयात्प्रामाण्यमिति युक्तम्। हेमाद्रिनिर्णयामृतमद-नरत्नलिखितस्यानाकरत्वे सर्वत्रैव तथात्वापत्त्या सर्वोपप्लव एव स्यात्। तस्मात्कथं निर्णय इत्याकांक्षायां अत्र हेमाद्रिः--आमश्राद्धं तु पूर्वाह्ण इति विधेर्द्विजकर्तृकनैमित्तिकामश्राद्धशूद्र-कर्तृकनित्यामश्राद्धोभयविषयत्वे पार्वणं चापराह्णे त्वित्यनेन विधीयमानोऽपराह्णो द्विजकर्तृकब्राह्मणभोजनात्मकनित्यमुख्य-पार्वणे एवाग्निष्टोमसंस्थाके ज्योतिष्टोमे दीक्षणीयादिधर्मव-त्सोमद्रव्यके नित्यज्योतिष्टोमे क्रयादिवदुपदेशत एवायाति द्विजकर्तृकनैमित्तिकामश्राद्धे त्वतिरात्रे दक्षिणीयादिवत्फलच-मसे क्रयादिवदतिदेशेनैव शूद्रस्य ब्राह्मणभोजनात्मकश्राद्ध-निषेधादामश्राद्धमेव नित्यमिति। तत्राप्युपदेशत एवायाति इति स्थितिः। तत्रानेन विधीयमानः पूर्वाह्णो नैमित्तिकामश्राद्धे आतिदेशिकापराह्णस्य नित्यं बाधं कृत्वा नित्यं प्रवर्तेत। शूद्र-कर्तृकामश्राद्धे तु औपदेशिकापराह्णस्य नित्यं बाधासंभवात्पाक्षि-कबाधेन पाक्षिकी प्रवृत्तिरिति वैषम्यं स्यात्। अतश्चायं पूर्वाह्ण-विधिरुभयत्र भवन्नेकत्र नित्यत्वमन्यत्र पाक्षिकत्वमित्येवंविधवै-षम्याकुलीकृतः सन् अन्याय्यविकल्पदुःस्थं शूद्रामश्राद्धं परिहृत्य द्विजामश्राद्धमेव विषयीकरोतीति सिद्धांतितवान्। यत्त्वत्र तदा ह्ययं न्यायः प्रकृते स्याद्यदि अन्नश्राद्धाद्भिन्नं नामामश्राद्धं स्यादि-त्यादि कालतत्त्वविवेचने दूषणोद्भावनं तत्पूर्वोक्तरीत्या श्रा-द्धभेदस्यावश्यकत्वादेवायुक्तमिति बोद्धव्यम्। तस्मादामश्राद्धं तु पूर्वाह्ण इति पूर्वाह्णविधिर्द्विजकर्तृकामश्राद्धे एव। शूद्रकर्तृका-मश्राद्धे तु कुतपोत्तरार्धप्रभृत्यपराह्ण एवेति सिद्धम्। अतएव शू-द्रकर्तृकामश्राद्धं मध्याह्नादिति वचनादपराह्णे कार्यम्। आमश्राद्धं तु पूर्वाह्णे इत्येतत्तु द्विजकर्तृकानित्यामश्राद्धविषयमिति निर्ण-यामृतः, एतच्चामश्राद्धस्य पूर्वाह्णविधानं द्विजातिविषयमिति मदनरत्नश्च संगच्छत इति दिक्।

इदं चामश्राद्धं शूद्रस्य—न पक्वं भोजयेद्विप्रान्सच्छूद्रोपि कथं-चन। भोजयन्प्रत्यवायी स्यान्नच तस्य फलं लभेत्। इति हेमा-द्रिनिर्णयामृतयोः सुमंतुवचनेन ब्राह्मणभोजननिषेधात्।

१ 'श्राद्धं तु'.

पितृणां दत्तमक्षयम् । इति शातातपवचने एवकारार्थकमात्र-
शब्दस्वारस्याच्च नित्यमेव । एतेन मात्रशब्दादामस्यानुकल्पत्वप्र-
तीतेर्द्विजान्प्रत्येव कालविधायकमिदमिति कालतत्त्वविवेचनं
हेमाद्र्यर्थाज्ञानादयुक्तं बोध्यम् । द्विजानां तु पूर्वोक्तेषु निमित्तेषु
विधानान्नैमित्तकं । तदपि यत्र मासिकसांवत्सरिकभिन्नेमावास्या-
दिश्राद्धे कालांतरविधानं नास्ति तत्रैव भवति अमावास्यादि
नियतमिति नियतपदस्वारस्यात् । यत्तु—मासिकानि सपिंडानि अ-
मावास्या तथाब्दिकम् । अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ।
इति निर्णयसिंधौ कालिकानाम्ना वचनं लिखितं तन्मूलालेख-
नाद्धेमाद्र्यादिनिबंधेष्वदर्शनादनाकरं प्रमाणं चेदमावास्यायां
ब्राह्मणनिमंत्रणपाकारंभोत्तररजोविषयमिति न तद्विरोधः ।
एतेन पाकासंभवे एव सर्वत्रामश्राद्धमिति निर्णयसिंध्वादय
उपेक्ष्या एव । यत्तु इदानींतनानां पत्न्यां रजस्वलायामपि क्वचिद-
मावास्यादावन्नश्राद्धानुष्ठानं तन्मासिके आमश्राद्धानुष्ठानवद्बोध्यं ।
महालयविषये तु सर्वस्मिन्नपि पक्षे श्राद्धं कुर्यात्तदशक्तौ पंचम्या-
दि तदशक्तौ अष्टम्यादि तदशक्तौ दशम्यादिदर्शांतं तदशक्तौ
अनिषिद्धे एकस्मिन् वा दिने कुर्यादिति विष्णुस्मृत्यादिषु
पंच पक्षा उक्तास्तत्र प्रथमादिपक्षे चिकीर्षिते पाकारंभात्पूर्वं
पत्नी रजस्वला चेदुत्तरोत्तरपक्ष एव स्वीकर्तव्यः । पाकारंभो-
त्तरं चेद्रजःप्रवृत्तिस्तदा—तामपरुध्य यजेतेत्यादिवचनादनुष्ठानं
भवत्येव । अनिषिद्धे एकस्मिन्वा दिन इति पक्षेपि पूर्वस्मिन्पू-
र्वस्मिन् दिने रजःप्रवृत्तिश्चेत्तदोत्तरममावास्यापर्यंतमेकं दिनं
ग्राह्यम् । अमायामपि तत्संभावना चेद्द्वादश्यादिपूर्वतिथौ कर्तव्यम् ।
यदि किंचिन्निमित्तवशाद्द्वादश्यादौ न कृतं अमायां रजोनुवृत्ति-
स्तदा—हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् । पंच-
म्योरंतरे दद्यादुभयोरपि पक्षयोः । इति हेमाद्रौ यमवचनात्प्र-
तिपदादिपंचम्यंतेषु एकस्मिन् दिने कर्तव्यम् । इदं महालय-
श्राद्धं आमश्राद्धस्य नियतकालिकेष्वेवाभ्यनुज्ञानात् ।—मृताहं च
सपिंडी च गयाश्राद्धं महालयम् । आपन्नोपि न कुर्वीत श्राद्धमामेन
कर्हिचित् । इति क्वचिन्नवीनग्रंथे स्मृतिदर्पणलिखितगालव-
वचनाच्चामेन न भवति । पूर्वोक्तरीत्या पत्न्यां रजस्वलायां पक्का-

न्नेन न भवत्येव । तस्माद्रजस्वलायां पत्न्यां तच्छुद्ध्यनंतरमेव कर्तव्यमिति सिद्धम्। प्रत्याब्दिकश्राद्धं तु—दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् । अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः । इति निर्णयामृतमदनरत्नयोर्गोभिलवाक्यात् दर्शशब्देन पूर्णिमाप्युपलक्ष्यते रविग्रह इत्यनेन चंद्रग्रहणमपीति ताभ्यामुक्तत्वात् । ग्रहणं विना आमेन न भवत्येव । तत्राप्यन्नश्राद्धासंभवे एवामश्राद्धं तस्याप्यसंभवे हेमश्राद्धमिति बोद्धव्यम् । आमश्राद्धविधायके माससंवत्सरादृत इत्यनेन भार्यारजोदर्शनरूपे निम्ने आमश्राद्धस्य पर्युदासात्प्रत्याब्दिकस्यावश्यानुष्ठेयत्वात् तद्दिने एवान्नश्राद्धं कर्तव्यं उत शुद्धाविति चिंतनीयम्। तत्र तावत्कालादर्शः—रजस्वलांगनोऽनग्निर्विदेशस्थेऽपि वाब्दिके । दर्शादाविव नामेन त्वन्नेन श्राद्धमाचरेत् । तदाह लौगाक्षिः—पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः । अन्नेनैवाब्दिकं कुर्याद्धेम्ना नामेन न क्वचित् ।

ननु । आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि । आमश्राद्धं प्रकुर्वीत भार्या यस्य रजस्वला । आर्तवे देशकालानां विप्लवे समुपस्थिते । आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि । इति कात्यायनवैयाघ्रपादवचनाभ्यां मृताहेऽप्यामश्राद्धं प्रतीयते । मैवं । विशेषवचनबलात्सामान्यवचनयोरनयोराब्दिकव्यतिरिक्तविषयत्वमवसीयत इत्यविरोधः । किंच—अनग्निश्च प्रवासी च यस्य भार्या रजस्वला । आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृतेहनि । इति मरीचिवचनान्मृताहे आमश्राद्धनिषेधः प्रतीयते । अतोऽन्नेनैवाब्दिकश्राद्धं कर्तव्यं। ननु—आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला । पंचमे त्वह्नि तत्कार्यं न तत्कुर्यान्मृतेहनि । इति स्मृत्यंतरवचनाद्भार्यायां रजस्वलायां मृताहे श्राद्धनिषेधः प्रतीयते तत्कथं उत्तरं । अपुत्रा पत्नी पत्युराब्दिके स्वयमेव कर्त्री रजस्वला यदि स्यात्तद्विषयमिदं वचनम् । तदाह गौतमः—अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके । रजस्वला भवेत्सा तु कुर्यात्तत्पंचमेऽहनि । इति । केचिदिदं वचनमन्यथा पठंति । श्राद्धीयेहनि संप्राप्ते यस्य भार्या रजस्वला । श्राद्धं तत्र न कर्तव्यं कर्तव्यं पंचमेहनि । इति । अस्मिन्नपि पक्षे प्रत्याब्दिकव्यतिरिक्तविषयमिदं वचनं। अत्र पक्षे भार्यारजस्वलात्वनिमित्ते

श्राद्धविघ्ने अमावास्याश्राद्धमेव पंचमेहनि कर्तव्यमिति व्यवस्थापितवान् । तत्रापुत्रेति वाक्यस्य श्राद्धकर्त्री भार्या रजस्वला चेत्तस्यास्तद्दिने श्राद्धप्रसक्त्यभावात् । आपन्नोप्याब्दिकं नैव कुर्याद्दामेन कर्हिचित् । अन्नेन तदमायां तु कृष्णे वा हरिवासरे । इति कार्ष्णाजिनिवाक्यवत् पंचमदिनरूपकालांतरविधायकत्वेन सार्थकत्वान्मृतेऽह्नि रजस्वलाभार्याकर्तृकश्राद्धे निषेधकस्मृत्यंतरवचनस्यायत्तीकरणे सामर्थ्यमेव नास्ति । किंचापुत्रेति वाक्ये अपुत्रा भर्तुराब्दिके इति समभिव्याहारेण भार्याशब्दादाब्दिकदैवतासंबंधिभार्याप्रतीतावपि यस्य भार्या रजस्वलेत्यादौ सर्वत्र कुर्यादिति क्रियाक्षिप्तकर्तृभार्याया एव प्रतीतेः स्वारसिकत्वात् भिन्नार्थत्वमेव युक्तम् । नच न मूलैककल्पनालाघवाद्यस्य भार्येत्यत्रापि दैवताभार्याप्रतीतिस्वीकारस्तद्बलादेव वचनभंगोपि न दोष इति वाच्यम् । लाघवमात्रेण भिन्नार्थयोरेकार्थत्वकल्पनस्य सिद्धांतविरुद्धत्वात् । एवमपि न तत्कुर्यान्मृतेहनीत्यंशे तथात्वस्य कथमपि वक्तुमशक्यत्वात् । नचैतदंशो नित्यानुवाद एव, पंचमे त्वह्नि तत्कार्यमित्येव विधेयांश इति न दोष इति वाच्यं । स्मृत्यंतरवचनाद्भार्यायां रजस्वलायां मृताहे श्राद्धनिषेधः प्रतीयत इति ग्रंथविरोधापत्तेः । अपिच यस्य भार्या रजस्वलेत्यत्र भार्याशब्दस्य मृतभार्यापरत्वे—अनग्निकः प्रवासी च यस्य भार्या रजस्वला । इत्यादावपि तथात्वापत्तौ सर्वोपप्लव एव स्यात् । अतएव कालादर्शे—श्राद्धीयेऽहनि संप्राप्ते यस्य भार्या रजस्वला । इति पाठांतरं लिखितं, हेमाद्रिमाधवादिभिरप्ययमेव पाठो धृतः । असिद्धपक्षे तु प्रत्याब्दिकव्यतिरिक्तविषयमिदं वचनमिति भार्यारजोदर्शनरूपविघ्ने अमावास्यादिश्राद्धमेव पंचमदिने कर्तव्यमित्युक्तं तत्—श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् । इत्यादिवचनैः स्मृतिचंद्रिकापरार्कहेमाद्र्यादिभिः—रजस्वलांगनोऽनग्निर्विदेशस्थोऽपि वाब्दिके । दर्शादाविव नामेनेति स्वोक्त्या च सह विरुद्धत्वात्, अमावास्याग्रहणादिनिमित्तकश्राद्धस्य पंचमदिनेऽनुष्ठानस्य कस्याप्यसंमतत्वादयुक्त एव कालादर्श इति विभावनीयम् । अतएव—अपुत्रा तु यदा भार्येति प्रथमपाठदर्शनेन प्रवृत्तो निर्णयामृत उपेक्ष्यः । तस्मात्—पुष्पवत्स्वपि दारेष्विति श्राद्धीयेऽहनीति वचनयोर्विरोधपरिहारार्थं व्रीहियववद्विकल्पः

स्वीकर्तव्यः । स च–श्रुतिद्वैधं तु यत्र स्यादुभौ धर्मावपि स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् । इति वचनविरुद्ध
इति कथं निर्णय इति चेत् अत्र हेमाद्रिः–गृहमेधिनस्तु भार्यया
सहैवाधिकारात् तस्यां रजोदर्शननिबंधनाशुचित्वदूषितायां मु-
ख्यकालमतिक्रम्याशुचित्वनिवृत्तावेव श्राद्धं कर्तव्यम्, अधिका-
रिभार्यांतरयुक्तेन तु मृताहे एव कर्तव्यमिति सिद्धांतितवान् ।
युक्ततरं चैतत् । सहाधिकारस्तु पत्नी पारिणेय्यस्येष्टे इति श्रुत्या ।
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः । इति मनुना चोक्तो,
मीमांसाभाष्यतंत्ररत्नस्मृतिचंद्रिकापरार्कादिभिः पुर-
स्कृतो युक्ततर इति पूर्वमुक्तत्वात् । यत्तु कालतत्त्वविवे-
चने मृतेहनीतिवचनमूलक एव सहाधिकारो हेमाद्रेरभिप्रेतः
सोपि साग्निकस्यैव, निरग्निकस्यापीति तु दीपिका भ्रममूलिकेत्युक्तं
तत्सहाधिकारप्रतिपादकश्रुत्याद्यदर्शननिबंधनत्वादयुक्तं । यदपि
फलभागित्वरूपोधिकारः पत्न्या नास्तीति तदपि पूर्वोदाहृता-
नेकवचनादर्शनप्रयुक्तत्वात्तथैव । अतएवार्थिकसहाधिकारवशा-
त्पत्न्यां रजस्वलायां श्राद्धं न भवतीति यत्किंचिदेतदित्युक्तं तदपि
तथैव । मृतेऽहनीति पुष्पवत्स्वपीति वचनाभ्यामनेकभार्यस्य त-
द्दिने, एकभार्यस्य पंचमदिने इति वा व्यवस्थेति चेत् भार्यांतर-
स्याधिकारोक्तिवैयर्थ्यमित्युक्तं तदप्ययुक्तं । यदा अनेका अपि
युगपद्रजोयुक्ता, गुणवत्यां ज्येष्ठायां वा रजस्वलायां निर्गुणा क-
निष्ठा वा अरजस्वला तद्व्यावृत्त्यर्थं तस्यावश्यकत्वात् । अत-
एव–धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् । दोषे सति
न दोषः स्यादन्या कार्या गुणान्विता । इति स्मृतिचंद्रिकायां
दक्षवचनं संगच्छते । तस्मात्कालतत्त्वविवेचने यावंति दू-
षणान्युद्भावितानि सर्वाणि तानि हेमाद्र्यर्थाज्ञाननिबंधनत्वा-
त्साहसरूपाणीति विभावनीयम् । यदपि निर्णयसिंधवादौ
सहाधिकारसहत्वश्रुत्या वा एकफलभोक्तृत्वेन वा पाकक-
र्तृत्वेन वेति । नाद्यः । ज्येष्ठया न विनेतरेति विरोधात् । न
द्वितीयः । अविभक्तभ्रातृषु एकस्याशुचित्वेप्यन्यतरस्याधिकारा-
न तृतीयः । निर्दशसूतिकारोगिण्यादावप्यकरणापत्तेरि-
त्युक्तं । पत्नी पारिणेय्यस्येष्ट इत्युदाहृतश्रुत्याद्यदर्श-
धर्मपत्नी समाख्यातेति वाक्यविरोधेन योग्यां

समर्थां ज्येष्ठामनादृत्य कनिष्ठा न नियोक्तव्येत्यर्थक—ज्येष्ठया न विनेतरेति वचनविरोधोद्भावनस्य दक्षवचनादर्शनप्रयुक्तत्वात् । एकस्य शवानुगमननिमित्ताशौचे अन्यस्याधिकारस्य युक्तत्वात्पाककर्तृत्वेन सहाधिकारस्योक्तिसंभवाभावाच्चेत्यत्र हेमाद्रिर्वभ्रामेत्युक्तिः प्रतारणैवेति । अतएव माधवेन श्राद्धीयेहनीति वचनाद्भार्यायां रजस्वलायामपि तद्दिन एवाब्दिकं कार्यमिति केचित् । अधिकारिभार्यांतरयुक्तेन तद्दिने एकभार्येण पंचमदिने इत्यन्ये इति कालादर्शमतं हेमाद्रिमतं चोपन्यस्य युक्तायुक्तविचारे क्रियमाणे कालादर्शस्यासंगतत्वं स्फुटं भविष्यतीति गूढाभिसंधिना यदत्र युक्तं तद्ग्राह्यमित्युपसंहृतं । तस्माद्भार्यायां रजस्वलायां अधिकारिभार्यांतरयुक्तेनैव मृततिथौ श्राद्धं कर्तव्यं । अधिकारिभार्यांतररहितेन तु पंचमदिन एवेति सिद्धं । एतेन रजस्वलायामपि भार्यायां मृततिथावेव श्राद्धं कर्तव्यमिति कालतत्त्वविवेचनाद्यर्वाचीनग्रंथाः पत्नी पारिणेय्यस्येष्ट इत्युदाहृतानेकवचनादिदर्शनाभावनिबंधनत्वादयुक्ता एवेति चिंतनीयं । श्राद्धकर्त्री भार्या रजस्वला चेत्तथा पंचमदिने एव कार्यं । शुचिभूतेन दातव्यं या तिथिः प्रतिपद्यते । सा तिथिस्तस्य कर्तव्या न चान्या वै कदाचन । इति हेमाद्र्याद्युदाहृतऋष्यशृंगवचनात् । वैधब्राह्मणनिमंत्रणोत्तरं पाकारंभोत्तरं वा भार्या रजस्वला चेत्तदा तामपरुध्य यजेतेति वचनात्तद्दिने एव कर्तव्यम् । श्राद्धकर्त्री भार्या पाकारंभोत्तरं रजस्वला चेत्तद्दिने ब्राह्मणा भोजनीयाः । सति सामर्थ्ये पंचमदिने श्राद्धं कर्तव्यं । विदेशगो वा विगताग्निको वा रजस्वलायामपि धर्मपत्न्यां । श्राद्धं मृताहे विदधीत पाकेनामेन हेम्ना नतु पंचमेह्नि । इति बोपदेवोक्तिः । रजस्वलायां भार्यायां क्षयाहं यः परित्यजेत् । स वै नरकमाप्नोति यावदाभूतसंप्लवं । इति पारिजाते अनिर्दिष्टाकरं वचनं च पाकारंभोत्तररजोविषयं, अधिकृतभार्यांतरयुक्तविषयं चेति ज्ञेयं । मासिकविषये आह्नाग्निः— तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना । सूतकानंतरं कुर्यात्पुनस्तदहरेव वा । सूतकानंतरदिने उत्तरमासगततत्तिथौ वा कर्तव्यं । देये पितॄणां श्राद्धे तु आशौचं जायते यदा । आशौचे तु व्यतिक्रांते तेभ्यः श्राद्धं प्रदीयते । इति ऋष्यशृंग-

वचनात् आशौचरूपविघ्ने तदनंतरं रजोदर्शनादिरूपविघ्ने उत्तर-मासगतमृततिथौ कर्तव्यमिति हेमाद्रिमाधवौ । आब्दिकमा-सिकभिन्नममावास्यादिनिमित्तकं तु सूतकादिविघ्ने लुप्यत एव । दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च । प्रेतकर्म क्रियावर्ज-माशौचे विनिवर्तते । इति हेमाद्रौ शंखवचनात् । सूतकांतेपि विघ्नांतरवशान्न कृतं चेत्तदा अमायां कृष्णैकादश्यां वा कर्तव्यं । मासिकेब्दे तु संप्राप्ते अंतरा मृतसूतके । वदंति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः । श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेहनि । एकादश्यां तु तत्कार्यं कृष्णपक्षे विशेषतः । इति हेमाद्रौ षट्-त्रिंशन्मतवचनात् मरीचिवचनाच्च । तत्रापि मुख्यकाल-प्रत्यासन्नत्वात् शुद्ध्यनंतरः कालः श्रेष्ठः । दर्शादिस्तु गौण इति हेमाद्रिमाधवौ । आशौचादिविना तिथ्यतिक्रमो न कर्तव्यः । तिथिच्छेदो न कर्तव्यो विनाशौचं यदृच्छया । पिंडश्राद्धं च दा-तव्यं विच्छित्तिं नैव कारयेत् । इति हेमाद्रौ स्मृत्यंतरवचनात् । इति भार्यारजोदर्शने प्रत्याब्दिकादिविचारः ।

प्रकृते आमश्राद्धइतिकर्तव्यतामाह हेमाद्रौ व्यासः—सि-द्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः । आवाहनादि सर्वं स्यात्पिंडदानं च भारत । दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृ-तमेव वा । तेनाग्नौकरणं कुर्यात्पिंडांस्तेनैव दापयेत् । तत्रैव षट्-त्रिंशन्मते—आमश्राद्धं यदा कुर्यात्पिंडदानं कथं भवेत् । गृह-पाकात्समुद्धृत्य सक्तुभिः पायसेन वा । पिंडान्दद्याद्यथालाभं ति-लैः सह विमत्सरः । प्रचेताः—आमश्राद्धप्रदः पिंडांस्तथाग्नौक-रणं च यत् । यद्दद्यात्तत्र तेनैव यत्किंचिच्छ्राद्धिकं भवेत् । किं-चिद्विकिरादिकमिति हेमाद्रिः । आमं ददद्भि कौंतेय तद्दानं द्विगुणं भवेत् । द्वित्रिचतुर्गुणं शस्तं नत्वेकगुणमर्पयेत् । इति । अशक्तौ वाराहे—असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः । प्रदद्यात्तु द्विजातिभ्यः स्वल्पामपि च दक्षिणां । अश्यत इत्याशः बाहुलकात्कर्मणि घञ् । आमं तंडुलादिकं । तदाह वसिष्ठः —सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतं । इति । अत्र केषुचिन्मंत्रेषूहमाह हेमाद्रौ म-रीचिः—आवाहने स्वधाकारे मंत्रा ऊह्या विसर्जने । अ-न्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः । इति । उशंतस्त्वेति

मन्त्रे अत्तवे इत्यत्र स्वीकर्तवै इति । नमो वः पितर इषे इत्यत्र आ-मायेति । वाजेवाजे तृप्ता इत्यत्र तर्प्स्यथ इत्यूहः कार्य इति हेमाद्रिः । पुत्रजन्मनि तु हेमश्राद्धं मुख्यम् । तदाह हेमाद्रौ संवर्तः—पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् । न पक्केन न चामेन कल्याणान्यभिकांक्षयन् । इति । एतेन पुत्रजन्मनि पक्वान्नभोक्रसंभवकृतः पाकश्राद्धासंभव इति नवीनोक्तिरुपेक्ष्या । पुत्रजन्मभिन्नेष्वामश्राद्धनिमित्तेषु तु आमासंभवे एव हेमश्राद्धं । तदाह मरीचिः—आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् । आमाच्चतुर्गुणेनैव हिरण्येन सुरोचिषा । इति आमान्नमूल्याच्चतुर्गुणेनेत्यर्थः । हेमाद्रौ भविष्ये—गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा । पिंडप्रदानं कुर्वीत हेमश्राद्धे कृते सदा । इति । शूद्रस्तु गृहपाकेन तत्पिंडान्निर्वपेत्तथा । सक्तु मूलं फलं तस्य पायसं वा भवेत्स्मृतं । नामंत्रणाग्नौकरणे विकिरो नैव दीयते । तृप्तिप्रश्नोपि नैवात्र कर्तव्यः केनचिद्भवेत् । इति । शूद्रमात्रस्य निषेधे प्राप्ते सच्छूद्रस्य प्रतिप्रसव उक्तो भविष्योत्तरे—धर्मेप्सवश्च धर्मज्ञा यदि शूद्राः प्रकुर्वते । अग्नौकरणमंत्रश्च नमस्कारो विधीयते । आवाहनादि कर्तव्यं यथा शूद्रेण तच्छृणु । देवानां देवनाम्ना तु पितॄणां नामगोत्रतः । सर्वाः प्रजाः काश्यपीया इति श्रुतेः शूद्राणामपि काश्यपगोत्रमिति हेमाद्रिः ।

विप्राभावे त्वाह हेमाद्रौ देवलः—पात्राभावे परं कृत्वा पितृयज्ञविधिं नरः । निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः । पात्राभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा । नतु प्राप्तस्य लोपोस्ति पैतृकस्य विशेषतः । इति । ब्राह्मणेन गृहीतस्य विनियोगमाह हेमाद्रौ व्यासः—हिरण्यमामं श्राद्धीयं लब्धं यत्क्षत्रियादितः । यथेष्टं विनियोज्यं स्याद्भुंजीत ब्राह्मणात्स्वयं । यथेष्टमित्युक्तत्वेपि लौकिके भोजनादौ दक्षिणादानादौ च विनियोज्यं, ब्राह्मणाल्लब्धं तु स्वयमेव भोक्तव्यं इति हेमाद्रिः । षट्त्रिंशन्मते—आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते । तत्सर्वं भोजनायालं नित्यनैमित्तिके न तु । हिरण्यं तत्पुनः श्राद्धे गृहीतं नैव दुष्यति । तेन नित्यक्रियाः कार्या हिरण्यं नान्नमुच्यते । इति प्रतिगृहीतप्रतिपत्तिः ।

अशक्तावाह हेमाद्रौ व्याघ्रः—अंगानि पितृयज्ञस्य

यदा कर्तुं न शक्नुयात् । स तदा वाचयेद्विप्रान्संकल्पा-त्सिद्धिरस्त्विति हि। पिंडमात्रं प्रदातव्यमलाभे द्रव्यविप्रयोः । श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोपि वा। अग्निना वा दहेत्कक्षं श्राद्धकाले समागते। तस्मिंश्चोपवसेदह्नि जपेद्वा श्राद्धसंहितां । संहिता सर्वमंत्रसहितः श्राद्धकल्पः । वाराहे—तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान् । प्रणम्य द्विजमुख्येभ्यो दद्यादुद्दिश्य वै पितॄन् । तिलैः सप्ताष्टभिर्वापि समवेतं जलांजलिं । भक्तिनम्रः समुद्दिश्य पितॄन्दद्यात्समाहितः । यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकं । पितॄनुद्दिश्य विप्रेभ्यो दद्याद्वा सुसमाहितः । सर्वाभावे वनं गत्वा स्कंधमूलप्रदर्शकः । पूर्वादिलोकपालाना-मिदमुच्चैः पठेद्बुधः । नमेस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोग्यं स्वपितॄन्नतोस्मि । तृप्यंतु भक्त्या पितरो मयैतौ कृतौ भुजौ वर्त्मनि मारुतस्य । इत्येतत्कथितं सर्वं पितृभक्तिपरायणः । यः करोति कृतं तेन श्राद्धं भवति वै द्विज । इति । पराधीनः प्रवासी च निर्धनोपि च मानवः । मनसा भावयुक्तेन श्राद्धं कुर्यात्तिलोदकं । इति हेमाद्रौ पुराणवचनम् । इति श्राद्धानुकल्पाः ।

इत्थं सर्ववाक्यैकवाक्यतया कृतस्यामश्राद्धकालनिर्णयस्यायं संग्रहः । विप्रादिकर्तृकनैमित्तिकामश्राद्धं हिरण्यश्राद्धं च आमश्राद्धं तु पूर्वाह्न इति । कालात्प्रातस्तनादूर्ध्वं त्रिमुहूर्ता तु या तिथिः । आमश्राद्धं तत्र कुर्याद्विमुहूर्तापि या भवेत् । इत्यादिवचनात्संगवकाले कर्तव्यं । शूद्रकर्तृकनित्यामश्राद्धं तु—मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः । इति वचनादष्टममुहूर्तोत्तरार्धादिकाले कर्तव्यमिति सिद्धं । अत्र पूर्वाह्णादिशब्दाः पूर्वाह्णाद्येकदेशेपि मुख्ययैव वृत्त्या प्रवर्तंते । यथा हिमवत्कुहरादारभ्य पूर्वसमुद्रसीम्नो जलप्रवाहविशेषस्य वाचको गंगाशब्दस्तदेकदेशेपि मुख्यः। अतस्तदेकदेशस्नानेपि गंगास्नानं भवति तथा पूर्वाह्णाद्येकदेशेनुष्ठानेपि तदनुष्ठानं भवतीति ज्ञेयं । इत्यामश्राद्धकालनिर्णयः भार्यायां रजस्वलायां प्रतिसांवत्सरिकश्राद्धकालनिर्णयः श्राद्धानुकल्पाश्च ।

अथ क्षयाहापरिज्ञाने सांवत्सरिकश्राद्धे मरणमासगतामावास्या ग्राह्या । तदाह हेमाद्रौ बृहस्पतिः—न ज्ञायेत

---

१ 'तस्मिन्वोपवसेत्'.

मृताहश्चेत्प्रमीते प्रोषिते सति । मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि । इति । मृताहनि यत्कर्तव्यं तदमावास्यायामित्यर्थः । प्रोषित इति अज्ञानकारणोपलक्षणम् । तथा च भविष्योत्तरे—प्रवासमंतरेणापि स्यातां तौ विस्मृतौ यदा । इति । तौ मरणतिथिमासौ । मासाज्ञाने भविष्यपुराणे—दिनमेव विजानाति मासं नैव तु यो नरः । मार्गशीर्षे तथा भाद्रे माघे वापि समारेत् । तत्रैव बृहस्पतिः—यदा मासो न विज्ञातो विज्ञातं दिनमेव तु । तदा मार्गशिरे मासि माघे वा तद्दिने भवेत् । दिनमासौ न विज्ञातौ मरणस्य यदा पुनः । प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा । देशांतरे मृतस्य दिनमासौ द्वावप्यज्ञातौ तदा प्रस्थानकालिकौ तौ ग्राह्यावित्यर्थः । पूर्वोक्तया दिशेत्यस्यायमर्थः । प्रस्थानतिथिज्ञाने मासाज्ञाने च मार्गशीर्षे माघे वा तत्तिथौ कार्यं।मासज्ञाने तिथ्यज्ञाने तन्मासामावास्यायामिति । प्रस्थानतिथिमासयोरप्यविज्ञाने मरणवार्ताश्रवणकालिकयोस्तिथिमासयोः कुर्यात् । तदाह प्रचेताः—अपरिज्ञानेऽमावास्यायां श्रवणदिवसे वेति । श्रवणकालिकयोरप्यविज्ञाने तु प्रभासखंडे—मृतस्याहर्न जानाति मासं वापि कथंचन । तेन कार्यममायां तु श्राद्धं माघेऽथ मार्गके । इति । यस्य प्रोषितस्य मरणवार्ता जीवनवार्तापि वा न श्रूयते पंचदशवर्षपर्यंतमागमनं च नास्ति तस्य पालाशीं कुशमयीं वा प्रतिकृतिं कृत्वा यथाविधि दाहादिसंस्कारं कृत्वा दाहकालीनमासगततिथौ तत्सांवत्सरिकं कार्यं । तदाह तत्रैव जातूकर्ण्यः—पितरि प्रोषिते यस्य न वार्ता नैव वा गतिः । ऊर्ध्वं पंचदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् । कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः । तदादीन्येव सर्वाणि शेषकार्याणि संचरेत् ।

प्रतिकृतिसंस्कारानंतरमागते विधिः । जीवन्यदि स आगच्छेद्धृतकुंभे नियोजयेत् । उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् । द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु । स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः । अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् । इति । व्रतचर्या ब्रह्मचर्यरूपा । स्नात्वा समावर्तनं च कृत्वेत्यर्थः । इति क्षयाहापरिज्ञाने पंचदश-

अथ श्राद्धे क्वचिदाशौचापवादः। देये पितृणां श्राद्धे तु आशौचं जायते यदा। आशौचे तु व्यतिक्रांते तेभ्यः श्राद्धं प्रदीयते। इत्यनेनाशौचानंतरं कर्तव्यमित्युक्तं तन्मुख्यकालिकश्राद्धोपक्रमात्प्रागाशौचज्ञाने। मुख्यकालिकोपक्रमानंतरं दातृगृहान्यस्थलमृताशौचज्ञाने तु श्राद्धं समापनीयं। तदुक्तं हेमाद्रौ ब्रह्मपुराणे—निमंत्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि। निमंत्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च। देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्। अपि दातृग्रहीत्रोश्च सूतके मृतके तथा। अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन। विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिका क्रिया। भोजनार्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते। यदि कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहिताः। आचम्य परकीयेन जलेन शुचयो द्विजाः। इति। दातुर्गृहेपि मरणे तज्ज्ञानाभावे भोक्तुर्दोषो नास्ति। यदि ज्ञानानंतरं भुंक्ते तदा ब्राह्मणस्यैव दोषः। भोजनारंभोत्तरमपि ज्ञाने तदनंतरं न भोक्तव्यमिति भोजनार्धेत्यनेनोच्यत इति वेदितव्यम्। इति श्राद्धे आशौचापवादः।

अथेदं चिंतनीयम्। अमावास्यासंक्रांतियुगादिषु श्राद्धानि विहितानि तत्रामावास्यासंक्रांत्यादीनामेकत्र सन्निपाते किं सकृदनुष्ठानमुत तन्निमित्तकस्य तस्य तस्य पृथगनुष्ठानमथवा तंत्रणेति तदर्थमिदं विचारणीयम्। अमावास्यादिश्राद्धविधायकानि वाक्यानि उत्पन्ने कर्मणि कालरूपगुणविधयः उत विशिष्टकर्मविधय इति। तत्र यद्यपि गुणविधौ भावार्थे विधानं वाक्यार्थविधानं चापद्यते तथापि विशेषणे विधिशक्त्युपसंक्रांते गौरवादिदोषयुक्तविशिष्टविध्यपेक्षया लाघवाद्गुणविधित्वमेव। तथाच सकृदेवानुष्ठानम्। अतएवैकादशे दीक्षितस्यामेध्यदर्शने अबद्धं मनो दरिद्रं चक्षुरिति मन्त्रस्य जप उक्तस्तत्रानेकामेध्यदर्शने निमित्तभेदान्नैमित्तिकावृत्तिप्राप्तौ विशेषणग्रहणाभावात्सकृज्जप इति सिद्धान्तः। नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्। इति हेमाद्रौ हारीतवचनं च संगच्छत इति चेन्न। यत्र हि कर्मोत्पत्तिविधिसन्निधिरस्ति तत्र गुणयुक्तेषु वाक्येषु तत्प्रत्यभिज्ञानाद्गुणमात्रविधिर्भवति यथाग्निहोत्रं जुहोतीतिवाक्यसन्निधिमत्सु दध्ना जुहोतीत्यादिवाक्येषु। अत्र श्राद्धोत्पत्तिबोधकवाक्य-

सन्निध्यभावेन गुणविधित्वस्यासंभवात् । सोमेन यजेतेत्यत्रेव विशिष्टविधित्वस्यैव युक्तत्वात् । उत्पत्तिवाक्यकल्पने तु सर्वत्रैव तथात्वापत्तौ विशिष्टविध्युच्छेदापत्तेः । तस्मादमावास्याष्टकाक्षयाहापरपक्षसंक्रांत्युपरागयुगादिमन्वादिश्राद्धविधायकवाक्यानां विशिष्टविधित्वादमावास्यानिमित्तकश्राद्धात्संक्रांत्यादिनिमित्तश्राद्धानां भेदादेकनिमित्तकानुष्ठानेपि द्वितीयनिमित्तकानुष्ठाने प्रत्यवायापत्तेरेतन्निमित्तकस्यानुष्ठानं नैतन्निमित्तकस्येत्यत्र विनिगमकाभावात्संनिपतितयावन्निमित्तकानां सर्वेषामेवानुष्ठानं युक्तम् । अतएव—द्वे बहूनि निमित्तानि जायेरन्नेकवासरे । नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् । इति कात्यायनवचनं—श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने । नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदयम् । इति जाबालिवचनं च संगच्छते । न चानेकामेध्यदर्शनेपि सकृन्मन्त्रजप इति सिद्धांतविरोधः । अमेध्यत्वावच्छिन्नदर्शनस्यैव निमित्तत्वेन तस्य एकानेकामेध्यव्यक्तिदर्शनेपि समानत्वे जपावृत्तिप्रसंगाभावात् । अतएवामेध्यदर्शनवृष्टिक्लेदनयोः सन्निपाते क्लेदननिमित्तकस्य उदंतीर्बलं धत्त इति मन्त्रांतरस्यापि जपः कर्तव्य इति सिद्धांतः संगच्छते । नैकः श्राद्धद्वयं कुर्यादिति वचनं तु श्राद्धं कृत्वा तु तस्येत्येकवाक्यतया एकोद्देश्यक एककालिकैककर्तृकश्राद्धस्यैव पुनः प्रयोगनिषेधकमिति न तद्विरोधोपि । अतएवोदाहृतनिषेधस्तु श्रद्धाजडारभ्यमाणैकनिमित्तश्राद्धावृत्तिविषय इति हेमाद्रिः संगच्छते । एककाले गतासूनां बहूनामथवा द्वयोः । तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक् पृथक् । पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः । तृतीयस्य ततः कुर्यात्सन्निपाते त्वयं क्रमः । इति हेमाद्रौ भृगुवचनं । भवेद्यदि सपिंडानां युगपन्मरणं तदा । संबंधासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् । इति । ऋष्यशृंगः—बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेहनि । तन्त्रेण श्रपणं कृत्वा पृथक् श्राद्धानि कारयेत् । इति । अत्रिः—पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेपि वा । पितृपूर्वं सुतः कुर्यादन्यत्रासत्तियोगतः । इति कार्ष्णाजिनिः । अत्र पितृपूर्वमित्यनेन मातुः पूर्वं मरणेपि पितृश्राद्धं पूर्वं पश्चान्मातुः श्राद्धमित्युच्यते । विप्रकृष्टस्य पूर्वं मरणे

सन्निकृष्टस्य पश्चान्मरणेपि सन्निकृष्टस्यादौ पश्चाद्विप्रकृष्टस्येति ज्ञेयम् ।

पार्वणैकोद्दिष्टयोर्युगपत्प्राप्तावाह जाबालिः—यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम् । पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् । इति । अत्रैकोद्दिष्टमभिनिर्वर्त्य पार्वणं समाचरेदित्यन्वयो युक्तः । क्रमानुरोधेन कालबाधस्य सिद्धान्तविरुद्धत्वात् । यत्रैकेन पाकेनानेकश्राद्धानुज्ञा तत्र दर्शादौ पितृश्राद्धमातामहश्राद्धवत्तंत्रेणैवानुष्ठानमुक्तं गारुडे—एकेनैव तु पाकेन श्राद्धानि कुरुतेत्र हि । विकिरं त्वेकतः कुर्यात्पिंडान्दद्यात्पृथक्पृथक् । इति । एवंच यदा अनेकोद्देश्यकानामपि श्राद्धानां कालैक्ये तन्त्रेणानुष्ठानं तदा किं वक्तव्यमेकस्मिन्काले अनेकनिमित्तसमवाये एकोद्देश्यकश्राद्धानां तन्त्रेणानुष्ठानमिति । यत्तु नैकस्मिन्क्रियमाणे तु नानाकर्म समाचरेत् । इति हेमाद्रौ वचनं तत्सहैवानुष्ठानस्य निषेधकं नतु तन्त्रेणेति बोध्यम् । अतएवामावास्यानिमित्तकं संक्रांतिनिमित्तकं युगादिनिमित्तकं चेत्येतानि श्राद्धानि तन्त्रेण करिष्ये इति सङ्कल्पं कुर्यादिति हेमाद्रिः संगच्छते । कालादर्शेप्युक्तं—नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि । दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि । नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि । युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा । प्रत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च । संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत् । निमित्तनियतिश्चात्र पूर्वानुष्ठानकारणम् । पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि । इति । देवतैक्ये क्वचिदेकनिमित्तकानुष्ठानेनाप्यन्यनिमित्तकस्य प्रसंगतः सिद्धिर्भवति । तदप्युक्तं तत्रैव—नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि । दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः । दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणः । प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् । इति । अत्रोपात्तयोर्द्वयोर्द्वयोर्मध्ये उत्तरस्यानुष्ठानेन पूर्वस्यापि सिद्धिरित्यर्थः । स्मृतिसंग्रहे—काम्यतंत्रेण नित्यस्य तंत्रं श्राद्धस्य सिध्यति । इति । इति श्राद्धसन्निपाते कालनिर्णयः ।

**अथ श्राद्धांगतिलतर्पणकालः** । तत्र प्रयोगपारिजाते **गर्गः**—पूर्वं तिलोदकं दत्वा दर्शश्राद्धं तु कारयेत् । प्रत्य-

द्धे न भवेत्पूर्वं परेहनि तिलोदकं । पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकं । नच नित्यतर्पणविषयकमेवेदमस्तु श्राद्धाङ्गतर्पणे प्रमाणाभाव इति शंक्यम् । यस्तर्पयति तान्विप्रः श्राद्धं कृत्वा परेहनि । पितरस्तेन तृप्यंति न चेत्कुप्यंति वै नृणाम् । इति प्रत्याब्दिकं प्रक्रम्य गर्गेणैव फलनिन्दार्थवादाभ्यामंगत्वबोधनात् । आब्दिकं प्रकृत्य बृहन्नारदीयेपि–परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् । तस्य ते पितरः क्रुद्धाः शापं दत्वा व्रजंति हि । इति । अत्र पितृशब्दः कृतश्राद्धोद्देश्यपितृपरः । वृद्धिश्राद्धे सपिंडे च प्रेतश्राद्धेनुमासिके । संवत्सरविमोके च न कुर्यात्तिलतर्पणं । इति । वृद्धिश्राद्धादौ न कार्यं । सप्तम्यां भानुवारे च मातापित्रोर्मृतेहनि । तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः । इत्यादिवचनैः श्राद्धदिने तिलतर्पणस्यैव निषेधात्तिलैर्विनैव श्राद्धदिनेपि नित्यतर्पणं कर्तव्यमेव । प्रत्यब्दाङ्गं तिलं दद्यान्निषिद्धेपि परेहनि । इति वचनाच्छ्राद्धांगतिलतर्पणं निषिद्धदिनेपि कार्यम् । कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् । पितॄणां प्रत्यहं कार्यं निषिद्धाहेपि तर्पणम् । दर्शे तिलोदकं पूर्वं पश्चाद्द्यान्महालये । क्षये पूर्वं नच परं परेहनि तिलोदकं । सकृन्महालये चैवं परेहनि तिलोदकं । माध्यंदिनानां सकृन्महालयेपि तद्दिने एव । उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे । निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् । इति तच्छ्राद्धांगतर्पणविषयं, श्राद्धकरणाशक्तौ श्राद्धानुकल्पतिलतर्पणविषयं च । उदाहृतवचनविरोधात् । नित्यतर्पणे तिलनिषेधमाह गार्ग्यः–भानौ भौमे त्रयोदश्यां नंदाभृगुमघासु च । पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् । मरीचिः–सप्तम्यां भानुवारे च गृहे जन्मदिने तथा । निशासंध्यासु पुत्रार्थी न कुर्यात्तिलतर्पणम् । इति । अस्यापवादः–तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके । निषिद्धेपि दिने कुर्यात्तर्पणं तिलमिश्रितम् । इति श्राद्धांगतर्पणकालः ।

अथ श्राद्धदिने वैश्वदेवकालः । वैश्वदेवश्चाहिताग्निना पृथक्पाकेन श्राद्धात्पूर्वं कर्तव्यस्तदाह हेमाद्रौ लौगाक्षिः–पक्षांतं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिंडयज्ञं ततः कुर्यात्ततोन्वाहार्यकं बुधः । पक्षांतं अन्वाधानं । अन्वाहार्यकं दर्शश्राद्धं । तत्र पक्षांतपिंडपितृयज्ञयोर्मध्ये विधानादेव साग्निककर्तृ-

कत्वावगंमात्साग्निकग्रहणं पक्षादिस्थालीपाकपिंडपितृयज्ञकर्तृगृह्याग्निमग्निवृत्त्यर्थमिति हेमाद्रिः । पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च । वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् । इति । पितृपाकेन श्राद्धात्पूर्वं वैश्वदेवं निषेधति हेमाद्रौ पैठीनसिः—पितृपाकात्समुद्धृत्य वैश्वदेवं करोति चेत् । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते । इति । परिशिष्टे—संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च । अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि । पार्वणग्रहणमनेकदेवताकश्राद्धोपलक्षणम् । ततश्चैकादशाहिकश्राद्धव्यतिरिक्तेषु श्राद्धेषु साग्निकेन पूर्वमेव वैश्वदेवः कर्तव्यः । अतएव शालंकायनः—श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः । एकादशाहिकं मुक्त्वा तत्र ह्यंते विधीयते । इति । इत्याहिताग्नेर्वैश्वदेवकालः । निरग्निकस्य तु श्राद्धात्पूर्वं भिन्नपाकेन वैश्वदेवकरणे दोषः—पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः । अकृतं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते । इति वृद्धगौतमेनोक्तः । वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निमान् । लौकिकाग्नौ हुते शेषः पितॄणां नोपतिष्ठते । इति वसिष्ठेन वैश्वदेवशेषान्नेनैव श्राद्धनिषेधात्पाकांतरेण पूर्वं अनुष्ठाने न दोष इति शंक्यं । आहिताग्निविषये अस्योपपन्नत्वेन निषेधापवादत्वासंभवात् । तथा च हेमाद्रौ ब्रह्मपुराणम्—वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात् । जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम् । इति । अर्वाग्ब्राह्मणभोजनादित्यनेनाग्नौकरणानंतरं ब्राह्मणभोजनात्पूर्वं वैश्वदेवविधानात् । निरग्नेरयमेको वैश्वदेवकालः । द्वितीयोपि हेमाद्रौ भविष्यत्पुराणे—पितॄन्संतर्प्य विधिवद्बलिं दत्वा विधानतः । वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम् । अग्निदग्धेतिमन्त्रेण भूमौ यन्निर्वपेद्बुधः । जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदा । इति । अनेन विकिरसंज्ञबलिदानानंतरं स्वस्तिवाचनात्पूर्वं कर्तव्यं इत्युक्तम् । तृतीयमाह मनुः—उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रविसर्जनम् । ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः । ब्राह्मणभोजनकाले यद्भूमौ अन्नं पतितं तत् तद्देशाद्ब्राह्मणगमनात्पूर्वं न मार्ष्टव्यं । ततो निष्पन्ने श्राद्धे वैश्वदेवादिकं कार्यं बलिग्रहणस्योपलक्षण-

त्वादिति मेधातिथिः । मत्स्यपुराणेपि–उच्छेषणं तु तत्ति-ष्ठेद्यावद्विप्रा विसर्जिताः । वैश्वदेवं ततः कुर्यान्निवृत्ते श्राद्ध-कर्मणि । हेमाद्रौ भविष्यत्पुराणे–कृत्वा श्राद्धं महाबाहो ब्राह्मणांस्तु विसर्ज्य च । वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप । पैठीनसिः–श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः । कुर्याद्भिक्षां ततो दद्याद्धंतकारादिकं ततः । मार्कंडेयः–ततो नित्य-क्रियां कुर्याद्भोजयेच्च तथातिथीन् । ततस्तदन्नं भुंजीत सह भृत्यादिभिर्नरः । नित्यक्रियां बलिहरणादिनित्यश्राद्धादिकाम् । तदेवमनाहिताग्नेरग्नौकरणानन्तरं विकिरानन्तरं समाप्तेरनन्तरं चेति त्रयो वैश्वदेवकालाः । वृत्तिकारेण (विप्र)विसर्जनानन्तर-मेव उच्छेषणमिति मनुवचनस्योदाहरणात् । बह्वृचानां श्राद्धांते एव पक्षांतरं शाखांतरविषयमिति बोपदेवेनोक्तत्वात् व्यव-स्थितविकल्पस्यैव युक्तत्वादिति ज्ञेयम् । नित्यश्राद्धं शेषेणेत्युक्तं पृथक्पाकेन नित्यश्राद्धं कर्तव्यं पार्वणादिश्राद्धे कृते नित्यश्राद्धं न कर्तव्यमित्यन्ये आहुरिति स्पष्टमुक्तम् । तत्रैव–नित्यक्रियां पितृणां च केचिदिच्छंति मानवाः । न पितृणां तथैवान्ये शेषं पूर्ववदाचरेत् इति । अमावास्यादिसाधारणकालिकेषु श्राद्धेषु नित्यश्राद्धदेवतानामिष्टत्वात्प्रसंगसिद्धतया नित्यश्राद्धं न कर्तव्यं । सांवत्सरिकश्राद्धादौ नित्यश्राद्धदेवतानां सर्वासामनिष्टत्वादवश्यं तत्कर्तव्यमिति व्यवस्थितविकल्प एव युक्तः । अतएव हेमाद्रौ नागरखंडे–नित्यश्राद्धं न कुर्वीत प्रसंगाद्यच्च सिध्यति । श्राद्धान्तरे कृतेप्यत्र नित्यत्वात्तन्न हापयेत् । इति वैश्वदेव-कालनिर्णयः । इति पुरुपार्थचिन्तामणौ कालखण्डे श्राद्ध-कालनिर्णयः ।

अथ दाने प्रशस्तकालः । तत्र हेमाद्रौ याज्ञवल्क्यः–शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये । विषुवे दशसाहस्रं व्यतीपाते त्वनंतकम् । इति । तत्रैव वराहपुराणे–दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये । शतघ्नं तस्य संक्रांतौ शतघ्नं विषुवे तथा । युगादौ तच्छतगुणमयने तच्छताहतम् । सोम-ग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे । असंख्येयं व्यतीपाते दानं

वेदविदो विदुः । इति । शतघ्नं शतगुणं । व्यतीपातोत्र विष्कं भादियोगेषु सप्तदशो योगः । अस्योत्पत्तिमाह गालवः- चंद्रार्कयोर्नयनवीक्षणजातमूर्तिः कालानलद्युतिनिभः पुरुषोतिरौद्रः । इति । अस्य चोत्पत्तिभ्रमणपतनपतितकालेषु मध्ये पतितकाले स्नानदानादिकं महाफलम् । तदाह हेमाद्रौ याज्ञवल्क्यः—उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु । अर्बुदगुणितं पतने जपदानाद्यक्षयं पतिते । उत्पत्त्यादिकालमानं ज्योतिषे—विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः । पतने दश नाड्यस्तु पतिते सप्त नाडिकाः । इति । वृद्धमनुः—श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः । यद्यमा रविवारेण व्यतीपातः स उच्यते । इति । रविवारयुक्तामावास्या एषु नक्षत्रेषु भवति स व्यतीपातसंज्ञको योगः ।—पंचाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे । पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इति प्रयोगः । अस्मिन्हि गोभूमिहिरण्यवस्त्रदानेन सर्वं प्रविहाय पापं । सुरत्वमिंद्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्यः । पाशाभिधाना तिथिर्द्वादशी । हेमाद्रौ पद्मपुराणे—मंदे वार्के गुरौ वापि वारेष्वेतेषु तु त्रिषु । त्रीण्येतानि च ऋक्षाणि स्वयं प्रोक्तानि ब्रह्मणा । अश्वमेधाधिकं पुण्यं स्नातस्य तु भवेन्नृप । दानमक्षय्यतां याति पितॄणां तर्पणं तथा । ऋक्षाण्याग्नेययाम्यप्राजापत्यानीति हेमाद्रिः । मात्स्ये—यदा मृगशिरे ऋक्षे शशी सूर्यो बृहस्पतिः । तिष्ठंति सा तिथिः पुण्या अक्षया परिगीयते । हेमाद्रौ स्कांदे—ग्रहणं चंद्रसूर्याभ्यामुत्तरायणमुत्तमम् । विषुवं च व्यतीपातः षडशीतिमुखं तथा । दिनच्छिद्राणि संक्रांतिर्ज्ञेयं विष्णुपदं पुनः । इति कालः समाख्यातः पुंसां पुण्यविवर्धनः । अस्मिन्दानानि दत्तानि स्नानहोमतपांसि च । अनंतफलदानि स्युः स्वर्गमोक्षप्रदानि तु । शातातपः— अयनेषु तु यद्दत्तं षडशीतिमुखेषु च । चंद्रसूर्योपरागे च दत्तं भवति चाक्षयं । हेमाद्रौ शंखः—यदा विष्टिर्व्यतीपातो भानुवारेण संयुतः । पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम् । यदा षष्ठ्यां व्यतीपातो भानुवारस्तथैव च । पद्मकं नाम तत्प्रोक्तम-

**विष्णुधर्मोत्तरे**—कालः सर्वोपि निर्दिष्टः पात्रं सर्वमुदाहृतम् । अन्नास्य प्रदाने तु नात्र कार्या विचारणा । तदैव दानकालस्तु यदोभयमुपस्थितम् । न कालनियमो दृष्टो दीयमाने प्रतिश्रये । तदैव दानमस्योक्तं यदा पात्रसमागमः । नहि कालं प्रतीक्षेत जलं दातुं तृषान्विते । अन्नोदकं सदा देयमित्याह भगवान्मनुः । **स्कांदे**—अर्धप्रसूतां गां दद्यात्कालादि न विचारयेत् । कालः स एव ग्रहणं यदा वै द्विमुखी तु गौः । **हेमाद्रौ व्यासः**—आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् । तदभावे तु गौरेव नरकोत्तारणाय वै । तदा यदि न शक्नोति दातुं वैतरणीं तु गां । शक्तोन्यस्तु हि तां दत्वा श्रेयो दद्यान्मृतस्य च । तत्रैव **वाराहे**—व्यतीपातोऽथ संक्रांतिस्तथैव ग्रहणं रवेः । पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः । तदा गोभूहिरण्यादि दत्तमक्षय्यतामियात् । अदृष्टमश्रुतं दानं भुक्त्वा चैतन्न विद्यते । इति । **विष्णुधर्मोत्तरे**—अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः । संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्तितं । **विष्णुपुराणे**—यदा वा जायते चित्तं वित्तं श्रद्धासमन्वितं । तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितं । रात्रौ दानं न कर्तव्यं कदाचिदपि केनचित् । हरंति राक्षसा यस्मात्तस्माद्दातुर्भयावहं । विशेषतो निशीथे तु न शुभं कर्म शर्मणे । अतो हि वर्जयेत्प्राज्ञो दानादिषु महानिशां । **वसिष्ठः**—ग्रहणोद्वाहसंक्रांतिप्राणार्तिप्रसवेषु च । दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते । यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने । दानान्येतानि शस्तानि रात्रौ देवालये तथा । **महाभारते**—रात्रौ दानं न शंसन्ति विना त्वयनदक्षिणं । विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयं । पूजनं चातिथीनां च पांथानामपि पूजनं । तच्च रात्रौ तथा ज्ञेयं गवामपि च पूजनं । **हेमाद्रौ मार्कण्डेयपुराणे**—महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयं । स्नानं तत्र न कुर्वीत काम्यनैमित्तिकादृते । इति दानकालः ।

**अथ नदीनां रजःकालनिर्णयः** । तत्र **हेमाद्रौ मार्कंडेयः**—द्विमासं सरितः सर्वा भवंति हि रजस्वलाः । अप्रशस्तं ततः स्नानं वर्षादौ तत्र वारिणा । **कात्यायनः**—मासद्वयं श्रावणादौ सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत व-

र्जयित्वा समुद्रगाः । धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः । सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः । न स्नानादीनि कर्माणि तासु कुर्वीत मानवः । सिंहे निषेध अगस्त्योदयावधि । तदाह याज्ञवल्क्यः–यावन्नोदेति भगवान्दक्षिणाशाविभूषणं । तावद्रेतोवहा नद्यो वर्जयित्वा तु जाह्नवीम् । कात्यायनः–याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितो भुवि । तासु प्रावृषि न स्नायादपूर्णे दशवासरे । कर्कटादौ रजोदुष्टा गौतमी वासरत्रयं । चंद्रभागा सती सिंधुः शरयूर्नर्मदा तथा । मदनरत्ने भविष्यपुराणे–आदौ कर्कटके देवि महानद्यो रजस्वलाः । त्रिदिनं तु चतुर्थेह्नि शुद्धाः स्युर्जाह्नवी तथा । ब्रह्मपुराणे–गोदा भीमरथी चैव तुंगभद्रा च वेणिका । तापी पयोष्णी विंध्यस्य दक्षिणे तु प्रकीर्तिताः । भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विंध्यस्योत्तरसंस्थिताः । एवमन्या अपि महानद्यः पुराणांतरतो ज्ञेयाः । महानद्यो देविका च कावेरी शरयूस्तथा । रजसा तु प्रदुष्टाः स्युः कर्कटादौ त्र्यहं नृप । इति । कासुचिन्महानदीषु रजोदोषाभावमाह देवलः–गंगा च यमुना चैव प्लक्षजाता सरस्वती । रजसा नाभिभूयंते ये चान्ये नदसंज्ञकाः । गंगा धर्मद्रवी पुण्या यमुना च सरस्वती । अंतर्गतरजोयोगाः सर्वाहेष्वपि चामलाः । प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनं । गंगायां नैव दुष्यंति सा हि धर्मद्रवः स्वयं । कात्यायनः–जाह्नव्यादित्यसंभूता प्लक्षजाता सरस्वती । रजसा नाभिभूयंते नदाः कृष्णा च वेणिका । यत्तु–प्रथमं कर्कटे देवि त्र्यहं गंगा रजस्वला । इति हेमाद्रौ वचनं तत् जाह्नवीव्यतिरिक्तगोदावेण्यादिगंगांतरविषयं । उदाहृतवचनविरोधात् । यदपि–प्रावृट्काले महानद्यः संति नित्यं रजस्वलाः । चतुर्थेहनि संप्राप्ते शुद्धा भवति जाह्नवी । इति हेमाद्रौ कात्यायनवचनं तदपि उदाहृतवचनाविरोधायैवं व्याख्येयं । प्रावृट्काले रजस्वला महानद्यश्चतुर्थेह्नि तथा शुद्धा भवंति यथा जाह्नवी सर्वदा शुद्धा भवतीति । हेमाद्रौ योगयाज्ञवल्क्यः–अग्राह्यास्त्वागता ह्यापो नद्याः प्रथमवेगिकाः । प्रक्षोभितास्तु तेनापि वाः स्वतीर्थाद्विनिःसृताः । तीर्थं जलावतारणमार्गः । तत्रैव

स्मृत्यंतरे—अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः । दश-रात्रेण शुध्यंति भूमिष्ठं च नवोदकम् । इति । भविष्यपुराणे—महदंबु समानं वा यदि तिष्ठेत्पुरातनं । नचांबुमिश्रितं तेन न दुष्टमिति सूरयः । रजोदोषेपि वाप्याद्यभावे तत्तीरवासिभिर्जलं ग्राह्यं । तदाह व्याघ्रपादः—अभावे कूपवापीनामनुपायपयोभृतां । रजोदोषविपर्यासे ग्रामभोगो न बाध्यते । इति । क्वचिद-पवादमाह कात्यायनः—उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चंद्रसूर्योपरागे च रजोदोषो न विद्यते । इति नदीर-जोदोषकालः ।

अथ गर्भाधानकालः । तत्र याज्ञवल्क्यः—गर्भाधानमृतौ पुंसः सवनं स्पंदनात्पुरा । इति । ऋतौ ऋतुकाले इत्यर्थः । ऋतुकालमाह स एव—षोडशर्तुर्निशा स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् । एवं गच्छन्स्त्रियं क्षामां मघां मूलं च वर्जयेत् । सुस्थ इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् । यत्तु—स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः । इति महाभारतादिवचनं तद्रजोनि-वृत्तौ दोषाभावपरं । अतएव मनुः—रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला । इति याज्ञवल्क्यवचनमपत्यदोषाभावपरं । अतएव लैंगे—चतुर्थे सा न गम्या हि यतोल्पायुः प्रसूयते । विद्याहीनं व्रतभ्रष्टं पतितं वा प्रसूयते । इति । व्यासश्च—रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः । पंचम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः । सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान् । नवम्यां मध्यमा योषिद्दशम्यां पंडितः पुमान् । एकाद-श्यामधर्म्या स्त्री द्वादश्यां पुरुषोत्तमः । त्रयोदश्यां सुता च स्याद्वर्णसंकरकारिणी । धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढव्रतः । प्रजायते चतुर्दश्यां गुणाढ्यो जगतः प्रभुः । राजपत्नी महाभागा सारा धनवती तु वा । जायते पंचदश्यां तु बहुपुत्रा पतिव्रता । विद्यालक्षणसंपन्नः सत्यवादी जितेंद्रियः । आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् । इति । विष्णुपुराणे—ऋतावुपगमः शस्तः स्वपत्न्यां मंत्रतो द्विज । इति । कश्यपः—षष्ठ्यष्टम्यौ पंचदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा । शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशांकार्यसितेंदुजानां । वसिष्ठः—

पौष्णद्वये पित्र्यभयाम्यसार्पविष्णुद्वये नैव न जन्मभेषु । उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने । उपप्लवे वैधृतिपातयोश्च विष्ट्यां दिवा पारिवपूर्वभागे । इति गर्भाधानकालः ।

**अथ पुंसवनकालः** । तत्र **याज्ञवल्क्यः**—पुंसः सवनं स्पंदनात्पुरेति प्राग्गर्भचलनात्पुंसवनं कार्यमित्यर्थः । **हेमाद्रौ यमः**—गृहीतगर्भायां प्रथमे मासि द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति । पुंनक्षत्राण्युक्तानि **रत्नकोशे**—हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरः पुष्यः । पुंसंज्ञितेषु कार्येष्वेतानि शुभानि धिष्ण्यानि । तत्रैव **बृहस्पतिः**—पुंसवनं स्पंदति शिशाविति । इति । पुंसवनकालः ।

**अथानवलोभनकालः** । **आश्वलायनगृह्यपरिशिष्टे**—चतुर्थेऽनवलोभनमिति । **हेमाद्रौ बैजवापगृह्यं**—अथ पुंसवनानवलोभने करोति मासि द्वितीये वा पुरा स्यंदतश्चापूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति । इति अनवलोभनकालः ।

**अथ सीमंतोन्नयनकालः** । तत्र **याज्ञवल्क्यः**—षष्ठेऽष्टमे वा मासि सीमंत इति । **हेमाद्रौ विष्णुः**—षष्ठेऽष्टमे वा मासि सीमंतोन्नयनं । **आश्वलायनगृह्ये**—चतुर्थे गर्भमासे सीमंतोन्नयनं षष्ठाष्टमयोर्वापूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति । **पराशरः**—आपूर्यमाणो मुख्यः स्यात्सर्वस्मिन्शुभकर्मणि । कृष्णो गौणो दशांतः स्यान्नागांतो व्रतबंधने । दशांतो दशम्यंतः । नागांतः पंचम्यंतः । पुंनक्षत्राणि पुंसवने दर्शितानि । **हेमाद्रौ शंखः**—गर्भस्पंदने सीमंतोन्नयनं यावद्वा प्रसव इति । **नारदीयसंहितायां**—बलोपपन्ने दंपत्योश्चंद्रताराबलान्विते । अरिक्तपर्वदिवसे कुजजीवार्कवासरे । तीक्ष्णमिश्रोग्रवर्जेषु भेषु पुंसंज्ञभांशके । स्त्रीणां तु प्रथमे गर्भे सीमंतोन्नयनं शुभं । **व्यासः**—पुरुषग्रहवाराः स्युः शुभाः सीमंतकर्मणि । मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ । पुंग्रहा सूर्यभौमार्याः स्त्रीग्रहौ शशिभार्गवौ । नपुंसकौ सौम्यसौरी शिरोमात्रं विधुंतुदः । इति । **बृहस्पतिः**—रोहिण्यामैंद्वादित्यपुष्यहस्तोत्तरादिषु । पौष्णवैष्णवयोश्चैव शुभं सीमंतकर्म च ।

सिहाली वर्जयेल्लग्न अष्टमवर्जितः । ग्रहशब्देनात्र चंद्रः क्रूरग्रहाश्च गृह्यंते । अतएव भारद्वाजः–व्रतबंधे च सीमंते जन्मन्यपि शुभग्रहाः । अष्टमचंद्ररहितास्तदायुर्वृद्धिरीरिता । इति । इदं सीमंतोन्नयनं स्त्रीसंस्कारत्वात्प्रथमगर्भ एव कार्यं । तथाच हारीतः–सकृत्संस्कृतसंस्काराः सीमंतेन द्विजस्त्रियः । यं यं गर्भं प्रसूयंते स सर्वः संस्कृतो भवेत् । यत्तु विष्णुः–सीमंतोन्नयनं कर्म न स्त्रीसंस्कार इष्यते । केचिद्गर्भस्य संस्कारात्प्रतिगर्भं प्रयुंजते । इति तत्कस्यांचिच्छाखायां कस्मिंश्चिद्देशे वा आचारस्तद्विषयं । अकृतसीमंतायाः प्रसवे त्वाह हेमाद्रौ सत्यव्रतः–स्त्री यदाऽकृतसीमंता प्रसूयेत कथंचन । गृहीतपुत्रा विधिवत्पुनःसंस्कारमर्हति । इति । इति सीमंतोन्नयनकालः ।

**अथ विष्णुपूजाकालः श्रीधरः**–रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ च । मध्ये चाह्नः पूर्वभागेन रात्रौ विष्णोः पूजां कारयेद्गर्भपुष्ट्यै । इति विष्णुपूजाकालः ।

**अथ जातकर्मकालः** । तत्र श्लोकविष्णुः–जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितं । यथोदितं स्वस्वगृह्योक्तं । ततः स्नानानंतरं । संवर्तः–जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । मनुः–प्राङ्नाभिच्छेदनात्पुंसो जातकर्म विधीयते । इति । हारीतः-प्राङ्नाभिच्छेदनात्संस्कारः पुण्यार्थान्कुर्वंति छिन्नायामाशौचमिति । बैजवापः–जन्मनोनंतरं कार्यं जातकर्म यथाविधि । दैवादतीतकालं चेदतीते सूतके भवेत् । इति । विष्णुधर्मोत्तरे–अच्छिन्ननाले कर्तव्यं श्राद्धं वै पुत्रजन्मनि । आशौचोपरमे कार्यमथवा नियतात्मभिः । इदं चाशौचमध्येपि कार्यं । तदाह प्रजापतिः–आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति । इति जातकर्मकालः ।

**अथ नामकरणकालः** । तत्र याज्ञवल्क्यः–अहन्येकादशे नामेति । शंखः–आशौचे तु व्यतिक्रांते नामकर्म विधीयते । बृहस्पतिः–दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे । षोडशैकोनविंशे वा द्वाविंशे वर्णतः क्रमात् । अत्र द्वादशाहे व्यतीते सतीति ज्ञेयम् । वचनांतरविरोधात् । गृह्यपरिशिष्टे–जनना-

द्वादशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणमिति । अत्राशौचांते नामकरणमिति मुख्यः कालः । तदसंभवे तूत्तरोत्तर इति ज्ञेयं । प्राप्तकालेपि व्यतीपातादीनां निषेधमाह गर्गः—व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि । श्राद्धं कुर्याच्छुभं नैव प्राप्तकालेपि मानवः । इति । नारदः—देशकालोपघाताद्यैः कालातिक्रमणं यदि । अनस्तगेज्ये च सिते तत्कार्यं चोत्तरायणे । चरस्थिरमृदुक्षिप्रनक्षत्रे शुभवासरे । चंद्रताराबलोपेते दिवसे च शिशोः पितुः । शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते । लग्ने त्वनैधने सौम्यैः संयुक्ते वा निरीक्षिते । इति । पितुरसंनिधानादौ अन्यो योग्यः कुर्यात् । तदाह हेमाद्रौ शंखः—कुलदेवतानक्षत्राभिसंबद्धं पिता कुर्यादन्यो वा कुलवृद्ध इति । वसिष्ठः—उत्तरारेवतीहस्तमूलतिष्याः सवारुणाः । श्रवणादितिमैत्रे च स्वाती मृगशिरस्तथा । प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि । पक्षच्छिद्रां च नवमीं पंचमीं चैव वर्जयेत् । शेषास्तु तिथयः सर्वाः प्रशस्ता नामकर्मणि । इति नामकरणकालः ।

अथ पर्यंकारोहणं । तत्र बृहस्पतिः—खट्वारोहस्तु कर्तव्यो दशमे द्वादशेपि वा । षोडशे दिवसे वापि द्वात्रिंशे दिवसेपि वा । इति । भविष्ये—अभीष्टे पुण्यदिवसे चंद्रताराबलान्विते । मृदुध्रुवक्षिप्रभेषु माता च कुलयोषितः । योगशायं हरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् । इति ।

अथ दुग्धपानं । श्रीधरीये—एकत्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले । शंखे क्षीरं संनिदध्याच्छिशूनां वक्त्रे धात्री पूज्यपूजां विधाय । इति दुग्धपानं ।

अथ निष्क्रमणं । हेमाद्रौ वाराहे—द्वादशेहनि कर्तव्यं शिशोर्निष्क्रमणं गृहात् । शंखलिखितौ—अत ऊर्ध्वं तृतीये मासि निष्क्रमणिका । याज्ञवल्क्यबृहस्पती—मासे चतुर्थे कर्तव्यं शिशोर्निष्क्रमणं गृहात् । तत्र किं कर्तव्यमित्याकांक्षायां लौगाक्षिः—तृतीये त्वर्धमासे दर्शनमादित्यस्य । यमः—चतुर्थे मासि कर्तव्यं शिशोश्चंद्रस्य दर्शनं । बृहस्पतिः—जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया । दिवसे शस्यते नित्यमायुर्वृद्धिधनप्रदा । अश्विनी रेवती हस्तो धनिष्ठा रोहिणी तथा । श्रवणं हस्तसंयुक्तं मृगेणोत्तरफल्गुनी । अनुराधोत्तराषाढा तथा चैव

पुनर्वसुः । इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ । मुहूर्तसंग्रहे—पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विना । रिक्तापष्ठ्यष्टमी दर्शो द्वादशी च विवर्जिताः । झषालिमेष-वर्ज्याः स्युस्तथैवाधोमुखानि च । केंद्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः । उपक्रमेण शस्ताः स्युर्मातुलो वाह-येच्छिशुं । अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियां । इति निष्क्रमणकालः ।

**अथ भूम्युपवेशनकालः ।** पंचमे च तथा मासे भूमौ तमुपवेशयेत् । तत्र सर्वे ग्रहाः श्रेष्ठा भौमो राम विशेषतः । तिथिं विवर्जयेद्रिक्तां शस्तानि शृणु भानि मे । उत्तरा-त्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतं । प्राजापत्यं च हस्तश्च शस्तम-श्विभमित्रभं । इति ।

**अथ कर्णवेधकालः ।** तत्र **वसिष्ठः**—मासे षष्ठे सप्तमे वाष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेह्नि । मध्ये वाह्नः पूर्वभागे न रात्रौ नक्षत्रे द्वे द्वे तिथी वर्जयित्वा । इति । यस्मिन्दिने नक्षत्रद्वयं तिथिद्वयं वा तद्दिनं वर्जयेदित्यर्थः । **व्यासः**—कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेपि वा । कर्ण-वेधं प्रशंसंति शुक्लपक्षे शुभे दिने । दिनच्छिद्रव्यतीपातविष्टि-वैधृतिवर्जिते । शिशोरजातदंतस्य मातुरुत्संगसर्पिणः । सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रतः । **बृहस्पतिः**—द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी । द्वादशी पंचमी शस्ता तृतीया कर्णवेधने । भूमिजार्कात्मजार्काणां दिवसान्परिवर्जयेत् । **कश्यपः**—हस्ताश्विनी स्वातिपुनर्वसू च चित्रेंदुतिष्ये श्रवणे च पौष्णे । चंद्रेनुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमरेज्यलग्ने । **वसिष्ठः**—न कश्चिदिष्टोष्टमराशिसंस्थस्तिथिद्वयं चावमसंज्ञकं च । न तत्र कुर्याद्दिवसे विशेषाद्रात्रौ न कुर्यात्खलु कर्णवेधं । सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः । शूद्रस्य चायसी सूची मध्यमाष्टांगुलात्मिका । इति । संपूज्य देवदेवेंद्रं भिषजां श्रेष्ठमेव च । विदुषो ब्राह्मणांश्चैव कर्मकारं तथैव च । इति । इति कर्णवेधकालः ।

अष्टमे वाथ कर्तव्यं यथेष्टं मंगलं कुले । **लौगाक्षिः**—षष्ठे मास्यन्नप्राशनं जातेषु दंतेषु वेति । **नारदीयसंहितायां**—षष्ठे मास्यष्टमे वाथ पुंसां स्त्रीणां तु पंचमे । सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् । **वृद्धगार्ग्यः**—षष्ठे मासि तु कुर्वीत बालस्यैवान्नभोजनम् । तदभावेष्टमे वापि कुर्यात्संवत्सरेपि वा । इति । **नारदः**—रिक्तां दिनक्षयं नंदां द्वादशीमष्टमीममाम् । त्यक्त्वान्यतिथयः श्रेष्ठाः प्राशने शुभवासराः । **श्रीधरीये**—आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तरपौष्णमित्राः । बालान्नभोजनविधौ दशमे विशुद्धे छिद्रां विहाय नवमीं तिथयः शुभाः स्युः । वारांशकाश्च गुरुशुक्रशशींदुजानां मेषालिमीनरहितानि हितानि भानि । भुक्तौ शिशोः शुभकराः परिहृत्य सौम्यं भौमं सितं नवमनैधनसप्तमेषु । इति । **नारदः**—पट्टबंधनचौलान्नप्राशने चोपनायने । शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि । **वसिष्ठः**—शुभग्रहाणां भवने विलग्ने तदंशके पूर्वदले दिनस्य । न नैधने कर्मविशुद्धियुक्ते दोषैर्विहीने शुभदृष्टियुक्ते । नोत्पातपापग्रहदूषितर्क्षे वैनाशिताख्यर्क्षविवर्जिते च । इत्यन्नप्राशनकालः ।

**अथ चूडाकर्मकालः** । तत्राश्वलायनः—उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः । इति । तृतीये वर्षे चौलं यथाकुलधर्मं वा । इति । **यमः**—ततः संवत्सरे पूर्णे चूडाकर्म विधीयते । द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात् । **शंखलिखितौ**—तृतीये वर्षे चूडाकरणं पंचमे वेति । **बृहस्पतिः**—तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः । पंचमे सप्तमे वापि स्त्रियाः पुंसोऽपि वा समम् । इति । **हेमाद्रौ व्यासः**—आश्विनं श्रवणं स्वातिचित्रापुष्यपुनर्वसु । धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् । **ज्योतिर्ग्रंथे**—वारनक्षत्रयोगेषु शुभेषु करणेषु च । हस्तत्रयं मृगशिरः श्रवणत्रयं च पुष्याश्विनी च शुभभानि पुनर्वसौ च । क्षौरे तु कर्मणि हितान्युदयेक्षणे च शुक्लानि चोडुपतिना यदि शस्ततारा । **अत्रिः**—अब्दायनर्तुमासांते वर्षांते च दिनक्षये । कृष्णपक्षे कृते क्षौरे देहारोग्यं न विद्यते । **बृहस्पतिः**—द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदं तथा । हित्वा शेषासु

तिथिषु चौलकर्म शुभावहम् । **नारदः**—सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पंचाब्दावागथोर्ध्वं तु गर्भिण्यामपि कारयेत् । इदं जन्ममासे न कर्तव्यं । यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुतेतिमोहात् । इति **व्यासे**नाभिधानात् । इति चूडाकर्मकालः ।

**अथाक्षरारंभकालः** । तत्र **हेमाद्रौ मार्कंडेयः**—प्राप्ते तु पंचमे वर्षे ह्यप्रसुप्ते जनार्दने । षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् । रिक्तां पंचदशीं चैव सौरिभौमदिनं तथा । एवं सुनिश्चिते काले विद्यारंभं तु कारयेत् । पूजयित्वा हरिं लक्ष्मीं देवीं चापि सरस्वतीम् । स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः । एतेषामपि देवानां नाम्ना वै जुहुयाद्धृतं । दक्षिणाभिर्द्विजेंद्राणां कर्तव्यं चात्र पूजनं । प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् । अध्यापयीत प्रथमं द्विजाशीर्भिः प्रपूजितम् । इत्यक्षरस्वीकारकालः ।

**अथोपनयनकालः** । तत्र **याज्ञवल्क्यः**—गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः । इति । काम्यकालमा**हांगिराः**—ब्रह्मवर्चसकामस्य पंचमेब्देऽग्रजन्मनः । आयुःकामस्य नवमे कार्यं मौंजीनिबंधनम् । षष्ठे च द्वादशे राज्ञो वृद्धिमिच्छोर्बलायुषोः । धनायुषोस्तु वैश्यस्य अष्टमे च चतुर्दशे । इति । **विष्णुः**—षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे । अष्टमे सर्वकामस्य नवमे कांतिमिच्छतः । **आपस्तंबः**—सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इंद्रियकामं द्वादशे पशुकाममुपनयेदिति । गौणकालावधिमाह **याज्ञवल्क्यः**—आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् । ब्रह्मक्षत्रविशां काल औपनायनिकः परः । अत ऊर्ध्वं पतंत्येते सर्वधर्मबहिष्कृताः । सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतौ । इति । **आश्वलायनः**—अष्टमे वर्षे ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशे क्षत्रियं द्वादशे वैश्यमाषोडशाद्ब्राह्मणस्यानतीतः काल आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्येति, उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः इति च । **वृद्धगार्ग्यः**—माघादिमासषट्के तु मेखलाबंधनं मतम् । इति । **नारदः**—दृश्य-

माने गुरौ शुक्रे शाखेशे चोत्तरायणे । शाखेशो वेदाधिपे । वेदाधिपानाह स एव–वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात् । क्रमादृग्वेदादिक्रमात् । हेमाद्रौ ज्योतिषे–गुरुर्भृगुसुतो धात्रीपुत्रः शशधरात्मजः । स्युरेते ऋग्यजुःसामाथर्वणामधिपाः क्रमात् । इति । गार्ग्यः–विप्रं वसंते क्षितिपं निदाघे वैश्यं घनांते व्रतिनं विदध्यात् । माघादिशुक्लादिकपंचमासाः साधारणा वा सकलद्विजानां । रत्नकोशे–ज्येष्ठे मासि विशेषेण सर्वज्येष्ठस्य चैव हि । उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव वा । जन्मोदये जन्मसु तारकासु मासेथवा जन्मनि जन्मचंद्रे । व्रतेन विप्रो न बहुश्रुतोपि प्रज्ञाविशेषप्रथितः पृथिव्यां । गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबंधनेन । ततोऽधिकं जन्मसु तारकासु मासेथवा जन्मनि बालकानां । गर्गस्तु जन्ममासनिषेधमाह–विवाहे मेखलाबंधे जन्ममासं विवर्जयेत् । इति । राजमार्तंडे–जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः । जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासे । पराशरः–आपूर्यमाणो मुख्यः स्यात्सर्वस्मिन्शुभकर्मणि । कृष्णो गौणो दशांतः स्यात्त्रागांतो व्रतबंधने । बृहस्पतिः–द्वितीया पंचमी षष्ठी सप्तमी दशमी तथा । त्रयोदशी तृतीया च शुक्ले श्रेष्ठा प्रकीर्तिता । द्वादश्येकादशी चैव मध्यमास्तिथयस्तथा । कृष्णे पंच प्रशंसंति तिथयश्चोपनायने । कृष्णे च प्रथमाः पूज्याः कदाचिच्छुभगे तिथौ । प्रथमाः पंचमीपर्यंताः । नारदः–शुक्लपक्षे द्वितीया च तृतीया पंचमी तथा । त्रयोदशी च दशमी सप्तमी व्रतबंधने । श्रेष्ठास्त्वेकादशीषष्ठीद्वादश्यस्तु हि मध्यमाः । एकां चतुर्थीं संत्यज्य कृष्णपक्षे तु मध्यमां । आपंचम्यस्तु तिथयः परास्तु अतिनिंदिताः । व्यासः–या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यपि फाल्गुनस्य । कृष्णे तृतीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनींद्रमुख्यैः । नारदः–विनर्तुना वसंतेन कृष्णपक्षे गलग्रहे । अपराह्णे चोपनीतः पुनःसंस्कारमर्हति । कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयं । त्रयोदशीचतुष्कं च अष्टावेते गलग्रहाः । मानवीयसंहितायां–सर्वदेशेषु पूर्वाह्णे मुख्यं स्याच्चोपनायनं । मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितं । पापां-

शकगते चंद्रे अरिनीचस्थितेऽपि वा । अनध्याये चोपनीतः पुनःसंस्कारमर्हति । बृहस्पतिः–पापग्रहाणां वाराः स्युर्न शुभाश्चंद्रवासरः । सिते पक्षे प्रशस्तः स्यात्कृष्णे वारो विधोर्नहि । शुभो बुधो नास्तमितः पापग्रहयुतो न च । नारदः–शाखाधिपतिवारश्च शाखाधिपबलं तथा । शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते । अत्रिः–पराजिते च नीचस्थे नीचे शुक्रे गुरौ तथा । व्रतिनं यदि कुर्वीत स भवेद्वेदवर्जितः । वृद्धगार्ग्यः–शाखाधिपे बलिनि केंद्रगते च मौंजीबंधस्तदीयदिवसेषु सुखाप्तये च । इति । पराशरः–पती सितेज्यौ विप्राणां नृपाणां कुजभास्करौ । वैश्यानां शशभृत्सौम्याविति वर्णाधिपाः स्मृताः । सदानुकूले चैकस्मिन्वर्णेशे बलशालिनि । ब्राह्मणादेः प्रकुर्वीत कुमारं व्रतचारिणम् । राजमार्तंडः–नष्टे शुक्रेऽथवा जीवे निरंशे चैव भास्करे । उपनीतस्य शिष्यस्य जडत्वं मृत्युरेव वा । त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं ह्यौपनायनम् । वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । अश्विन्यां षड्सुभेषूक्तं मध्यमं व्रतबंधनम् । शेषेषु वर्जयेद्विद्वान्द्विजातेरौपनायनम् । नारदः–श्रेष्ठान्यर्कत्रयांत्येज्यचंद्रादित्युत्तराणि च । विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने । जन्मभाद्दशमं कर्म संघातर्क्षं च षोडशम् । अष्टादशं सामुदायं त्रयोविंशं विनाशभम् । मानसं पंचविंशर्क्षं नाचरेच्छुभभेषु तु । ज्योतिर्निबंधे–मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा । ऋग्वेदाध्यायिनां कार्यं मेखलाबंधनं वटोः । पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशांकभे । ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौंजिबंधनम् । पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं मेखलाबंधे बटूनां सामगायिनाम् । मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् । अथर्वपाठिनां शस्तो भगणोऽयं व्रतार्पणे । ब्राह्मणस्य पुनर्वसुनिषेधो राजमार्तण्डे–ताराचंद्रानुकूलेषु ग्रहाद्येषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति । वसिष्ठः–पापग्रहेक्षिते लग्ने मौढ्ये च गुरुशुक्रयोः । ऋत्वंते चैव मासांते तिथ्यंते विषनाडिषु । नक्षत्रांते च विष्ट्यां च षडशीतिमुखे तथा । दिनक्षये व्यतीपाते सग्रहे ग्रहपीडिते । शून्यमासदिने राशौ ग्रहदोषसमन्विते । कालकर्णिकलौ वज्रे विष्कंभे परिघे तथा ।

मूले च वैधृतौ चैव कंटके स्थूलकंटके । अष्टम्यां चैव रिक्तायां सर्वोत्पातादिदूषिते । उक्तादन्यर्क्षसंयोगे चंद्रे गंडातिगंडयोः । उडुपक्षीणकाले च वर्जयेदुपनायनम् । इति । लल्लः—व्रताह्नि पूर्वसंध्यायां वारिदो यदि गर्जति । तद्दिनं स्यादनध्यायो व्रतं तत्र विवर्जयेत् । बृहस्पतिः—व्याघातं परिघं वज्रं व्यतीपातं च वैधृतिम् । गंडातिगंडशूलं च विष्कंभं चैव वर्जयेत् । अन्ये विशेषा ज्योतिःशास्त्रादवगंतव्याः । इत्युपनयनकालः ।

अथवेदाद्यारंभकालः । तत्र वसिष्ठः—रिक्ताष्टमी पंचदशी निषिद्धा त्रयोदशी सप्तमिका च मध्या । विद्यागमे वित्सितमंत्रिणां स्युर्वाराः शुभा मध्यम इंदुभान्वोः । हस्ताश्वयुक्श्रवणतिष्यसमीरमित्रचित्रादितेयपुरजिन्मृगलांछनेषु । शस्तोत्तरासलिलसंभवपौष्णभेषु सिद्ध्यैश्रुतिस्मृतिसमावगतिर्द्विजानाम् । विद्यारंभे द्विस्वभावा विशिष्टा मध्याः प्रोक्ता ये चरा राशयश्च । पुराणाद्यारंभे स एवाह—हस्तादिपंचाश्विमृगेज्यपूषा ब्रह्मा च विश्वत्रितयं च ताराः । पुराणधर्मश्रुतिशास्त्रविद्याव्रतादिकानां शुभदा भवंति । शब्दशास्त्रारंभे—अश्विनी रोहिणी सौम्यं पुष्यं हस्तादिपंचकम् । अदितिर्दश ताराः स्युः शब्दशास्त्रे सुपूजिताः । गणितारंभे—गणिते रेवतीहस्तमैत्रतिष्यार्द्रवासवाः । ज्योतिःशास्त्रनिमित्ते च रोहिणीवारुणे शुभे । आदित्यं वैष्णवं स्वाती पुष्यहस्ताश्विवारुणाः । त्र्युत्तरा रोहिणी चैव सर्वशास्त्रेषु पूजिताः । अष्टमस्था ग्रहाः सर्वे सर्वविद्यासु वर्जिताः । इति वेदाद्यारंभकालः ।

अथ ब्रह्मचारिव्रतारंभकालः । तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् । चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च । इति व्रतारंभकालः ।

अथानध्यायाः । तत्रानध्यायाध्ययने दोषमाह हेमाद्रौ लिखितः—छिद्राण्येतानि विप्राणामनध्यायाः प्रकीर्तिताः । छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितम् । तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशो बलम् । सर्वमादाय गच्छंति वर्जयंतीप्सितं फलम् । हारीतः—छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः । हिंसंति राक्षसास्तेषु तस्मादेतान्विवर्जयेत् । विष्णुः—

१ 'द्विषंति'.

यस्मादनध्यायाधीतवेदो नामुत्रफलदस्तत्राध्ययनेनायुषः परिक्षयो गुरुशिष्ययोश्च तस्मादनध्यायान्वर्जयेत्। तत्रेन्द्रनारदसंवादे—अनध्यायेष्वधीयानान्शक्र किं न हनिष्यसि । असुरास्ते दुरात्मानो ब्रह्मघ्ना ब्रह्मदूषकाः । अनध्यायेष्वधीयंते न ते यांति स्ववैदिकम् । मृताः स्वर्गं न गच्छंति किं नारद न ते हताः । यमः—अनध्यायेष्वधीयंते प्रज्ञामायुः प्रजां स्त्रियः । ब्रह्म वीर्यं श्रियं तेजो निकृंतति यमः स्वयम् । मंत्रवीर्यक्षयभयादिंद्रो वज्रेण हंति च । ब्रह्मराक्षसतां यांति नरत्वं न शुभं भवेत् । आयुरस्य निकृंतामि प्रजां मेधां हराम्यहं । य उच्छिष्टः प्रवदति स्वाध्यायान्वाप्यधीयते । अष्टमी हंत्युपाध्यायं शिष्यं हंति चतुर्दशी । हंति पंचदशी मेधां तस्मात्सर्वाणि वर्जयेत् । मनुः—अमावास्या गुरुं हंति शिष्यं हंति चतुर्दशी। ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत्। ब्रह्म वेदः । रामायणे रामं प्रति हनुमद्वचः—सा स्वभावेन तन्वंगी त्वद्वियोगाच्च कर्शिता । प्रतिपत्पाठशीलस्य विद्येव तनुतां गता। इति । हारीतः—प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः। श्वोऽनध्यायेऽद्यशार्वर्यां नाधीयीत कदाचन । हेमाद्रौ स्मृत्यंतरं—एकानध्याययुग्मे त्वपररात्रापररात्रे नानध्यायः। अनध्याययुग्मपूर्वदिनापररात्रे चेत्येके । उदयेऽस्तमये वापि मुहूर्तत्रयगामि यत् । भेदितं तदहोरात्रमनध्यायविदो विदुः । केचिदाहुः क्वचिद्देशे यावद्भेदितनाडिकाः। तावदेव त्वनध्यायो न तन्मिश्रदिनांतरे । इति । उशना—अयने विषुवे चैव शयने बोधने तथा । अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु । मन्वादयः पूर्वमुदाहृताः । याज्ञवल्क्यः—त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबंधुषु । उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते । संध्यागर्जितनिर्घातभूकंपोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च । पंचदश्यां चतुर्दश्यामष्टम्यां राहुसूतके । ऋतुसंधिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च । पशुमंडूकनकुलश्वाहिमार्जारमूषकैः । कृतेंतरे त्वहोरात्रं शुक्रपाते तथोच्छ्रये । संध्यागर्जिते अहोरात्रमनध्यायः । प्रातःसंध्यायामेव । सायंसंध्यागर्जिते तु रात्रावेव। तदाह हारीतः—सायंसंध्यास्तनिते रात्रिः प्रातःसंध्यायामहोरात्रमिति । राहुसूतकं ग्रहणम्। तत्र आकालिकाहोरात्रत्रिरात्राणां विकल्पः।

आकालिका निर्घातभूकंपराहुदर्शनोल्कापाता इति । निमित्
लादारभ्य परेद्युस्तत्कालपर्यंतमाकालिकः । इति गौतमेना
लिकस्य, प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् । त्र्यः
कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके । इति मनुना त्रिरात्रस्यं
त्वात् । निकेतनं निमंत्रणम् । तत्र एकोद्दिष्टे त्रिरात्रविधानात्
रात्रं प्रत्याब्दिकादिविषयं । रत्नावल्यां—अनुराधर्क्षमारभ्य
शर्क्षेषु भास्करः । यावच्चरति वै तावदकालं मुनयो वि
विद्युद्गर्जितवृष्टीनां संनिपातो यदा भवेत् । स्वकालवृष्टौ त
लमकाले तु त्रिरात्रकं । अतिमात्राथवा वृष्टिर्नाधीयीत दिनः
द्वयोस्तु द्विदिनं प्रोक्तं वृष्टिमात्रे दिनं स्मृतं । यदि वर्षेष्वनध
तेनैव सह गच्छति । मेषे च वृषभे चैव तृणाग्रात्स्रवते ज
अत ऊर्ध्वं त्रिपादेषु तृणप्रच्यवनं स्मृतं । एतदाकालिकं वि
च्छेषं तात्कालिकं विदुः । नृसिंहपुराणे—महानवम्यां द्वाद
भरण्यामपि चैव हि । तथाक्षय्यतृतीयायां शिष्यान्नाध्या
त्कचित् । माघमासे च सप्तम्यां रथाख्यायां विवर्जयेत् ।
ध्यायमथाभ्यक्तः स्नानकाले च वर्जयेत् । द्वादश्याषाढकार्ति
शुक्लद्वादशी । भरणी पितृपक्षगता महाभरणी । अतएव हेम
स्मृत्यंतरं—भाद्रपदे मघाभरण्योरनध्यायः । शयनोत्थान
द्वादश्योः । आषाढीकार्तिकीफाल्गुनीसमीपस्थद्वितीयायां चे
नारदीये—महाभरण्यां विप्रेंद्र श्रवणद्वादशीदिने । भाद्रप
रपक्षद्वितीयायां च गर्जिते । ब्रह्मांडपुराणे—रात्रौ यामद्व
दर्वाग्यदि पश्येत्त्रयोदशीं । प्रदोषः स तु विज्ञेयः सर्वस्वाध्य
वर्जितः । षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका । प्रदोषे
त्वधीयीत तृतीया नवनाडिका । हेमाद्रौ—मेधाकामस्त्रयोद
चतुर्थ्यां चैव सर्वदा । सप्तम्यां च प्रदोषे तु न स्मरेन्नापि कं
येत् । चतुर्थ्याः पूर्वरात्रे तु नवनाडिषु दर्शने । नाध्येयं
रात्रे स्यात्सप्तमी च त्रयोदशी । इति । अष्टमी हंत्युपाध्यायं शि
हंति चतुर्दशी । अमावास्योभयं हंति प्रतिपत्पाठनाशिनी
अष्टकास्तु समाख्याता सप्तम्यादिदिनत्रयम् । शास्त्रं तु तत्र
ध्येयं व्रतबंधं च वर्जयेत् । नारदीये—अयने विषुवे चैव श
बोधने हरेः । अनध्यायस्तु कर्तव्यो या च सोपपदा तिथि
सिता ज्येष्ठे द्वितीया तु आश्विने दशमी सिता । चतुर्थी द्वाद

माघे एताः सोपपदाः स्मृताः । हेमाद्रौ स्मृत्यंतरं—निशाद्वयं दिवारात्रौ संक्रमे वासरद्वयं । अनध्यायं प्रकुर्वीत अयने विषुवे तथा । दिवा अयने विषुवे च संक्रमे पूर्वा उत्तरा च रात्रिः । रात्रौ संक्रमे पूर्वदिने उत्तरदिने चेत्यर्थः । त्रिरात्रमित्यनुवृत्तौ गौतमः—वर्षाविद्युत्स्तनितसंनिपात इति तद्वर्षाकालादन्यत्र । अतएव आपस्तंबः—विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुस्तत्र त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके एकेन द्वाभ्यां चैतेषामाकालम् । मनुः—विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीत् । एतेषु विद्युदादिषु । प्रत्येकमाकालिकं । तदपि वर्षाकालादन्यत्र । स एव—चौरैरुपप्लुते ग्रामे संभ्रासे चाग्निकारिते । आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च । इति । निर्घाते भूमिचलने ज्योतिषां चोपसर्जने । एतानाकालिकान्विद्यादनध्यायानृतावपि । निर्घातोऽन्तरिक्षे ध्वनिविशेषः । उपसर्जनं सूर्याचंद्रमसोः परिवेषो ग्रहयुद्धादि वेति हेमाद्रिः । चंडालादिव्यवाये षण्मासमनध्यायमाह आपस्तंबः—चंडालश्वपाकशशस्य । षण्मासानध्याय इत्यनुवर्तते । हस्तिव्याघ्रयोस्त्वंतरागमने संवत्सरमनध्याय इत्याह स एव—यदि हस्ती संवत्सरं व्याघ्रे तथैवेति । मनुः—पशुमंडूकमार्जारश्वसर्पनकुलाखुभिः । अंतरा गमने विद्यादनध्यायमहर्निशम् । हेमाद्रौ स्मृत्यंतरं—सर्वकुत्सितगंधे च परिखाते सभासु च । अभ्यंगे स्नानकाले च महावेदेतिकंपने । गोविप्ररोदने सर्वरात्रिषु श्राद्धपंक्तिषु । शाल्मलस्य मधूकस्य कोविदारकपित्थयोः । श्लेष्मातकस्य छायायामिति तात्कालिकान्विदुः । याज्ञवल्क्यः—श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिःस्वने । अमेध्यशवशूद्रांत्यश्मशानपतितांतिके । देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्त्वार्द्रपाणिरंभोन्तरर्धरात्रेऽतिमारुते । पांसुवर्षे दिशां दाहे संध्यानीहारभीतिषु । धावतः पूतिगंधे च शिष्टे च गृहमागते । खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे । सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः । श्वादीनां शब्दे श्रूयमाणे तावत्कालमनध्यायः । क्रोष्टा गोमायुः । मनुरपि—सामध्वनौ ऋग्यजुषी नाधीयीत कदाचन । अत्र हेतुमाह—ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः । सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः । इदं निंदार्थवादमात्रम् । ऋग्वेदा-

दिनिस्वने साम्नामनध्यायः। तदाहापस्तंबः—शाखांतरध्वनौ च साम्नामनध्याय इति। वाणो वीणाविशेषः। स च वेण्वादीनामुपलक्षकः। तथाच गौतमः—वेणुवीणाभेरीमृदंगगर्दार्तशब्देष्विति। गर्दः शकटं। आर्तो दुःखी। विद्युत्स्तनितसंप्लवे अनुवृत्तौ। यानं रथादि। इरिणमूखरं। बौधायनः—नृत्यगीतवादित्ररुदितशब्देषु तावंतं कालमिति। शंखः—नाधीयीताभियुक्तोऽपि यानगो नच गोगतः। देवायतनवल्मीकश्मशानवनसंनिधौ। मनुः—शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्। नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च। इति। अवसक्थिका वस्त्रादिना कटिजानुवेष्टनं। ब्रह्मयज्ञादौ तु नानध्याय इति स एवाह—वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके। नानुरोधोऽस्त्यनध्याये होममंत्रेषु चैव हि। वेदोपाकरणं उपक्रियतेऽनेनेति व्युत्पत्त्या व्याकरणाद्यंगम्। नैत्यकः स्वाध्यायो ब्रह्मयज्ञः। होममंत्रग्रहणं होमकालीनस्तोत्रशस्त्रादिमंत्रोपलक्षणार्थम्। अतएव शौनकः—नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च। नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे तु सः। इति। अत एव मनुः—इमान्नित्यमनध्यायानधीयानो विवर्जयेत्। अध्यापनं च कुर्वाणः शिष्याणां विधिपूर्वकम्। चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा। दुर्मेधसामनध्यायास्त्वंतरागमनेषु च। तत्र विस्मृतिशीलानां बहुवेदप्रपाठिनाम्। चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु च। वेदांगन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत्। इत्यनध्यायाः।

अथ केशांतकर्मकालः। तत्र याज्ञवल्क्यः—केशांतश्चैव षोडश इति। केशांतो गोदानाख्यं कर्म। मनुः—केशांतः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबंधोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः। हेमाद्रौ ज्योतिःशास्त्रे—यान्युक्तानि क्षौरेषु भानि तान्येव चूडाकरणे उपनयने गोदाने केशांते च शस्तानि तानि। इति गोदानाख्यकर्मकालः।

याज्ञवल्क्यः—प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पंच वा। ग्रहणांतिकमित्येके। इति। आश्वलायनः—द्वादशवर्षाणि वेदब्रह्मचर्यं ग्रहणांतं वेति। इति ब्रह्मचर्यकालः।

अथ समावर्तनकालः। तत्र दक्षः—स्वीकरोति यदा

भवेत् । वेदग्रहणं वेदार्थस्याप्युपलक्षणम् । तथाच हेमाद्रौ व्यासः—न वेदपाठमात्रेण संतोषं कारयेद्गुरुम् । पाठमात्रावसानस्तु पंके गौरिव सीदति । यथा पशुर्भारहारी न तस्य लभते फलम् । द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते । वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य वापि यत् । अजानतोऽर्थं तत्सर्वं तुषाणां कंडनं यथा । योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत् । स सान्वयः पशुसमः पात्रतां न प्रपद्यते । अधीत्य यत्किंचिदपि वेदार्थाधिगमे रतः । स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानसिद्धितः । पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् । पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् । ऋक्पादमप्यधीत्यातो न्यायतस्तु तदर्थवित् । सम्यक् व्रतानि संसेव्य समावर्तनमर्हति । अशक्तौ आह याज्ञवल्क्यः—गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा । इति । नारदः—अथोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः । द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम् । रत्नसंग्रहे—वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणीगोविंदेषु शशांकभानुगुरुविच्छुक्रांशवारादिषु । रिक्तां पर्व तथाष्टमीं प्रतिपदं मेषं च कीटं हरिं हित्वा शुद्धियुतेऽष्टमेऽह्नि विमले कुर्यात्समावर्तनम् । इति समावर्तनकालः ।

अथ क्षत्रियस्य छुरिकाबंधनकालः । तत्र नारदः—छुरिकाबंधनं वक्ष्ये नृपाणां प्राक्करग्रहात् । विवाहोक्तेषु मासेषु शुक्लपक्षेष्वनस्तगे । जीवे शुक्रे च भूपुत्रे चंद्रताराबलान्विते । मौंजीबंधर्क्षतिथिषु कुजवर्जितवासरे । छुरिकाबंधनं कार्यमर्चयित्वामरान्पितॄन् । इति छुरिकाबंधनकालः ।

अथ विवाहकालः । तत्र चतुर्णामाश्रमाणां समुच्चयमाह मनुः—ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः । गृहस्थप्रभवाः तदुपजीविनः । विकल्पमाह हेमाद्रौ उशना—आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं । आविमोकाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि । इति । बृहस्पतिः—वेदानधीत्य विधिना समावृत्तोऽच्युतव्रतः । समानामुद्वहेत्पत्नीं यशःशीलवयोगुणैः । वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् । सदृशानाहरे-

द्वारान्मतापितृमते[1] स्थितः। विवाहे वर्षमाह नारदः—युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनं। एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः। संवर्तः—अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता। वृषली रजस्वला। यमः—तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्। यत्तु वचनं—काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि। नत्वेवैतां पिता दद्यात्कुलहीनाय कर्हिचित्। इति। तत्कुलहीननिंदापरं। अतएवाश्वलायनः—कुलमग्रे परीक्षेतेति। मासफलमाह व्यासः—माघमासे भवेदूढा कन्या सौभाग्यसंयुता। फाल्गुनोढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत्। धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्तिके भवेत्। वरपूजारता नित्यं मासे स्यात्सोमदैवते। सोमदैवते मार्गशीर्षे। उक्तवर्जमथान्येषु मासेषु प्राप्नुयाद्यदि। विवाहं कन्यका सा स्यात्सुतशीलार्थवर्जिता। नारदः—माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः। मध्यमः कार्तिको मार्गशीर्षो वै निंदिताः परे। रत्नमालायां—नाषाढप्रभृतिचतुष्टये विवाहो नो पौषे नच मधुसंज्ञके विधेयः। इति। भरद्वाजः—माघफाल्गुनवैशाखज्येष्ठाषाढमृगाह्वयाः। षडेते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यशः। इति। अत्र विहितनिषिद्धाषाढादीनां देशभेदेन व्यवस्थेति केचित्। वस्तुतस्तु पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात्। प्रशस्तमाषाढकृतं विवाहं वदंति गर्गा मिथुनस्थितेऽर्के। इति वसिष्ठेन मकरार्कादियोगेनैव प्राशस्त्याभिधानात्। अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु। संक्रांतिपौर्णमासीभ्यां स्यातां क्षत्रियवैश्ययोः। इति वचनात्पौषचैत्राषाढाः क्षत्रियाणामेव युक्ता इति बोध्यम्। यत्तु—सार्वकालिकमिच्छंति विवाहं गौतमादयः इति तदधर्म्यविवाहविषयम्। धर्म्येष्वेव विवाहेषु कालाकालपरीक्षणं नाधर्म्येष्विति गृह्यपरिशिष्टात्। अत्यासन्नऋतुकालकन्याविषयं वेति केचित्। शुक्लपक्षं प्रशंसंति विशेषेणोत्तरायणम्। हेमाद्रौ वसिष्ठः—आपूर्यमाणपक्षे च विवाहो ब्राह्मणस्य तु। इतरेषां तु वर्णानां कृष्णपक्षे विधीयते। लल्लः—प्रतिपद्दुःखजननी द्वितीया प्रीतिवर्धिनी। सौभाग्यदा तृतीया स्याच्चतुर्थी चार्थनाशिनी। पंचम्यां सुखवित्तानि षष्ठी

1 'मते स्थितः'

विघ्नप्रदायिनी । विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाष्टमी । नवमी शोकफलदा चानंदो दशमीदिने । दुःखदैकादशी ज्ञेया कुफला द्वादशी स्मृता । मानपुत्रौ त्रयोदश्यां चतुर्दश्यौ तु दुःखदे । फलं बहुविधं नित्यं पंचदश्यां विशेषतः । पंचदशी पूर्णिमा । अत्रापि कृष्णपक्षस्य दशमीमविवाहिकाम् । वदंत्यन्ये तु दशमीमुभयोरविवाहिकाम् । गुरुशुक्रेन्दुपुत्राणां दिनेषु परिणीयते । या कन्या सा भवेन्नित्यं भर्तुश्चित्तानुवर्तिनी । अर्कार्किभौमवाराणां दिनेषु कलहप्रिया । सापत्न्यं समवाप्नोति तुषारकरवासरे । क्षीणेंदुः कुलनाशाय स्त्रीविनाशाय भार्गवः । जीवः पुरुषनाशाय यदि पाणिग्रहो भवेत् । लल्लः—बृहस्पतौ शोभनगोचरस्थे विवाहमिच्छंति हि दाक्षिणात्याः । रवौ शुभस्थे प्रवदंति गौडा न गोचरा मालवके प्रमाणम् । गर्गः—चंद्रताराबलं मुख्यं दंपत्योः पाणिपीडने । मुख्यं गुरुबलं वध्वा वरस्येष्टं रवेर्बलम् । ज्योतिर्निबंधे—द्विपंचसप्तनंदेशस्थितो जीवः शुभप्रदः । द्विजानां मेखलाबंधे कन्यायाश्च करग्रहे । जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः । विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः । वसिष्ठः—तिस्रोत्तरा मूलमघांत्यमैत्रप्राजेशचंद्रार्कसमीरणेषु । सदा प्रशस्तः खलु कन्यकानां पाणिग्रहो वेधविवर्जितेषु । वैधृतके परिणीता कन्या विकलेंद्रिया व्यतीपाते । विष्ट्यां मरणं नित्यं सुभगा षट्स्वपि च करणेषु । लग्नादिविशेषो ज्योतिःशास्त्रादवगंतव्यः । इति विवाहकालः ।

**अथ विवाहाद्युपयोगिनिरूपणम्** । तत्र वृद्धगार्ग्यः—मीने धनुषि सिंहे च स्थिते सप्ततुरंगमे । क्षौरमत्र न कर्तव्यं विवाहं गृहकर्म च । वसिष्ठः—आर्द्रादिके स्वातिविरामकाले नक्षत्रवृंदे दशके स्थितेऽर्के । विवाहचौलव्रतबंधदीक्षासुरप्रतिष्ठादि न कार्यमेव । वृत्तशते—न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीनदिने विदध्यात् । ज्येष्ठे न मासि प्रथमस्य सूनोस्तथा सुताया अपि मंगलानि । नारदः—न जन्ममासे जन्मर्क्षे न जन्मदिवसे तथा । आद्यगर्भसुतस्याद्यदुहितुर्वा करग्रहः । यानि तु—विवाहश्च कुमारीणां जन्ममासे प्रशस्यते । इति । पूजा मंगलवस्त्राणि विवाहो वास्तुसंग्रहः । जन्ममासे च कर्तव्यं क्षौराध्वानं(नौ) तु वर्जयेत् । इत्यादिवचनानि तानि द्वितीयादिगर्भो-

त्यक्षापव्यविषयाणि । पराशरः—अज्येष्ठा कन्यका यत्र ज्येष्ठ पुत्रो वरो यदि । व्यत्ययो वा तयोस्तत्र ज्येष्ठो मासः शुभप्रदः । मिहिरः—ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते । द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं सुखावहम् । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् । जन्ममासलक्षणमाह वृद्धगार्ग्यः—आरभ्य जन्मदिवसाद्यावत्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयः सर्वकर्मसु गर्हितः । इति । जन्ममासेपि विवाहस्यात्यावश्यकत्वे ज्योतिर्ग्रंथे—जातं दिनं वर्जयते वसिष्ठ अष्टौ च गार्ग्यो नियतं दशात्रिः । तज्जन्मऋक्षं किल भागुरिश्च व्रते विवाहे गमने क्षुरे च । इति । वसिष्ठः—विवाहे व्रतबंधे च यात्रायां गृहकर्मणि । गुरावस्तमिते शुक्रे ध्रुवं मृत्युं विनिर्दिशेत् । रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ । वर्जयेत्सर्वकार्याणि व्रतस्वस्त्ययनानि च । ज्योतिर्निबंधे—रविक्षेत्रं तु पैत्रर्क्षं जीवक्षेत्रं तु रेवती । इति । लल्लः—वक्रे चैवातिचारे त्रिदशपतिगुरौ दैत्यपूज्ये विलुप्ते गुर्वादित्येऽधिमासे दिवसकरविधोः संगमे चैत्रपौषे । धिष्ण्ये केतूद्गमे वा शरदि सुरगुरौ सिंहसंस्थे मनोज्ञे वर्षे लुप्तेऽपि चोक्तं स नियतमरणं कन्यकायाश्च भर्तुः । अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः । लुप्तः संवत्सरो ज्ञेयः सर्वकर्मसु गर्हितः । इति । ज्योतिर्निबंधे—सिंहस्थिते गुरौ राजन् विवाहं नैव कारयेत् । मकरस्थेऽपि कर्तव्यं यदीच्छेदात्मनः शुभम् । मकरस्थेत्यत्रापि नेत्यस्यानुषंगः । लल्लः—नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्राव्रतनियमविधिः कर्णवेधश्च दीक्षा । मौंजीबंधोऽथ चूडापरिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्या सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च । ज्योतिर्निबंधे—सिंहस्थेपि मघासंस्थं गुरुं यत्नेन वर्जयेत् । अन्यत्र सिंहभागेषु विवाहादि विधीयते । स्मृतितत्त्वे नारदः—माघ्यां मघा यदा न स्यात्सिंहे गुरुरकारणम् । राजमार्तंडे दक्षः—गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखा मुनींद्राः । यदा न माघी मघसंयुता स्यात्तदा च कन्योद्वहनं वदंति । कालविधाने—सिंहस्थितः सुरगुरुर्यदि नर्मदायास्तद्वर्जयेत्सकलकर्मसु सौम्यभागे । विंध्यस्य दक्षिणदिशि प्रवदंति चाऽऽर्याः सिंहां-

शके मृगपतावपि वर्जनीयम् । इति । पराशरः—गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ । मघास्थे सर्वदेशेषु तथा मीनगते रवौ । इति । हरिनीचारिभागेऽपि व्रतोद्वाहादि मंगलम् । न निषिद्धं यदा स्याच्चेत्स्वभे चेत्संस्थितो गुरुः । स्वभं पुष्यनक्षत्रम् । मकरस्थे विशेषमाह लल्लः—नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे । गंडक्याः पश्चिमे पारे मकरस्थो न दोषकृत् । शौनकः—विंध्यस्योत्तरदेशे तु नीचारिस्थो बृहस्पतिः । व्रतादौ मासमेकं तु परित्यज्य ततः शुभं । इति । नीचस्थे विशेषमाह वसिष्ठः—अतिचारगते जीवे वर्जयेत्तदनंतरम् । व्रतोद्वाहादिकार्येषु अष्टाविंशतिवासरान् । नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु । नीचांशकगतस्त्याज्यो यस्मादंशेषु नीचता । इति । नायात्यसौ यद्यपि पूर्वराशिं शुभाय पाणिग्रहणं वसिष्ठः । वृषे मेषे झषे कुंभे यद्यतीचारगो गुरुः । न तत्र काललोपः स्यादित्याह गालवो मुनिः । इति । ज्योतिःप्रकाशे—अर्वाक्षोडशनाड्यस्तु संक्रांतेः परतः पराः । उपनयनव्रतयात्राविवाहादौ विवर्ज्यास्ताः । गर्गः—दिग्दाहे दिनमेकं च ग्रहे सप्तदिनानि तु । भूकंपे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् । उल्कापाते त्रिदिवसं भूमेः पंचदिनानि तु । वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु । इति । इति विवाहाद्युपयोगी निर्णयः ।

अथ एकोदरयोः क्रियाकालः । तत्र मिहिरः—एकोदरप्रसूतानामेकस्मिन्नेव वत्सरे । विवाहो नैव कर्तव्यो गर्गस्य वचनं यथा । गर्गः—पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयं । पुत्र्यंतरस्य कुर्वीत नोद्वाहमिति सूरयः । मिहिरः—पुत्रोपनयनादूर्ध्वं षण्मासाभ्यंतरे तथा । पुत्र्युद्वाहं न कुर्वीत नोद्वाहाद्व्रतबंधनम् । वराहमिहिरः—न पुंविवाहोर्ध्वमृतुत्रयेपि विवाहकार्यं दुहितुः प्रकल्प्यम् । न मंडनाच्चापि हि मुंडनं च स्यान्मुंडनान्मंडनमन्वगेव । इति । संकटे तु कपर्दिकारिका मिहिरश्च—उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यंतरस्योद्वहनं कदापि । यावच्चतुर्थं दिनमत्र पूर्वं समाप्य चान्योद्वहनं विदध्यात् । मदनरत्ने नारदः—पुत्रोद्वाहात्परं पुत्रीविवाहं च ऋतुत्रये । न कार्यं व्रतमुद्वाहान्मंगले नाथ मंगलम् । एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् । षण्मासमध्ये मुनयः समूचुर्न मुंडनं मंडन-

तोपि कार्यं । एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः । न समान-क्रियां कुर्यान्मातृभेदे विधीयते । कन्यायुगे भ्रातृयुगे कन्याभ्रातृयुगे तथा । न जातु मंगलं कुर्यादेकस्मिन्मंडपेऽहनि । ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् । तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते । विवाहश्चैकजन्यानां षण्मासाभ्यंतरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् । न वेदिकायां न गृहे न शाले न मंडपे युग्मकरग्रहौ तु । यथा पथि प्रत्यभिदर्शने च तदा द्वयोरेकतरं जहाति । प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् । तथैकजन्ययोः पुंसोरेकजन्ये तु कन्यके । नूनं कदाचिदुद्वाहे नैकदा मुंडनद्वयम् । इति । चतुर्थीदिनादर्वाग्विषये तत्रैव वसिष्ठः--एकलग्ने द्विलग्ने वा द्वे गृहे यत्र शोभने । तयोरेको विनष्टः स्याद्वर्धते न इति स्थितिः । यत्र गृहे द्वे शोभने द्वौ विवाहाविति संबंधः । द्विशोभनं त्वेकगृहेपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु । आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाचार्यविभेदतो वा । सारावल्यां--फाल्गुने चैत्रमासे वा पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रयविलंबनम् । संहिताप्रदीपे--ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितुः समार्धम् । अप्राप्य कन्या श्वशुरालयं च वधूं प्रविश्यात्स्वगृहं न चादौ । अंतर्भावितण्यर्थो विशिस्तेन न प्रवेशयेदित्यर्थः । मदनरत्ने अत्रिः--कुले ऋतुत्रयादर्वाग्मंडनान्न तु मुंडनम् । प्रवेशान्निर्गमं चैव न कुर्यान्मंगलत्रयम् । पुत्रीपरिणयादूर्ध्वं पुत्रस्योद्वाहनक्रिया । निर्दुष्टा स्यान्मातृभेदे गृहभेदेपि चैव हि । भ्रात्रोर्युगे युगे स्वस्रोर्भ्रातृस्वसृयुगेऽपिवा । विवाहोऽब्ददलादर्वाक् नैकस्मिन्मंडपे गृहे । एकः कर्ता शुभं कुर्यान्न पुत्र्योः पुत्रयोरपि । षण्मासे वा चतुर्मासे पूर्णे वर्षे शुभावहम् । इति । कात्यायनः--पुत्रोद्वाहः प्रवेशाख्यः पुत्र्युद्वाहस्तु निर्गमः । मुंडनं चौलमित्युक्तं व्रतोद्वाहौ तु मंगलं । चौलं मुंडनमेवोक्तं वर्जयेन्मंडनात्परम् । मौंजी चोभयतःकार्या यतो मौंजी न मुंडनम् । इति । मदनरत्ने तु मुंडनमुपनयनादीत्युक्तं तच्चिंत्यम् । उदाहृतवचनविरोधात् । अत्र कुलं पुरुषत्रयपर्यंतमेव । तथाच मेधातिथिनिबंधे--पुरुषत्रयपर्यंतं प्रतिकूलं सगोत्रिणाम् । प्रवेशनिर्गमौ तद्वत्तथा मंडनमुंडने । इति । भिन्नमातृजयोस्तु एकवासरेऽपि

विवाहमाह **मेधातिथिः**—पृथग्मातृजयोः कार्यो विवाहस्त्वेक-वासरे । एकस्मिन्मंडपे कार्यः पृथग्वेदिकयोस्तथा । पुष्पपट्टि-कयोः कार्यं दर्शनं न शिरस्थयोः । भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् । यमलजयोरपि भवति । तदुक्तं **भट्ट-कारिकायां**—एकस्मिन्वत्सरे चैकवासरे मंडपे तथा । कर्तव्यं मंगलं स्वस्रोर्भ्रात्रोर्यमलजातयोः । इति । **हेमाद्रौ वात्स्यः**—कंडनदलनयवारकमंडपमृद्वेदिवर्णकाद्यखिलम् । तत्संबंधिगता-गतमृक्षे वैवाहिके कुर्यात् । यवारकं चिकसा इति प्रसिद्धम् । वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे । जामित्रराशौ कन्याया लग्ने शुभसमन्विते । चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा । इति । इति विवाहोपयोगिनिर्णयः ।

**अथ प्रसंगात्प्रतिकूलमुच्यते** । तत्र **ज्योतिर्निबंधे गर्गः**—कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् । तदा न मंगलं कुर्यात्कृते वैधव्यमाप्नुयात् । **ज्योतिर्निबन्धे मेधातिथिः**—वधूवरार्थं घटिते सुनिश्चिते वरस्य गेहेप्यथ कन्यकायाः । मृत्यु-र्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मंगलं बुधैः । मंगलं विवाहः । **स्मृतिचंद्रिकायां**—कृते वाङ्निश्चये पश्चान्मृ-त्युर्मर्त्यस्य गोत्रिणः । तदा न मंगलं कार्यं नारीवैधव्यदं ध्रुवम् । **भृगुः**—वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः । तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः । **शौनकः**—वरवध्वोः पिता माता भ्रातृव्यश्च सहोदरः । एतेषां प्रतिकूलं च महाविघ्नप्रदं भवेत् । पिता पितामहश्चैव माता चैव पितामही । पितृव्यस्त्री सुतो भ्राता भगिनी चाविवाहिता । एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतं । **मांडव्यः**—वाग्दानानंतरं माता पिता भ्राता विपद्यते । विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता । **संकटे तु मेधा-तिथिः**—वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः । तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् । **स्मृतिरत्नावल्यां**—पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च । मासत्रयं तु भार्याया-स्तदर्धं भ्रातृपुत्रयोः । अन्येषां तु सपिंडानामाशौचं मासमी-रितं । तदंते शांतिकं कृत्वा ततो लग्नं विधीयते । **ज्योतिः-प्रकाशे**—प्रतिकूलेपि कर्तव्यो विवाहो मासतः परः । शांति

१ 'यस्य'.

विधार्य गां दत्वा वाग्दानादि चरेत्पुनः । मेधातिथिः संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शांतिरुक्ता गणं शस्य कृत्वा तां शुभमाचरेत् । ज्योतिःसारे–दुर्भिक्षे राष्ट्रभं च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां नानुकूलं प्रत क्षते । इति प्रतीकूलदोषः । स च पुरुषत्रयपर्यंतं सपिंडमध एव । तदाह मेधातिथिः–पुरुषत्रयपर्यंतं प्रतिकूलं सगोत्रिणां इति । स्मृत्यंतरे–दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च उदासवर्तिनश्चैव प्रतिकूलं न विद्यते । इति प्रतिकूलविचारः

**अथ मातृरजोदोषविचारः** । तत्र **माधवीये**–प्रारंभात्प्र ग्विवाहस्य माता यदि रजस्वला । निवृत्तिस्तस्य कर्तव्या सहत्व श्रुतिचोदनात् । इति । अत्र प्रारंभो नांदीमुखश्राद्धं । नांदीमु विवाहादाविति वचनात् । **मेधातिथिः**–चौले च व्रतबंधे विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् वधूवरान्यतरयोर्जननी चेद्रजस्वला । तस्याः शुद्धेः परं का मांगल्यं मनुरब्रवीत् । **वृद्धमनुः**–विवाहव्रतचूडासु माता यदि रजस्वला । तदा न मंगलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः **गर्गः**– यस्योद्वाहादिमांगल्ये माता यदि रजस्वला । तदा तत्प्रकर्तव्यमायुःक्षयकरं यतः । नांदीश्राद्धोत्तरं रजोदोषे **कपर्दिकारिकासूक्तं**–अलाभे सुमुहूर्तस्य रजोदोषे तु संगते श्रियं संपूज्य तत्कुर्यात्पाणिग्राहादि मंगलं । हैमीं माषमि पद्मां श्रीसूक्तविधिनार्चयेत् । प्रत्यृचं पायसं हुत्वा अभिषे समाचरेदिति । इति रजोदोषविचारः ।

विवाहसंबंधिदिनचतुष्टयमध्ये श्राद्धदिनादिसंभवे दोष उत **ज्योतिर्निबंधे**–विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं द दिनं यदि स्यात् । वैधव्यमाप्नोति तदा तु कन्या जीवेत्पति श्चेदनपत्यता स्यात् । विवाहमध्ये यदि चेत्क्षयाहस्तत्र स्व व्याः पितरो न यांति । अंते विवाहे परतस्तु कुर्याच्छ्रा स्वधाभिर्न तु दूषयेत्तम् । इति श्राद्धदिनविचारः ।

**मासिकादिविषये** त्वाह **शाट्यायनिः**–प्रेतश्राद्धा सर्वाणि सपिंडीकरणं तथा । अपकृष्यापि कुर्वीत कर्तुं नांदी

मुखं द्विजः । मेधातिथिः–प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदय-क्रियाम् । आचतुर्थं ततः पुंसि पंचमे शुभदा भवेत् । इति मासिकविचारः ।

धर्मार्थविवाहकरणे फलमुक्तं भारते–ज्ञात्वा स्ववित्तं सामर्थ्यादेकं चोद्वाहयेद्द्विजं । तेनाप्याप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवं । अपरार्के दक्षः–मातापितृविहीनं तु संस्कारोद्वाहनादिभिः । यः स्थापयति तस्येह पुण्यसंख्या न विद्यते । मदनरत्ने भविष्ये–विवाहादिक्रियाकाले तत्क्रियासिद्धिसाधनं । यः प्रयच्छति धर्मज्ञः सोऽश्वमेधफलं लभेत् ।

कन्यागृहे भोजने च तत्रैवोक्तं–अप्रजायां तु कन्यायां न भुंजीत कदाचन । दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति । अपरार्के आदित्यपुराणे–विष्णुं जामातरं मन्ये तस्य कोपं न कारयेत् । अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे । इति । नववस्त्रविषये तत्रैव कश्यपः–अहतं यंत्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा । शस्तं तन्मांगलिक्येषु तावत्कालं न सर्वदा । यंत्रनिर्मुक्तं विवाहकाले एव न तदूर्ध्वम् ।

वध्वासह भोजने दोषाभावमाह प्रायश्चित्तप्रकरणे हेमाद्रौ गालवः–विवाहकाले यात्रायां पथि चौरसमाकुले । असहायो भवेद्विप्रस्तदा कार्यं द्विजन्मभिः । एकयानसमारोह एकपात्रे च भोजनं । विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् । अन्यथा दोषमाप्नोति पश्चाच्चांद्रायणं चरेत् । इति ।

अनिष्टनक्षत्रादौ विवाहकरणावश्यकत्वे दानमुक्तं ज्योतिर्ग्रंथे–विपत्तारे गुडं दद्यान्निधने तिलकांचनं । प्रत्यरे लवणं दद्याच्छागं दद्यान्निजन्मसु । चंद्रे च शंखं लवणं च तारे तिथौ विरुद्धे त्वथ तंडुलांश्च । धान्यं च दद्यात्करणे च वारे योगे विरुद्धे कनकं प्रदेयम् । इति दुष्टनक्षत्रादौ दानम् ।

वाग्दानोत्तरं वरमरणे वसिष्ठः–अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं[1] वरो यदि । नच मंत्रोपनीता स्यात्कुमारी पितुरेव सा । यत्तु नारदः–उद्वाहितापि सा कन्या न चेत्संप्राप्तमैथुना । पुनःसंस्कारमर्हेत यथा कन्या तथैव सा । इति । तद्युगांतरविषयं । ऊढायाः पुनरुद्वाहमित्यनेन कलौ तन्निषेधात् ।

---

१ 'म्रियते वै.'

वरवर्णोत्तरं देशांतरगमने **नारदः**—प्रतिगृह्य तु यः कन्यां वरो देशांतरं व्रजेत् । त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् । इति । शुल्कदाने तु **मनुवसिष्ठौ**—कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः । देवराय प्रदातव्या यदि कन्यानुमन्यते । **कात्यायनः**—प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तु तत् । धार्या सा वर्षमेकं तु देयान्यस्मै विधानतः । अनेकेभ्योपि दत्तायामनूढायां तु तत्र वै । पूर्वागतश्च सर्वेषां लभेताद्यवरस्तु ताम् । पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः । अथागच्छेन्न-वोढायां दत्तं पूर्ववरो हरेत् । इति । यत्तु **याज्ञवल्क्यः**—दत्ता-मपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् । इति तत्पूर्वस्य दोष-सत्वे बोध्यं । **वसिष्ठः**—कुलशीलविहीनस्य पश्चाद्धि पतितस्य च । अपस्मारिविधर्मस्थरोगिणां वेषधारिणाम् । दत्तामपि हरे-त्कन्यां सगोत्रोढां तथैव च । इति । वाग्दत्ताया अप्यन्यस्मै दानम् ।

क्वचित्**परिवेत्तृत्वदोषाभावमाहमनुः**—षंढांधबधिरादीनां विवाहोस्ति यथोचितं । विवाहासंभवे तेषां कनिष्ठो विवहे-त्तदा । पितृव्यपुत्रे सापत्ने परदारसुतेषु च । विवाहाधान-यज्ञादौ परिवेदो न दूषणम् । इति परिवेत्तृत्वाभावः ।

**गृहप्रवेशनीयहोमकाले** विशेषमाह**आश्वलायनः**—अर्ध-रात्रे व्यतीते तु परेद्युः प्रातरेव हि । गृहप्रवेशनीयः स्यादिति यज्ञविदो विदुः । इति । **औपासनहोमे** विशेषमाह **शौनकः**—यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति । उपक्रम्योत्तर-स्याह्नः सायं परिचरेदमुम् । इति ।

**अथ देवकोत्थापनकालः** । समे च दिवसे कुर्याद्देवको-त्थापनं बुधैः । षष्ठं च विषमं नेष्टं मुक्त्वा पंचमसप्तमौ । इति ।

देवकोत्थापनपर्यंतं सपिंडानां वर्ज्यान्याह **गार्ग्यः**—नांदी-श्राद्धे कृते पश्चाद्यावन्मातृविसर्जनम् । दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन तु । अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च । ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलंघनं । उपवासव्रतं चैव श्राद्धभोजनमेव च । नैव कुर्युः सपिंडाश्च मंडपोद्वासनावधि । अत्रापि सपिंडाः चतुःपुरुषावधि इति ज्ञेयम् । **अस्पृश्यस्पर्शे** दोषाभावमाह **बृहस्पतिः**—तीर्थे विवाहे यात्रायां संग्रामे देश-

विप्लवे । नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति । **स्नाननिषेधमाह योगयाज्ञवल्क्यः**—न स्नायादुत्सवेतीते मंगलं विनिवर्त्य च । अनुव्रज्य सुहृद्वंधूनर्चयित्वेष्टदेवतां । गृहभांडत्यागमुंडननिषेधः—मासषट्कं विवाहादौ व्रतप्रारंभणेपिच । जीर्णभांडादि न त्याज्यं गृहसंमार्जनं तथा । ऊर्ध्वं विवाहात्पुत्रस्य तथा च व्रतबंधनात् । आत्मनो मुंडनं नैव वर्षं वर्षार्धमेवच । **गोपीचंदननिषेधः**—अभ्यंगे सूतके चैव विवाहे पुत्रजन्मनि । मांगल्येषु च सर्वेषु न धार्यं गोपिचंदनं । विवाहात्प्रथमे पौषे आषाढे चाधिमासके । न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा । इति ।

अथ **वधूप्रवेशकालः**—मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके । सुप्रशस्ते भवेद्वेश्मप्रवेशो नवयोषिताम् । **नारदः**—आरभ्योद्वाहदिवसात्षष्ठे वाप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेथ समे दिने । समे वर्षे समे मासे यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् । **ज्योतिःप्रकाशे**—वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे । धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरस्थिते । नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ । तदेव विबुधैर्ज्ञेयं केवलं तु द्विरागमे । पूर्वतोभ्युदिते शुक्रे यायाद्दक्षिणपश्चिमे । पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ । पौष्णाद्वैधात्राच्छ्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु । पुष्ये च मैत्रे च वधूप्रवेशो रिक्ते च रव्यार्किकुजे च शस्तः । रव्यादिभिन्न इत्यर्थः । **गर्गः**—व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि । श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः । अमासंक्रांतिविष्ट्यादौ प्राप्तकालेपि नाचरेत् । इति वधूप्रवेशः ।

अथ **द्विरागमनम्** । माघफाल्गुनवैशाखशुक्लपक्षे शुभे दिने । गुर्वादित्यविशुद्धौ स्यान्नित्यं कृत्वा द्विरागमः । नीहारांशुदिनोत्तरादितिगुरुब्राह्मानुराधाश्विनी चक्रे भास्करवायुविष्णुवरुणत्वाष्ट्रे प्रशस्ते तिथौ । कुंभाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे जीवज्ञासुरपूजिते नववधूवेश्मप्रवेशः शुभः । इति

धानं दारकाले दायाद्यकाल एकेषामिति । आश्वला
पाणिग्रहणादिगृह्यं परिचरेत् इति । तस्मिन्काले न गृह
त्कालांतरमाह व्यासः–अग्निर्वैवाहिको येन न
प्रमादिना । पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः । योऽगृ
विवाहाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथ
हि स स्मृतः । पितरि ज्येष्ठे भ्रातरि वा साग्नौ अग्निं
दोषाभावमाह स्मृतिचंद्रिकायां गार्ग्यः–पितृपाको
च भ्रातृपाकोपजीवकः । विद्याज्ञानरतश्चैव न दुष्येत
विना । इति ।

अथ श्मश्रुकर्मकालः । श्रीपतिः–पुष्ये पौष्णे
नीष्वैंदवे च शाक्रे हस्तादित्रिके भेष्वदित्याः । क्षौरं कार्यं
वादित्रये च मुक्त्वा भौमादित्यपातंगिवारान् । न स्नातभुक्त
भूषितानामभ्यक्तयात्रासमरोत्सुकानाम् । क्षौरं विदध्य
संध्ययोर्वा जिजीविषूणां नवमे न चाह्नि । गार्ग्यः–रव्य
रिवारेषु रात्रौ पाते व्रतेहनि । श्राद्धाहं प्रतिपद्रिक्त
क्षौरेषु वर्जयेत् । राजमार्तंडः–देवकार्ये पितुः श्राद्धे र
रिक्षये । क्षौरकर्म न कुर्वीत जन्ममासे न जन्मभे ।
डेयः–अष्टमी च तथा षष्ठी नवमी च चतुर्दशी । क्षुर
वर्ज्याः स्युः पर्वसंधिस्तथैव च । गर्गः–भानुरायुः क्षपयति
सप्त शनैश्चरः । भौमो मासाष्टकं चेति ज्ञो यच्छेन्मासपंच
सप्तमासान्ददातींदुः सुरेज्यो दशमासकम् । एकादश
द्यात्कृते क्षौरे तु कर्मणि । व्यासः–न प्रौष्ठपदयोः कार्यं त
च भारत । दारुणेषु च सर्वेषु दुष्टतारां च वर्जयेत् ।
द्वाजः–निषिद्धतिथिवारादौ भोजनानंतरं च यः । क्षौरं
तद्देहे नाश्नंति पितरः सुराः । नैमित्तिके क्षौरे नायं निषेधः
नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवं । इति । बृहस्पतिः–
कार्यनियुक्तानां नटानां रूपजीविनां । श्मश्रुलोमनखच्छेदे
कालविधिर्नृणां । निषिद्धतिथ्यादौ क्षौरे कृते तद्दोष
पुनः शुभकाले क्षौरं कार्यं । तदाह गर्गः–निषिद्धेषु च
क्षौरकर्म यदा भवेत् । तद्दोषशांतये क्षिप्रं कुर्यात्तच्च शुभे
इति श्मश्रुकर्मकालः ।

अथाभ्यंगकालः । तत्र व्यासः–पंचमी दशमी

तृतीया च त्रयोदशी । अभ्यंगात्स्पर्शनात्पानाद्यस्तु [1]तैलं निषेवते । चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषां । कात्यायनः–पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ । तैलेनाभ्यज्यमानस्तु चतुर्भिः परिहीयते । गार्ग्यः–सप्तम्यां न स्पृशेत्तैलं नवम्यां प्रतिपद्यपि । दर्शे च पौर्णमास्यां च पंचस्वपि च पर्वसु । ज्योतिःपराशरः–संतापः कांतिरल्पायुर्धनं निधनमेव च । दारिद्र्यं सर्वकामाप्तिरभ्यंगे भास्करादिषु । षट्त्रिंशन्मते–हृत्तापः कांतिमरणे धनमारोग्यमेव च । उत्तरार्धं पूर्वोक्तमेव । पूर्ववाक्ये गुरुवारेऽनिष्टं फलमुक्तं अस्मिन्वाक्ये तु शुभमुक्तं तस्माद्गुरुवारे विकल्पः । हेमाद्रौ स्मृत्यंतरे–उपोषितस्य क्लिन्नस्य कृत्तकेशस्य नापितैः । तावच्छ्रीस्तिष्ठति प्रीत्या यावत्तैलं न संस्पृशेत् । अभ्यंगे तिथिवारयोर्निषेधे वारो बलवानित्युक्तं कालादर्शे–तिथिवारसमायोगे बलीयान्वार इष्यते । इति । वारदोषेप्युक्तं वाक्यसारे–रवौ पुष्पं गुरौ दूर्वां भौमवारे च मृत्तिकाम् । भृगौ तु गोमयं क्षिप्त्वा तैलाभ्यंगो न दोषकृत् । इति । प्रचेताः–सार्षपं गंधतैलं च यच्चान्यत्पुष्पवासितम् । द्रव्यांतरयुतं तैलं न दुष्येद्ग्रहणं विना । इति । इत्यभ्यंगकालः ।

अथामलकस्नानम् । तत्र गार्ग्यः–तैलस्नानं सदा पुण्यं कुर्यादामलकैः श्रिये । सप्तमीनवमीदर्शरविसंक्रमणादृते । इति । मरीचिः–अमायां चैव सप्तम्यां संक्रांतौ च रवेर्दिने । चंद्रसूर्योपरागे च स्नानमामलकैस्त्यजेत् । इति । इत्यामलकस्नानकालः ।

अथ दंतधावने निषिद्धकालः । तत्र व्यासः–प्रतिपद्दर्शषष्ठीषु नवम्यां हरिवासरे । दंतानां काष्ठसंयोगो दहत्यासप्तमं कुलं । मरीचिः–पंचपर्वसु नंदासु व्यतीपाते च संक्रमे । स्त्रियं तैलं च मांसं च दंतकाष्ठं च वर्जयेत् । हेमाद्रौ व्यासः–श्राद्धाहे जन्मदिवसे विवाहे मुखदूषिते । व्रते चैवोपवासे च वर्जयेद्दंतधावनं । सर्वोप्ययं निषेधः काष्ठस्यैव न पर्णादेः । तदाहैकादशीप्रकरणे हेमाद्रौ पैठीनसिः–अलाभे वा निषेधे

[1] 'यन्नाद्यस्तु'.

चा काष्ठानां दंतधावने । पर्वादिना विशुद्धेन जिह्वोल्लेखः सदैव हि । व्यासः—अलाभे दंतकाष्ठानां निषिद्धायां तथा तिथौ । अपां द्वादशगंडूषैर्विदध्याद्दंतधावनम् । इति । इदं पक्षांतरमिति हेमाद्रिस्तदपि—तृणपर्णैः सदा कुर्यादमामेकादशीं विना । इति वाक्यसारोदाहृतवचनादमैकादशीविषयं बोध्यम् । यत्तु—यो मोहात्स्नानवेलायां भक्षयेद्दंतधावनम् । निराशास्तस्य गच्छंति देवताः पितरस्तथा । इति तन्मध्याह्नस्नानविषयं । पालाशमासनं यानं दंतकाष्ठं च पादुके । वर्जयेत्तु प्रयत्नेन सममाश्वत्थमेवच । इति । इति दंतधावनकालः ।

अथ संध्याकालः । संध्योक्ता हेमाद्र्युदाहृतश्रुतौ—य एवं विद्वान् सायं प्रातश्च संध्यामुपास्त इति । याज्ञवल्क्यः—जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । संध्यांप्राक् प्रातरेवं हि तिष्ठन्नासूर्यदर्शनात् । तत्कालमाह स एव—अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः । सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः । इति । संध्याकालवर्ज्यान्याह मनुः—चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् । इति । हेमाद्रौ वृद्धमनुः—आहारं मैथुनं निद्रां संध्याकाले विवर्जयेत् । कर्म चाध्ययनं वापि तथा दानप्रतिग्रहौ । आहाराज्जायते व्याधिर्गर्भो रौद्रश्च मैथुनात् । स्वपनात्स्यादलक्ष्मीकः कर्म चैवात्र निष्फलं । अध्येता नरकं याति दाता नाप्नोति तत्फलं । प्रतिग्राही भवेत्पापी तस्मात्संध्यां विवर्जयेत् । दाता वै नरकं याति ग्रहीताधो निमज्जति । इति । यत्तु—उदयात्प्राक्तनी संध्या घटिकात्रयमिष्यते । सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः । इति घटिकात्रयं संध्याकाल उक्तः स संध्यागर्जितनिमित्तकानध्यायादावुपयुज्यते । गौणकालाभिप्रायं वेति बोध्यं । इति संध्याकालः ।

अथ कालविशेषे वर्ज्यानि । तत्र हेमाद्रौ भविष्यत्पुराणे—सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत् । न चाप्यामलकैः स्नायान्न कुर्यात्कलहं नरः । सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनं । बुधः—निंबस्य भक्षणं तैलं तिलैस्तर्पणमंजनं । सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनं । हेमाद्रौ मात्स्ये—छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे । पत्रं वा

पातयेत्तेषां ब्रह्महत्यां स विंदति । मनुः—चतुर्दश्यष्टमी दर्शः पौर्णमास्यर्कसंक्रमः । एषु स्त्रीतैलमांसानि दंतकाष्ठं च वर्जयेत् । हारीतः—तैलं मांसं भगं क्षौरं पर्वकालेषु वर्जयेत् । एतेष्वलक्ष्मीर्वसति पर्वकालेषु नित्यशः । हेमाद्रौ स्कांदे—शिरः कपालमांत्राणि नखचर्मतिलांस्तथा । एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् । शिरः नारिकेरं । कपालमलाबु । आंत्रं दीर्घपटोलं । नखाः निष्पावाः । चर्म मसुराः । तिलावार्तकमिति हेमाद्रिः । व्यासः—षष्ठ्यष्टमी त्वमावास्या पक्षद्वयचतुर्दशी । अत्र संनिहितं पापं तैले मांसे भगे क्षुरे । मनुः—मांसाशने पंचदशी तैलाभ्यंगे चतुर्दशी । अष्टमी ग्राम्यधर्मेषु ज्वलंतमपि पातयेत् । ग्राम्यधर्मो मैथुनम् । तैलं च न स्पृशेदाम्रवृक्षादींश्छेदयेन्न च । पक्षादौ च तथाऽष्टम्यां रिक्तायां च तथा तिथौ । चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा । वर्ज्यान्येतानि पर्वाणि रविसंक्रांतिरेव च । तैलस्त्रीमांससंभोगी पर्वस्वेतेषु यो नरः । विण्मूत्रभोजनं नाम प्रयाति नरकं नृप । बृहस्पतिः—अमावास्येंदुसंक्रांतिचतुर्दश्यष्टमीषु च । नरश्चंडालयोनौ स्यात्तैलस्त्रीमांससेवनात् । षट्त्रिंशन्मते—संक्रांत्यां पंचदश्यां च द्वादश्यां श्राद्धवासरे । वस्त्रं निष्पीडयेन्नैव न च क्षुरेण हिंस्यते । क्वचित्तु न च क्षारेण योजयेत् इति चतुर्थचरणपाठः । वामनपुराणे—चित्रासु हस्ते श्रवणे च तैलं क्षौरं विशाखाप्रतिपत्सु वर्ज्यं । यत्तु—न मृच्च नोदकं वापि निशायां न तु गोमयं । गोमूत्रं च प्रदोषे तु गृह्णीयाद्बुद्धिमान्नरः । इति वचनं तददृष्टार्थमृदादिग्रहणविषयमिति हेमाद्रिः । तत्रैव भविष्यत्पुराणे—सुप्ते विष्णौ निवर्तंते क्रियाः सर्वाः शुभादिकाः । विवाहव्रतबंधादिचूडासंस्कारदीक्षणं । यज्ञो गृहप्रवेशश्च प्रतिष्ठा देवभूभृतां । पुण्यानि यानि कर्माणि न स्युः सुप्ते जगत्पतौ । षट्त्रिंशन्मते—सूर्यर्क्षगते सोमे परान्नं यस्तु भक्षयेत् । तस्य मासगतं पुण्यं यस्यान्नं तस्य तद्भवेत् । स्मृत्यंतरे—उपोषितस्य क्लिन्नस्य कृत्तकेशस्य नापितैः । तावच्छ्रीस्तिष्ठति प्रीत्या यावत्तैलं न संस्पृशेत् । हेमाद्रौ स्कांदे—स्नानं चैव महादानं स्वाध्यायं पितृतर्पणं । प्रथमेऽब्दे न कुर्वीत महागुरुनिपात-

मध्यंदिन उषःकाले अर्धरात्रे च सर्वदा। चतुष्पथं न सेवेत उभे संध्ये तथैव च। इति। इत्यभ्यंगादिषु निषिद्धकालः।

**अथ देवप्रतिष्ठाकालः।** **मात्स्ये**—चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्। **विष्णुधर्मोत्तरे**—कृष्णपक्षत्रिभागे तु प्रथमे स्याच्छुभावहा। मध्या द्वितीयभागे तु तृतीये कर्तृनाशिनी। शुक्लत्रिभागे प्रथमे [1]देशनाशाय कीर्तिता। द्वितीये मध्यफलदा तृतीये तु शुभावहा। धनधान्यवती स्फीता वरदा च तथा भवेत्। तेजस्विनी सूर्यदिने चंद्रे क्षेमावहा भवेत्। भौमेऽग्निना प्रदह्येत बुधे च धनदा भवेत्। गुरौ सद्बुद्धिदा नित्यं लोकानंदकरी सिते। आचंद्रार्कं स्थिरा सौरौ प्रतिष्ठा समुदाहृता। दृढा धनयुता स्फीता तथा प्रतिपदि स्मृता। द्वितीयायां धनोपेता तृतीयायां वरप्रदा। चतुर्थ्यां नाशमाप्नोति यमस्य स्यात्सुखावहा। विनायकस्य देवस्य सा तु तत्र हितप्रदा। पंचम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत्। षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी। अष्टम्यां धान्यबहुला नवम्यां तु विनाशिनी। भद्रकाल्याः कृता तत्र कर्तुर्भवति पुष्टये। धर्मवृद्धिकरी ज्ञेया दशम्यां तु कृता तथा। एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा। त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति। कृष्णपक्षे पंचदश्यां कर्तुः क्षयकरी भवेत्। पंचदश्यां तथा शुक्ले सर्वकामकरी भवेत्। त्र्यहस्पृशा च विज्ञेया तथा दोषकरी नृप। इति। **मात्स्ये**— आषाढे द्वे तथा मूलमुत्तरात्रयमेव च। ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा। हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा। अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते। इति। **विष्णुधर्मोत्तरे**—जन्मराश्युदये कर्तुः क्षिप्रनाशकरी भवेत्। द्वितीये धननाशाय तृतीये कर्तृवुद्धिदा। चतुर्थे गृहनाशाय पंचमे व्याधिदा भवेत्। षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी। अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी। दशमे कर्मणां वृद्धौ लाभे लाभकरी भवेत्। द्वादशे भयदा ज्ञेया प्रतिष्ठा तु तथा कृता। जन्मलग्नोदये श्रेष्ठा धनधान्यवती भवेत्। जन्मराशिफलं पूर्वं शेषस्थानेषु निर्दिशेत्। मेषोदये तथा क्षिप्रं नाश-

---

1 'प्रवृत्तेन', 'प्रदत्तेन'.

मायाति पार्थिव। वृषोदये स्थिरा प्रोक्ता धनधान्यवती भवेत्। लोककानां च मिथुने बहुकल्याणकारिणी। कुलीरे क्षिप्रनाशाय सिंहे च सुदृढा भवेत्। कन्यायां लोककांता स्यात्तुले भवति चास्थिरा। वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे। मकरे क्षिप्रनाशा स्यात्कुंभलग्ने स्थिरा भवेत्। मीने गुणावहा कर्तुः कल्याणाय सदा भवेत्। इति। तथा—रविर्दशत्रिषट्संस्थो राहुस्त्रिदशसंयुतः। षष्ठस्थानगताः शस्ता मंदांगारककेतवः। क्रूराश्च सर्वे पापाश्च एकादशस्थिताः शुभाः। इति देवप्रतिष्ठा।

शिवप्रतिष्ठाविषयेहेमाद्रौ लक्षणसमुच्चये—उत्तराशागते भानौ लिंगसंस्थापनं शुभं। दक्षिणे त्वयने पूज्यं त्रिवर्षाद्वै भयावहं। सग्रहे स्थापनं नेष्टं तथा वै दक्षिणायने। सग्रहे स्थापिते लिंगे व्याधिना पीड्यते प्रजा। कुमाराः संप्रपीड्यंते कुलनाशश्च जायते। तस्मान्न स्थापयेद्देवं सग्रहे दक्षिणायने। स्थापनं तु प्रकर्तव्यं शिशिरादावृतुत्रये। प्रावृषि स्थापितं सिद्ध्यै भवेद्वरदयोगदं। हेमंते ज्ञानदं लिंगं शिशिरे सर्वभूतिदं। लक्ष्मीप्रदं वसंते च ग्रीष्मे च जयशांतिदं। यतीनां सर्वकाले च लिंगस्यारोपणं मतं। इति। हेमाद्रौ रत्नावल्यां—सौभाग्यः शोभनोऽयुष्मान् सिद्धः साध्यः शिवः शुभः। वृद्धिः प्रीतिर्धृतिः सिद्धिर्ध्रुवः शुक्रः सुशोभनः। ववं च बालवं चैव कौलवं तैतिलं शुभं। मैत्रं परममैत्रं च संपत्क्षेमं तथा शुभं। लग्नं च वृश्चिकः सिंहो मेषो मिथुनकर्कटौ। तथा कन्या तुला कुंभो वृषभश्च प्रशस्यते। रविहस्ते भवेत्सिद्धिः सोमे मृगशिरस्तथा। कृत्तिका भौमवारे स्यादनुराधा बुधे तथा। रेवती गुरुसंपन्ना शुक्रवारे पुनर्वसुः। श्रवणं शशिवारे च सिद्धियोगाः शुभा मताः। इति शिवप्रतिष्ठाकालः।

विष्णुप्रतिष्ठाविषये हेमाद्रौ नृसिंहपुराणे—पूर्वपक्षे शुभे काले स्थिरे चोर्ध्वमुखेपि भे। अनुकूले च लग्ने च हरिः स्थाप्यो नरैस्तथा। नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते। गुरुशुक्रबुधेन्दूनामेकवारयुते शुभे। ग्रामस्य यजमानस्याप्यनुकूले च तत्र वै। चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च। सुप्रशस्ते मुहूर्ते वै प्रतिष्ठां कारयेद्धरेः। इति।

देवीप्रतिष्ठा हेमाद्रौ देवीपुराणे—गुरौ मेषगते शुक्रे

देवीं चाथ प्रतिष्ठयेत् । इहैव स भवेद्धन्यो मृतो गच्छेत्परं पदम् । तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता । तथा माघाश्विनौ मासावुत्तमौ परिकीर्तितौ । देवी तत्र सदा शुक्रपांशुजापि प्रतिष्ठिता। भवते फलदा पुंसां कर्कस्थे च वृषस्थिते । न तिथिर्नच नक्षत्रं नोपवासोऽत्र कारणं। मातृभैरववाराहनरसिंहत्रिविक्रमाः । महिषासुरहंत्र्यश्च स्थाप्या वै दक्षिणायने । **हेमाद्रौ चतुःषष्टिप्रतिष्ठायां ब्रह्मवचनं**—स्थापनं च प्रवक्ष्यामि सर्वकामप्रसाधकं । सर्वकाले प्रकर्तव्यं कृष्णपक्षे विशेषतः । रात्रिरूपा यतो देवी दिवारूपो महेश्वरः । अतः स्वकालपूजाभिः सिद्धिदा परमेश्वरी । इति । इति देवीप्रतिष्ठाकालः ।

**अथ वापीकूपतडागप्रतिष्ठाकालः । वह्निपुराणे**—वापीकूपतडागानां तस्मिन्काले विधिः स्मृतः । सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता । कर्कटे पुत्रलाभस्तु सौख्यं तु मकरे भवेत् । मीने यशोर्थलाभस्तु कुंभे वसु बहूदकं । वृषे च मिथुने वृद्धिर्वृश्चिकेल्पजलं भवेत् । पितृतृप्तिस्तु कन्यायां तुलायां शाश्वती गतिः । सिंहे मेषे धननाशं लक्ष्म्याश्च द्विज यच्छति । **भविष्योत्तरे**—तस्मिन्सलिलसंपूर्णे कार्तिके तु विशेषतः । तडागस्य विधिः कार्यः स्थिरनक्षत्रयोगतः । मुनयः केचिदिच्छंति व्यतीते चोत्तरायणे । न कालनियमस्तत्र सलिलं तत्र कारणं । इति । इति पुरुषार्थचिंतामणौ कालखंडे प्रतिष्ठाकालनिर्णयः ।

**अथ देवताविशेषपूजने तिथिविशेषाः । हेमाद्रौ भविष्यत्पुराणे** द्वादशीकल्पे—प्रतिपत्पावकी प्रोक्ता द्वितीया शमनस्य च । तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः । पंचमी नागराजानां षष्ठी स्कांदी तिथिः स्मृता । सप्तमी सप्तसप्तेस्तु अष्टमूर्तेस्तथाष्टमी । नवमी योगिनीनां तु दशमी तु दशामयी । एकादशी धनेशस्य द्वादशी चक्रिणस्तथा । त्रयोदशी त्वनंगस्य भूतेशस्य चतुर्दशी । पौर्णमासी प्रजेशस्य पितॄणां दर्श उच्यते । इति । कामनाविशेषेण तिथिविशेषे देवताविशेषपूजोक्ता **हेमाद्रौ भविष्यत्पुराणे**—अग्निमिष्ट्वा च हुत्वा च प्रतिपद्यमृतं घृतं । हविषा सर्वधान्यानि प्राप्नुयादमितं धनं । द्वितीया-

---

१ हरेस्तथा.

यां च ब्रह्माणं संपूज्य ब्रह्मचारिणः । भोजयित्वा च विद्यानां सर्वासां पारगो भवेत् । तृतीयायां च वित्तेशं वित्तेशो जायते ध्रुवं । गणेशः पूजितः कुर्याच्चतुर्थ्यां सर्वकर्मसु । अविघ्नं विदुषां विघ्नं कार्यनाशं न कर्हिचित् । नागानिष्ट्वा तु पंचम्यां न विषैरभिभूयते । संपूज्य कार्तिकेयं तु द्विजः षष्ठ्यां प्रजायते । मायावी रूपसंपन्नो दीर्घायुः कीर्तिवर्धनः । सप्तम्यां पूजयेद्भानुमारोग्यं समवाप्नुयात् । अष्टम्यां पूजितो देवो गोचंद्राभरणो हरः । ज्ञानं ददाति विपुलं कामजान्यच्छते गुणान् । दुर्गां संपूज्य दुर्गाणां नवम्यां तरणेच्छया । संग्रामे व्यवहारे च सदा विजयमादिशेत् । दशम्यां धर्मराजस्य सर्वव्याधिभयं हरेत् । एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः । प्रजां बुद्धिं च धान्यं च प्रयच्छंति महीं तथा । द्वादश्यां पूजयेद्देवं सर्वैश्वर्यगुणान्वितं । बहुपुत्रो बहुधनो भविष्यति न संशयः । त्रयोदश्यां तु संपूज्य कामदेवं महाबलं । पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् । चतुर्दश्यां महादेवमुमाकांतं जगद्गुरुं । पूजयेच्च महाभक्त्या सर्वान्कामान्ददात्यसौ । पौर्णमास्यां च यः सोमं पूजयेद्भक्तिमान्नरः । बह्वपत्यं भवेत्तस्य इति मे निश्चिता मतिः । अमायां पितरः पिंडैरिष्टाः कुर्वंति सर्वदा । प्रजां रक्षां धनं वृद्धिमायुष्यं बलमेव च । उपवासं विनाप्येते भवंत्युक्तफलप्रदाः । पूजिता जपहोमैश्च तोषिता भक्तितः सदा । इति । हेमाद्रौ कौर्मे— देवताभ्यर्चनं नृणामशेषाघौघनाशनं । अमावास्यां तिथिं प्राप्य य आराधयते भवं । ब्रह्माणं पूजयित्वा तु सर्वपापैः प्रमुच्यते । कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्दशीं । संपूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते । त्रयोदशी तथा रात्रौ सोपहारस्त्रिलोचनं । दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः । षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः । सप्तम्यामर्चयेद्भानुं मुच्यते सर्वपातकैः। भरण्यां च चतुर्थ्यां च शनैश्चरदिने यमं । पूजयेत्सप्तजन्मस्थैर्मुच्यते पातकैर्नरः । एकादश्यां निराहारः समभ्यर्च्य जनार्दनं । द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते । इति । हेमाद्रौ विष्णुधर्मोत्तरे—ब्रह्माणं पूजयेद्देवं सततं प्रथमेऽहनि । पक्षद्वये महाभाग पंचदश्यामुपोषितः । संवत्सरेण धर्मज्ञ विद्यां बह्व सुवर्णकं । चैत्रमासस्य या शुक्ले प्रथमा प्रतिपद्भवेत् । तदा हि ब्रा-

ष्णः कृत्वा सोपवासस्तु पूजनं । संवत्सरमवाप्नोति सौख्यानि भृगुनंदन । शुक्लपक्षे द्वितीयायां बालचंद्रस्य पूजनं । कृत्वा दत्त्वा च लवणं प्राग्रात्रौ शोभनो भवेत् । इति कामनाविशेषेण देवतापूजाकालः ।

अथ कृषिः । राजमार्तंडः—ऋक्षेषूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनी प्राजापत्यकरद्विदैवतगुरुप्रालेयपादेषु च । निर्दोषैर्वृषभैर्हलैश्च सुमनोमालाभिरभ्यर्चितैर्दत्त्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत् । प्राजेशश्रवणोत्तरादितिमघामार्तंडतिष्याश्विनीपौष्णांबूष्णमरीचयः शतभिषक्स्वाती विशाखा तथा । जीवार्कैंदुसितेंदुनंदनदिने लग्ने च सौम्योदये सस्यानां वपने तथैव लवने शस्तास्तथा रोपणे । चंडेश्वरः—हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये । स्थिरलग्ने गुरोर्वारे बीजं धार्यं ञ्शुक्रयोः । ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा । लेखयित्वा इमं मंत्रं धान्यागारे निधापयेत् । सस्यवृद्धिं परां कुर्यात्पूजिता प्रतिपूजयेत् । दक्षिणदिङ्मुखगमनं गमनमभिनवासु नारीषु । व्ययमपि सस्यधनानां न बुधा बुधवासरे कुर्युः । शनिवारे च नो कार्यो धनधान्यव्ययो बुधैः ।

वस्त्रधारणे श्रीपतिः—रोहिणीषु करपंचके शुभे त्र्युत्तरासु च पुनर्वसुद्वये । रेवतीषु वसुदैवते च भे नव्यवस्त्रपरिधानमिष्यते । जीर्णं रवौ सततमंबुभिरार्द्रमिंदौ भौमे शुचे बुधदिने तु भवेद्धनाय । ज्ञानाय मंत्रिणि भृगौ प्रियसंगमाय मंदे मलाय च नवांबरधारणं स्यात् । रोहिणी गुरुपुनर्वसूत्तरे या बिभर्ति नववस्त्रभूषणं । सा न योषिदवलंबते पतिं स्नानमाचरति वारुणेपि या ।

अलंकारादौ दैवज्ञवल्लभः—नासत्यपूषवसुभिः करपंचकेन मार्तंडभौमगुरुदानवमंत्रिवारे । मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणि विधृतानि भवंति सिद्ध्यै । ज्योतिर्निबंधे—हस्तानुराधमृगपुष्यधनिष्ठयुक्तचित्रोत्तरासु च पुनर्वसुरोहिणीषु । लग्ने स्थिरे रविसुतेंदुजजीववारे हेमादिधारणविधिः कथितो नराणां । श्रीपतिः—पौष्णाश्विनीवसुकरादिषु पञ्चभेषु कौसुंभहेममणिविद्रुमकाचशंखाः । नार्या धृताः सुतसुखार्थकरा भवंति ब्रह्मोत्तरादितिगुरुश्च सुखाय भर्तुः । शंखादिवररत्नानि पुष्यादित्र्युत्तरासु च । रोहिण्यां नैव गृह्णीत भर्तुर्जीवितकांक्षिणी ।

सूचीकर्मणि—वासवादितिभत्वाष्ट्रमैत्रचंद्राश्विनीषु च। सूचीकर्म तनुत्राणमेभिर्ऋक्षैः प्रशस्यते। शय्यायां—हस्तादितिब्रह्मगुरूत्तराणि पौष्णाश्विमूलेंदुभचित्रभानि। वारेषु जीवेंदुसितेंदुजानां शय्यासमारंभणमुत्तमं स्यात्। शस्त्रधारणे—पुष्ये चादितिचित्रपद्मतनये शक्रोत्तरा रेवती स्वाती वाजिविशाखमित्रसहिते भानौ गुरौ भार्गवे। कुंभे कीटगृहे वृषे मृगपतौ चेंदौ शुभैर्वीक्षिते संनाहः शरखड्गकुंतछुरिका धार्या नृपाणां हिताः। स्वामिसेवायां चंडेश्वरः—रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि। सेवेत स्वामिनं भृत्यः शुभवारोदये तथा। ज्योतिर्निबंधे—दासीदासादि भृत्यानां कुर्यात्संग्रहणं बुधे। स्थिरलग्ने शुभैर्दृष्टे मंदवारे विशेषतः। गजाश्वदोला—पौष्णप्रजेशादितिभद्वयानि हस्तादिषट्कश्रवणोत्तराणि। दोलादि मातंगतुरंगमाणामारोहणेऽभीष्टफलप्रदानि। नृत्ये—हस्तः पुष्यो वासवं रोहिणी च ज्येष्ठा पौष्णं वारुणं चोत्तराश्च। पूर्वाचार्यैः कीर्तितश्चक्रवर्ती नृत्यारंभे शोभनोयं भवर्गः। राजदर्शने श्रीपतिः—मृगाश्वितिष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभपूषभानि। मैत्रेण युक्तानि प्रजेश्वराणां विलोकने भानि शुभप्रदानि। क्रयादौ—भाद्रद्वयत्रिदशभे त्रिदिवाकरेषु मूलानिलोत्तरतुरंगमरेवतीषु। सारंगपाणिरजनीकरमैत्रभेषु लाभः सदैव भवति क्रयविक्रयाभ्यां। चित्रा शतभिषा स्वाती रेवती चाश्विनी शुभा। श्रवणश्च तथा प्रोक्तो वस्त्राणां क्रयणे शुभः। सेतौ—स्वातीयुक्ते मंदवारे वृषलग्ने शुभे दिने। सेतूनां बंधनं कार्यं ध्रुवभे चार्कजीवयोः। पशुकृत्ये श्रीपतिः—चित्रोत्तरावैष्णवरोहिणीषु चतुर्दशीदर्शदिनाष्टमीषु। स्थानप्रवेशं गमनं विदध्यात्पुमान्पशूनां न कदाचिदेव। चंडेश्वरः—हस्तमूलविशाखासु रेवत्यां श्रवणे तथा। मैत्रे च वारुणे श्रेष्ठं पशुप्रापणमुच्यते। पूर्वात्रयामृतमयूखहुताशनेषु इंद्राग्निवाजिवसुवारुणशंकरेषु। एतेषु गोमहिषदंतितुरंगमादिनानाप्रकारपशुजातिगतिः प्रशस्ता। गजदंतच्छेदे ज्योतिर्निबंधे—त्वाष्ट्रे विष्णावथाश्विन्यामादित्ये वसुदैवते। दंतिनां शुभदं कर्म पुष्ये हस्ते च कीर्तितं। निक्षेपे—भरणी त्रीणि पूर्वाणि आर्द्राश्लेषा मघा तथा। चित्रा ज्येष्ठा विशाखा च मूलं मृगपुनर्वसू। एभिर्दत्तं प्रयुक्तं च यच्चान्निक्षिप्यते धनं। पृष्ठतो

धावमानस्य धनिनो नोपपद्यते । ऋणमोक्षे श्रीधरः
शमंददिवसांशकलग्नयुक्ते रिक्तासु मंददिवसे कुलिकोदये
मैत्रद्वितीयपदमैत्रमुहूर्तयुक्ते राश्युद्गमे च ऋणमोक्ष
संतः । राजमुद्रायां—मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रश
निचंद्रवर्ज्यं । वारे तिथौ पूर्णजयाह्वये च मुद्राप्रतिष्ठा
च राज्ञां । नावि चंडेश्वरः—पौष्णाश्विनीतुरगवारुणमि
शीतोष्णरश्मिवसवोऽनलवंत्यमूनि । वारे च जीवभृ
प्रशस्ते नौकादिसंघटनवाहनमेषु कुर्यात् । भोगे—गुरुभ
नुराधाविधातृपौष्णाश्विरोहिणीभेषु । स्वात्युत्तरासु कुर्या
सनभोगभोगादि । इंधनसंग्रहे—ब्रह्मानिलार्कमृगमूल
द्रपौष्णानुराधगुरुविष्णुविशाखयुक्ते । वारे कुजार्कभृगुनंद
जानां श्रेष्ठेंधनस्य करणं भवति प्रशस्तं । नवान्ने श्री
रेवतीश्रुतिपुनर्वसुहस्तब्राह्मतः पृथगपि द्वितये च । त्र्युत्त
दितं पृथुकानां प्राशनं नवनवान्नविधानं । नवभोज
ज्योतिर्निबंधे—भोज्यपात्रं सुधासिंधौ घटयेद्वा सम
तत्रान्नप्राशने प्रोक्ते काले भोजनमाचरेत् । नवफलादि
चंडेश्वरः—मूलाश्विमैत्रकरतिष्यहरींद्रभेषु पौष्णोत्तरैद
सुवासवेषु । वारेषु भूमितनयार्कजवारवर्ज्यं तांबूलनूतन
शनं हिताय ।

ज्वराद्युत्पत्तौ ज्योतिर्ग्रंथे—एकाहो निधनं द
निला बाणा विपत्पर्वताः ससांका विलयश्च मासयुगलं
मृतिः पक्षकः । द्वौ मासावथ विंशतिर्दश निशाः
पक्षा नखा मासौ पक्षदशांतपक्षककुभः पीडादिनान्यश्वि
दैवज्ञः—उरगवरुणरौद्रा वासवेंद्रत्रिपूर्वायमदहनविशाख
वारेण युक्ताः । तिथिषु नवमि षष्ठी द्वादशी वा चतुर्थी
मरणयोगो रोगिणां कालहेतुः । दारुणं चेत् तत्तन्नक्षत्र
तिमां सौवर्णीं द्वादशदलपद्ममध्ये स्थापितकलशोपरि
दलेषु द्वादशादित्यांश्च संपूज्य दूर्वासमित्तिलक्षीराज्यैर्गाय
त्तद्देवतायै अष्टोत्तरशतं हुत्वा दध्योदनं बलिं दत्वा आचा
प्रतिमां च दत्त्वा ब्राह्मणान्भोजयेदिति संक्षेपः । भेषजे
श्वरः—मूलानुराधमृगतिष्यपुनर्वसौ च पौष्णाश्विनीश्रव
करत्रये च । वारेषु वाक्पतिसितेंदुदिने प्रशस्तं भैषज्य

मीषु हितं नराणां । आरोग्यस्नाने श्रीपतिः—इंदोर्वारे भार्गवे च ध्रुवेषु सार्पादित्यस्वातियुक्तेषु भेषु । पैत्र्ये चांते वापि कुर्यात्कदाचिन्नैव स्नानं रोगनिर्मुक्तजंतुः । चरे विलग्ने रविभौमवारे रिक्ते तिथौ स्याद्बहुले च पक्षे । धिष्ण्ये चरे रोगनिपीडितानां स्नानं नराणां निरुजत्वकारि । काम्यहोमाहुतौ ज्योतिर्ग्रंथे—तरणिविद्गुभास्करिचंद्रमःकुजसुरेज्यविधुंतुदकेतवः । रविभतो दिनभं गणयेत्क्रमात्प्रतिखगं त्रितयं त्रितयं न्यसेत् । दिनकरार्कितमःकुजकेतवो हुतभुजो न शुभास्त्वितरे शुभाः । दहनचक्रमिदं प्रविलोकयतां हवनकर्मणि सर्वसमृद्धये । अस्यापवादः क्रियासारे—नित्ये नैमित्तिके दुर्गाहोमादौ न विचारयेत् । इति नानाकार्यकालः ।

अथ युगधर्माः । हेमाद्रौ भारते—तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमं । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे । बृहस्पतिः—तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतं । द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः । मनुबृहस्पती—कृते यदब्दाद्धर्मः स्यात्स त्रेतायामृतुत्रये । द्वापरे तु त्रिपक्षेण कलावह्ना तु तद्भवेत् । ब्रह्मांडे—त्रेतायामाब्दिको धर्मो द्वापरे मासिकः स्मृतः । यथाशक्ति चरन्प्राज्ञस्तदह्ना प्राप्नुयात्कलौ । विष्णुपुराणे—यत्कृये दशभिर्वर्षैस्त्रेतायां हायनेन तु । द्वापरे तत्तु मासेन अहोरात्रेण तत्कलौ । हेमाद्रौ स्कांदे—ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः । द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः । विष्णुधर्मोत्तरे—पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं कलौ गंगां समाश्रयेत् । पराशरः—कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः । द्वापरे शंखलिखितः कलौ पाराशरः स्मृतः । त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे । कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा । इति ।

अथ कलियुगधर्माः । हेमाद्रौ भारते—यस्त्वोंनमःशिवायेति मंत्रेणानेन शंकरं । सकृत्कालं समभ्यर्च्य सर्वपापैः प्रमुच्यते । सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः । यस्त्वोंनमःशिवायेति मुच्यते स कलौ नरः । शाठ्येनापि नम-

स्कारः प्रयुक्तः शूलपाणये । संसारदोषसंधानामुक्तो नाशकरः कलौ । सदा तं यजते यस्तु श्रद्धया मुनिपुंगव । लिंगे वा स्थंडिले वापि कौतुकाद्विधिपूर्वकं । युगदोषं विनिर्जित्य रुद्रलोके महीयते । लैंगे—कलौ रुद्रो महादेवः शंकरो नीललोहितः । प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृता कृतिः । ये तं विप्रास्तु सेवंते येन केनापि शंकरं । कलिदोषं विनिर्जित्य प्रयांति परमं पदं । हेमाद्रौ व्यासः—ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवं । अग्निपुराणे—नास्ति श्रेयस्करं नृणां विष्णोराराधनात्परं । युगेऽस्मिंस्तामसे घोरे यज्ञवेदविवर्जिते । कलौ कलिमलध्वंसं सर्वपापहरं हरिं । येऽर्चयंति नरा नित्यं तेपि वंद्या यथा हरिः । धन्यं कलौ भवेद्विप्र अल्पक्लेशं महत्फलं । इति कलियुगधर्माः ।

अथ कलिवर्ज्यानि । तत्र हेमाद्रौ आदित्यपुराणे—नियोगं प्रकृत्योक्तं—अयं कार्तयुगो धर्मो न कर्तव्यः कलौ युगे । दीर्घकालं ब्रह्मचर्यं धारणं च कमंडलोः । गोत्रान्मातृसपिंडाच्च विवाहो गोवधस्तथा । कलौ पंच न कुर्वीत भ्रातृजायां कमंडलुं । शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः । उपयाचितमादेशाः संभवंति कलौ क्वचित् । तस्मात्तन्मात्रलाभेन कार्यं किंचिन्न कारयेत् । तथा धर्मसमावेशादन्यान्यपि कलौ युगे । विहितान्यपि वर्ज्यानि कर्मभोगभयाद्बुधैः । विधवायां प्रजोत्पत्तौ देवरस्य नियोजनं । बालिकाक्षतयोन्यास्तु वरेणान्येन संस्कृतिं । कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः । आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनं । द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः । सत्रदीक्षा च सर्वेषां कमंडलुविधारणं । महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे । सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः । अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः । वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः । व्रतस्वाध्यायसापेक्षमघसंकोचनं तथा । प्रायश्चित्तविधानं च विप्राणां मरणांतिकं । संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः । वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । सवर्णान्यांगनादुष्टैः संसर्गः शोधितैरपि । असवर्णांगनादुष्टैः कृतप्रायश्चित्तैरपि संसर्गो न कार्य इत्यर्थः । अयोनौ संग्रहे वृत्ते परित्यागो गुरु-

स्त्रियाः । अयोनौ हीनयोनौ । गुरुस्त्रियाः ब्राह्मणस्त्रियाः संग्रहे गर्भधारणे वृत्ते सति तस्याः संभोगादाविवान्नवस्त्रविषयेपि परित्यागो नेत्यर्थः । परोद्देशात्मसंत्याग उद्दिष्टस्यापि वर्जनं । प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः । एकैव प्रतिमा यावज्जीवं पूज्येत्येवंरूपः । अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेवच । शामित्रं चैव विप्राणां सोमविक्रयणं तथा । षड्भक्तानशनेनान्नहरणं हीनकर्मणा । बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् । इति विहितं तन्नेत्यर्थः । माधवीये—शूद्रेषु दासगोपालकुलमित्रार्धसीरिणां । भोज्यान्नता गृहस्थस्य तीर्थयात्रातिदूरतः । शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा । प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः । कस्यांचिच्छाखायां जातकर्महोमे प्रजाजीवनार्थं अरणिपरिग्रह उक्तः स नेत्यर्थः । ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया । बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः । यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः । भृग्वग्निपतनैश्चैव वृद्धादिमरणे तथा । गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया । पितापुत्रविरोधेषु साक्षिणां दंडकल्पनं । नवोदके दशाहं च दक्षिणा विधिचोदिता । ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च । यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः । इति । माधवीये विश्वेश्वर्यां संन्यासपद्धतौ—चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानिच । कलेर्यदा गमिष्यंति तदा त्रेतापरिग्रहः । संन्यासस्तु न कर्तव्यो ब्राह्मणेन विजानता । इति व्यासवचनेन चतुश्चत्वारिंशद्वर्षशतानंतरं अग्निहोत्रादिनिषेध उक्तः । तत्र यद्यपि अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक् कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता । इति । लौगाक्षिवचनं व्यासवचनैकवाक्यतयोपपद्यते । तथापि—यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे । इति देवलवचनाद्वर्णविभागव्यवस्थापर्यंतमप्यग्निहोत्रादिकं कार्यं इति । इति कलियुगवर्ज्यानि ।

विदुषा विष्णुभट्टेन पुरुषार्थप्रकाशके । चिंतामणौ कर्मकालः सम्यक् ज्ञानप्रसिद्धये ॥ सर्वेषामृषिवाक्यानां हेमाद्रेर्माधवस्य

च । विसंवादपरीहारपरिष्कारपुरःसरम् । रचितः कालखंडोयं तेन तुष्यतु शंकरः । हेमाद्रिणा माधवस्य विरोधः कालनिर्णये । इति ज्ञात्वा कृतास्तेतः परस्परविरोधिनः । नवीनविदुषां ग्रंथाः सुप्रसिद्धमिदं ह्यतः । गुणगृह्यैर्विपश्चिद्भिरनुग्राह्यो ह्ययं सदा । धर्मसंस्थापनायेहावतीर्णैरीश्वरांशतः । प्रवर्त्यो जगतीपालैः सदा धर्मविवृद्धये । श्रीमज्जगच्चंद्रवर्यकृतेशाधिपसत्तमैः । अवश्यं तु प्रवर्त्योऽयं सदा धर्मविवृद्धये । इति ।

इति आठवलेउपनामकश्रीमद्रामकृष्णसूरिसूनुविष्णुभट्टकृते पुरुषार्थचिंतामणौ कालखंडः समाप्तः ।

---